श्रीगणेशाय नमः ॥ नमो जन्मादिसंबंधबंधविध्वंसहेतवे ॥ हृद्याय परमानंदवपुषे परमात्मने ॥ १ ॥ नमस्त्रय्यंतसन्दोहसरसीरुहभानवे ॥ गुरवे परपक्षौघध्वांतध्वंसपटीयसे ॥ २ ॥ छंदोगानामुपनिषदं व्याचिख्यासुर्भगवान्भाष्यकारः चिकीर्षितग्रंथपरिसमाप्तिप्रचयप्रतिबंधिदुरितनिबर्हणसिद्ध्यर्थमोंकारोच्चारलक्षणं मंगलाचरणं संपादयन्व्याख्येयस्वरूपं दर्शयति ॥ ओमित्येतदिति ॥ व्याख्यानं सप्रयोजनं प्रतिजानीते ॥ तस्या इति ॥ ननु शारीरके भूयःसु प्रदेशेषु विस्तरेण व्याख्यातत्वादस्य भाष्यं किमिति संप्रत्यारभ्यते तत्राह ॥ संक्षेपत इति ॥ विस्तरेण व्याख्यातत्वेऽपि संग्रहतो व्याख्यानमस्याः संप्रणीयते ॥ विस्तृतस्य संक्षिप्य ग्रहणे सुग्रहत्वादित्यर्थः ॥ किंच नचेयं यथापाठक्रमं व्याख्याता प्रकृते तु पाठक्रममनतिक्रम्य व्याख्यायते तदुक्तमिदं भाष्यमित्याह ॥ ऋजुविवरणमिति ॥ ऋजु पाठक्रमानुसारि विवरणमर्थस्फुटीकरणं प्रकृतोपनिषदो यस्मिन्भाष्ये तत्तथेति यावत् ॥ अथ पाठक्रममाश्रित्यापि द्राविडभाष्यं प्रणीतं तत्किमनेनेत्याशंक्याह ॥ अल्पग्रंथमिति ॥ तथापि विशिष्टाधिकार्यभावे कथमिदमारभ्यते तत्राह ॥ अर्थजिज्ञासुभ्य इति ॥ ये हि मुमुक्षवोऽस्या विवक्षितमर्थं जिज्ञासंते तेभ्यो भाष्यमिदं प्र-

॥ ॥ श्रीगणेशाय नमः ॥ ओमित्येतदक्षरमित्याद्यष्टाध्यायी छांदोग्योपनिषत् तस्याः संक्षेपतोऽर्थजिज्ञासुभ्य ऋजुविवरणमल्पग्रंथमिदमारभ्यते ॥ तत्र संबंधः ॥ समस्तं कर्माधिगतं प्राणादिदेवताविज्ञानसहितमर्चिरादिमार्गेण ब्रह्मलोकप्रतिपत्तिकारणं

स्तूयते ॥ तथा च विशिष्टाधिकारसंभवे तदारंभः संभवति ॥ तस्य च प्रकृतोपनिषदर्थपरिज्ञानमवांतरफलं तद्द्वारा कैवल्यं परमं फलमिति भावः ॥ ननु कर्मविधिशेषत्वादुपनिषदस्तद्व्याख्यानत्वात्पिष्टपिष्टिप्रसंगात्कृतं तद्भाष्यप्रणेत्राशंक्य शेषशेषित्वे प्रमाणाभावान्मैवमित्यभिप्रेत्य पूर्वोत्तरकांडयोर्नियतपूर्वापरीभावप्रयुक्तं संबंधं प्रतिजानीते ॥ तत्रेति ॥ तस्या व्याख्येयत्वेन प्रस्तुताया उपनिषदः कर्मकांडेन सह संबंधोऽभिधीयत इत्यर्थः ॥ कोऽसावित्यपेक्षायां तदभिधित्सया कर्मकांडार्थमनुवदति ॥ समस्तमिति ॥ विहितं प्रतिषिद्धं च कर्म पूर्वस्मिन्कांडे प्रतिपन्नमित्यर्थः ॥ तत्र विहितं समुच्चितमसमुच्चितं चेति द्विविधमित्यंगीकृत्य समुच्चितस्य फलमनुवदति प्राणादीति ॥ प्राणाग्नि श्चेत्याद्या देवता तद्विज्ञानं तदुपासनं तेन समुच्चितमग्निहोत्रादिकर्म अर्चिराद्युपलक्षितेन देवयानेन पथा कार्यब्रह्मप्राप्तिकारणं न तु ब्रह्मप्राप्तेस्तस्य गंतव्यत्वाभावात्कार्यस्यैव गंतव्यतासंभवादर्थ्यधिकरणे राद्धांतितत्वात्तस्मात्समुच्चितं विहितं कर्म परमपुरुषार्थहेतुरित्यर्थः ॥ तस्यैवासमुच्चितस्य फलमाह ॥

केवलंचेति ॥ विहितस्य गतिमुक्त्वा प्रतिषिद्धस्य गतिमाह ॥ स्वभावेति ॥ स्वभावेन शास्त्रापेक्षामंतरेण प्रकृतिवशादेव प्रवृत्ता यथेष्टचेष्टारसिकास्तेषां
कर्मज्ञानाभावाद्देवयाने पितृयाणे च पथ्यनधिकृतानां गतिस्तिर्यगवस्था क्षुद्रजंतुलक्षणाः पुनरावृत्तिर्दुर्लभा ॥ ननु वाक्यनान्यतरस्मिन्नधिकृतानां
परमः पुरुषार्थः सेत्स्यति शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते इति स्मृत्या तयोर्नित्यफलत्वप्रतिपत्तेरत आह ॥ न चोभयोः पथोरिति ॥ ननु मार्गद्वयस्थ
स्थानां पुरुषार्थाभावेपि द्वयोः पथोरन्यतरस्मिन्वा भविष्यतीति चेत्तत्र न तावद्देवयाने पथि निमित्ते निरतिशयपुरुषार्थसिद्धिः इमं मानवमावर्तं नाव
र्तंते नेषामिह न पुनरावृत्तिरित्यत्र मम इहेति विशेषणादेकपायात्यनावृत्तिमिति स्मृतावनावृत्तेरेतत्कल्पविषयत्वात्कल्पान्तरेऽप्यनावृत्तावपि विशेषणा
नर्थक्यान्नापि पितृयाणे पथि निरतिशयपुरुषार्थसिद्धिः एतमेवाध्वानं पुनर्निवर्तंते अन्यथावर्तते पुनरिति चंद्रस्थानस्खलनावगमात्तस्मात्कर्मैव
शाद्रात्यंतिकपुरुषार्थप्राप्तिरित्यर्थः ॥ एवमनूद्य कर्मफलं फलितसंबंधमाह इत्यतइति ॥ उक्तरीत्या कर्म यतो न निरतिशयपुरुषार्थहेतुरतस्तत्साध
नात्कर्मणस्तत्फलाच्च विरक्तस्य निरतिशयपुरुषार्थकांक्षतस्तत्साधनं केवलमात्मज्ञानं संसारांतर्भूतपूर्वोक्तगतित्रयहेतुकर्मतद्धेतु निराकरणेन वक्तव्य

केवलं च धूमादिमार्गेण चंद्रलोकप्रतिपत्तिकारणं स्वभावप्रवृत्तानां च मार्गद्वयपरिभ्रष्टानां कष्टाधोगतिरुक्ता न चोभयोरपि मार्ग
योरन्यतरस्मिन्नपि मार्गे आत्यंतिकी पुरुषार्थसिद्धिः ॥ इत्यतः कर्मनिरपेक्षमद्वैतात्मविज्ञानं संसारगतित्रयहेतूपमर्देन वक्तव्यमित्युप
निषदारभ्यते ॥ न चाद्वैतात्मविज्ञानादन्यत्रात्यंतिकी निःश्रेयसप्राप्तिः ॥ (इत्यभिप्रायेणोपनिषदारभ्यते ॥ नहि कर्मानुष्ठानात्पुमर्थो निरतिशयो
सम्पद्यते तस्य तद्यथेहेत्यादौ क्षयिफलत्वश्रुतेस्तथा चेश्वरार्पणबुद्ध्यानुष्ठितशुभकर्मवशादुपजातशुद्धबुद्धेर्विरक्तस्य मुमुक्षोर्मोक्षसाधनज्ञानार्थीयमुप
निषदारंभ इति हेतुहेतुमद्भावः संबंध इत्यर्थः ॥ ननु मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः ॥ नित्यनैमित्तिके कुर्यात्प्रत्यवायजिहासयेति वदेकृत्वा काम्य
निषिद्धे वर्जनीये नित्यनैमित्तिके च कृत्वाव्यवसितस्य मुमुक्षोर्वर्तमानदेहपाते पुनर्देहान्तरग्रहहेत्वभावादनायाससिद्धाज्ज्ञानादृतेपि मुक्तिरिति कथं तदर्
थ्येनोपनिषदारभ्यते तत्राह ॥ नचेति ॥ नहि त्वदुत्प्रेक्षितो मोक्षोपायो विना प्रमाणं प्रकल्प्यते न च पौरुषेयं वाक्यं मूलप्रमाणमंतरेण प्रमाणं ॥ न चात्र श्रुति
स्मृती प्रत्यक्षादेवा मूलमालोच्यते ॥ संभवति च पथावर्णितचरितस्यापि कर्मविशेषवशाद्देहांतरं ॥ न चैकभविकः कर्माशयस्तद्य इह रमणीयचरणास्ततः
शेषेणेत्यादिश्रुतिविरोधात्तस्मादात्मज्ञानादेव मुक्तिरिति भावः ॥ अद्वैतात्मज्ञानविधुराणां भेदज्ञानभाजां कर्मानुष्ठायिनां सर्व्यफलशालित्वे वा कश्शेषप्रमाण

वक्ष्यतिहीति॥अद्वैतात्मोपदेशानंतर्यमथशब्दार्थः येपुनरनुपासितगुरवस्तदुपदेशशून्यास्यथामतियथोक्ताद्द्वैतादन्यथाद्वैतमेवतत्त्वंविंदंतितेपरतंत्राः सं
नोरागादिनाकर्मानुतिष्ठंतोविनाशिफलशालिनःस्युरितिश्रुत्यर्थः॥अद्वैतात्मज्ञानादात्यंतिकपुरुषार्थसिद्धिरित्यत्रापिवाक्यशेषमनुकूलयति॥विपर्ययेचेति
॥चकारात्क्रियापदमनुकृष्यते सहि विद्वान्विद्ययानिरस्ताविद्यादिमलःस्वपरिज्ञानात्स्वयमेवपरमात्माभवतिभेदप्रतिपत्तिहेतोरुच्छिन्नत्वादित्यर्थः॥
भेदनिष्ठानांकर्मिणांपुरुषार्थोनिरतिशयोनसिध्यति अद्वैतनिष्ठानांतुकर्मत्यजतांपुमर्थः सेत्स्यतीत्यत्रवाक्यशेषस्थंलिंगंदर्शयति॥तथेत्यादिना॥ द्वैतमेव
विषयस्तस्मिन्वाचारंभणश्रुतेरनृतेभिसंधायस्याभिसंधासत्यत्वाभिमानस्तस्यबंधनंपरमानंदस्याविर्भावराहित्यंसंसारात्मकस्यदुःखस्यप्राप्तिश्चयथा
वस्तुतस्करस्यनाहंतस्करोस्मीतिमिथ्यैवाभिमन्यमानस्यपरिशोधनार्थंतप्तपरशोर्ग्रहणेदाहोबंधनंदुःखप्राप्तिश्चप्रतीयतेतद्वद्द्वैताभिनिवेशवतोपीति
प्रथमसूक्तावस्तुतोऽतस्करस्यपरैरारोपितेनतस्करत्वस्यपरिशुद्धस्यात्तप्तपरशुग्रहणेदाहाद्यभाववद्द्वैताभावोपलक्षितेप्रत्यगात्मनिपरमार्थसत्यत्वा

वक्ष्यतिद्यथयेन्यथातोविदुरन्यराजानस्तेक्षय्यलोकाभवंति॥विपर्ययेचसंसारःभवतीति॥ तथाद्वैतविषयानृताभिसंधस्यबंधनंत
स्करस्येवतप्तपरशुग्रहणेबंधदाहभावःसंसारदुःखप्राप्तिश्चेत्युक्ताः द्वैतात्मसत्याभिसंधस्यातस्करस्येवतप्तपरशुग्रहणेबंधदाहाभा
वःसंसारनिवृत्तिर्मोक्षश्चेति॥अतएवनकर्मसहभाव्यद्वैतात्मदर्शनंक्रियाकारकफलभेदोपमर्दनंसदेकमेवाद्वितीयंआत्मैवेदंसर्वमि
त्येवमादिवाक्यजनितस्यबाधकप्रत्ययानुपपत्तेः॥ (भिमानवतोद्वैतास्वव्यावृत्तचित्तस्यानर्थध्वंसोनिरतिशयानंदाविर्भावश्चेतियथोक्तार्थानुरो
धेनाग्रेश्रुतिर्वक्ष्यतीतियोजना॥केवलमात्मज्ञानंकैवल्यहेतुस्तत्सिध्यर्थमुपनिषदारंभइतिस्वपक्षोपदर्शिनःस्वयूथ्यास्तुकर्मसमुच्चितमात्मज्ञानंमोक्षसाध
नंतादर्थ्येनोपनिषदारंभइत्याहुस्तान्प्रत्याह॥अतएवेति॥यत्कृतकंतदनित्यमितिव्याप्त्यनुगृहीतयातद्यथेहेत्यादिश्रुत्याकर्मफलस्यानित्यत्वावगमाद्ब्र
ह्मविदाप्नोतिपरमित्यादिश्रुत्याचज्ञानफलस्यनित्यत्वसिद्धेर्ज्ञानकर्मणोर्विरुद्धफलत्वाध्यवसायाद्द्वैतस्यात्मनोदर्शनंनैवकर्मणासहभवितुमर्हति
नहिविरुद्धयोस्तमःप्रकाशयोःसमुच्चयःसंगच्छतेतस्मान्नसमुच्चितज्ञानार्थत्वेनोपनिषदारंभइत्यर्थः॥किंचाद्वैतात्मज्ञानंस्वसाध्यसिध्यर्थंवाकर्मापेक्ष
तेस्वबाधकविधूननार्थंवानाद्यस्तस्यासाध्यफलत्वादितिमत्वानोद्वितीयंप्रत्याहक्रियेति॥वाक्यजनितस्याद्वैतात्मज्ञानस्येतिशेषःतस्यबाधकाभावेननतत्

कर्मेति ॥ तद्विषयो विधिप्रत्ययो यजेतेत्यादिविधिजनितः कर्तव्यावबोधः स चात्मनि कर्तृत्वादिकमाकाङ्क्षन्न कर्त्राद्यात्मज्ञानस्य बाधको भवतीत्यर्थः ॥ कस्यायं
कर्मविधिरज्ञस्य विदुषो वेति विकल्प्याद्यं प्रत्याह ॥ नेत्यादिना ॥ कर्त्राद्याकारं प्रमाणनिरपेक्षं प्रकृतिप्रसूतं मिथ्याज्ञानं तद्वतस्तेन मिथ्याज्ञानेन जनितक
र्मफलविषयो रागादिदोषस्तद्वतश्च कर्म विधीयते न हि कर्ताहमित्यादिमिथ्याधियो रागादेश्चाभावे कर्म विधातुं शक्यं यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य
चेष्टितमिति स्मृतं न तेऽङ्गतो ऽज्ञस्य कर्मविधिपक्षे न तन्मन्त्ययो बाधकः प्राप्त्यभावादित्यर्थः ॥ द्वितीयं प्रत्याह अधिगत इति ॥ अधीतस्वाध्यायो हि वैदिके कर्म
ण्यधिक्रियते अध्ययनं चार्थावबोधफलमिति मीमांसकमर्यादा तथा चाध्ययनवतो ज्ञातसर्ववेदार्थस्य यजेतेत्यादिना कर्मविधानादात्मज्ञानस्यापि क
र्मांगत्वं गम्यते तेन चात्मज्ञानमपबाध्यते ऽविरोधादित्यर्थः ॥ न तावदर्थावबोधफलमध्ययनमिति प्रामाणिकमस्ति आवापि फलं न दृष्टमिति चाध्येतप्रसिद्धं तत्रा

कर्मविधिप्रत्यय इति चेत् ॥ न कर्तृभोक्तृस्वभावविज्ञानवतस्तज्जनितकर्मफलरागद्वेषादिदोषवतश्च कर्मविधानात् ॥ अधिगतस
कलवेदार्थस्य कर्मविधानाद्द्वैतज्ञानवतोऽपि कर्मेति चेन्न कर्माधिकृतविषयस्य कर्तृभोक्त्रादिज्ञानस्य स्वाभाविकस्य सदेकमेवाद्वि
तीयमात्मैवेदं सर्वमित्यनेनोपमर्दितत्वात् तस्मादविद्यादिदोषवत एव कर्माणि विधीयन्ते नाद्वैतज्ञानवतः ॥ तत एव हि वक्ष्यति सर्व एते पु
ण्यलोका भवन्ति ब्रह्मसंस्थोऽमृतत्वमेतीति ॥ तत्रैतस्मिन्नद्वैतविद्याप्रकरणेऽभ्युदयसाधनान्युपासनान्युच्यन्ते कैवल्यसंनिकृष्टफलानि
चाद्वैतादीषद्विकृतब्रह्मविषयाणि मनोमयः प्राणशरीर इत्यादीनि

ध्ययनविधिवशेन नात्मज्ञानस्य कर्मविधिसंबंधः संभवतीति परिहरति न
ति ॥ किं च ममेदं कर्मेति कर्मण्यैश्वर्यं प्रतिपद्य व्यवस्थितं विषयी ह्यत्य प्रवृत्तस्य कर्त्राद्याकारविज्ञानस्य प्रमाणापेक्षामन्तरेण स्वभावप्राप्तस्य वाक्यो
त्थेन सम्यग्ज्ञानेनापहृतत्वात् कर्मविषयरागाद्ययोगात् तन्निबंधनस्य कर्मणोऽपि दुरनुष्ठानत्वान्नात्मज्ञानस्य कर्मोपपत्तिरित्याह ॥ कर्माधिकृतेति ॥
अद्वैतात्मज्ञानस्य कर्मप्रवृत्तिविरोधित्वं फलितमुपसंहरति ॥ तस्मादिति ॥ अज्ञस्य कर्मविधिर्नात्मज्ञस्येत्यत्र श्रुतिं संवादयति ॥ अत एवेति ॥ एते त्रयो
प्याश्रमिणः कर्मिणः कर्माधिकृता इति यावत् यथा ब्रह्मचारी गृहस्थो वानप्रस्थश्चेत्येते कर्मिणस्तथा ब्रह्मविदपि कर्मी चेन्न पृथग्ग्रहणे तस्य कारणाच्च न त
स्य कर्मविधिरिति मत्वोक्तं ब्रह्मसंस्थ इति ॥ यदि समुच्चयासंभवात्केवलमेवात्मज्ञानं कैवल्यसाधनमिति तर्ह्यथ नोपनिषदारभ्यते हन्त किमित्यस्यामुपनिष

निरङ्कुशफलत्वं नाम मन्मत्रमुक्तिफलत्वं अद्वैतानान्निःप्रपंचादीपविद्वत्तं सगुणं ब्रह्म कर्मसमृद्धिफलानि कर्मफलगतातिशयफलान्युपासनानीत्यर्थः॥ आत्मविद्याप्रकरणेऽपि विधोपासनोपन्यासे हेतुमाह॥ रहस्येति॥ उपनिषत्पदवेदनीयत्वस्यात्मविद्यायामुपासनेषु चाविशेषादित्यर्थः॥ तत्रैवाद्वैतं तत्रसूत्राद्य विभजते॥ मनोवृत्तीत्यादिना आत्मज्ञानस्योपासनानां च यथोक्तं सामान्यमिष्यते चेत्तर्हि फलतो विशेषो न स्यादिति मन्वानः शंकते कस्तर्हीति॥ फलतो विशेषं दर्शयन्नुत्तरमाह॥ उच्यत इति तत्र प्रथममात्मज्ञानस्योपासनाभ्यो विशेषमादर्शयति॥ स्वाभाविकस्येति॥ प्रत्यगात्मन्यक्रियाकारकफलविभागविकलेकूटस्थे स्वभावसिद्धिताविद्याकृतमध्यारोपितं कर्त्राद्याकारविज्ञानं तस्याद्वितीयवस्त्वादिलक्षणाधिष्ठानं याथात्म्यज्ञानं निवर्तकं य

निष्कर्मसमृद्धिफलानि च कर्माङ्गसंबंधीनि रहस्यसामान्यान्मनोवृत्तिसामान्याच्च यथाऽद्वैतज्ञानं मनोवृत्तिमात्रं तथान्यान्युपासनानि मनोवृत्तिरूपाणीत्यस्ति हि सामान्यं कस्तर्ह्यद्वैतज्ञानस्योपासनानां च विशेष उच्यते स्वाभाविकस्यात्मन्यक्रियेऽध्यारोपितस्य कर्त्रादिकारकक्रियाफलभेदविज्ञानस्य निवर्तकमद्वैतविज्ञानं रज्ज्वादाविव सर्पाद्यध्यारोपलक्षणज्ञानस्य रज्ज्वादिस्वरूपनिश्चयः प्रकाशनिमित्तः॥ उपासनं तु यथाशास्त्रसमर्पितं किंचिदालंबनमुपादाय तस्मिन्समानचित्तवृत्तिसंतानलक्षणं तद्विलक्षणप्रत्ययानंतरितमिति विशेषः॥ तान्येतान्युपासनानि सत्त्वशुद्धिकरत्वेन वस्तुतत्त्वावभासकत्वादद्वैतज्ञानोपकारकाण्यालंबनविषयत्वात्सुखसाध्यानि चेति पूर्वमुपन्यस्यंते॥

था रज्ज्वादावधिष्ठाने सर्पादिसमारोपरूपस्य मिथ्याज्ञानस्य प्रकाशादिकारणप्रसूतो रज्ज्वाद्यधिष्ठानस्वरूपनिश्चयो निवर्तकस्तथेत्यर्थः॥ संप्रत्युपासनानामद्वैतज्ञानाद्विशेषं दर्शयति॥ उपासनं त्विति॥ शास्त्रं मनो ब्रह्मेत्युपासीतेत्यादि किंचिदालंबनं मनःप्रभृति विवक्षितं समानजातीयप्रत्ययसंतानकरणं विच्छिद्य विच्छिद्य ध्यायिनोऽपि सिध्यतीति विशिनष्टि तद्विलक्षणेति॥ आत्मज्ञानस्योपासनानां चावांतरविशेषमुपसंहरति इति विशेष इति॥ ननु विद्याप्रकरणे यथोक्तोपासनानां उपदेशसंभवेऽपि विद्यैव प्राधान्यात्प्रथमं नेतव्या उपासनानि पुनरप्रधानत्वात्पाश्चात्येन वाच्यानीत्याशंक्याह॥ तानीति॥ उपासनानामीश्वरार्पणबुद्ध्यानुष्ठितनित्यादिकर्मवच्चित्तशुद्धिद्वारा ज्ञानकारणत्वात्कार्याच्च कारणस्य प्राथम्यप्रसिद्धेः साकारवस्तुविषयत्वेन सुसाध्यत्वाच्च मंदानां सहसा तेषु प्रवृत्त्युपपत्तेरादावुपदेशः संभवतीत्यर्थः॥ तथापि बहुविधेषूपासनेषु किमित्यंगावबद्धमेवोपासनं प्रथममुच्यते तत्राह॥

॥तत्रेति॥ प्राकृते पुरुषे कर्माभ्यासस्यानादिवासनया दृढीकृतत्वादभ्यस्तात्कर्मत्यागेनानन्तसंबंधिनि केवलोपासने चेतसः समर्पणं दुःखं कर्तुमित्यं
गावबद्धमेव तावदुपासनमुच्यते एवमादावुक्त्वा पुनरुपासनान्तराणि क्रमेण वक्ष्यामीत्यर्थः कांडद्वयस्य नियतपौर्वापर्यं प्रयुक्तसंबंधमुपनिषत्ता
त्पर्यं चोक्त्वा प्रत्यक्षरं व्याख्यातुकामः प्रतीकमादत्ते॥ ओमित्येतदक्षरमिति॥ तत्र प्रथममोंकारस्याभिधायकत्वपक्षमेवावलंबते॥ परमात्मन इति॥ अ
भिधानान्तरेभ्यो विशेषं दर्शयति॥ नेदिष्ठमिति॥ निकटतममतिशयेन प्रियमिति यावत् ओंकारस्य नेदिष्ठत्वं समर्थयते तस्मिन्निति॥ ओंकारस्यान्यत्र
परमात्मनामत्वेपि प्रकृते किं विवक्षितमित्याशंक्याह॥ तदिहेति॥ प्रकृते हि वाक्ये तदोमिति पदमितिशब्दशिरस्कं प्रयुक्तमिति शब्दसामर्थ्यादेवा

तत्र कर्माभ्यासस्य दृढीकृतत्वात्कर्मपरित्यागेनोपासने एव दुःखं चेतः समर्पणं कर्तुमिति कर्मांगविषयमेव तावदादावुपास
नमुपन्यस्यते॥ ओमित्येतदक्षरं परमात्मनोऽभिधानं नेदिष्ठं तस्मिन्हि प्रयुज्यमाने सः प्रसीदति प्रियनामग्रहण इव लोकः तदिहे
तिपरं प्रयुक्तमभिधायकत्वाद्व्यावर्तितं शब्दस्वरूपमात्रं प्रतीयते॥ तथा चार्चादिवत्परस्यात्मनः प्रतीकं संपद्यते॥ एवं नामत्वेन प्र

हरिः ॐ॥ ओमित्येतदक्षरमुद्गीथमुपासीत॥

तीकत्वेन च परमात्मोपासनसाधनं श्रेष्ठमिति सर्ववेदान्तेष्ववगतं जपकर्मस्वाध्यायाद्यन्तेषु च बहुशः प्रयोगात्प्रसिद्धमस्य श्रैष्ठ्य
मतस्तदेतदक्षरं (चकत्वाद्व्यावर्तितं शब्दस्वरूपमात्रमुपास्यं गम्यते यत्र हीति परः प्रयोगो न तत्राभिधेयविवक्षास्ति यथा गौरित्ययमाहेति
तथा चात्रेति परत्वादोंकारस्य स्वरूपमात्रमुपास्यं विवक्षितमित्यर्थः तस्योपास्यत्वार्थं श्रैष्ठ्यं साधयति॥ तथा चेति इति परप्रयोगवशादभिधायक
त्वाभावे सत्यर्चाशब्दितप्रतिमाया भगवत्प्रतीकत्ववदोंकारस्यापि परमात्मप्रतीकत्वेन श्रेष्ठत्वादुपास्यत्वसिद्धिरित्यर्थः तदीयं श्रैष्ठ्यं सप्रमाणकं निग
मयति॥ एवमिति॥ सर्ववेदान्तेष्वेतदालंबनं श्रेष्ठमेतदालंबनं परमित्यादिषु॥ किंच नास्य श्रैष्ठ्यं समर्थनीयं प्रसिद्धत्वादित्याह॥ जपेति॥ गायत्र्यादिजपेय
ज्ञादौ कर्मणि स्वाध्यायस्यादावंते चोंकारस्य प्रयोगो दृश्यते॥ तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः॥ प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम्॥ ब्राह्म
णः प्रणवं कुर्यादादावंते च सर्वदा॥ स्रवत्यनोंकृतं पूर्वं परस्ताच्च विशीर्यते इति स्मृतेः॥ ओमिति ब्राह्मणः प्रवक्ष्यन्नाहेत्यादिश्रुतेश्चेत्यर्थः ओमितीत्ययं भागो

मुपास्यत्वार्थमनुकृष्यते व्याप्तेश्चासमंजसमिति न्यायेन विशेषणस्यार्थवत्त्वमभिप्रेत्य रूढियोगमपहरतीति न्यायेनाक्षरशब्दस्य प्रकरणमनुसृत्य शि-
द्धमर्थमाह ॥ वर्णात्मकमिति ॥ ग्रामो दग्धः पटो दग्ध इतिवदेकदेशे समुदायविषयं पदं प्रवृत्तमित्याह उद्गीथेति ॥ उपास्तिं विभजते कर्मेति ॥ उ-
द्गीथावयवत्वादोंकारे तच्छब्दप्रवृत्तिरित्युक्तत्वादनंतरवाक्यमकिंचित्करमित्याशंक्याऽनुक्तो योऽस्मदुक्तो हेतुस्तेन स्फुटीक्रियते न तत्र्याख्यास्माभिर्दर्शि-
त इत्यभिप्रेत्याह ॥ स्वयमेवेति ॥ ओमित्येतदक्षरमित्यत्रोपासनोत्पत्तिविधिरुक्तः संप्रति गुणं विवक्षुर्वाक्यांतरमादाय व्याचष्टे तस्येति ॥ एवमुपासनमिति र-
सतमत्वमाप्तिः समृद्धिरित्येवं गुणकमुपासनं यस्याक्षरस्य तत्तथेत्यर्थः ॥ एवं विभूतीति ॥ परमः परार्ध्यस्तेनेयं त्रयी विद्या वर्तत इत्याद्या विभूतिः स्तुतिर्यस्य

वर्णात्मकमुद्गीथभक्त्यवयवत्वादुद्गीथशब्दवाच्यमुपासीत ॥ कर्माङ्गावयवभूत ओंकारे परमात्मप्रतीके दृढामैकाग्र्यलक्षणां मतिं
संतनुयात् स्वयमेव श्रुतिरोंकारस्योद्गीथशब्दवाच्यत्वे हेतुमाह ॥ ओमिति ह्युद्गायति ओमित्यारभ्य हि यस्मादुद्गायति अत उद्गीथ ओं-
कार इत्यर्थः ॥ तस्योपव्याख्यानं तस्याक्षरस्योपव्याख्यानमेवमुपासनमेवंविभूत्येवंफलमित्यादिकथनमुपव्याख्यानं प्रवर्तत इति वाक्यशे-

**मिति ह्युद्गायति तस्योपव्याख्यानम् ॥ एषां भूतानां पृथिवी रसः पृथिव्या आपो रसोऽपामोषधयो रस ओषधीनां पुरुषो रसः ॥**

षः ॥ एषां चराचराणां भूतानां पृथिवी रसो गतिः परायणमवष्टंभः पृथिव्या आपोऽप्सु ह्योता च प्रोताश्च पृथिव्यतस्ता रसः पृथिव्या अ-
पामोषधयो

तत्रैवेति यावत् एवंफलमित्यापयिता ह वै कामानामित्यादि फलं यस्योपास्यस्य साक्षात्कारस्य तत्तथोक्तमित्यर्थः ॥ गोदोहनवदाश्रि-
त्य विधानादधिकृताधिकारमिदमुपासनं तथापि पृथगेव पृथग्घ्यप्रतिबंधः फलमिति न्यायेन फलवत्फलं याजमानमुद्गातुर्यजमानेन कर्मार्थं क्रीत-
त्वात्तत्कर्तृकस्योपासनस्यापि यजमानस्य स्वामिनः फलमिति वचनमादिशब्दार्थः वाक्यस्य साकांक्षत्वेनानर्थक्यं वारयति प्रवर्तत इति ॥ तदेवोपव्या-
ख्यानमनुवर्तयन्नोंकारस्य रसतमत्वगुणं विधातुं पातनिकां करोति ॥ एषामिति ॥ गतिरित्युत्पत्तिकारणत्वं परायणमिति स्थितिहेतुत्वं अवष्टंभ इति
प्रलयनिदानत्वमुच्यत इति भेदः वैपरीत्येन चामूनि पदानि नेयानि अपां पृथिवीरसत्वं साधयति ॥ अप्सु हीति ॥ अस्यार्थः स्पष्टत्वं तत्र प्रसिद्धिद्योतयि-
तुं हिशब्दः ओषधीनामपः प्रति कारणत्वाभावात्कथं तत्र रसशब्दस्तत्राह ॥

अप्परिणामत्वादिति॥कारणपरतयापूर्वंव्याख्यातोपिरसशब्दोगोरसइतिवदुत्तरत्रकार्यपरतयाव्याख्येयइत्यर्थः॥कथमोषधीनांपुरुषोरसोनहिताभिरसो
क्रियतेतत्राह॥अन्नेति॥पुरुषरसत्वंवाचःसमर्थयते॥पुरुषेति॥वाग्विहीनंहिमतिपुरुषांतरंचविनिंदति॥अतोवाचःसारतमत्वंप्रसिद्धमितिहिशब्दार्थः॥त
स्याःसारिष्ठत्वप्रसिद्धिरतःशब्दार्थः॥वाङ्निर्वर्त्यत्वादृचस्तद्रसत्वमित्यभिप्रेत्याह॥सारतरेति॥ऋचःसकाशादपितदध्यूढंसामगीयमानंवक्तृश्रोत्रोःसुखक
रमितिमत्वाह॥सारतरमिति॥उद्गीथशब्दस्यावयवेप्रकरणान्निपतति॥प्रकृतत्वादिति॥नहिसामाऽनोंकृतंफलायभवतीतिमन्वानोब्रूते॥सारतरइति॥प
रंपृथिव्यादीनांरसत्वमुक्तंतदिदानींदर्शयति॥एवमिति॥रसतमत्वगुणकमोंकारमुपास्यत्वार्थंविशेषणाभ्यांमहीकरोति॥परमइति॥तस्यपरमात्म

रसोऽप्परिणामत्वादोषधीनांनासांपुरुषोरसोऽन्नपरिणामत्वात्पुरुषस्य॥तस्यापिपुरुषस्यवाग्रसोवाचऋग्रसःपुरुषावयवानांहिवा
क्सारिष्ठातोवाक्पुरुषस्यरसउच्यते॥तस्याअपिवाचऋग्रसःसारतराऋचःसामरसःसारतरंतस्यापिसाम्नउद्गीथःप्रकृतत्वादोंकारःसा
रतरएवंसएषउद्गीथाख्यओंकारोभूतादीनामुत्तरोत्तररसानामतिशयेनरसोरसतमःपरमःपरमात्मप्रतीकत्वात्पराऽर्ध्यःअर्धंस्थानंपरंचतदर्धंच

पुरुषस्यवाग्रसोवाचऋग्रसऋचःसामरसःसाम्नउद्गीथोरसः सएषरसानाᳪंरसतमःपरमःपरार्ध्योऽष्टमोयदु
द्गीथःकतमाकतमर्क्कतमत्कतमत्सामकतमःकतमउद्गीथइति

परार्धंतदर्हतीतिपरार्ध्यः॥परमात्मस्थानार्हःपरमात्मवदुपास्य
त्वादित्यभिप्रायः॥अष्टमःपृथिव्यादिरससंख्यायांयदुद्गीथोयउद्गीथःवाचऋग्रसइत्युक्तंकतमासाऋक्कतमत्तत्सामकतमोवासउद्गीथःकतमाक
तमेतिवीप्साऽऽदरार्था॥

(स्थानयोग्यत्वंसमर्थयते॥परमात्मवदिति॥यथापरमात्मास्वरूपत्वेनानुसंधीयतेतथास्यापितदात्मनानुसंधेयत्वा
दिसुबुद्ध्यालंबनार्हप्रतिमावदयमपिपरमात्मबुद्ध्यालंबनयोग्योभवतीत्यर्थः॥ओंकारात्पराचीनोरसोनास्तीतितदीयरसतमत्वस्फुटीकरणार्थंपरिगण
नातःसिद्धमष्टमत्वमनुवदति॥अष्टमइति॥ननुभूतान्यारभ्यनवमत्वेप्रतीयमानेकथमोंकारस्याष्टमत्वंप्रतिज्ञायतेतत्राह॥पृथिव्यादीति॥सएषइत्युक्तस्य
तीकर्त्तुंयदुद्गीथइत्येतद्व्याचष्टे॥यदुद्गीथइति॥पूर्ववदुद्गीथशब्दोऽवयवपरोनेतव्यः॥अथगुणांतरविधानार्थंप्रश्नमवतारयन्नुक्तमनुद्रवति॥वाचइति॥ऋ
चःसामरसःसाम्नउद्गीथोरसइतिचोक्तमितिद्रष्टव्यं॥इदानीमृगादिजातिंजिज्ञासमानःपृच्छति॥कतमेति॥वीप्सात्रयंप्रश्नेतत्तज्जातिज्ञानेश्रद्धातिरेकंदर्शयि

श्री·भा· ५

प्रश्नत्रयमाक्षिपति॥ ननु चेति॥ अनेकजात्यवच्छिन्नानां मध्ये यदैकस्याः जातेर्निर्धारणार्थः परिप्रश्नो भवति॥ तदा तस्मिन्विषये विकल्पेन डतमच्
प्रत्ययः स्याद्यथा बहूनां कठादीनां मध्ये कठजातिनिर्णयार्थं कतमः कठा इति प्रश्नो दृश्यते॥ तथान्यत्रापीति सूत्रार्थः॥ बहूनामेकस्याः निर्धारणे डत
मज्विधानेपि प्रकृते प्रश्नत्रये कानुपपत्तिरित्याशंक्याह॥ नहीति॥ अत्रेत्यध्यापकाध्येतृव्यवहारभूमिरुक्ता॥ ऋग्जातिग्रहणं सामजातेरुद्गीथजाते
श्चोपलक्षणं तद्बहुत्वाभावेपि किं न भिद्यते तत्राह॥ कुत्र मिति॥ ऋगादिजातयो यदि भूयस्यः स्युस्तदा तासां मध्ये कतमा ऋग्जातिः कतमा सामजा
तिर्वा कतमा वोद्गीथजातिरत्र विवक्षितेति प्रश्नो युज्यते॥ न चास्ति न च जातिबहुत्वे प्रमाणाभावादतोनुपपन्नं प्रश्नत्रयमित्यर्थः॥ प्रश्नानुपपत्तिं दूषय
ति॥ नैष दोष इति॥ बहूनां नानाजात्यवच्छिन्नानां सन्निधाने जातौ सत्यां व्यक्तिबहुत्वसंभवात्तदन्यतमनिर्धारणार्थे परिप्रश्ने विकल्पेन डतमजिति सूत्रा

ननु वा बहूनां जातिपरिप्रश्ने डतमच् न ह्यत्र ऋग्जातिबहुत्वं कथं डतमच्प्रत्ययः नैष दोषः जातौ परिप्रश्नो जातिपरिप्रश्न
इत्येतस्मिन्विग्रहे जातावृग्व्यक्तीनां बहुत्वोपपत्तेः॥ ननु जातेः परिप्रश्न इति विगृह्यते॥ ननु जातेः परिप्रश्न इत्यस्मिन् विग्रहे कतमः
कठ इत्याद्युदाहरणमुपपन्नं जातौ परिप्रश्न इत्यत्र तु न युज्यते॥ तत्रापि कठादिजातावेव व्यक्तिबहुत्वाभिप्रायेण परिप्रश्न इत्यदोषः॥ य
दि जातेः परिप्रश्नः स्यात्कतमा कतमर्गित्यादौ उपसंख्यानं कर्त्तव्यं स्यात् विमृष्टं भवति विमर्शः कृतो भवति॥

यौगीकारादृगादिजातौ तद्व्य
क्तिबाहुल्यात्कतमा तद्व्यक्तिर्वा च ऋगसदित्यादेर्विवक्षितेति प्रश्नपर्यवसानादुपपन्नं प्रश्नत्रयमित्यर्थः॥ यत्तु विग्रहान्तरं गृहीत्वा प्रश्नानुपपत्तिरि
त्युक्तं तत्राह॥ नन्विति॥ तत्र चानुपपत्तिं यदि जातेरित्यत्र व्यक्तीकरिष्यति॥ अस्मदिष्टविग्रहापरिग्रहे वृत्तिकारीयमुदाहरणं विरुध्यते कठशब्द
स्य व्यक्तिविशेषत्वाभावादिति शंक्यते॥ नन्विति॥ उदाहरणेपि सत्यां कठजातौ तद्व्यक्तिबाहुल्यात्तदन्यतमनिर्धारणाभिप्रायेण परिप्रश्ने डतम
जित्यंगीकारान्न परोक्तोदाहरणविरोधोऽस्मत्पक्षेऽस्तीति परिहरति॥ तत्रापीति॥ ननु द्विधापि विग्रहोपपत्तौ किमिति त्वदिष्टो विग्रहो नियम्यते तत्रा
ह॥ यदीति॥ त्वदिष्टविग्रहपरिग्रहश्चेदृगादिजातेरेकत्वात्तत्र्यैकं बहुत्वाभावाद्वा बहूनामित्यादिसूत्रेण कतमः कतमत्साम इत्युदाहरणं न सिद्ध्येत्तथा
च तत्सिद्ध्यर्थं पृथग्विधानं प्रसज्येत॥ न हि वैदिकमुदाहरणं प्रमत्तगीतमिव हातुं शक्यं तस्मादृगादिव्यक्तिरेवात्र प्रष्टुं युक्तेत्यर्थः॥ किमिति यथोक्तरीत्या

अ· १

एम ५

विमृश्यते विवक्षितमृगादिस्वरूपमेवाद्यावुपन्यस्यतां लाघवादित्याशंक्याह॥ विमर्शे हीति॥ शिष्यभूतयाश्रुत्या चोदिते सैवाचार्यभूता परिहरति॥
वागेवेति॥ नन्वाद्यप्रतिवचने वागृचोरेकत्वावगमादोंकारस्य रसतमवाक्योपदिष्टमष्टमत्वं व्याहन्येतेत्याशंक्याह॥ वागृचोरिति॥ कथंपुनः रसतमवा
क्यादिदं प्रश्नप्रतिवचनरूपवाक्यं भिद्यते अर्थाधिक्याभावात्तत्राह॥ आप्तीति॥ पूर्वं हि वाक्यमोंकारस्य रसतमत्वं विदधाति॥ इदं तु तस्यैवाप्तिगुणं वि
धत्ते॥ तथाच तादृग्गुणविध्यर्थत्वेनास्य वाक्यान्तरत्वादेतद्वाक्यवशादष्टमत्वाभावेपि पूर्ववाक्यादोंकारस्याष्टमत्वमविरुद्धमित्यर्थः॥ तथापि कथमृगा
दिजातीये प्रष्टे वागेवर्गित्यादिप्रतिवचनमुचितं तद्व्यक्तिविशेषवचनमेव प्रश्नानुसारीत्याशंक्याह॥ वाक्प्राणाविति॥ वागृचोयोनिस्तन्निर्वर्तकत्वा
त्प्राणश्च साम्नो हेतुर्वैलेन हि गीतिरुत्पाद्यते॥ तथाच वागेवेत्यादिना कार्यकारणयोरभेदोपदेशादृङ्मात्रं साममात्रं वा तत्तत्कारणात्मकं प्रतीयते

विमर्शे हि सति प्रतिवचनोक्तिरुपपन्ना॥ वागेवर्क् प्राणः सामेति वागृचो रेकत्वेपि नाष्टमत्वव्याघातः पूर्वस्माद्वाक्या
न्तरत्वादाप्ति गुण सिद्धये ओमित्येतदक्षरमुद्गीथ इति वाक् प्राणावृक्सामयोनी इति वागेवऋक् प्राणः सामेत्युच्यते॥ यथा

विसृष्टं भवति वागेवर्क्प्राणः सामोमित्येतदक्षरमुद्गीथ

क्रमं ऋक्सामयोन्योर्वाक्प्राणयोर्ग्रहणे हि सर्वासामृचां सर्वेषां च साम्नां अवरोधः कृतः स्यात्॥ सर्वर्क्सामावरोधे च ऋक्सा
मसाध्यानां च सर्वकर्मणां अवरोधः कृतः स्यात्तदवरोधे च सर्वे कामा ॥तेन पूर्वत्रापि व्यक्तिरविवक्षिता प्रश्नप्रतिवचनयोरेकार्थे
त्वान्नैवमृगादिजातेरेकत्वात् डतमच्प्रत्ययानुपपत्तिस्तज्जात्यवच्छिन्नानामृक्सामोद्गीथानां तन्निधावृगादिजातेरेकस्याः निर्धारणार्थे
परिप्रश्ने तत्प्रयोगसंभवादृगादिषु प्रत्येकं भेदविवक्षया षष्ठीसमासे दूषणमुक्तं तत्र प्रत्येकमेकैकत्वमुपेत्योक्तरीत्या षष्ठीसमासे तु न किंचिद्दूष्य
तीति भावः॥ ऋगात्मिकाया वाचः सामात्मकस्य प्राणस्य ग्रहणे फलितं दर्शयन्नुक्तमेव व्यक्तीकरोति॥ यथाक्रममिति॥ ऋक्साममात्रावरोधेपि
किं सिध्यतीत्याशंक्याह॥ सर्वेति ॥ तथापि किं स्यादितिचेत्तत्राह॥ सर्वे कामा इति ॥ उक्तप्रक्रियया सर्वकामावाप्तिहेतुरोंकारो विवक्षि
ताप्तिगुणकः सिध्यतीत्यर्थः ॥ तृतीये प्रतिवचने तात्पर्यमाह॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ओमित्येतदिति॥अत्रापि पूर्ववज्ज्ञातिगृहीतो न व्याप्तित्वेन भक्तिरेवोक्तेति शंकां निरस्यन्नोमित्येतदक्षरमिति विशेषणं॥तथा चोद्गीथस्तदवयवे
विशेषणात्प्रकरणाच्चेत्यर्थः॥पारंपर्येण वाक्प्राणयोः सर्वकामसंबंधादुद्गीथस्यापि तथाभूतवागादिसंबंधादस्ति सर्वकामसंबंध इत्युक्तमिदानीमों
कारस्य वाक्प्राणद्वारा सर्वकामसंबंधे हेत्वंतरमाह॥तद्वा इति॥तदेतदित्यक्षरयोरक्षरविषयत्वं व्यावर्त्य वक्ष्यमाणविषयत्वं दर्शयति॥मिथुनमिति॥वै
शब्दो मिथुनप्रसिद्ध्यर्थः॥वाक्च प्राणश्चेति यद्द्वयमुपलभ्यते तन्मिथुनमिति योजना॥संगीतान्यवाक्यार्थमाह॥ऋक्सामेति॥वाक्प्राणयोर्ऋक्साम

अवरुद्धाः स्युः॥ओमित्येतदक्षरमुद्गीथ इति भक्त्याशंका निवर्त्यते तद्वा एतदिति मिथुनं निर्दिश्यते॥किं तन्मिथुनमित्याह॥यद्वा
क्प्राणश्च सर्वऋक्सामकारणभूतौ मिथुनं ऋक्च साम चेति ऋक्सामकारणात् ऋक्सामशब्दोक्तावित्यर्थः॥ननु स्वतंत्रे ऋक्च साम च
मिथुनं अन्यथा हि वाक्प्राणश्चेत्येकं मिथुनमृक्साम चापरं मिथुनमिति द्वे मिथुने स्यातां॥तथा च तदेतन्मिथुनमित्येकवचननिर्दे

स्तद्वा एतन्मिथुनं यद्वाक्च प्राणश्चर्क्च साम च । तदेतन्मिथुनमोमित्येतस्मिन्नक्षरे संसृज्यते यदा वै मिथुनौ स
मागच्छत

शोऽनुपपन्नः स्यात्तस्मादृक्सामयोन्योर्वाक्प्राणयोरेव मिथुनत्वं तदेतदेवंलक्षणं मिथुनमोमित्येतस्मिन्नक्ष
रे संसृज्यते॥एवं सर्वकामाप्तिगुणविशिष्टं मिथुनमोंकारे संसृष्टं विद्यत इत्योंकारस्य सर्वकामाप्तिगुणवत्त्वं सिद्धं वाङ्मय
त्वमोंकारस्य प्राणनिष्पाद्यत्वं च मिथुनेन संसृष्टत्वं मिथुनस्य कामापयितृत्वं प्रसिद्धमिति दृष्टांत उच्यते॥यथा लोके मिथुनौ
मिथुनावयवौ स्त्रीपुंसौ यदा

कारणत्वमुत्तरवाक्येन स्पष्टयति॥ऋक्चेति॥यथा वाक्प्राणौ मिथुनं एवमृक्साम च स्वातंत्र्येण मिथुनं निर्देश
सामान्यादित्याशंक्याह नन्विति॥ विपक्षे दोषमाह॥अन्यथेति॥इष्टमेव मिथुनद्वयमिति चेन्नेत्याह॥तथा चेति॥ननु मिथुनयोरनुगतं मिथुनत्वमादा
येकवचनमुपपत्स्यते चेन्नेत्याह तस्मादिति॥उपक्रमभंगान्न स्वतंत्रं मिथुनद्वयमस्तीत्यर्थः॥भवतु वाक्प्राणाख्यमृक्सामात्मकवाक्प्राणरूपमोंकारे
मिथुनयोः संसर्गे किं फलतीत्याह॥एवमिति॥कया पुनर्विधया मिथुनेन संसृष्टत्वमक्षरस्य सेत्स्यतीत्याह॥वाङ्मयत्वमिति॥यत्तु सर्वकामाप्तिगुणवि
शिष्टं मिथुनमित्युक्तं तदुपपादयति॥मिथुनस्येति॥प्रसिद्धमिति॥तादृगर्थो यथोक्ताक्षरस्य सर्वकामापयितृत्वे दृष्टांतः स उच्यतेऽनंतरवाक्येनेत्यर्थः॥दृष्टां

वयवाविति ॥ ग्राम्यधर्मतयातथाविधव्यापारतयेति ॥ यावद्वैशब्दोऽवधारणे विवक्षितं दार्ष्टान्तिकमाह ॥ तथेति ॥ एवमोंकारमाप्तिगुणविशिष्टं शि
ष्टात्तदुपासनाफलं कथयति ॥ तदुपासकोपीति ॥ तद्धर्मस्तूपासकस्याप्तिगुणवैशिष्ट्योक्तिः ॥ आपेतिवक्तव्ये कथमापयितेत्युक्तं तत्राह ॥ यज
मानस्येति ॥ निपातोऽत्ववधारणार्थोऽउद्गीथं तदवयवभूतमिति यावत् ॥ आप्तिगुणवदोंकारोपासनात्कथमुपासिता तद्गुणो भवतीत्याशंक्याह ॥ त
मिति ॥ उत्तरग्रन्थस्य गुणान्तरविधानेतात्पर्यं दर्शयति ॥ समृद्धीति ॥ तस्य समृद्धिगुणवत्त्वमप्रामाणिकमित्याशंक्य परिहरति ॥ कथमित्यादिना
॥ तदेतत्प्रकृतयोरोंकारस्याक्षरविषयत्वेन निर्दिशति ॥ प्रकृतमिति ॥ तस्य समृद्ध्यर्थो वैशब्दः ॥ अनुज्ञाक्षरमित्येतद्धि गृह्य विवक्षितेनार्थेन घटयति ॥

समागच्छतो ग्राम्यधर्मतया संयुज्येयातां तदापयतः प्रापयतः अन्योन्यस्येतरेतरस्येतो कामं तथा च स्वात्मानुप्रविष्टेन मिथु
नेन सर्वकामाप्तिगुणवत्त्वमोंकारस्य सिद्धमित्यभिप्रायः ॥ तदुपासकोऽप्युद्गातातद्धर्मा भवतीत्याह ॥ आपयिता ह वै कामानां य
जमानस्य भवति ॥ य एतदक्षरमेवमाप्तिगुणवदुद्गीथमुपास्ते तस्यैतद्यथोक्तं फलमित्यर्थः ॥ तं यथा यथोपासते तदेव भवतीति श्रु

आपयतो वै तावन्योन्यस्य कामम् आपयिता ह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते तद्वा एतदनुज्ञा
क्षरं यद्धि किंचानुजानात्योमित्येव तदाह हैषा एव समृद्धि

तेः ॥ समृद्धिगुणवांश्चोंकारः कथं तदेतत्प्रकृतमनुज्ञाक्षरम
नुज्ञा च साक्षरं चानुज्ञाक्षरमनुमतिरोंकार इत्यर्थः ॥ कथमनुज्ञेत्याह श्रुतिरेव यद्धि किंच यत्किंच लोके ज्ञानं वा धनं वानुजानाति विद्वा
न् धनी वा तत्रानुमतिं कुर्वन्नोमित्येव तदाह ॥ तथा च वेदे त्रयस्त्रिंशदित्योमिति होवाचेत्यादि ॥ तथा च लोकेऽपि तवेदं धनं गृह्णामीत्यु
अनुज्ञा चेति ॥ तस्यानुज्ञात्वे प्रश्नपूर्वकं प्रसिद्धिमुपन्यस्यति ॥ कथमिति ॥ तत्रेति ज्ञान धनयोरुक्तिः तदित्यनुमन्तव्यं क्ते ओमित्याहात एषा उ
साधारण्येनोच्यते ॥ ओंकारस्यानुज्ञाक्षरत्वे लोकप्रसिद्धिवद्वेदप्रसिद्धिं समुच्चिनोति ॥ तथा चेति ॥ कत्येव देवा याज्ञवल्क्येति शाकल्येन पृष्टे त्रयस्त्रिंशदि
ति याज्ञवल्क्येन प्रत्युक्ते सति ओमिति शाकल्यानुज्ञां कृतवान् पुनश्च कत्येवेति प्रश्ने षडिति प्रतिवचने सत्योमिति होवाचेत्यादि वाक्यं बृहदारण्यके यथो
कार्थानुसारिप्रसिद्धमित्यर्थः ॥ यद्धि किंचेत्यादावुक्तां लोकप्रसिद्धिमेव प्रकटयति ॥ तथा च लोकेऽपीति ॥ ओंकारस्य लोकवेदप्रसिद्धिभ्यामनुज्ञात्वेऽपि क
थं समृद्धिगुणवत्त्वमित्याशंक्याह ॥ अत इति ॥ उशब्दोऽप्यर्थः

समृद्धिशब्दादुपरि संबध्यते ॥ तस्याः समृद्धिमूलत्वं साधयति ॥ समृद्धो हीति ॥ अनुज्ञायाः समृद्धिं प्रतिकारणत्वेन समृद्धिवैसत्योंकारस्यापि तदात्मक
स्य समृद्धिगुणवत्त्वं सिद्धमित्युपसंहरति ॥ तस्मादिति ॥ समर्द्धयितेत्यादि फलवाक्यमत्याह ॥ समृद्धीति ॥ अस्मिन्वाक्ये समर्द्धयितेत्यादि पूर्ववदाख्ये
यमित्याह ॥ पूर्ववदिति ॥ ओंकारस्य गुणत्रयवतः सफलमुपासनमुक्तं तथा च वक्तव्याभावात्तेनेयमित्यादि वाक्यमनर्थकमित्याशंक्याह ॥ अथेति ॥
स्तुतेरानर्थक्यमाशंक्याह ॥ उपास्यत्वादिति ॥ प्ररोचनं प्रश्नपूर्वकं प्रकरयति ॥ कथमित्यादिना ॥ त्रयी विद्या वर्त्तत इति संबंधः त्रयी विद्येत्यस्यापव
रितार्थत्वं कथयति ॥ त्रयी विद्येति ॥ किमिति श्रुतत्वाख्याख्यायते तत्राह ॥ नहीति ॥ तस्याः स्वरूपलाभस्यानादित्वेन हेत्वनपेक्षत्वादित्यर्थः ॥ कर्मा

एव एषैव समृद्धिर्यदनुज्ञा या अनुज्ञा सा समृद्धिस्तन्मूलत्वादनुज्ञायाः समृद्धो ह्योमित्यनुज्ञां ददाति तस्मात्समृद्धिगुणवानोंकार इत्य
र्थः ॥ समृद्धिगुणोपासकत्वात्तद्धर्मा सन् समर्द्धयिता ह वै कामानां यजमानस्य भवति ॥ य एतदेवं विद्वानक्षरमुद्गीथमुपास्त इत्यादि पू
र्ववत् ॥ अथेदानीमक्षरं स्तौत्युपास्यत्वात्प्ररोचनार्थं कथं तेनाक्षरेण प्रकृतेनेयमृग्वेदादिलक्षणा त्रयी विद्या विहितं कर्मेत्यर्थः ॥ न

यदनुज्ञा समर्द्धयिता ह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते तेनेयं त्रयी विद्या वर्त्तते ओमित्या
श्रावयत्योमिति शꣳसत्योमित्युद्गायत्ये हि त्रयी विद्यैवाश्रावणादिभिर्वर्त्तते कर्म तु तथा प्रवर्त्तत इति प्रसिद्धं ॥ कथं ॥

ओमित्याश्रावयत्योमिति शंसत्योमित्युद्गायतीति लिंगाच्च सोमयाग इति गम्यते तच्च कर्म एतस्यैवाक्षरस्यापचित्यै पूजार्थं प
रमात्मप्रतीकं हि तत्तदपचितिः परमात्मन एव सा ॥ स्वकर्मणा तमभ्यर्च्य सिद्धिं पि कथमाश्रावणादिभिरात्मानं लभते तत्राह ॥ कर्मत्विति

॥ प्रसिद्धिमेव प्रपंचयति ॥ कथमित्यादिना ॥ आध्वर्यवहौत्रौद्गात्रसमाहारस्य दर्शपूर्णमासादिष्वसंभवादग्निष्टोमादिषु च संभवात्त्रितयसमा
हारलिंगादोंकारेण प्रवर्तमानं त्रयीविहितं कर्म सोमयाग इति भातीत्याह ॥ लिंगाच्चेति ॥ स्ववत्त्वेनोक्तं कर्मेति न्यायादोंकारेण वैदिकस्य कर्मणः स्थि
तिस्तुतिं विधाय स्तुत्यंतरमाह ॥ तच्चेति ॥ तत्कथं पुनरक्षरं कर्मणा पूज्यते तत्राह ॥ परमात्मेति ॥ तस्य तत्प्रतीकत्वे किं स्यादिति चेत्तत्राह ॥ तदपचितिरिति
॥ ननु कर्मणा परमात्मा चेदाराध्यते तर्हि तत्प्रतीकत्वादक्षरस्यापि तेनाराधनं स्यान्न चेश्वरस्तेनाराध्यत इति प्रमाणमस्तीति तत्राह ॥ स्वकर्मणेति ॥ वर्णा

प्रसाद्य तत्प्रसादवशात्तत्फलं कर्ता प्राप्नोतीति भगवतोक्तत्वादीश्वरपूजार्थं कर्मेति गम्यते॥ तथा च तत्प्रतीकत्वादोंकारस्य तत्पूजार्थं कर्मेति युक्तमित्य
र्थः॥ वैदिकं कर्माक्षरपूजार्थमित्यक्षरं स्तुत्वा विधान्तरेण स्तौतीति॥ किंचेति॥ यजमानादीत्यादिपदेन पत्नी गृह्यते॥ प्राणैस्त्रयीविहितं कर्म वर्तत इति सं
बंधः स्तुत्यंतरमाह॥ तथेति॥ यथाक्षरविकारैर्यजमानादिप्राणैर्वैदिकं कर्म वर्तते न तथेति यावत्॥ हविषेत्यत्रापि पूर्ववदन्वयः॥ कथमृत्विगादिप्राणा
नां हविषश्चाक्षरविकारत्वमत आह॥ यागेति॥ आदिशब्दोऽनुक्तवैदिककर्मसंग्रहार्थः॥ तस्मादोमित्युदाहृत्येत्यादिस्मृतेरित्यर्थः॥ अग्नौ प्रास्ताहु

विंदति मानव इति स्मृतेः॥ महिम्ना रसेन किंचैतस्यैवाक्षरस्य महिम्ना महत्त्वेन ऋत्विग्यजमानादिप्राणैरित्यर्थः॥ तथैतस्यैवाक्ष
रस्य रसेन व्रीहियवादिरसनिर्वृत्तेन हविषेत्यर्थः॥ यागहोमाद्यक्षरेण क्रियते तच्चादित्यमुपतिष्ठते ततो वृष्ट्यादिक्रमेण प्राणोऽन्नं
च जायते प्राणैरन्नेन च यज्ञस्तायते। तदुच्यते। अक्षरस्य महिम्ना रसेनेति तत्राक्षरविज्ञानवतः कर्म कर्तव्यमिति स्थितमाक्षिपति॥ ते

तस्यैवाक्षरस्यापचित्यै महिम्ना रसेन॥ तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद नाना तु विद्या चाविद्या च ॥

नाक्षरेणोभौ यश्चैतदक्षरमेवं व्याख्यातं वेद यश्च कर्ममात्रवित् अक्षरयाथात्म्यं न वेद तावुभौ कुरुतः कर्म तयोश्च कर्मसामर्थ्या
देव फलं स्यात्किं तत्राक्षरयाथात्म्यविज्ञानेनेति दृष्टं हि लोके हरीतकीं भक्षयतोस्तद्रसाभिज्ञतरयोर्विरेचनं नैवं यस्मान्नाना
तु विद्या चाविद्या च॥ भिन्ने हि विद्याविद्ये तु शब्दः   तिः सम्यगादित्यमुपतिष्ठते॥ आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा इति स्मृतिमाश्रि

त्याह॥ तच्चेति॥ वृष्ट्यादीत्यादिशब्देनान्नस्य प्रजानां चोत्पत्त्युपकरणं सर्वमुच्यते॥ तथापि कथमेतस्यैवाक्षरस्य महिम्नेत्यादि तत्राह॥ प्राणैरिति॥ अ
क्षरस्तुत्या महीकृतत्वादुपासनेन सिद्धे किमुत्तरेण ग्रंथेनेत्याशंक्याह॥ तत्रेति॥ पूर्वस्मिन् संदर्भे स्तुतिवशादक्षरविज्ञानेन कर्तव्यं तन्निष्पाद्यं कर्म तद्वि
ज्ञानवतोऽनुष्ठेयमिति स्थितं तदाक्षेपकमुत्तरं वाक्यमित्यर्थः॥ आक्षेपाक्षराणि व्याचष्टे नेत्यादिना॥ ननु कर्मकर्तृत्वे विद्वदविदुषोर्विद्वानेव तत्फल
मश्नुते नाविद्वानिति कथमित्याशंक्याह॥ तयोश्चेति॥ इतिशब्दस्त्वाक्षिपतीत्यनेन संबध्यते॥ कथं विद्वदविदुषोर्विशिष्टफल मित्याशंक्य दृष्टांत
माह॥ दृष्टं हीति॥ विमतं न स्वतंत्रफलमंगज्ञानत्वात्॥ आज्यावेक्षणवदिति माक्षेप्तमत्याह॥ नैवमिति॥ हेतुत्वेनावतारितं वाक्यं व्याचष्टे॥ भिन्ने हीति॥

विद्योपासनाकर्म अविद्या तयोर्भिन्नत्वं पृथक्फलवत्त्वं तन्न विद्यावैयर्थ्यमित्यर्थः॥ विद्यायाः स्वतंत्रफलवत्त्वं नास्तीति पक्षस्य व्यावृत्तिप्रकारमेवप्र
पंचयति॥नेत्यादिना॥ अंगज्ञानाद्गुणवदक्षरज्ञानस्याधिक्ये फलितमाह॥तस्मादिति॥ तदंगं कर्मांगं उद्गीथमात्रज्ञानं तस्मादाधिक्याद्विशिष्टाक्षरज्ञा
नस्येति यावत्॥ यत्तु पुनरुक्तं तयोश्च कर्मसामर्थ्यादेव फलं स्यादिति तत्राह दृष्टं हीति॥ यत्त्वंगज्ञानत्वादिति तत्किमंगत्वे सति ज्ञानत्वं किं वाश्रित्य विहि
तत्वं अथवा एतदेव ज्ञानत्वविशेषितं॥नाद्यः॥नन्विद्धारेणानियमन्यायेनासिद्धेर्न द्वितीयो गोदोहने व्यभिचारात्तृतीयो दृष्टांतस्य साधनविकलत्वादा
ज्यावेक्षणस्याश्रित्य विध्युदाहरणबहिर्भूतत्वादंगसंबंधज्ञानत्वमात्रेण दृष्टांतत्वे सत्यंगत्वोपाधेः संभवादित्यभिप्रेत्य ज्ञानाधिक्ये फलाधि

पक्षव्यावृत्त्यर्थः॥ नोंकारस्य कर्मांगत्वमात्रविज्ञानमेव रसतमाप्तिसमृद्धिगुणवद्विज्ञानं किं तर्हि ततोऽप्यधिकं तस्मात्तदंगाधिक्या
त्फलाधिक्यं युक्तमित्यभिप्रायो दृष्टं हि लोके वणिक्शबरयोः पद्मरागादिमणिविक्रये वणिजो विज्ञानाधिक्यात्फलाधिक्यं तस्माद्य
देव विद्यया विज्ञानेन युक्तः सन् करोति कर्म श्रद्धया श्रद्दधानश्च सन्नुपनिषदा योगेन युक्तश्चेत्यर्थः॥ तदेव कर्म वीर्यवत्तरं अविद्वत्कर्मणो

यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवतीति॥ ॥

धिकफलं भवतीति॥ विद्वत्कर्मणो वीर्यवत्तरवचनाद्विदुषोपि कर्म वीर्यवदेव भवतीत्यभिप्रायः नचाविदुषः कर्मण्यनधिकारः औ
षस्त्ये कांडेऽविदुषामपि आर्त्विज्यदर्शनात् कथमित्यत्रानंतरवाक्यं योजयति॥तस्मादिति॥ विज्ञानमुद्गीथाद्यंगमात्रविषयमुपासनातिरि
क्तं तेनेति यावत्॥ योगो देवताविषयमुपासनं इति शब्दः तदर्थसमाप्त्यर्थः॥ तत्रैवार्थसिद्धमर्थं कथयति॥विद्वदिति॥ नन्वर्थी समर्थो विद्वान् पर्युद
स्तश्च कर्मण्यधिकारीत्यंगीकारादविदुषस्तल्लक्षणानाक्रांतस्यानधिकारात्कथं तत्कर्म वीर्यवदिति प्रतिज्ञायते तत्राह॥ नचेति॥ औषस्त्ये उषस्ति संब
धे मटचीहतेष्वित्यादि तस्मिन् ग्रंथजाते विद्याहीनानामपि कर्मानुष्ठानं दृश्यते॥ प्रस्तोतर्या देवतेत्यादौ तां चेदविद्वानित्यादिलिंगात्तस्मादविदुषोपि
कर्मण्यधिकारोऽधिकारिलक्षणे तु ज्ञानाभावेपि द्रव्यादिज्ञानमात्रेण विशेषणसिद्धिरित्यर्थः॥ गुणवदक्षरज्ञानं स्वतंत्रफलमित्युक्तं तत्तु रसतमगुण
वदक्षरविषयमेकमुपासनं तत्र च विद्युद्देशे फलस्याश्रुतत्वे विश्वजिन्न्यायेन रात्रिसत्रन्यायेन वा तत्कल्प्यते आप्तिगुणवतः समृद्धिगुणवतश्चास्

रस्येदं विज्ञाने प्रत्येकं फलश्रुतेस्तथा चत्वार्युपासनानि पृथक्फलानि विवक्षितानीत्यत आह ॥ रसतमेति ॥ न तावदिहोपासीतेति विधिव्यति
रेकेण मध्ये विध्यंतरमुपलभ्यते न चापयिता ह वै कामानामित्यादिवाक्यफलश्रुत्या विधिकल्पने यो रसतमगुणवदक्षरविज्ञानविधौ फलाकांक्षिण्य
र्थवादस्य फलांशान्वयेनानेकगुणवदेकविज्ञानविधिसंभवे विधिभेदकल्पनायोगात् नो खल्वर्थवादिकफलवदनेकविशेषणैकोपास
नविषयविध्यभ्युपगमे न वाक्यैक्यसंभवेन वाक्यभेदमुचितं एतेन विश्वजिन्न्यायो निरस्तः ॥ रात्रिसत्रन्यायस्तु प्रकृताविरोधीति भावः तस्योपव्याख्या
नमित्युक्तस्योपसंहारवाक्यं खल्वेतस्येत्यादि तत्रैतच्छब्देन प्रकृताकर्षणे कारणमाह ॥ अनेकैरिति ॥ रसतमाप्तिसमृद्धिरूपाण्यनेकानि विशेषणा
नि तैर्विशिष्टत्वेनाक्षरस्यानेकप्रकारेणोपास्यत्वात्प्रकारभेदेष्वुपासनैक्यस्य प्रागेवोक्तत्वात्प्रकृतस्यैवाक्षरस्यैतदुपव्याख्यानं यत्खलु विहितमि

रसतमाप्तिसमृद्धिगुणवदक्षरमित्येकमुपासनं मध्ये प्रयत्नांतरादर्शनात् ॥ अनेकैर्हि विशेषणैरनेकधोपास्यत्वात् खल्वेत

खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवति ॥ १ ॥ देवासुरा ह

स्यैव प्रकृतस्योद्गीथस्याक्षरस्योपव्याख्यानं भवति ॥ १ ॥ देवासुरा देवाश्चासुराश्च देवा दीव्यतेर्द्योतनार्थस्य शास्त्रोद्भासिता इंद्रि
यवृत्तयोऽसुराः तद्विपरीताः स्वेष्वेवासुषु विष्वग्विषयासु प्राणनक्रिया त्यर्थः ॥ १ ॥ गुणत्रयविशिष्टमुद्गीथावयवभूतमोंकाराख्यमक्षरं
परमात्मप्रतीकं तद्दृष्ट्योपास्यमित्युपदिष्टमिदानीं तस्यैवाक्षरस्याध्यात्माधिदैवभेदेनादित्यप्राणदृष्ट्योपासनं विवक्षन्कंडिकांतरमवतारयति
॥ देवासुरा इति ॥ तत्राक्षराणि व्याचिख्यासुः प्रतिभासमुदायार्थं विवक्षितं समासं दर्शयति ॥ देवाश्चेति ॥ देवशब्दनिष्पत्तिप्रकारं सूचयति ॥ देवा इति
॥ दीव्यतिर्द्योतनार्थो दिवुक्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकांतिगतिष्विति दर्शनात्तस्य चाजंतस्य सति गुणे कर्तरि यथोक्तरूपसिद्धि
रित्यर्थः ॥ ते च द्योतनका देवा रूढेरिंद्रादयो भविष्यंतीत्याशंक्याह ॥ शास्त्रेति ॥ इत्यध्यात्ममित्युपसंहारविरोधात्प्रसिद्धेर्वेहेयत्वादुपासकशरीर
स्थकरणावस्था देवाः सत्वात्मकाः शास्त्रानुसारिणो देवशब्दवाच्या इत्यर्थः ॥ तथाध्यात्ममसुरा विरोचनादयः स्युरित्याशंक्य पूर्ववदुपसंहारवि
रोधमभिप्रेत्याह ॥ असुरा इति ॥ असुरा इंद्रियवृत्तय एवेति संबंधः ॥ सात्विकेंद्रियवृत्तिभ्यो वैपरीत्यं तासां असुरत्वसिद्धित्यर्थं दर्शयति ॥ तद्विपरीता इति

छां॰भा॰ १

विषयविषयासु विषयेषु चेतनाचेतनागतयो विषया यासां तास्विति यावत्॥ प्राणनक्रियासु जीवनानुकूलप्राणचेष्टास्वित्यर्थः तदेव स्फोरयति॥ स्वाभाविकप्र
ति शास्त्रापेक्षामन्तरेणैव स्वभाववशात्प्रवर्त्तमानत्वं स्वाभाविकत्वं॥ तथा च शास्त्रीयेन्द्रियवृत्तिभ्यो वैपरीत्यमसुषामतिविस्पष्टमित्यर्थः॥ वैपरीत्यान्तरमाह॥
तमआत्मिका इति॥ कथं मिथो विषयापहारनिमित्तीकृत्य देवानामसुराणां संग्रामो भूदित्यपेक्षायामासुरीं वृत्तिं प्रकटयति॥ शास्त्रीयेति॥ दैवीं वृत्तिं प्रथ
यति॥ तथेति॥ देवानामुक्तासुरवैपरीत्यं स्फुटयति॥ शास्त्रेति॥ स्वाभाविकः शास्त्रानपेक्षस्तमोरूपः पाप्माऽसुरः परिच्छेदाभिमानस्तस्य तिरस्करणार्थमि
ति यावत्॥ उक्तमाध्यात्मिकं संग्रामं निगमयति॥ इत्यन्योन्येति॥ उक्तरीत्या यथोक्तानां देवानामसुराणां च पराभिभवः स्वोद्भवश्चेत्येवंरूपः संग्रामः प्रति

सुरमणात्स्वाभाविक्यस्तमआत्मिका इन्द्रियवृत्तय एव॥ ह वै इति पूर्ववृत्तोद्भासकौ निपातौ॥ यत्र यस्मिन्निमित्त इतरेतरविषयाप
हारलक्षणे संयेतिरे संपूर्वस्य यततेः संग्रामार्थत्वमिति संग्रामं कृतवन्त इत्यर्थः॥ शास्त्रीयप्रकाशवृत्त्यभिभवनाय प्रवृत्ताः स्वाभाविक्य
स्तमोरूपा इन्द्रियवृत्तयोऽसुराः तथा तद्विपरीताः शास्त्रार्थविषयविवेकज्योतिरात्मानो देवाः स्वाभाविकतमोरूपासुराभिभवनाय प्र

वै यत्र संयेतिर उभये प्राजापत्या

वृत्ता इत्यन्योन्याभिभवोद्भवरूपः संग्राम इव सर्वप्राणिषु प्रतिदेहं देवासुरसंग्रामोऽनादिकालप्रवृत्त इत्यभिप्रायः॥ स इह श्रुत्याऽऽ
ख्यायिकारूपेण धर्माधर्मोत्पत्तिविवेकविज्ञानाय कथ्यते प्राणविशुद्धिविज्ञानविधिपरतया अत उभयेऽपि देवासुराः प्रजापतेरपत्या
नीति प्राजापत्याः प्रजापतिः कर्मज्ञानाधिकृतः पुरुषः पुरुष एवोक्थमयमेव महान्प्रजापतिरिति श्रुत्यन्तरा

देहमनादिकालप्रवृत्तो यथा दे
वासुरसंग्रामस्तथेति योजना॥ किमर्थं पुनरपुरुषार्थरूपो देवासुरसंग्रामः श्रुत्याख्यायते तत्राह॥ स इहेति॥ स हि संग्रामोऽस्मिन्प्रकरणे प्राणस्य विशुद्धि
विषयं विज्ञानं विधातुं प्रवृत्तः तथा श्रुत्या कथारूपेणाख्यायते इन्द्रियाणां विषयवैमुख्ये धर्मः स्यात्तेषां तदाभिमुख्ये पापस्योत्पत्तिरिति विवेकविज्ञान
सिद्ध्यर्थं चाख्यायिका प्रणीयते॥ तस्मादिन्द्रियाणां प्रयत्नतो विषयप्रावण्यं परिहर्त्तव्यं॥ तद्वैमुख्यं च तेषां श्रेयोर्थिभिर्यत्नादाधेयमिति भावः॥ यजमा
नप्राणानामेव देवासुरभावस्योक्तत्वमतः शब्दार्थः॥ प्रजापतिशब्दस्य रूढमर्थमपाकृत्य विवक्षितमर्थमाह॥ प्रजापतिरिति॥ उक्तरूपः पुरुषः प्रजापति

अ॰ १

राम १

कथं पुनर्यथोक्तानां देवासुराणां तद्वत्त्वं तत्राह ॥ तस्य हीति ॥ यत्रेत्युक्तं संग्रामनिमित्तं परामृशति ॥ तत्तत्रेति देवानामुत्कर्षश्चासुराणामपकर्षश्च
लक्षणमित्यस्मिन्निमित्ते कथमुद्गीथभक्त्याहरणमित्याशंक्याह ॥ उद्गीथेति ॥ लक्षितलक्षणान्यायं सूचयति ॥ तस्यापीति ॥ उद्गीथभक्तेरित्येवेत्यर्थः ॥ त
दाहरणप्रयोजनं प्रश्नपूर्वकं कथयति ॥ तत्किमर्थमित्यादिना ॥ संप्रत्युद्गीथाहरणप्रकारं प्रकटयति ॥ यदा चेति ॥ अचेतनस्य करणस्योद्गातृत्वासंभ
वात्तद्विशिनष्टि ॥ चेतनावन्तमिति ॥ मुख्यं प्राणं व्यावर्तयति ॥ प्राणमिति ॥ त्वन उद्गायेति वाजसनेयकश्रुतिमाश्रित्याह ॥ उद्गीथकर्तारमिति अथोद्गी
थभक्तिरेव श्रूयते नतूद्गाता तत्कथं तदुपासनमित्याशंक्याह ॥ उद्गीथभक्त्येति ॥ तयोपलक्षितमुद्गातारमुपासत इति यावत् ॥ कथमुपासनमित्यपेक्षायां

तस्य हि शास्त्रीयः स्वाभाविकश्च करणवृत्त्योर्विरुद्धापत्नीवत्तदुद्भवत्वात्तत्र उत्कर्षोपकर्षलक्षणनिमित्ते ह देवा उद्गीथमुद्गी
थभक्त्युपलक्षितमौद्गात्रं कर्माजह्रुराहृतवन्तः ॥ तस्यापि केवलस्याहरणासंभवाज्ज्योतिष्टोमाद्याहृतवन्त इत्यभिप्रायः तत्किमर्थमा
जह्रुरित्युच्यते ॥ अनेन कर्मणैनानसुरानभिभविष्याम इत्येवमभिप्रायाः सन्तो यदा च तदुद्गीथं कर्माजिहीर्षवस्तदा ते ह देवा नासिक्यं नासि

॥ ॥ ॥ ॥ ते ह देवा उद्गीथमाजह्रुरनेनैनानभिभविष्याम इति ते ह नासिक्यं प्राणमुद्गीथमुपासांचक्रिरे

कायां भवं चेतनावन्तं प्राणमुद्गीथकर्तारमुद्गातारं ॥ उद्गीथभक्त्योपासांचक्रिरे कृतवन्त इत्यर्थः ॥ नासिक्यप्राणदृष्ट्योद्गीथाख्यमक्षर
मोंकारमुपासांचक्रिरे इत्यर्थः ॥ एवं हि प्रकृतार्थपरित्यागोऽप्रकृतार्थोपादानं च न कृतं स्यात्खल्वेतस्यैवाक्षरस्येत्योंकारो ह्युपास्यत
या प्रकृतत्वात् ननु उद्गीथोपलक्षितं कर्माहृतवन्त इत्यवोचः इदानीमेव कथं नासिक्यप्राणदृष्ट्योंकारमुपासांचक्रिर इत्यात्थ ॥ ॥

उद्गीथेन कर्तृत्वप्रार्थनयेत्याह ॥ कृतवन्त इति ॥ नेह नासिक्यमित्यक्षरोक्तमर्थमुक्त्वा वाक्यार्थमाह ॥ नासिक्येति ॥ किमित्यक्षरमोंकाराख्यमिहोपा
स्यत्वेन व्याख्यायते तत्राह ॥ एवं हीति ॥ उक्तमेव स्फुटयति ॥ खल्विति ॥ तथा च प्राणस्योद्गातृदृष्ट्योपासने प्रकृतस्य परित्यागो भक्तेश्च घ्राणप्राणदृष्ट्यो
पास्यत्वांगीकारेऽप्रकृतोपादानमिति शेषः ॥ पूर्वापरविरोधमाशंकते ॥ नन्विति ॥ उद्गीथोपलक्षितेनौद्गात्रेणोपलक्षितं ज्योतिष्टोमादिकर्माहृतमि
त्युक्तं तदाहरणं च तस्योपासनं तद्विरुद्धं नासिक्यप्राणदृष्ट्याक्षरोपासनमित्यर्थः ॥

स्वोक्तेर्मिथो विरोधं परिहरति॥ नैष दोष इति॥ उद्गीथोपलक्षितकर्मोपलक्षिते ज्योतिष्टोमादौ कर्मणि सत्येवोद्गातृप्राणदृष्ट्योपास्यत्वेनाक्षरं विवक्षितं
ओंकारस्योद्गीथावयवो ध्येयत्वेनेष्टो न स्वतन्त्रो व्यापकस्तथा चाक्षरोपासनार्थत्वेन कर्माहरणं न ध्येयत्वेनेत्यविरोध इत्यर्थः॥ आश्रितत्वविधानार्थं क
र्माहरणमित्युक्तं तं हेत्यादि व्याचष्टे॥ तमेवमिति॥ स्वोत्थेन चासुरेण नासिकासंबद्धेनेति यावत्॥ अधर्मासंगरूपेण॥ तस्यासंगवेधं साधय
ति॥ स हीति॥ कल्याणो गन्धः सुरभिरुक्तः तस्य ग्रहणं ममैवेत्यभिमानात्मा यो यमासंगस्तेनाभिभूतत्वमुपकारो गंधाघ्राणहेतुस्तत्तुल्यः सर्वस्य कार्यकार
णसंघातस्येति विवेकविज्ञानं यस्य स तथेति विग्रहः॥ ननु कथं यथोक्तासंगस्पर्शितेत्याशंक्याह॥ स तेनेति॥ उक्तेऽर्थे वाक्यं पातयति॥ तदिदमिति॥

नैष दोष उद्गीथकर्मण्येव विहितत्वात्कर्तृप्राणदेवतादृष्ट्योद्गीथभक्त्यवयवस्योंकार उपास्यत्वेन विवक्षितो न स्वतन्त्रः। तस्तादर्थ्येन कर्माहृ
तं भवतीत्युक्तमेवोक्तं तमेवं देवैर्वृतं तमु ज्ञातारं हासुराः स्वाभाविकतमआत्मानो ज्योतीरूपं नासिक्यं प्राणं देवं स्वोत्थेन पाप्मनाऽधर्मा
संगरूपेण विविधुः विद्धवन्तः संसर्गं कृतवन्त इत्यर्थः॥ स हि नासिक्यः प्राणः कल्याणगन्धग्रहणाभिमानासंगाभिभूतविवेकविज्ञानो ब

तꣳ हासुराः पाप्मना विविधुस्तस्मात्तेनोभयं जिघ्रति सुरभि च दुर्गन्धि च

भूव स तेन दोषेण पाप्मसंसर्गी बभूव तदिदमुक्तमसुराः पाप्मना विविधुरिति॥ यस्मादासुरेण पाप्मना विद्धः तस्मात्तेन पाप्मना प्रेरितो
घ्राणः प्राणो दुर्गन्धिग्राहकः प्राणिनां॥ अतस्तेनोभयं जिघ्रति लोकः सुरभि च दुर्गन्धि च पाप्मना ह्येष यस्माद्विद्धः उभयग्रहणमविव
क्षितं यस्योभयं ह घ्राणप्राणस्यासुरपाप्मविद्धत्वे कार्यलिंगकमनुमानं सूचयति॥ तस्मादिति॥ उक्तानुमानवद्योतिवाक्यं व्याकरोति॥
अत इति॥ अतःशब्दार्थमेव स्फुटयति॥ पाप्मनेति॥ ननु पाप्मना विद्धत्वात्तेन लोको दुर्गन्धं जानातीत्येव वक्तव्यं सुरभिज्ञानस्य पाप्मकार्यत्वाभा
वात्तथा च कथं तेनोभयं जिघ्रतीत्युक्तं तत्राह॥ उभयग्रहणमिति॥ एकस्यापि हविषो कोद्रवात्मकस्य पुरोडाशादेर्वा काकादिसंबंधाद्दोषे प्राय
श्चित्तसत्त्वेऽपि यस्योभयं हविरार्तिमार्छेदित्यैन्द्रं पंचशरावमोदनं निर्वपेदित्यत्रोभयग्रहणमविवक्षितमिति स्थितं षष्ठे तन्त्रे तथात्रापीत्याह
॥यस्येति॥ न केवलं पाप्मना हीति वाक्यशेषादत्रोभयग्रहणमविवक्षितं किन्तु वाजसनेयके यथोक्तोद्गीथविद्याविषयत्वेन समानप्रकरणेय

वैधवशात् दुर्गंधं जानातीत्येवं वक्तव्यत्वाद्विवक्षितमुभयग्रहणमित्याह ॥ यदेवेति ॥ ननु नासिक्यस्य प्राणस्य पाप्मविद्धत्वादनुपास्यत्वे सिद्धे न्यायसाम्याद्वागादीनामपि नोपास्यत्वमिति सिध्यति तत्किमुत्तरग्रंथेनेत्यत आह ॥ मुख्यप्राणस्येति ॥ न्यायसाम्येपि मुखतो निराकरणाभावे मुख्यप्राणस्यैवोपास्यत्वमित्यनिश्चयात्तदुपास्यतादार्ढ्यार्थं मुखतो वागादीनामुपास्यत्वमपाकर्तुं उत्तरग्रंथ इत्यर्थः ॥ विद्धा इति विचार्यक्रमेणापोह्यंत

विरार्तिमार्च्छतीति यद्धृद्यदेवेदमप्रतिरूपं जिघ्रतीति समानप्रकरणश्रुतेः मुख्यप्राणस्योपास्यत्वाय तद्विशुद्धत्वानुभवार्थोयं विचारः श्रुत्या प्रवर्तितोतश्चक्षुरादिदेवताः क्रमेण विचार्यासुरेण पाप्मना विद्धा इत्यपोह्यंते ॥ समानमन्यत् ॥ अथ ह वाचं चक्षुः श्रोत्रं मन इत्याद्यनुक्ता अप्यन्यास्त्वग्रसनादिदेवता द्रष्टव्याः ॥ एवमु खल्वेता देवताः पाप्मभिरिति श्रुत्यंतरादासुरेण विद्धत्वात् घ्राण

पाप्मना ह्येष विद्धोऽथ ह वाचमुद्गीथमुपासांचक्रिरे तां हासुराः पाप्मना विविधुस्तस्मात्तेनोभयं वदति सत्यं चानृतं च पाप्मना ह्येषा विद्धाथ ह चक्षुरुद्गीथमुपासांचक्रिरे तद्धासुराः पाप्मना विविधुस्तस्मात्तेनोभयं पश्यति दर्शनीयं चादर्शनीयं च पाप्मना ह्येतद्विद्धमथ ह श्रोत्रमुद्गीथमुपासांचक्रिरे तद्धासुराः पाप्मना विविधुस्तस्मात्तेनोभयं शृणोति श्रवणीयं चाश्रवणीयं च पाप्मना ह्येतद्विद्धमथ ह मन उद्गीथमुपासांचक्रिरे तद्धासुराः पाप्मना विविधुस्तस्मा

दिदेवता अपोह्यंतेऽथानंतरं य एवायं प्रसिद्धो मुखे भवो मुख्यः प्राणः तमुद्गीथमुपासांचक्रिरे तं हासुराः पूर्ववदृत्वा प्राप्य विदध्वंसुर्विनष्टा अभिप्रायमात्रेणाकृत्वा किंचिदपि प्राणस्य कथं विनष्टा इत्यत्र दृष्टांतमाह ॥ यथा लोके अश्मानमाखणं नशक्यते खनितुं कुद्दालादिभिरपि छेत्तुमशक्योऽखण एवाखणस्तमृत्वा इति संबंधः ॥ उत्तरवाक्यस्य व्याख्यानमनपेक्षितं पूर्वेण समानत्वादित्याह ॥ समानमिति ॥ अवशिष्टवाक्यैकदेशग्रहणार्थमादिपदं ॥ ननु घ्राणादीनां पाप्मविद्धत्वादनुपास्यत्वेपि त्वगादीनां तद्विद्धत्वेनानुपास्यत्वावचनान्मुख्यस्यैव प्राणस्योपास्यत्वं नावसीयतेत आह ॥ अनुक्ता इति ॥ उक्तानामनुक्तोपलक्षणत्वे बृहदारण्यकश्रुतिं संवादयति ॥ एवमु खल्विति ॥ अथ हेत्यादि मुख्यप्राणविषयं वाक्यमुत्थाप्य व्याकरोति ॥ आसुरेणेत्यादिना ॥ पूर्ववद्वागादिष्विति यावत् टंकैश्चाविदार्यो लोष्टविशेष इत्यर्थः ॥

अस्प्रुतस्य लोष्टस्याश्मोपादाने हेतुमाह ॥ सामर्थ्यादिति ॥ तस्य ध्वंसनयोग्यत्वाद्ध्वंसने चाश्मकर्तृत्वापेक्षत्वादित्यर्थः ॥ नहि यस्य कस्य चिदेवंविधस्य सं
भवात्केवलं लोष्टग्रहणेनेत्याशंक्य यथाश्मानमृत्वा लोष्टो विध्वंसेतेति बृहदारण्यकश्रुतेस्तस्यैवात्र ग्रहणमित्याह ॥ अश्मन्यन्तराच्चेति ॥ दृष्टान्तदार्ष्टा
न्तिकाभ्यां सिद्धमर्थं निगमयति ॥ एवमिति ॥ इति प्राणस्य विशुद्धत्वात्तदुपासनं कर्तव्यमिति शेषः फलवचनमवतार्य व्याकरोति ॥ एवंविद इत्या

सामर्थ्याल्लोष्टः पांसुपिंडः अश्मन्यन्तराच्चाश्मनि क्षिप्तोऽश्मभेदनाभिप्रायेण तस्याश्मनः किंचिदप्यकृत्वा स्वयं विध्वंसेत विदीर्ये
तैवं विदध्वंसुरित्यर्थः ॥ एवं विशुद्धोऽसुरैरधर्षितत्वात्प्राण इत्येवंविदः प्राणात्मभूतस्येदं फलमाह ॥ यथाश्मानमित्येष एव
दृष्टान्तः ॥ एवं हैव स विध्वंसते विनश्यति कोऽसावित्याह ॥ य एवंविदि यथोक्तप्राणविदि पापं तदनर्हं कर्तुं कामयत इच्छति ॥ य

नेनोभयꣳ संकल्पयते संकल्पनीयं चासंकल्पनीयं च पाप्मना ह्येतद्विद्धमथ ह य एवायं मुख्यः प्राणस्तमु
द्गीथमुपासांचक्रिरे तꣳ हासुरा ऋत्वा विदध्वꣳसुर्यथाश्मानमाखणमृत्वा विध्वꣳसेतैवं यथाश्मानमाख
णमृत्वा विध्वꣳसत एवꣳ हैव स विध्वꣳसते य एवंविदि पापं कामयते यश्चैनमभिदासति ॥ ॥ ॥

श्चाप्येनमभिदासति हिनस्ति प्राणविदं प्रत्याक्रोशताडनादि प्रयुंक्ते सोऽप्येवमेव विध्वंसत इत्यर्थः ॥ यस्मात्स एष प्राण
वित्प्राणभूतत्वादश्माऽऽखणोऽधर्षणीय इत्यर्थः ॥ ननु नासिक्योऽपि प्राणो वाय्वात्मा यथा मुख्यस्तत्र नासिक्यः प्राणः पा
प्मना विद्धः प्राण एव सन्मुख्यः कथं नैष दोषो नासिक्यस्तु स्थानकरणवैगुण्याद्विद्धो वाय्वात्मापि सन्मुख्यः स्थानदेव

दिना ॥ प्राणवित्प्रतिस्पर्धिनो विनाशे हेतुमाह ॥ यस्मादिति ॥ नासिक्यप्राणस्य मुख्यप्राणस्य च वायुविकारत्वेन प्राणत्वावि तावलीयस्त्वा
शेषात्पाप्मनात्वेव विद्धौ तुल्यावेव स्यातामिति शंकते ॥ नन्विति ॥ स्थानविशेषसंबंधासंबंधाभ्यामनयोरपि पाप्मवेधव्यवस्थाऽयुक्तेति परि
हरति ॥ नैष दोष इति ॥ स्थानावस्थावच्छिन्ने करणे वैगुण्यं विषयविशेषासक्तत्वं तस्मात्तद्रूपस्य नासिक्यप्राणस्यापि विद्धता स्यादिति याव
त् ॥ तदसंभवाद्विशेषसंबंधप्रयुक्तवैगुण्यायोगादित्येतत्क्लिष्टमुक्तमुपपन्नं ॥ स्थानसंबंधविशेषाद्घ्राणप्राणस्य पाप्मविद्धत्वं तदभावाच्च

प्राणस्यतद्विद्वत्त्वमेतद्दृष्टांतेनस्पष्टयति॥यथेत्यादिना॥नमुख्योदोषवद्घ्राणसचिवत्वाभावादितिशेषः॥घ्राणदेवताविद्वाप्राणदेवतानुग
विद्वेत्यत्रगमकत्वेनानंतरवाक्यंव्याचष्टे॥यस्मादिति॥मुख्यप्राणस्यपाप्मवेधाभावमुपसंहरति॥अतश्चेति॥पाप्मकार्यासंगःतस्यप्राणेनु
पलंभादित्यतःशब्दस्यैवार्थःहिशब्देनोक्तंपाप्माविधंविशुद्धत्वेहेतूक्त्वामुख्यप्राणविशुद्धिमुपसंहरति॥ह्येषइति॥तस्यविशुद्धत्वेहेत्वंतरमा
ह॥यस्माच्चेति॥अतोविशुद्धइत्युत्तरत्रसंबंधः॥सर्वार्थत्वंप्राणस्यप्रश्नपूर्वकंप्रतिपादयति॥कथमित्यादिना॥प्राणादीत्यादिशब्देनकार्यमस्यु

यथावास्याद्यःशिक्षावत्पुरुषाश्रयाःकार्यविशेषंकुर्वंतिनान्यहस्तगताः॥तद्दोषवत्प्राणसचिवत्वाद्विद्वाघ्राणदेवतानमु
ख्योयस्मान्नविद्वोसुरैर्मुख्यस्तस्मान्नैवतेनसुरभिनदुर्गंधिवाविजानातिघ्राणेनैवतदुभयंविजानातिलोकोनश्चपाप्मकार्याद
र्शनादपहतपाप्मापहतोविनाशितोपनीतःपाप्मायस्मात्सोयमपहतपाप्माह्येषविशुद्धइत्यर्थः॥यस्माच्चात्मंभरयःकल्याणाद्या
संगवत्त्वात्प्राणादयोनतथात्मंभरिर्मुख्यःकिंतर्हिसर्वार्थःकथमित्युच्यतेतेनमुख्येनयदश्नातियत्पिबतिलोकस्तेनाशितेनपीते

सएषोश्मारवणोनैवैतेनसुरभिनदुर्गंधिविजानात्यपहतपाप्माह्येषतेनयदश्नातियत्पिबतितेनेतरान्प्राणान
वत्येतमुएवांततो नचेतरान्प्राणादीनवतिपालयतितेनहितेषांस्थितिर्भवतीत्यर्थः॥अतःसर्वंभरिःप्राणोऽतोविशु
द्धः॥कथंपुनर्मुख्याशितपीताभ्यांस्थितिरेषांगम्यतइति॥उच्यते॥एतंउएवमुख्यंप्राणंमुख्यप्राणस्यवृत्तिमन्नपानेइत्य
र्थस्ततोंतेमरणकालेऽवित्वाऽलब्ध्वोत्क्रामतिघ्राणादिप्राणसमुदायइत्यर्थः अप्राणोहिनशक्नोतिअशितुंपातुंवातदोत्क्रां
तिःप्रसिद्धाघ्राणादिकलापस्यदृश्यतेह्युत्क्रांतोप्राणस्यो च्यते॥तेनेताःस्तृप्यंतीतिश्रुत्यंतरमाश्रित्याह॥तेनहीति॥प्राणवृत्तिहेतु
भ्यामन्नपानाभ्यांसंघातस्थितिरतःशब्दार्थः॥सर्वार्थत्वंद्वितीयस्यातःशब्दस्यार्थः॥मुख्यप्राणोपयुक्तत्वादन्नादीनांसंघातस्थितिहेतुत्व
मित्यत्रप्रश्नपूर्वकंलिंगंदर्शयति॥कथमित्यादिना॥वृत्तिमेवविशिनष्टि॥अन्नपानेइति॥अन्वहमुपभुज्यमानेअन्नपानेप्राणस्थितिहेतूइ
तियावत्॥प्राणस्योत्क्रिमिषायामपिसंघातःस्वयमशनपानेकृत्वास्यास्यतीत्याशंक्याह॥अप्राणोहीति॥नह्यप्राणोच्चिक्रमिषावस्थो

ऐ॰भा॰ १२

अ॰ १

तदिति श्रुतत्वादन्नमुच्यते॥ अन्नग्रहणं पानोपलक्षणार्थं॥ विशुद्धिगुणकमुख्यप्राणात्मो ज्ञातृदृष्ट्योद्गीथावयवभूतमोंकाराख्यमक्षरं रूप
स्यमित्युक्तं॥ इदानीं तत्रैवाङ्गिरसबृहस्पत्यायास्यगुणत्रयविधानार्थमुत्तरं ग्रंथमुत्थापयति॥ तं हेति॥ तत्र वृत्तिकाराभिप्रेतं संबंधं दर्शयति
तं मुख्यमिति॥ स्वाभिप्रेतसंबंधगमकमाह॥ एतमिति॥ अव्यवहितसंबंधसंभवे व्यवहितसंबंधकल्पनानुपयुक्तेति परिहरति॥ भवत्ववमि
ति॥ ऋषीणामंगिरोबृहस्पत्यादिशब्दैरुपदेशोपि गुणत्रयविशिष्टप्राणोपासनं न विरुध्यते॥ तत्तत्प्रधानानामबाधे प्राणोपासकानामृषीणा
मुपदेशो न त्यागमर्हत्यंगिरोबृहस्पत्यादिशब्देभ्यः प्रथममप्रतिपन्नानृषीन्विहाय यौगिकवृत्तिप्रतिपत्त्ये गुणमात्रप्रतिपत्त्यनुपपत्तेरित्यर्थः॥
प्राणोपासकानामृषीणामभिधानमेतेनरयकस्तुत्या दृढयति॥ स्तुत्यंतरवदिति॥ तदेव स्पष्टयति॥ तस्मादिति॥ शतर्चिनो नाम प्रथममंडलदृशऋ

शिशिषा ऽतो व्याददात्येवास्यं आस्यविदारणं करोतीत्यर्थः॥ तच्चान्नालाभे उक्तं तस्य लिंगं तदंगिरसः तं मुख्यं प्राणं हि अंगिरा एवं
गुणमुद्गीथं उपासांचक्रे उपासनं कृतवान् बकोदाल्भ्य इति वक्ष्यमाणेन संबध्यते॥ तथा बृहस्पतिरित्ययास्य इति चोपासांचक्रे व ७
ऽविनो ऽक्रामति व्याददात्येवांततदिति म ७ हांगिरा उद्गीथमुपासांचक्र एतमु एवांगिरसं मन्यंते कइत्येवं संबंधं
कृतवंतः केचित्॥ एतमु एवांगिरसं बृहस्पतिमयास्यं प्राणं मन्यंते इति वचनाद्भवत्येवं यथाश्रुतासंभवे॥ संभवति तु यथाश्रुते
ऋषिचोदनायामपि स्तुत्यंतरवत्तस्माच्छतर्चिन इत्याचक्षते एतमेव संतमृषिमपि तथा माध्यमा गृत्समदो विश्वामित्रो वामदेवै

षयः एष च प्राणो यस्मात्पुरुषं संघाताख्यं शतवर्षाण्यभिगतवांस्तस्मादेतमेव प्राणं संतमृषिं शरीरस्थितमपि शतर्चिनशब्दवाच्यं वद
तीति योजना॥ शतर्चिनशब्दवदुभयविषयाणि शब्दांतराण्यपि संतीत्याह॥ तथेति॥ आद्यमंडलमुक्त्वा मध्यमानां मंडलानां द्रष्टारो मा
ध्यमा ऋषयस्तेपि प्राणस्तस्य स्वात्मनि मध्ये सर्वे जगद्धिधारकत्वात् गृत्समदस्तु द्वितीयमंडलदर्शित्वात् स्वापकाले वागादीनां गिरणात्प्रा
णो गृत्सः रेतोविसर्गकारणमदहेतुत्वादपानो मदः प्राणापानात्मकत्वात्प्राणोपि तथोच्यते॥ तृतीयमंडलदर्शी विश्वामित्रः प्राणोपि तथा
व्यपदिश्यते॥ तस्य हि विश्वं भोज्यजातं स्थितिहेतुतया स्निग्धमासीद्धामेदवस्तु चतुर्थमंडलद्रष्टा प्राणोपि तच्छब्दवाच्यस्तस्य वागादि

राम १२

दूरस्थः श्रिरित्युच्यते प्राणो पितथैव कथ्यते तेन तस्य पाप्मनो नर्थरूपान्प्रति सर्वेन्नातृत्वात् आदिपदेन भरद्वाजादिपदानि गृहीतानि दार्थ्येति कमाह ॥ तथेति ॥ किमित्यंगिरःप्रभृतीन्प्राणं करोतीति श्रुतिरत आह ॥ अभेदेति ॥ तथा च सप्तमे प्राणस्य सर्वात्मत्वं वक्ष्यते ॥ तथा च पितरस्ततऋषिरूपत्वं विवक्षितमित्याह ॥ प्राणो हेति ॥ अव्यवहितसंबंधसंभवे फलितं वाक्यार्थं कथयति ॥ तस्मादिति ॥ प्राणस्यांगिरस्त्वमनुस्मारयति ॥ यस्मादिति ॥ अंगिरःशब्दवद्बृहस्पतिशब्दोऽप्युभयत्रेनेतव्य इत्याह ॥ तथेति ॥ प्राणस्य बृहस्पतित्वं साधयति ॥ वाचेति ॥ अंगिरोबृहस्पतिशब्दवदायास्यशब्दो

नृषीनेव प्राणमापादयति श्रुतिस्तथैतानप्यृषीन्प्राणोपासकानंगिरोबृहस्पत्ययास्यान्प्राणं करोत्यभेदविज्ञानाय प्राणो ह पिता प्राणो मातेत्यादिवच्च तस्मादृषिरंगिरा नाम प्राण एव सन्नात्मानमंगिरसं प्राणमुद्गीथमुपासांचक्र इत्येतद्यद्यस्मात्सोंगानां प्राणः सन्रसः तेनासावांगिरसः ॥ तथा वाचो बृहत्याः पतिस्तेनासौ बृहस्पतिः तथा यद्यस्मादास्यादयते निर्गच्छति तेनायास्य ऋ

गानां यद्रसस्तेन ॥ तं ह बृहस्पतिरुद्गीथमुपासांचक्र एतमु एव बृहस्पतिं मन्यंते वाग्घि बृहती तस्या एष पतिस्तेन तं हायास्य उद्गीथमुपासांचक्र एतमु एवायास्यं मन्यंत आस्याद्यदयते तेन तं ह बको दाल्भ्यो विदांचकार स ह नैमिशीयानामुद्गाता बभूव स ह स्मैभ्यः कामानागायत्यागाता ह वै कामानां भवति य एतदेवं १ ॥ १ ॥

षिः प्राण एव सन्नित्यर्थः ॥ तथान्योऽप्युपासक आत्मानमेवांगिरसादिगुणं प्राणमुद्गीथमुपासीतेत्यर्थः ॥ न केवलमंगिरःप्रभृतय उपासांचक्रिरे ॥ तं ह बको नाम दल्भस्यापत्यं दाल्भ्यो विदांचकार यथादर्शितं प्राणं विज्ञातवान् विदित्वा च स ह नैमिशीयानां सत्रिणामुद्गाता बभूव स च प्राणविज्ञानसामर्थ्यादेभ्यो नैमिषीयेभ्यः कामानागायति स्म ह गीतवान् किलेत्यर्थः ॥ तथान्योऽप्युद्गाता आगाता ह वै कामानां

प्युभयत्रद्रष्टव्य इत्याह ॥ तथेति ॥ तस्योभयवृत्तिं विशदयति ॥ यद्यस्मादिति ॥ यस्मादास्यादयते तेनायास्यः प्राणः स एवात्रोपासकत्वादृषिरपि तथेति योजना ऋषीणामेवोक्तगुणकमुपासनं नान्येषां विशेषवचनादित्याशंक्याह ॥ तथेति विशेषस्य नशेषनिवर्त्तकत्वं मदर्शनार्थत्वादित्यर्थः यथोक्तोपासनस्य सत्रिषु नियमाभावं गमकं दर्शयति ॥ न केवलमिति ॥ संप्रति विहितोपासनस्य दृष्टफलमाह उपा

भूमिकां कृत्वा विवक्षितमुपास्तिफलं कथयति॥ नथेति॥ दृष्टमिति विशेषणाददृष्टं फलांतरमाचष्टे॥ प्राणेति॥ आत्मविषयं शरीरवर्ति प्राणगोचरमिति यावदुपसंहारस्य प्रयोजनमाह॥ अधिदैवेति॥ १॥ अनंतरमाध्यात्मिकप्राणदृष्ट्योद्गीथोपासनवचनादिति शेषः॥ किमिति देवताविषयमुद्गीथोपासनं प्रस्तूयते तत्राह॥ अनेकधेति॥ प्राणरूपेणादित्यरूपेण चोद्गीथस्योपास्यत्वाद्देवताविषयं तदुपास्तिप्रस्तावोपपन्न एवेत्यर्थः॥ आदित्यादिमतयश्चेत्यादिन्यायेन वाक्यार्थं कथयति॥ आदित्यदृष्ट्येति॥ तमादित्यमुद्गीथमुपासीतेत्यादित्यशब्दस्योद्गीथशब्दस्य च सामानाधिकरण्यमयुक्तमुद्गीथशब्दस्य प्रकरणादक्षरवाचित्वादादित्यशब्दस्य च ज्योतिर्विषयत्वाद्भिन्नार्थयोश्च शब्दयोः

प्राणमक्षरमुद्गीथमुपास्ते तेनास्येन दृष्टं फलमुक्तं प्राणात्मभावत्वात्त्वदृष्टं देवो भूत्वा देवानप्येतीति श्रुत्यंतरात् सिद्धमेवेत्यभिप्रायः॥ इत्यध्यात्ममेतदात्मविषयमुद्गीथोपासनमित्युक्तोपसंहारोऽधिदैवोद्गीथोपासने वक्ष्यमाणबुद्धिसमाधानार्थः॥१॥ अथानंतरमधिदैवतं देवताविषयमुद्गीथोपासनं प्रस्तुतमित्यर्थः॥ अनेकधोपास्यत्वादुद्गीथस्य॥ य एवासावादित्यस्तपति तमुद्गीथमु

विद्वानक्षरमुद्गीथमुपास्त इत्यध्यात्मं॥१॥ अथाधिदैवतं य एवासौ तपति तमुद्गीथमुपासीतोद्यन्वा एष प्रजाभ्य

पासीत॥ आदित्यदृष्ट्योद्गीथमुपासीतेत्यर्थः॥ तमुद्गीथमित्युद्गीथशब्दोऽक्षरवाची सन्कथमादित्ये वर्तत इत्युच्यते॥ उद्यन्नुद्गच्छन्नेष प्रजाभ्यः प्रजार्थमुद्गायति प्रजानामन्नोत्पत्त्यर्थं न ह्यनुद्यति तस्मिन्व्रीह्यादेः पत्तिः स्यादत उद्गायतीवोद्गायति यथैवोद्गातान्नार्थमत उ

सामानाधिकरण्यायोगादिति शंकते॥ तमुद्गीथमितीति॥ आदित्ये यद्यपि नोद्गीथशब्दो रूढ्या वर्तितुमर्हति तथा।
पि गौण्या च तत्र वृत्तेः सामानाधिकरण्यसिद्धिरित्युत्तरमाह॥ उच्यत इति॥ प्रजार्थमुद्गायतीत्येतदेव स्पष्टयति॥ प्रजानामिति॥ अन्नोत्पत्त्यर्थमुद्गायतीति पूर्वेण संबंधः॥ तदेव व्यतिरेकद्वारा साधयति॥ नहीति॥ आदित्यस्यान्नार्थमागानमतः शब्दार्थः न तस्योद्गातृत्वमत्यसमुद्गानमुपलभ्यमित्याशंक्याह॥ उद्गायतीवेति॥ उपमामेवोपपादयति॥ यथेति॥ अध्यात्मेनान्नाद्यमागायेदिति श्रुत्यंतरे यथान्नार्थमुद्गातागायतीत्यवगतं तथादित्योऽपि प्रजानामन्नार्थमागायतीत्यर्थः॥ उद्गीथशब्दस्यादित्ये संभवं परामृश्य फलितमाह॥ अत इति॥ आदित्यदृष्ट्योद्गीथो

किंचेत्यादिना॥ एवंगुणं तमस्तज्जभयनिवर्तकबहुगुणसहितमितियावत्॥ नन्वध्यात्ममधिदैवतमिति स्थानभेदात्प्राणादित्ययोर्भिन्नत्वा
द्भिन्नमेव तयोरुपासनमुपादेयमत आह॥ यद्यपीति॥ प्राणादित्ययोः स्वरूपभेदाभावं प्रश्नपूर्वकं प्रतिपादयति॥ कथमित्यादिना॥ उशब्दो
ऽप्यर्थः स्थानभेदतो भेदमनुजानाति॥ गुणतः साम्यं साधयति॥ यस्मादिति॥ नामतः साम्यं संगिरते॥ किंचेति॥ सवितृवत्प्राणेपि प्रत्यास्वर
शब्दप्रवृत्तिमाशंक्याह॥ यस्मादिति॥ स्वरत्येवेति यावत्तस्मिन्नेव स्थूलदेहे न प्रत्यागच्छति॥ तस्मात्प्राणे स्वरशब्दप्रवृत्तिरेवेत्यर्थः॥ स

किंचोद्यन्नैशं तमस्तज्जं च भयं प्राणिनामपहंति तमेवंगुणं सवितारं यो वेद सोऽपहंता नाशयिता ह वै भयस्य जन्ममरणा
दिलक्षणस्यात्मनः तमसश्च तत्कारणस्याज्ञानलक्षणस्य भवति॥ यद्यपि स्थानभेदात्प्राणादित्यौ भिन्नाविव लक्ष्येते त
थापि न स तत्त्वभेदस्तयोः॥ कथं॥ समान उ एव तुल्य एव प्राणः सवित्रा गुणतः सविता च प्राणेन यस्मादुष्णोऽयं प्राण उष्णश्चासौ

उद्गायत्युद्यꣳस्तमो भयमपहंत्यपहंता ह वै भयस्य तमसो भवति य एवं वेद॥ समान उ एवायं चासौ चोष्णोऽय

सविता किंच स्वर इतीमं प्राणमाचक्षते कथयंति॥ तथा स्वर इति प्रत्यास्वर इति चामुꣳस ((मुष्णोऽसौ स्वर इतीममाचक्षते
वितारं यस्मात्प्राणः स्वरत्येव न पुनर्मृतः प्रत्यागच्छति सविता त्वस्तमित्वा पुनरप्यहन्यहनि प्रत्यागच्छत्यतः प्रत्यास्वरोऽस्मा
द्गुणतो नामतश्च समानमितरेतरं प्राणादित्यावतः सतत्त्वाभेदादेतं प्राणमिमममुं चादित्यमुद्गीथमुपासीत॥ अथ खल्विति प्र
(कारांतरेणोपासनमुद्गीथस्योच्यते॥ व्या

वितर्यपि तर्हि तच्छब्दप्रवृत्तिरेवेत्याशंक्याह॥ सविता त्विति॥ आदित्यस्यास्तंगतस्य
प्रत्यहमेकत्रैवागतिदर्शनात्तस्मिन्प्रत्यास्वरशब्दस्यापि वृत्तिरस्तीत्यर्थः॥ अतः प्राणादित्ययोरुक्तं साम्यं निगमयति॥ अस्मादिति॥
अन्योन्यसाम्यकृतं फलमाह॥ अतइति॥ प्राणादित्यावेकीकृत्य तदृष्ट्योद्गीथावयवभूतमोंकाराख्यमक्षरमुपास्यमित्यर्थः॥ अध्यात्मि
कं अधिदैविकं चोद्गीथोपासनं प्रस्तुत्य तदेव समस्यैकीकृत्योक्तं तथा च वक्तव्याभावात्किमुत्तरेण ग्रंथेनेत्याशंक्याध्यात्मिकमेवोद्गीथोपास
नमनुसृत्याह॥ अथेति॥ कोसौ व्यानो यद्दृष्ट्योद्गीथोपासनमुपदिदिक्षितमत आह॥ वक्ष्यमाणलक्षणमिति॥ पक्षांतरमावर्तयति॥

प्राणस्यैवेतिं वक्ष्यमाणलक्षणमित्युक्तं व्यक्तीकरोति ॥ अथेति ॥ तन्निरूपणार्थमादौ प्राणापानौ निरूपयति ॥ यद्वाइत्यादिना ॥ ताभ्यामेव मुखना-
सिकाभ्यामित्येतत् ॥ स्यातामेवं प्राणापानौ व्यानस्य तु किमायातमिति शंकित्वा तत्स्वरूपं दर्शयति ॥ ततइत्यादिना ॥ संधिमेव स्फुटयति ॥ तयोरि-
ति ॥ प्राणापानयोर्वृत्त्योरभावावस्थायां मध्ये च वायोर्वृत्तिविशेषो योऽस्ति स व्यानशब्दार्थ इत्यर्थः ॥ संधिस्कंधमर्मदेशवृत्तिर्व्यान इति सांख्ययो-
गाभ्यामुक्तान्य इत्याह ॥ यः सांख्यादीति ॥ सांख्यानां योगानां च शास्त्रे प्रसिद्धो यो वायोर्वृत्तिविशेषः स्कंधादिदेशगो नासौ व्यानः श्रुत्वा विशेषनिरू-

प्राणस्यैव वृत्तिविशेषमुद्गीथमुपासीतानुज्ञातस्तत्त्वं निरूप्यते ॥ यद्वै पुरुषः प्राणिति मुखनासिकाभ्यां वायुं बहिर्निःसारयति
स प्राणाख्यो वायोर्वृत्तिविशेषो यदपानित्यपश्वसिति ताभ्यामेवान्तराकर्षति वायुं सोऽपानोऽपानाख्या वृत्तिः ॥ ततः किमित्युच्यते ॥
अथ य उक्तलक्षणयोः प्राणापानयोः संधिस्तयोरन्तरा वृत्तिविशेषः स व्यानो यः सांख्यादिशास्त्रप्रसिद्धः श्रुत्या विशेषनिरूपणान्ना

स्वर इति प्रत्यास्वर इत्यमुं तस्माद्वा एतमिमममुं चोद्गीथमुपासीत ॥ अथ खलु व्यानमेवोद्गीथमुपासीत यद्वै प्राणिति स
प्राणो यदपानिति सोऽपानो ऽथ यः प्राणापानयोः संधिः स व्यानो यो व्यानः सा वाक्तस्मादप्राणन्ननपानन्वाचमभिव्या

सौ व्यान इत्यभिप्रायः ॥ कस्मात्पुनः प्राणापानौ हित्वा महतायासेन व्यानस्यैवोपासनमुच्यते ॥ वीर्य ((हरति या वाक्स
वत्कर्महेतुत्वात्कथं वीर्यवत्कर्महेतुत्वमित्याह ॥ यो व्यानः सा वाग्व्यानकार्यत्वाद्वाचो यस्माद्व्याननिर्वर्त्या वाक्तस्मादप्राणन्ननपा-
नन्प्राणापानव्यापारावकुर्वन् वाचमभिव्याहरत्युच्चारयति लोकस्तथा वाग्विशेषामृचमृक्संस्थं च साम सामावयवं चोद्गीथमः
((प्राणन्ननपानन् व्यानेनैव निर्वर्तयतीत्यभिप्रायः ॥ नके

पणादितियोजना ॥ व्यानस्य प्राणापानसापेक्षत्वात्तयोरन्यतरस्योपासनमेवो-
चितं न व्यानोपासनमिति मन्वान शंकते ॥ कस्मादिति ॥ महतायासेन व्यानस्य तत्त्वनिरूपणेनेति यावत्ताभ्यां तस्यैव विशेषमुपेत्य परिहरति
॥ वीर्यवदिति ॥ व्यानस्यैवोपासनमिति शेषः ॥ तदेतत्प्रश्नद्वारा प्रपंचयति ॥ कथमित्यादिना ॥ कथं व्यानस्य वीर्यवत्कर्म प्रसिद्धं प्रतिज्ञायते का-
र्यकारणभावादित्याह ॥ व्यानेति ॥ वाचो व्याननिर्वर्त्यत्वे लिंगं दर्शयति ॥ यस्मादिति ॥ या वागित्यादिवाक्यानामर्थं संक्षिपति ॥ तथेत्यादिना ॥ अतो या

व्यानेन निर्वर्तयतीति पूर्वेण संबंधः॥ यान्यन्यानि यथोक्तानि कर्माणि तानि लोको व्यानेनैव करोतीत्युत्तरत्र संबंधः॥ प्रयत्नाधिक्यनिर्वर्त्यानि कर्माण्ये
वोदाहरति॥ यथेति॥ यथा तानि कर्माणि तथान्यान्यप्येवंप्रकाराणीति योजना व्यानस्य वीर्यवत्कर्महेतुत्वे फलितमाह। अत इति॥ वैशिष्ट्ये पि किं
स्यादिति चेत्तदाह॥ विशिष्टस्येति॥ वैशिष्ट्यफलमुपसंहरति॥ एतस्येति॥ फलवत्त्वादित्युक्तमुपास्तिफलं स्पष्टयति॥ कर्मेति॥ व्यानदृष्ट्योद्गी
थोपासनस्यांगावबद्धत्वादिति शेषः॥ उद्गीथोपासनप्रसंगेनोद्गीथाक्षरोपासनामस्तीति॥ अथेति विशेषणतात्पर्यं दर्शयति॥ भक्तीति॥ उद्गीथ

स्मादन्यान्यपि यानि वीर्यवंति कर्माणि प्रयत्नाधिक्यनिर्वर्त्यानि यथाग्नेर्मंथनमाजेर्मर्यादायाः सरणं धावनं दृढस्य धनुष आ
यमनमाकर्षणमप्राणन्ननपानंस्तानि करोत्यतो विशिष्टो व्यानः प्राणादिभ्य इति। अस्य विशिष्टस्योपासनं ज्यायः फलवत्त्वाद्राजोपा
सनवत् एतस्य हेतोरेतस्मात्कारणाद्व्यानमेवोद्गीथमुपासीत नान्यद्वृत्त्यंतरं कर्मवीर्यवत्तरत्वं फलम् अथाधुना खल्वुद्गीथाक्षराण्यु

न्तस्मादप्राणन्ननपानन्नृचमभिव्याहरति यर्क्तत्साम तस्मादप्राणन्ननपानन् साम गायति यत्साम स उद्गीथस्त
स्मादप्राणन्ननपानन्नुद्गायत्यतो यान्यन्यानि वीर्यवंति कर्माणि यथाग्नेर्मंथनमाजेः सरणं दृढस्य धनुष आयमन
मप्राणन्ननपानꣳस्तानि करोत्येतस्य हेतोर्व्यानमेवोद्गीथमुपासीताथ खलूद्गीथाक्षराण्युपासीतोद्गीथ इति प्राण

पासीत॥ भक्त्यक्षराणि माभूवन्नित्यतो विशिनष्टि॥ उद्गीथ इति॥ उद्गीथनामाक्षराणीत्यर्थः॥ नामाक्षरोपासनेऽपि नामवत उ
पासनं कृतं भवेदमुकमिश्रा इतिवद्यत्प्राण एवोदुदित्यस्मिन्नक्षरे प्राणदृष्टिः॥ कथं प्राणस्योत्त्वमित्याह। प्राणेन ह्युत्तिष्ठ
ति सर्वोऽप्राणस्यावसाददर्शनादतोऽस्त्युदः प्राणस्य च सामान्यं॥ ((अक्षराण्युपासीतेत्युक्ते भक्त्यक्षराण्युपास्यानि प्राप्तानि तानि माभूवन्नि
ति यतो मन्यते श्रुतिस्ततो विशेषणं करोतीत्यर्थः॥ विशेषणश्रुतिं व्याकरोति॥ उद्गीथेति॥ नामाक्षरोपासनमुद्गीथोपासनस्य किं चित्करमित्याशं
क्याह॥ नामेति॥ यथा लोके हंसमिश्रादिवाचकशब्दप्रयोगे वाच्यस्य पुरुषविशेषस्योपासनं गम्यते तथेहापीत्यर्थः॥ नामाक्षरोपासनेन नामवत
दुपासनेऽपि तदुपासनमेव कथमित्याशंक्य विभजते॥ प्राण एवेति॥ प्राणस्योत्त्वे सादृश्यं प्रश्नपूर्वकमाह॥ कथमित्यादिना॥ गीरित्यस्मिन्

16

वाग्गीरिति॥ वाचो गिरश्च सादृश्यं दर्शयति॥ वाचो हेति॥ उद्गीथाक्षरयोः प्राणवाग्दृष्टिरिव थमित्यस्मिन्नक्षरेऽन्नदृष्टिः कार्येत्याह॥ तथेति
॥ थकारान्नयोरपेक्षितं सादृश्यं दर्शयति॥ अन्ने हीति॥ प्राण एवोदित्यादौ सादृश्यं श्रुत्यैवोक्तं द्यौरेवोदित्यादौ तु नोक्तं तथा च तत्र सादृश्याभा
वे कथं दृष्टिकरणमित्याशङ्क्याह॥ त्रयाणामिति॥ अन्तरिक्षमाकाशस्तदन्तःप्रतिष्ठा लोकास्तेन गीर्णा इवेति मत्वाह॥ गिरणादिति॥ अग्न्या
दीनां गिरणादिति संवर्गविद्यायां द्रष्टव्यं॥ सामवेदो वै स्वर्गो लोक इति स्वर्गलोकत्वेन सामवेदस्य संस्तुतत्वादिति हेतुमाह॥ स्वर्गेति॥ यजुषा

वाग्गीर्वाचो ह गिर इत्याचक्षते शिष्टास्तथान्नं थमन्ने हीदं सर्वं स्थितमतोऽस्यान्नस्य थाक्षरस्य च सामान्यं त्रयाणां श्रुत्युक्ता
नि सामान्यानि तानि तेनानुरूपेण शेषेष्वपि द्रष्टव्यानि द्यौरेवोदुच्चैःस्थानादन्तरिक्षं गीर्गिरणाल्लोकानां पृथिवी थं प्राणिस्था
नादादित्य एवोदूर्ध्वत्वाद्वायुर्गीरग्न्यादीनां गिरणादग्निस्थं याज्ञियकर्मावस्थानात्सामवेद एवोत्स्वर्गसंस्तुतत्वाद्यजुर्वेदो गी

प्राणेन ह्युत्तिष्ठति वाग्गीर्वाचो ह गिर इत्याचक्षतेऽन्नं थमन्ने हीद ँ सर्व ँ स्थितं द्यौरेवोदन्तरिक्षं गीः पृथिवी थ
मादित्य एवोद्वायुर्गीरग्निस्थ ँ सामवेद एवोद्यजुर्वेदो गीर्ऋग्वेदस्थं दुग्धेऽस्मै वाग्दोह ँ यो वाचो दोहोऽन्नवान
न्नादो भवति य एतान्येवं विद्वानुद्गीथाक्षराण्युपास्त उद्गीथ इत्यथ खल्वाशीः

((यजुषा प्रत्तस्य हविषो देवतानां
गिरणात् ऋग्वेदस्थमृच्यध्यूढत्वात्साम्न उद्गीथाक्षरोपासनफलमधुनोच्यते॥ दुग्धे दोग्ध्यस्मै साधकाय कोऽसौ वाक्
कं दोहं कोऽसौ दोह इत्याह यो वाचो दोहः ऋगादिशब्दसाध्यं फलमित्यभिप्रायस्तं वाचो दोहं स्वयमेव वाग्दोग्धि॥ आत्मा
नमेव दोग्धि किं चान्नवान्प्रभूतान्नोऽन्नादो दीप्ताग्निश्च भवति॥

((स्वाहास्वधादिनेति यावत्॥ अध्यात्ममधिलोकमधिदैवमधिवे
दं च नामाक्षरोपासनमुक्त्वा तत्फलोक्तिमवतार्य व्याकरोति॥ उद्गीथेति॥ यो वाचो दोह इत्यत्र षष्ठी कर्मणि द्रष्टव्या तमेव वाग्दोहं प्रकटयति॥ ऋग्वे
दादीति तत्साध्यं फलं स्वाधीनोच्चारणसमर्थं तदनायासेनास्य संभवतीत्यर्थः॥ तदित्यत्र प्रकृतफलपरामर्शः षष्ठी पूर्ववत्॥ तमिति दोहोक्तिः
वाच एव दोहकर्मत्वं कर्तृत्वं चेत्याह॥ आत्मानमेवेति॥ यो दोग्धा सा वागेव सा चात्मानमेव दोग्धीति योजना॥ ॥ ॥ ॥

॥यथोक्तानि प्राणवागग्न्यादिरूपत्वेनोक्तानीति यावत्॥यथोक्त गुणान्युत्थानगिरणस्थित्यादिधर्मकाणीत्यर्थः॥उद्गीथाक्षराणीत्युक्तं विशे
षणानुवादेन स्फुटयति॥उद्गीथ इतीति॥उद्गीथ इत्येवंरूपस्य नाम्नोऽक्षराणीति यावत्॥वागादिसमृद्धिफलकमुपासनमुपदिश्य फलसमृद्धि
र्येन प्रकारेण भवति तत्प्रकारज्ञानं सर्वकाम्योपासनशेषभूतं प्रासंगिकं विधीयत इत्याह॥अथ खल्विति॥वागादिसमृद्धिफलकोपासनान
न्तर्यमथशब्दार्थः॥वक्ष्यमाणोपासनानां सर्वकाम्योपासनाशेषत्वद्योतनार्थं खल्वित्युक्तं॥प्रासंगिकत्वं दर्शयति॥इदानीमिति॥कामशब्दः

यथोक्तानि॥एवं यथोक्तगुणान्युद्गीथाक्षराणि विद्वानुपासीतोद्गीथ इत्यथ खल्विदानीमाशीःसमृद्धि
राशिषः कामस्य समृद्धिर्यथा भवेत्तदुच्यत इति वाक्यशेषः॥उपसरणान्युपसर्तव्यान्युपगन्तव्यानि ध्येयानीत्यर्थः॥कथमि
त्युपासीतैवमुपासीत तद्यथा येन साम्ना सामविशेषेण स्तोष्यन् स्तुतिं करिष्यन्स्यादुद्गाता तत्सामोपधावेदुपसरेच्चिंतयेदुत्प

समृद्धिरुपसरणानीत्युपासीत येन साम्ना स्तोष्यन्स्यात्तत्सामोपधावेद्यस्यामृचि तामृचं यदार्षेयं तमृषिं यां देवता
मभिष्टोष्यन्स्यात्तां देवतामुपधावेद्येन छंदसा स्तोष्यन्स्यात्तच्छंद उपधावेद्येन स्तोमेन स्तोष्यमाणः स्यात्॥ त
ꣳ स्तोममुपधावेद्यां दिशमभिष्टोष्यन्स्यात्तां दिशमुपधावे

त्यादिभिर्यस्यामृचि तत्साम तां चर्चमुपधावेद्देवतादिभि
र्यदार्षेयं साम तं चर्षिं यां देवतां अभिष्टोष्यन्स्यात्तां देवतामुपधावेद्येन छंदसा गायत्र्यादिना स्तोष्यन्स्यात्तच्छंद उपधावेद्ये
न स्तोमेन स्तोष्यमाणः स्यात्॥ स्तोमांगफलस्य कर्तृगामित्वादात्मनेपदं स्तोष्यमाण फलविषयः॥तच्छब्दः प्रकारज्ञानपरामर्शी॥

उच्यते विधीयत इत्यर्थः॥ध्यानप्रकारं प्रश्नपूर्वकं विशदयति॥कथमित्यादिना॥इतिशब्दार्थमभिनयति॥एवमिति॥एवंशब्दार्थमुदाहरण
निष्ठतया स्पष्टयति॥तद्यथेति॥उत्पत्त्यादिभि रित्यादिशब्देन छंदोदेवतादि गृह्यते॥देवतादिभि रित्यादिपदेनार्षेयादिग्रहः॥गायत्र्या
दिनेत्यादिपदमुष्णिगनुष्टुब्बृहत्यादिसंग्रहार्थं त्रिवृत्पंचदशसप्तदशैकविंशा इति प्रसिद्धाः सोमयागे स्तोमाः॥आत्मनेपदप्रयोगप्रतिप
न्नमर्थमाह॥स्तोमांगेति॥यत्र कर्तृगामि फलं तत्रात्मनेपदं प्रयुज्यते॥प्रकृते च स्तोष्यमाण इत्यात्मनेपदं दृश्यते तस्मादेतत्फलस्य कर्तृगा

छां·भा· १६

अन्यथा पूर्वोत्तरयोरपि परस्मैपदप्रयोगप्रसंगादित्यर्थः॥ यां दिशम भीत्यभिख्यास्येत्यर्थः॥ स्तोष्यन॥ देवताविशेषमिति शेषः॥ अधिष्ठात्र
शब्देनेंद्रादयो गृह्यंते॥ आदिपदं तत्र हि गता स्थिता साधारणधर्मसंग्रहार्थं॥ आत्मानं स्वरूपगोत्रादिभिरुपसृत्योद्गाता स्तुवीतेति संबंधः॥ ना
मादिभि रित्यादिशब्देन वर्णाश्रमादिग्रहणं॥ अन्ततइत्यस्यार्थमाह॥ सामादीनिति॥ पूर्वोक्तान्सामादीन्सर्वानुक्रमेण ध्यात्वा तदवसाने
स्वात्मानमपि संचिन्त्योपस्थितफलमनुसंदधानः स्वरादिभ्यः प्रमादमकुर्वन्नुद्गाता स्तुवीतेति योजना॥ यत्र कर्मण्ययमुद्गाता यथोक्तरीत्या स्तो

इति तं स्तोममुपधावेद्यां दिशमभिष्टोष्यन्स्यात्तां दिशमुपधावेदधिष्ठात्रादिभिरात्मानमुद्गाता स्वं रूपगोत्रनामादिभिः सामा
दीन्क्रमेण स्वं चात्मानमन्ततोऽन्त उपसृत्य कामं ध्यायन्नप्रमत्तः स्वरोष्मव्यंजनादिभ्यः प्रमादमकुर्वन्स्तुवीत अभ्याशः क्षिप्रमेव ह य
द्यत्रास्मा एवंविदे स कामः समृध्येत समृद्धिं गच्छेत् कोऽसौ यत्कामो यः कामोऽस्य सोऽयं यत्कामः सन्स्तुवीतेति द्विरुक्तिरादरार्था॥

दात्मानमन्तत उपसृत्य स्तुवीत कामं ध्यायन्नप्रमत्तोऽभ्याशो ह यदस्मै स कामः समृध्येत यत्कामः स्तुवीतेति यत्का
मः स्तुवीतेति॥ ३॥ ओमित्येतदक्षरमुद्गीथमुपासीतोमिति ह्युद्गायति तस्योपव्याख्यानं देवा वै मृत्योर्बिभ्यतस्त्रयीं
विद्यां प्राविशंस्ते छन्दोभिरच्छादयन्यदेभिरच्छादयंस्तच्छन्दसां छन्दस्त्वं १॥ ओमित्येतदित्यादि प्रकृतस्याक्षर

स्य पुनरुपादानमुद्गीथाक्षराद्युपासनान्तरितत्वादन्यत्र प्रसंगो मा भूदित्येवमर्थं प्रकृतस्यैवाक्षरस्यामृताभयगुणविशिष्ट
स्योपासनं विधातव्यमित्यारंभः॥ ओमित्यादिव्याख्यातं देवा वै मृत्योर्मारकाद्बिभ्यतः किं कृतवन्त इत्युच्यते त्रयीं विद्यां त्र

तावभवति तत्र क्षिप्रमेवास्मै स स कामः समृद्धिं गच्छेद्यत्कामः सन्स्तुवीतेत्यन्वयः॥ इति शब्दः प्रासंगिकोपासनसमाप्त्यर्थः॥ ३॥ प्रासंगि
कं हित्वा प्रकृतमनुसंधत्ते॥ ओमित्येतदित्यादीति॥ पुनरुपादानस्य तात्पर्यमाह॥ उद्गीथेति॥ आदिशब्देन पूर्वोक्तानुपसरणादिग्रहं
ति॥ उद्गीथस्यैतैर्व्यवहितत्वात्प्रकरणविच्छेदशंकायां ततोऽन्यस्मिन्नर्थे प्रसंगः स्यात्स मा भूदित्येवमर्थं पुनरुपादानमित्यर्थः॥ देवा वै मृ
त्यो रित्यादेस्तात्पर्यमाह॥ प्रकृतस्येति॥ अक्षरव्याख्यानप्राप्तावनुवादभागं प्रत्याह॥ ओमित्यादीति॥ देवासुरा ह वै यत्रेत्यत्र व्याख्यातं

अ· १

कोयंकर्मणिप्रवेशोनामतत्राह॥वैदिकमिति॥तदितिवैदिकंकर्मोच्यतेतेछंदोभिरित्यादिव्याचष्टे॥किंचेति॥नहिसर्वेमंत्राःसर्वत्रविनियुं
ज्यंते॥तथाचैकस्मिन्कर्मण्यनुष्ठीयमानेविनियुक्तान्मंत्रान्हित्वाकर्मांतरेष्ववशिष्टैर्जपादिकुर्वंतःस्वात्मानंदेवाश्छादितवंतस्तस्मान्नमृत्युव
श्यतातेषामित्यर्थः तेषांछंदोभिश्छादितत्वेछंदसांछंदस्त्वप्रसिद्धिप्रकारमभिनयति॥तत्तस्मादिति॥कर्मानुतिष्ठतांदेवानांमृत्युवश्यतान
व्यावृत्तेत्याह॥तानिति॥तत्रेतिवैदिककर्मप्रारंभोक्तिः उशब्दोप्यर्थःयथोक्तकर्मपरानपितान्मृत्युःपर्यपश्यदितिसंबंधः॥कर्मणांमृत्युप

प्रविष्टवंतोवैदिकंकर्मप्रारब्धवंतइत्यर्थः॥तेमृत्योस्त्राणंमन्यमानाःकिंचतेकर्मण्यविनियुक्तैश्छंदोभिर्मंत्रैर्जपहोमादिकु
र्वंतआत्मानंकर्मांतरेष्वच्छादयन् छादितवंतः यद्यस्मादेभिर्मंत्रैरच्छादयन् तत्तस्माच्छंदसांमंत्राणांछादनाच्छंदस्त्वंप्रसिद्ध
मेवतान् तत्रदेवान्कर्मपरान्मृत्युर्यथालोकेमत्स्यघातकोमत्स्यमुदकेनातिगंभीरेपरिपश्येद्बडिशोदकस्रावोपायसाध्यं

तानुतत्रमृत्युर्यथामत्स्यमुदकेपरिपश्येदेवंपर्यपश्यदृचिसाम्नियजुषितेनुविदित्वोर्ध्वाऋचःसाम्नोयजुषः
स्वरमेवप्राविशन्यदावाऋचमाप्नोत्योमित्येवातिस्वरत्येवꣳसामैवंयजु

मन्यमानःएवंपर्यपश्यद्दृष्टवान्मृत्युः
कर्मक्षयोपायसाध्यान्देवान्मेनइत्यर्थः क्वासौदेवान्ददर्शेत्युच्यतेऋचिसाम्नियजुषिऋग्यजुःसामसंबंधिकर्मणीत्य
र्थः॥तेनुदेवावैदिकेनकर्मणासंस्कृताःशुद्धात्मानःसंतोमृत्योश्चिकीर्षितंविदितवंतोविदित्वाचतऊर्ध्वाःव्यावृत्ताःकर्मभ्यःऋ
चःसाम्नोयजुषःऋग्यजुःसामसंबद्धात्कर्मणअभ्युत्थायइत्यर्थः॥तेनकर्मणामृत्युभयापगमंप्रतिनिराशास्तदपास्यामृता

दगोचरत्वंदृष्टांतेनाह॥यथेति॥दार्ष्टांतिकभागस्यविवक्षितमर्थंगृह्णाति॥मृत्युरिति॥दार्ष्टांतिकेक्षुद्रोदकस्थानीयंकिंस्यादितिप्रश्नपूर्वकं
दर्शयति॥क्वासावित्यादिना॥ऋगादीनांनित्यत्वेनक्षयाभावात्क्षुद्रोदकस्थानीयतेत्याशंक्यविवक्षितमर्थमाह॥ऋगिति॥कर्मणश्चकृत
कत्वेनफलतःस्वरूपतश्चक्षयित्वप्रसिद्धेतिभावः॥मृत्युपरिहारोपायमुपदिशति॥तेदेवाइत्यादिना॥कर्मभ्यःसकाशादूर्ध्वाव्यावृत्ताइत्यर्थः
॥सर्वकर्मसंग्रहार्थंकर्मभ्यइतिबहुवचनंअवैदिककर्मत्यागस्यकामिष्वपिसिद्धत्वाद्वैदिककर्मत्यागार्थंविशिनष्टि॥ऋचइति॥कर्मत्यागमा

ओंकारेति ॥ उदात्तादिरूपत्वाभावादक्षरस्य न स्वरशब्दत्वमित्याशंक्य परिहरति ॥ कथमित्यादिना ॥ ऋचमाप्नोत्यध्ययनेन स्वाधीनां करोतीत्यर्थः ॥ अतिस्वरत्यतिशयेनादरधियोच्चारयतीति यावत् ॥ ऋग्यजुःसाम्नामन्येकमोंकारोच्चारणद्वारेणैवाभिदर्शनादित्यतिशब्दार्थः ॥ उशब्दोपि पर्यायः संप्रतिपन्नस्वरवदिति दृष्टान्तार्थः ॥ अमृतमभयं तथाविधब्रह्मप्रतीकत्वादित्यर्थः ॥ तत्प्रविश्य ब्रह्मवद्ध्यात्वा ज्ञानं कृत्वेत्यर्थः ॥ भवतु देवानामेवमस्माकं तु किमायातमित्याशंक्याह ॥ स योन्योपीति ॥ राजगृहं प्रविष्टस्य विशेषदर्शनादक्षरं प्रविष्टस्यापि फले विशे

भयगुणमक्षरं स्वरशब्दितं प्राविशन्नेव प्रविष्टवन्तः ॥ ओंकारोपासनपराः संवृत्ताः एवशब्दोऽवधारणार्थः सन्न समुच्चयप्रतिषेधार्थः तदुपासनपराः संवृत्ता इत्यर्थः कथं पुनः स्वरशब्दवाच्यत्वमक्षरस्येत्युच्यते ॥ यदा वा ऋचमाप्नोत्योमित्येवातिस्वरत्येवं सामैवं यजुः एष उ एव स्वरः कोऽसौ यदेतदक्षरमेतदमृतमभयं तत्प्रविश्य यथागुणमेवामृता अभयाश्चाभवन्देवाः ॥ स योऽन्योपि देववदेवैतदक्षरमेवममृतमभयगुणं विद्वान्प्रणौति स्तौति उपासनमेवात्र स्तुतिरभिप्रेता स तथैव तद्देवाक्षरं स्वरम

रेष उ स्वरो यदेतदक्षरमेतदमृतमभयं तत्प्रविश्य देवा अमृता अभवन् ॥ स य एतदेवं विद्वानक्षरं प्रणौत्येतदेवाक्षरꣳ स्वरममृतमभयं प्रविशति ॥ तत्प्रविश्य यदमृता देवास्तदमृतो भवति ॥ ४ ॥ अथ खलु य उद्गीथः ॥

मृतमभयं प्रविशति ॥ तत्प्रविश्य च राजकुलं प्रविष्टानामिव राज्ञोऽन्तरंगबहिरंगतावन्न परस्य ब्रह्मणोऽन्तरंगबहिरंगता विशेषः ॥ किं तर्हि यदमृता देवा येनामृतत्वेन यदमृता अभूवन् तेनैवामृतत्वेन विशिष्टस्तदमृतो भवति ॥ न न्यूनता नाधिकता अमृतत्व इत्यर्थः ॥ ५ ॥ प्राणादित्यदृष्टिविशिष्टस्योद्गीथस्योपासनमुक्तमेवानूद्य प्रणवोद्गीथयोरेकत्वं कृत्वा तस्मिन्प्राणरश्मि

षः स्यादित्याशंक्याह ॥ तत्प्रविश्येति ॥ अमृतत्वेन ॥ विशिष्टादृतिशेषः ॥ ४ ॥ खंडांतरस्य तात्पर्यमाह ॥ प्राणादित्येति ॥ प्रणवस्योद्गीथस्य चैकत्वं कृत्वा तस्मिन्नत्यध्यात्मं प्राणदृष्ट्याधिदैवतमादित्यदृष्ट्या च विशिष्टस्योद्गीथस्य च यदुपासनमुक्तं तदेवानूद्य निंदित्वा प्राणानां रश्मीनां च भेद एवं गुणस्तद्विशिष्टदृष्ट्या तस्यैवोद्गीथावयवस्याक्षरस्यानेकपुत्रफलमुपासनमनेन ग्रंथेन वक्तव्यमित्युत्तरो ग्रंथः संप्रति प्रस्तूयत इत्य

अमृताभयगुणकाक्षरोपासनानंतर्य मथशब्दार्थः॥ प्रणवोद्गीथयोरेकत्वे वैदिकप्रसिद्धिप्रदर्शनार्थं खल्वित्युक्तं तयोरेकत्वमुक्त्वा आदित्य
दृष्ट्योद्गीथोपास्तिमुक्तामनुवदति॥ असाविति॥ उद्गीथादित्ययोरेकत्वमप्रश्नपूर्वकमुपपादयति॥ उद्गीथ इत्यादिना॥ उच्चारयन्नेतीति संबंधः॥
स्वरतेर्गत्यर्थत्वात्कथमुच्चारयन्नित्युच्यते तत्राह॥ अनेकार्थत्वादिति॥ गच्छन्सविता प्राणिनां प्रवृत्त्यर्थमोमित्यनुज्ञां कुर्वन्निव गच्छतीति तस्मादो
कारत्वं सवितुरित्याह॥ अथवेत्यादिना॥ आदित्यदृष्ट्योद्गीथमुपदिष्टमनूद्य निंदति॥ तमेतमिति॥ निंदाफलं दर्शयति॥ अत इति॥ पर्यावर्तयादिति

क्षरस्योपासनमनेकपुत्रफलदमिदानीं वक्तव्यमित्यारभ्यते॥ अथ खलु य उद्गीथः स प्रणवो बह्वृचानां यश्च प्रणवस्तेषां स ए
व छांदोग्ये उद्गीथशब्दवाच्यः॥ सौ वा आदित्य उद्गीथ एष प्रणवः प्रणवशब्दवाच्योऽपि स एव बह्वृचानां नान्य उद्गीथ आदित्यः क
थमुद्गीथाख्यमक्षरमोमित्येतदेष हि यस्मात्स्वरन्नुच्चारयन्॥ अनेकार्थत्वाद्धातूनां अथवा स्वरन्गच्छन्नेति अतोऽसावुद्गीथः

स प्रणवो यः प्रणवः स उद्गीथ इत्यसौ वा आदित्य उद्गीथ एष प्रणव ओमिति ह्येष स्वरन्नेत्ये॥ तमु एवाहमभ्य
गासिषं तस्मान्मम त्वमेकोऽसीति ह कौषीतकिः पुत्रमुवाच रश्मीꣳस्त्वं पर्यावर्तयाद्बहवो वै ते भविष्यन्तीत्यधि

सवितारमेतमु एवाहमभ्यगासिषमाभिमुख्येन गीतवानस्म्यादित्यरश्म्यभेदं कृत्वा ध्यानं कृतवानस्मीत्यर्थः॥ तेन
तस्मात्कारणान्मम त्वमेकोऽसि पुत्र इति ह कौषीतकिः कुषीतकस्यापत्यं कौषीतकिः पुत्रमुवाचोक्तवानतो रश्मीनादित्यं च
भेदेन त्वं पर्यावर्तयात् पर्यावर्तयेत्यर्थः॥ त्वयोगाद्बहवो वै ते तव पुत्रा भविष्यंतीत्यधिदैवतं अथानंतरमध्यात्ममुच्यते य

प्रथमपुरुषे श्रूयमाणे किमिति मध्यमपुरुषो व्याख्यायते तत्राह॥ त्वयोगादिति॥ युष्मद्युपपदे मध्यम १ एवायं मुख्यः प्राणस्तमुद्गीथमु
पुरुषविधानादित्यर्थः॥ रश्मिभेदगुणदृष्टिविशिष्टोद्गीथोपासनस्य फलं कथयति॥ एवमिति॥ वक्ष्यमाणेऽध्यात्मे बुद्धिसमाधानार्थमुक्तं देव
ताविषयं दर्शनमुपसंहरति॥ इत्यधिदैवतमिति॥ अध्यात्मं प्राणदृष्ट्योद्गीथोपास्तिमुक्तामनुवदति॥ अथेत्यादिना॥ कथं प्राणोद्गीथयोरे
कत्वमित्याशंक्याह॥ तथेति॥ यथा प्राणिनां प्रवृत्त्यर्थमोमित्यनुज्ञां कुर्वन्निवादित्यो गच्छतीत्युक्तं तद्वदिति यावत् उक्तमेव व्यतिरेकद्वारा स्फो

नहीति॥मुमूर्षुसमीपवर्त्तिनो बांधवा मरणकाले प्राणस्य वागादिप्रवृत्त्यर्थमनुज्ञाकरणं नैव जानंतीति॥तथा च जीवदवस्थायामोमिति तद
नुज्ञा च श्रोत्रवागादीनां प्रवृत्तिरालक्ष्यते तस्मात्प्राणस्यानुज्ञामात्रमोंकरणमित्यर्थः॥प्राणादित्ययोरध्यात्माधिदैवतयोरुद्गीथत्वाविशे
षात्प्राणवदादित्येप्यनुज्ञामात्रमोंकरणमवधेयमित्याह॥एतत्सामान्यादिति॥प्राणदृष्ट्योक्तामुद्गीथोपास्तिं निन्दित्वा विवक्षितामुपा
स्तिमुपन्यस्यति॥एतमु एवेति॥भूमानं बहुत्वोपेतमिति यावत्तमध्यमपुरुषेनातङादेशस्य वैकल्पिकत्वेपि प्रथमपुरुषशंकया दुरन्वयं

मिति ह्येष प्राणोपि स्वरन्नेत्योमिति ह्यनुज्ञां कुर्वन्निव वागादिप्रवृत्त्यर्थमेतीत्यर्थो न हि मरणकाले मुमूर्षोः समीपस्थाः प्रा
णस्योंकरणं शृण्वंतीति॥एतत्सामान्यादादित्येपि ओंकरणमनुज्ञामात्रं द्रष्टव्यं॥एतमु एवाहमभ्यगासिषमित्यादि पूर्ववद्
देवातो वागादीन्मुख्यं च प्राणं भेदगुणविशिष्टमुद्गीथं पश्यन्भूमानं मनसाभिगायतात् पूर्ववदावर्तयेत्यर्थः॥बहवो वै
मे मम पुत्रा भविष्यंतीत्यभिप्रायः सन्नित्यर्थः॥प्राणादित्यैकत्वोद्गीथदृष्टेरेकपुत्रत्वफलदोषेणापोदितत्वाद्रश्मिप्राणभे

दैवतमथाध्यात्मं य एवायं मुख्यः प्राणस्तमुद्गीथमुपासीतोमिति ह्येष स्वरन्नेत्येतमु एवाहमभ्यगासिषं त
स्मान्मम त्वमेकोसीति ह कौषीतकिः पुत्रमुवाच प्राणांस्त्वं भूमानमभिगायताद्बहवो वै मे भविष्यन्तीत्य
थ खलु य उद्गीथः स प्रणवो यः प्रणवः स उद्गीथ इति होतृषदना दृष्टेः कर्त्तव्यता चोद्यतेऽस्मिन्खंडे बहुपुत्रफ

लत्वार्थं॥अथ खलु य उद्गीथ इत्यादि प्रणवोद्गीथैकत्वदर्शनमुक्तं तस्यैतत्फलमुच्यते होतृषदनाद्धोता यत्रस्थः शंसति
तत्स्थानं होतृषदनं हौत्रात्कर्मणः सम्यक्प्रयुक्तादित्यर्थः॥न हि देशमात्रात्फलमाहर्तुं शक्यं किं तद्धैवापि दुरुद्गीतं
व्यावर्त्तयति॥पूर्ववदिति॥एकत्वदृष्टिनिंदाद्वारा प्रधानोपासनं सफलमुपसंहरति॥प्राणेत्यादिना॥पूर्वोत्तरयोर्ग्रंथयोरसंगतिमा
शंक्य तात्पर्यप्रदर्शनपूर्वकं उत्तरग्रंथमवतार्य व्याकरोति॥अथेत्यादिना॥ननु यथाश्रुतं स्थानमेव होतृषदनं किं नेष्यते तत्राह॥नही
ति॥हौत्रात्कर्मणो यत्फलमाह्रियते तत्सम्यक्प्रयोगपूर्वकमविशेषतो दर्शयति॥ किंतदित्यादिना॥ निपातद्वयमवधारणातिशयफलकं

अपिशब्दस्तु निष्ठानंतरभावितया नेतव्यः ॥ दुष्टमुद्गानमेव स्पष्टयति ॥ उद्गात्रेति ॥ कथमप्यनिष्टात्कर्मणोऽन्यत्र फलमाहर्तुं शक्यमित्या
शंक्याह ॥ चिकित्सयेति ॥ उद्गाता प्रणवोद्गीथैकत्वविज्ञानमाहात्म्यात्स्वामात्विकं स्वकर्मणि प्रासं सन्तं हौत्रात्कर्मणः सम्यक्प्रयुक्तात्प्रण
वात्प्रतिसंदधातीत्यर्थः ॥ ५ ॥ इयमेवेत्यादिसंदर्भस्य तात्पर्यमाह ॥ अथेति ॥ पुत्राद्यैश्वर्यैकदेशविषयोपासनोपदेशानंतरमवसरप्राप्ते
ज्योतिष्टोमादावधिकृतस्य समग्रैश्वर्यप्राप्त्यर्थमधिदैवाध्यात्मविभागेनोद्गीथविषयमेवापूर्वमुपासनमस्मिन्ग्रंथे विधातुमिष्टमित्य
र्थः ॥ तत्र तदंगभूतमुपासनमादौ विदधाति ॥ इयमेवेति ॥ पृथिव्यामृग्दृष्टिरत्र नेष्टा कर्मांगस्यासंस्कारत्वादित्यभिप्रेत्याह ॥ ऋचीति

उद्गात्रा स्वकर्मणि क्षतं कृतमित्यर्थः तदनु समाहरत्यनुसंधत्त इत्यर्थः ॥ चिकित्सयेव धातुवैषम्यसमीकरणमिति ॥ ५ ॥
॥ अथेदानीं सर्वफलसंपत्त्यर्थमुद्गीथस्योपासनांतरं विधित्स्यते इयमेवर्क्पृथिवी ऋचि पृथिवीदृष्टिः कार्या तथाग्निः साम
साम्न्यग्निदृष्टिः कथं पृथिव्यग्न्योर्ऋक्सामत्वमित्युच्यते ॥ तदेतत् अग्न्याख्यं साम एतस्यां पृथिव्यामृच्यध्यूढमधिगतमु

हैवापि दुरुद्गीतमनुसमाहरतीत्यनुसमाहरतीति ॥ ५ ॥ इयमेवर्गग्निः साम तदेतदेतस्यामृच्यध्यूढꣳ साम त
स्मादृच्यध्यूढꣳ साम गीयत इयमेव साग्निरमस्तत्साम ॥ अंतरिक्षमेवर्ग्वायुः साम तदेतस्यामृच्यध्यूढꣳ

परिभावेन स्थितमित्यर्थः ऋच्येव साम तस्मात्तत एव कारणादृच्यध्यूढमेव साम गीयते इदानीमपि सामगैर्यथा चर्
क्सामनी नात्यंतं भिन्ने अन्योन्यं तथैतौ पृथिव्यग्नी ॥ कथमियमेव पृथिवी सा सामनामार्धशब्दवाच्या इतरार्धशब्दवा
च्योऽग्निरमः तदेतत्पृथिव्यग्निद्वयं सामेकशब्दाभिधेयत्वमापन्नं साम

॥ ऋग्विषया पृथिवीदृष्टिरनंतरवाक्ये विहिता तथा
ग्निः सामेत्यत्राग्निदृष्टिः साम्नि विधीयते पूर्ववदित्याह ॥ तथेति ॥ ऋक्त्वं पृथिव्याः सामत्वं चाग्नेरप्रसिद्धमिति शंकते ॥ कथमिति ॥ ऋ
क्सामत्वसिद्धिरित्युत्तरमाह ॥ उच्यत इति ॥ तयोराधाराधेयभावे गमकं दर्शयति ॥ तस्मादिति ॥ ऋचि पृथिवीदृष्टिः साम्नि चाग्निदृष्टिरित्यत्र हे
त्वंतरमाह ॥ यथा चेति ॥ पृथिव्यग्न्योरत्यंतभेदाभावं प्रश्नपूर्वकं प्रकटयति ॥ कथमित्यादिना ॥ कर्मांगयोः सहप्रयोगादृक्सामयोरन्योन्यम

छां·भा· १९

वाच्यत्वादन्यत्वं भिन्नत्वमित्यर्थः॥ तयोरन्यत्वभेदाभावे फलितमाह॥ तस्माच्चेति॥ पृथिवीसामशब्दवाच्या स्त्रीत्वादग्निरमः पुंस्त्वादितिद्वय
स्य पत्नीनरसुरूप्याद्योगीकरोति॥ सामाक्षरयोरिति॥ कथं पुनर्नक्षत्रपर्यायेन तदेतदेतस्यामित्यादिवाक्यं न हि नक्षत्रेषु चंद्रमसः स्थितिरत आ
ह॥ नक्षत्राणामिति॥ नक्षत्राधिपत्यात्तदुपरिभावेन चंद्रमसः स्थितेरित्यतः प्रोक्तार्थः॥ नक्षत्रसहितं चंद्रमसं परामृष्टुं सशब्दः॥ अंगोपा

अ· १

तस्मादन्यान्यं भिन्नं पृथिव्यग्निद्वयं नित्यसंश्लिष्टं ऋक्सामनी इव तस्माच्च पृथिव्यग्न्योर्ऋक्सामत्वमित्यर्थः सामाक्ष
रयोः पृथिव्यग्निदृष्टिविधानार्थमियमेव साग्निरमस्तत्साम इति केचिदंतरिक्षमेवर्ग्वायुः सामेत्यादि पूर्ववत् नक्षत्राणामधिपतिश्चं

साम तस्मादृच्यध्यूढं साम गीयतेंतरिक्षमेव सा वायुरमस्तत्साम द्यौरेवर्गादित्यः साम तदेतदेतस्यामृच्य
ध्यूढं साम तस्मादृच्यध्यूढं साम गीयते द्यौरेव सादित्योऽमस्तत्साम नक्षत्राण्येवर्क्चंद्रमाः साम तदेतदेत
स्यामृच्यध्यूढं साम तस्मादृच्यध्यूढं साम गीयते नक्षत्राण्येव सा चंद्रमा अमस्तत्साम अथ यदेतदादित्यस्य
शुक्लं भाः सैवर्गथ यन्नीलं परः कृष्णं तत्साम तदेतदेतस्यामृच्यध्यूढं साम तस्मादृच्यध्यूढं साम गीयतेथ य
देवैतदादित्यस्य शुक्लं भाः सैव साथ यन्नीलं परः कृष्णं तदमस्तत्साम

द्रमा अतः सः साम अथ यदेतदादित्यस्य शुक्लं
भाः शुक्ला दीप्तिः सैवर्गथ यदादित्ये नीलं परः कृष्णं परो निशयेन कार्ष्ण्यं तत्साम तद्ध्येकांतसमाहितदृष्टेर्दृश्यते॥ ॥

सनानि कानि चिदुक्त्वा तानि हृदगेवोपासनांतरमाह॥ अथेति॥ आदित्यस्य मंडलात्मनो यद्रूपं शुक्लं दृश्यते तत्रर्ग्दृष्टिः कर्त्तव्येत्यर्थः॥ तदेव
रूपं विशिनष्टि भा इति तामेव व्याचष्टे॥ शुक्ला दीप्तिरिति॥ ऋचि यथा पूर्वोक्तरूपदृष्टिस्तथा साम्नि वक्ष्यमाणरूपदृष्टिरनुष्ठेयेत्याह॥ अथेति
॥ नन्वादित्ये नीलत्ववदतिशयकार्ष्ण्यं नास्माभिरनुभूयते तत्राह॥ तद्धीति॥ एकांतेन समाहिता शास्त्रसंस्कृता यस्य दृष्टिस्तस्यादित्ये निर

राम १९

अथपदेवैतदित्यस्यतात्पर्यमाह ॥ तेएवेति ॥ अंगोपासनानिसमाप्यानंतरमाधिदैविकींप्रधानोपासनांविवक्षुः उपास्यस्वरूपमुपन्यस्य ति ॥ अथेत्यादिना ॥ किमितिहिरण्मयपदमुपमार्थंव्याख्यायते हिरण्यविकारत्वमेवात्रविवक्षितंकिंनस्यादित्याशंक्याह ॥ नहीति ॥ अप हतपाप्मत्वासंभवंसाधयति ॥ नहीत्यादिना ॥ पाप्मादीत्यादिपदंतत्कार्यसंग्रहार्थं किंचचक्षुष्युपास्येपुरुषेसुवर्णविकारत्वस्याग्रहणाद्गौ णमेवहिरण्मयपदमित्याह ॥ चाक्षुषेचेति ॥ नचतत्राप्यातिदेशिकंतद्ग्रहणंऋक्सामगेष्णत्वादिनातादृशेनविरोधात्तस्माद्गौणमेवहिर ण्मयपदइत्युपसंहरति ॥ अतइति ॥ हिरण्यश्मश्रुरित्यादिविशेषणेष्वपितुल्यंगौणत्वमित्याह ॥ उत्तरेष्वपीति ॥ नन्वादित्यादिमण्डले

तेएवएतेभाःशुक्लंकृष्णत्वेसाचामश्चसाम ॥ अथयएषोंतरादित्येआदित्यस्यांतर्मध्येहिरण्मयइवहिरण्मयोनहिसुवर्ण विकारत्वंदेवस्यसंभवतिऋक्सामगेष्णत्वापहतपाप्मत्वासंभवात् ॥ नहिसौवर्णेऽचेतनेपाप्मादिप्राप्तिरस्तियेनप्रतिषिध्येत ॥ चाक्षुषेचाग्रहणादतोलुप्तोपमएवहिरण्मयशब्दोज्योतिर्मयइत्यर्थः ॥ उत्तरेष्वपिसमानायोजनापुरुषःपुरिशयनात्पूर

थयएषोंतरादित्येहिरण्मयःपुरुषोदृश्यतेहिरण्यश्मश्रुर्हिरण्यकेशआप्रणखात्सर्वएवसुवर्ण तस्ययथाक

यतिवास्वेनात्मनाजगदितिदृश्यतेनिवृत्तचक्षुर्भिःसमाहितचेतोभिःब्रह्मचर्यादिसाधनापेक्षैस्तेजस्विनोपिश्मश्रुकेशाद यःकृष्णाःस्युरित्यतोविशिनष्टि ॥ हिरण्यश्मश्रुर्हिरण्यकेशइतिज्योतिर्मयाण्येवास्यश्मश्रूणिकेशाश्चेत्यर्थः ॥ आप्रणखा त्प्रणखोनखाग्रंनखाग्रेणसह सर्वःसुवर्णइवभारूपइत्यर्थः ॥ तस्यैवंसर्वतःसुवर्णवर्णस्याप्यक्ष्णोर्विशेषः ॥ कथंतस्यय थाकपेर्मर्कटस्यासःकप्यासः ॥ आसेरुपवेशनार्थस्यकरणेघञ्कपिपृष्ठांतोयेनोपविशति ॥

पुरुषोनास्माभिर्दृश्यतेतत्राह ॥ निर्वृत्तचक्षुर्भिरिति ॥ विशिष्टाधिकारिणामादित्यपुरुषदर्शनमुपपादयति ॥ ब्रह्मचर्यादीति ॥ सर्वएवसुवर्णइतिविशेषणादक्ष्णोरपिसु वर्णत्वेप्राप्तमित्याह ॥ तस्येति ॥ विशेषमेवप्रश्नपूर्वकंविशदयति ॥ कथ मित्यादिना ॥ यथाकप्यासवद्यथ्वस्थितंपुंडरीकंतथातस्याक्षिणी इतियोजना ॥ आसशब्दनिष्पत्तिमकारंसूचयति ॥ आसेरिति ॥ घञंतस्यशब्दस्यविवक्षितमर्थंकथयति ॥ कपीति ॥ तस्यकरणत्वंस्फुटय

कपिः स कपिपृष्ठान्तः कप्यास इति शेषः॥ पदार्थमुक्त्वा वाक्यार्थमाह॥ कप्यासइवेति॥ निहीनोपमया देवस्य चक्षुषी व्यपदिश्यमाने तयो-
रपि निहीनत्वं व्यपदिष्टं स्यादित्याशंक्याह॥ उपमितेति॥ कप्यासेनोपमितं पुंडरीकं तेनोपमानेनोपमितत्वाच्चक्षुषोर्न निहीनोपमानप्रयुक्तं
निहीनत्वमित्यर्थः॥ यथोक्तस्यादित्यपुरुषस्य सितत्वशंकां व्यावर्तयितुं नाम व्यपदिशति॥ तस्येति॥ नाम्नो गौणत्वशंकां दारयन्नाम्नो
दयति॥ कथमित्यादिना॥ ननु तस्य सर्वपाप्मोदयस्तत्कार्यभावात्कादित्याशंक्याह॥ पाप्मनेति॥ आदित्येऽस्मिन्नपि सर्वपाप्मोदयः संभवतीन हि
वेदेवान्याप्रगच्छतीतिश्रुतेरित्याशंक्य परमात्मविषयवाक्यशेषमुदाहरति॥ य आत्मेति॥ उक्तार्थयोगोऽतः शब्दार्थः॥ उपास्यं परमात्मानमु

कप्यासइव पुंडरीकमत्यंततेजस्व्येवमस्य देवस्याक्षिणी उपमितोपमत्वान्न हीनोपमानस्यैवं गुणविशिष्टस्य गौणमिदं
नामोदिति कथं गौणत्वं स एष देवः सर्वेभ्यः पाप्मभ्यः पाप्मना सह तत्कार्येभ्य इत्यर्थः॥ य आत्माऽपहतपाप्मेत्यादि वक्ष्यति
उदित उद्गत इत्यर्थः॥ अतोऽसावुन्नामा तमेवं गुणसंपन्नमुन्नामानं यथोक्तेन प्रकारेण यो वेद सोऽप्येवमेवोदेत्युद्गच्छति

प्यासं पुंडरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदित उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद
तस्यर्क्च साम च गेष्णौ तस्मादुद्गीथस्तस्मात्त्वेवोद्गाते

सर्वेभ्यः पाप्मभ्यो ह वा इत्यवधारणार्थौ निपातौ उदेत्येवेत्यर्थः
तस्योद्गीथत्वं देवस्यादित्यादीनामिव विवक्षितत्वादाह॥ तस्यर्क्च साम च गेष्णौ पृथिव्याद्युक्तलक्षणे पर्वणी सर्वात्मा
हि देवः परापरलोककामेशितृत्वादुपपद्यते पृथिव्यग्न्याद्यृक्सामगेष्णत्वं॥

पन्यस्य तदुपासनमिदानीं सफलमुपन्यस्यति
॥ तमेवं गुणमिति॥ यथोक्तेन प्रकारेणोन्नामानमिति संबंधः॥ कथं परस्योपासनमित्यपेक्षायामुद्गीथे संपाद्येति दर्शयति॥ तस्ये-
त्यादिना॥ यथादित्यादीनामुद्गीथे संपाद्योपासनमत्र विवक्ष्यते तथा परमात्मनोऽपि तत्र संपाद्योपासनं विवक्षितत्वात्सर्वे ऋक्
सामात्मत्वमाह तस्येत्यादिवाक्यमित्यर्थः॥ मंडलावच्छिन्नस्य पुरुषस्य कथमृगादिगेष्णत्वमित्याशंक्याह॥ सर्वात्मेति॥ प-
रस्य स्वारस्येन सर्वात्मत्वाद्ध्यानार्थं मंडलावच्छेदादुपपन्नमृगादिगेष्णत्वमित्यर्थः तत्रैव हेत्वंतरमाह॥ परापरेति॥ सर्वात्मत्वं

सर्वयोनित्वादिति ॥ सर्वकारणत्वेन सर्वात्मत्वादृगादिगेष्णत्वं युक्तमेवेत्यर्थः ॥ तस्मादुद्गीथ इति वाक्यं योजयति ॥ यत इति ॥ प्राप्ते सति तस्मादुद्गीथ इत्यनेन वाक्येनोद्गीथत्वं परोक्षेण नाम्ना देवस्योच्यत इति योजना ॥ किमिति परोक्षनाम्ना देवो व्यपदिश्यत इत्याशंक्य परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विष इति श्रुत्यन्तरमाश्रित्याह ॥ परोक्षप्रियत्वादिति ॥ उन्नामत्वे देवस्योद्गातुरुद्गातृत्वप्रसिद्धिं प्रमाणयति ॥ तस्मादिति ॥ तच्छब्दार्थं स्फुटयति ॥ यस्मादिति ॥ प्रकृतस्योन्नाम्नो देवस्य गानादित्यतः शब्दार्थः ॥ उद्गातुरुद्गाने तेन नामप्रसिद्धिरिति युक्तो

सर्वयोनित्वात् यत एवमुन्नामा चासावृक्सामगेष्णश्च तस्मादृक्सामगेष्णत्वप्राप्तमुद्गीथत्वमुच्यते परोक्षेण परोक्षप्रियत्वाद्देवस्य तस्मादुद्गीथ इति तस्मात्त्वेव हेतोरुद्गायतीत्युद्गाता यस्माद्धि तस्य यथोक्तस्योन्नाम्नो गातासावतो युक्तोद्गाने तेन नामप्रसिद्धिरुद्गातुः स एष देव उन्नामा ये चामुष्मादादित्यात्पराञ्चः पराग्गमनादूर्ध्वा लोकास्तेषां लोकानां चेष्टे न केवलमीशितृत्व

तस्य हि गाता स एष ये चामुष्मात्पराञ्चो लोकास्तेषां चेष्टे देवकामानां चेत्यधिदैवतम् ॥ ६ ॥ अथाध्यात्मं वागेवर्क्प्राणः साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते वागेव सा प्राणोऽमस्तत्साम च

मेव च शब्दाद्धारयति च सदा धारा पृथिवीं द्यामुतेमामित्यादिमन्त्रवर्णात् किंच देवकामानामीष्ट इत्येतदधिदैवतं देवताविषयं देवस्योद्गीथस्य स्वरूपमुक्तम् ॥ ६ ॥ अथाधुनाध्यात्ममुच्यते ॥ वागेवर्क्प्राणः सामाधरोपरिस्थानत्वसामान्यात्प्राणो घ्राणमुच्यते सह वायुना वागेव सा प्राणोऽम इत्यादि पूर्ववत् ॥ चक्षुरेवर्गात्मा सामात्मनि छायात्मा तत्स्थत्वात्साम श्रोत्रमे

ति योजना ॥ सर्वपाप्मोदयलिंगात्तस्य चान्यत्रासंभवादादित्यान्तर्गतो देवः परमात्मेत्युक्तं तस्यैव हेत्वन्तरमाह ॥ स एष इति देवकामानामादित्यादुपरितनलोकेष्वधिष्ठातारो ये देवास्तेषां कामाः काम्यमानफलविशेषास्तेषामिति यावत् ॥ न हि निरंकुशं लोककामेशितृत्वं परस्मादन्यत्र संभवत्येष सर्वेश्वर इति श्रुतेरिति भावः ॥ आधिदैविकोपास्त्यानन्तर्यमथशब्दार्थः ॥ ऋचि वाग्दृष्टिः साम्नि प्राणदृष्टिश्च कर्त्तव्येत्यत्र हेतुमाह ॥ अधरेति ॥ कथमृक्सामयोरिव वाक्प्राणयोरधरोपरिस्थानत्वं तत्राह ॥ प्राण इति ॥ स्थानमात्रं व्यावर्त्तयति ॥ सहेति ॥

माह ॥ तत्रस्थत्वादिति ॥

चक्षुषि छायात्मनः स्थितत्वादृचि सामवदित्यर्थः ॥ आध्यात्मिकानि चिरं गोपासनान्युक्त्वानंतरं प्रकारांतरेणांगोपासनभेदं किंचिदुपदिश्यते ॥ अथेति ॥ अक्ष्णो यदेतद्रूपं शुक्लं दृश्यते ऋचि तद्दृष्टिः कर्तव्येत्यर्थः ॥ तदेव रूपं विशिनष्टि ॥ भा इति ॥ ऋचि पूर्वोक्तरूपदृष्टिवद्दृश्यमाणरूपदृष्टिरपि साम्नि कर्तव्येत्याह ॥ अथेति ॥ यथादित्यमंडले समधिगम्यमाने ह्यंशरूपमुक्तं ॥ तथा चक्षुष्यपि दृक्शक्तेरधिष्ठानेनादृग्रूपमुपलभ्यते तद्दृष्टिः साम्नि कर्तव्येत्यर्थः ॥ आध्यात्मिकप्रधानोपासनशेषत्वेनांगोपासनान्युक्त्वानंतरं प्रधानोपासनाविषयं दर्शयति ॥

धिष्ठातृत्वान्मनसः सामत्वम् अथ यदेतदक्ष्णः शुक्लं भाः सैवर्गथ यन्नीलं परः कृष्णमादित्यवद्दृक्शक्त्यधिष्ठानं तत्साम ॥ अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते पूर्ववत्सैवर्गध्यात्मं वागाद्या पृथिव्याद्या चाधिदैवतं प्रसिद्धा च ऋक्पादबद्धाक्षरात्मिका

क्षुरेवर्गात्मा साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते चक्षुरेव सात्मा मस्तत्साम श्रोत्रमेवर्ङ्मनः साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते श्रोत्रमेव सा मनो मस्तत्सामाथ यदेतदक्ष्णः शुक्लं भाः सैवर्गथ यन्नीलं परः कृष्णं तत्साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते ॥४॥ अथ यदेवैतदक्ष्णः शुक्लं भाः सैव साथ यन्नीलं परः कृष्णं तदमस्तत्सामाः ॥ अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते सैवर्क्तत्सामत ॥५॥

त्यथा साम्नो वक्थसाहचर्याद्वा स्तोत्रं साम ऋक् उक्थं शस्त्रमुक्थादन्यत्तथा यजुः स्वाहास्वधावषडादि सर्वमेव वाक् यजुस्तत्स एव सर्वात्मकत्वात्सर्वयोनित्वाच्चेति ह्यवोचाम ऋगादिप्रकरणात्तद्ब्रह्मेति त्रयो वेदाः

अथेति ॥ दृश्यत इति प्रयोगाच्छायात्मायमित्याशंक्याह ॥ पूर्ववदिति ॥ यथा पूर्वस्मिन्नाधिदैविके वाक्ये समाहितचेतोभिरादित्यपुरुषस्य दृश्यत्वमुक्तं तथा चाक्षुषपुरुषस्यापि विशिष्टाधिकारिभिरेव दृश्यत्वमेष्टव्यमित्यर्थः ॥ छायात्मपक्षे वाक्यशेषविरोधमभिप्रेत्याह ॥ सैवेति ॥ येयमृग्व्याख्याता सा सर्वा स एव पुरुष इत्यर्थः ॥ ऋगुक्तं न्यायं साम्न्यतिदिशति ॥ तथेति ॥ यत्किंचित्साम तत्सर्वं स एव पुरुष इत्यर्थः ॥ ऋक्सामशब्दयोरर्थांतरमाह ॥ उक्थेति ॥ ऋक्सामपदद्वंद्वादिति दृष्टांततया शब्दार्थः ॥ कथमृगाद्यात्मत्वं परस्येत्याशंक्याह ॥ सर्वात्मकत्वादिति ॥ ब्रह्मशब्दस्य परमात्मविषयं व्याव

उक्तन्यायेन त्रयो वेदाः स एव पुरुष इत्युपसंहारः छायात्मनो जडस्य व्यावृत्त्यर्थं रूपातिदेशं दर्शयति ॥ तस्येति ॥ किं तदादित्यपुरुषस्य रूप
मित्यपेक्षायामाह ॥ हिरण्मय इत्यादीति ॥ इतश्च नायं छायात्मेत्याह ॥ यावमुष्येति ॥ नामातिदेशोप्येनमर्थमुपोद्बलयतीत्याह ॥ यन्नेति ॥
आदित्यचाक्षुषयो रूपास्ययोर्भेदादुपासनापि भिन्नेति शंकते ॥ स्थानेति ॥ आदित्यमंडलं चक्षुश्चेति स्थाने भिद्येते रूपं हिरण्मयो हिरण्यश्म
श्रु इत्यादि ऋग्गादिगेष्णत्वादिर्गुणः उदित्यादि नाम तेषामतिदेशात्तस्यैतदेव रूपमित्यादिः ये चामुष्मात्पराञ्चो लोकास्तेषां चेष्टे देवकामानां च
त्यधिदैवतं ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानां चेत्यध्यात्ममित्ययमीशितृत्वविषयो भेदव्यपदेशः ॥ अतश्चैतयोर्भेदादुपा

तस्यैतस्य चाक्षुषस्य पुरुषस्य तदेव रूपमतिदिश्यते किं तद्यदमुष्यादित्यपुरुषस्य हिरण्मय इत्यादि यदधिदैवतमु
क्तं यावमुष्य गेष्णौ पर्वणौ तावेवास्यापि चाक्षुषस्य गेष्णौ ॥ यच्चामुष्य नामोदिति उद्गीथ इति च तदेवास्य नाम स्थानभेदाद्रूपगुण
नामातिदेशादीशितृत्वविषयभेदव्यपदेशाच्चादित्यचाक्षुषयोर्भेद इति चेन्नामुना अनेनैवेत्येकस्योभयात्मप्राप्त्यनुपपत्तेर्द्वि

तद्यजुस्तद्ब्रह्म तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णौ ॥ यन्नाम तन्नाम ॥ ॥ ॥

धाभावो नोपपद्यत इति चेद्भवति हि स एकधा भवति त्रिधा भवतीत्यादि न चेतनस्यैकस्य निरवयवत्वाद्द्विधाभावानुपप
त्तेस्तस्मादध्यात्माधिदैवतयोरेकत्वमेव यत्तु रूपाद्यतिदेशो भेदकारणमवोचो न तद्भेदावगमाय किं तर्हि स्थानभेदाद्भेदशंका मा भू

सनमपि भिन्नमेवेत्यर्थः ॥ नोपास्यभेदादुपासनाभेदोस्तीति दूषयति ॥ नेति ॥ उपासकत्वावदमुनादित्यात्मना परांचो लोकान्दे
वकामांश्चाप्नोति स एवानेन चाक्षुषरूपेणार्वाचीनलोकान्मनुष्यकामांश्चाप्नोतीति श्रूयते न चैकस्य वस्तुनो भिन्नोभयरूपत्वमाक्षिरूपपद्य
ते तस्माद्भेदकल्पनानयुक्तेत्यर्थः ॥ उभयात्मकत्वमेकस्यापि विद्यामाहात्म्यादेवभावापगमादुपपन्नमिति शंकते द्विधेति ॥ एकस्य विद्या
वशादनेकरूपत्वे वाक्यशेषं प्रमाणयति ॥ वक्ष्यति हीति ॥ एकस्यानेकशरीरपरिग्रहेपि न स्वरूपभेदोपपत्तिरिति परिहरति ॥ न चेतनस्ये
ति ॥ एकत्वसाधकसद्भाव   त्तच्छब्दार्थः ॥ परोक्तं भेदकमनुवदति ॥ यत्त्विति ॥ भेदकारणमित्यस्मादुपरिष्टादितिशब्दो द्रष्टव्यः ॥ दूषयति

आधिदैविकपुरुषवदाध्यात्मिकेऽपि पुरुषे निरतिशयैश्वर्यश्रवणात्तयोरैक्यमित्याह ॥ स एष इति ॥ तयोर्भेदाभावे हेत्वन्तरमाह ॥ तत्स्मादि-
ति ॥ ईश्वरस्यैव मायायुक्तदेहेनोपासनविषयत्वं योग्यत्वादित्यर्थः ॥ तच्छब्दार्थं स्फुटयति ॥ यस्मादिति ॥ स्थानभेदेन यथोक्तोपासनवतः फलो-
क्त्यर्थं पातनिकां करोति ॥ अथेति ॥ एतत्सामेति संबन्धः ॥ एवंविद्वानित्येतदेव विभजते ॥ यथोक्तमिति ॥ विद्वानित्यस्मादुपरिष्टादथशब्दः संब-
ध्यते ॥ सोऽमुनैव लोकान्कामांश्चाप्नोतीति संबन्धः ॥ आप्तिप्रकारं विवृणोति ॥ स एष इति ॥ उपास्यवदुपासकस्यापि कुतो निरतिशयमैश्वर्यं न

स एष चाक्षुषः पुरुषः ये च एतस्मादाध्यात्मिकादात्मनोऽर्वाञ्चोऽर्वाग्गता लोकास्तेषां चेष्टे मनुष्यसंबन्धिनां च कामानां
तत्तस्माद्य इमे वीणायां गायन्ति गायकास्त एतमेव गायन्ति यस्मादीश्वरं गायन्ति तस्मात्ते धनसनयो धनलाभयुक्ता धनवन्त
इत्यर्थः ॥ अथ य एतदेवं विद्वान् यथोक्तं देवमुद्गीथं विद्वान्साम गायति उभौ स गायति चाक्षुषमादित्यं च तस्यैवंविदः फल

स एष ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानां चेति तद्य इमे वीणायां गायन्त्येतं ते गायन्ति तस्मात्ते धन
सनयो ॥ अथ य एवं विद्वान्साम गायत्युभौ स गायति सोऽमुनैव स एष ये चामुष्मात्पराञ्चो लोकास्ताꣳश्चाप्नोति देव-
कामाꣳश्च ॥ अथानेनैव ये चैतस्मादर्वाञ्चो लोकास्ताꣳश्चाप्नोति मनुष्यकामाꣳश्च ॥ तस्मादु हैवंविदुद्गाता ब्रूया

मुच्यते ॥ सोऽमुनैवादित्येन स एष ये चामुष्मात्पराञ्चो लोकास्तांश्चाप्नोति आदित्यान्तर्गतदेवो भूत्वेत्यर्थः ॥ देवकामांश्चा-
थानेनैव चाक्षुषेणैव ये चैतस्मादर्वाञ्चो लोकास्तांश्चाप्नोति मनुष्यकामांश्च चाक्षुषो भूत्वेत्यर्थः ॥ तस्मादु हैवंविदुद्गाता ब्रू-
याद्यजमानं किं ते तव काममागायानीत्येष हि यस्मादुद्गाता कामागानस्यागानेन कामं संपादयितुमीष्टे समर्थ इत्य-

हि द्वयोर्निरंकुशमैश्वर्यं युक्तमित्याशंक्याह ॥ आदित्येति ॥ अमुनैवादित्येनेत्युक्तमेवात्र स्पष्टीकृतं ॥ अथशब्दस्त र्थः ॥ कोऽसौ य ए-
थापर्यायः ॥ चाक्षुषो भूत्वानेनैव चाक्षुषेणैवेति संबन्धः ॥ उक्तफलस्य याजमानत्वं दर्शयति ॥ तस्मादिति ॥ तच्छब्दार्थमेव कथयति ॥ एष
हीति ॥ उद्गानार्थं विशिनष्टि ॥ कोऽसाविति ॥ उद्गीथे परस्य संपाद्योपासनं विभागेनोक्तमुपसंहरति । द्विरुक्तिरिति ॥ ७ ॥ अध्यात्माधिदैवतस्थान

भेदावच्छन्नं हित्वा परोवरीयस्त्वगुणकपरमात्मदृष्ट्योद्गीथोपासनं परोवरीयस्त्वप्राप्तिफलकमानीतवानाम्नाय इति प्रकरणतात्पर्यमाह ॥ अनेकधेति ॥ तर्हि विवक्षितमुपासनमेवोच्यतां किमाख्यायिकयेत्याशंक्याह ॥ इतिहास इत्विति ॥ इतिहासः पूर्ववृत्तमिति ॥ हस्य भावः ऐतिह्यं ॥ समेतानामिति निर्धारणषष्ठी ॥ ननु सर्वस्मिन् जगति त्रयाणामेवोद्गीथादिज्ञाने कौशलमिति किं नोच्यते किमिति तेषामेव त्रयाणामेव नैपुण्यं प्रतिज्ञायते तत्राह ॥ नहीति ॥ अमुष्य प्रसिद्धस्यापत्यमामुष्यायणो द्वयोरामुष्यायणो व्यामुष्यायणः तव मम

रूपासनासमास्यर्थो ॥ ७ ॥ अनेकधोपास्यत्वादक्षरस्य प्रकारांतरेण परोवरीयस्त्वगुणफलमुपासनांतरमानिनाय इतिहासस्तु सुखावबोधनार्थः ॥ त्रयस्त्रिसंख्याकाः ह इति ऐतिह्यार्थः ॥ उद्गीथे उद्गीथज्ञानं प्रति कुशला निपुणा बभूवुः ॥ कस्मिंश्चिद्देशे काले च निमित्ते वा समेतानामित्यभिप्रायः ॥ न हि सर्वस्मिन् जगति त्रयाणामेव कौशलमुद्गीथादिविज्ञाने श्रूयते ह्युष

कामममागायानीत्येष ह्येव कामागानस्येष्टे य एवं विद्वान्साम गायति साम गायति ॥ ७ ॥ त्रयो होद्गीथे कुशला बभूवुः ॥ शिलकः शालावत्यश्चैकितायनो दाल्भ्यः प्रवाहणो जैवलिरिति ते होचुरुद्गीथे वै कुशलाः स्मो हन्तोद्गीथे कथां वदाम इति तथेति ह समुपविविशुः ॥ १ ॥ स्तिजानश्रुतिकैकेयप्रभृतयः सर्वज्ञकल्पाः के ते त्रय इत्याह ॥ शिलको नामतः शालवतोऽपत्यं शालावत्यश्चिकितायनस्यापत्यं चैकितायनो दल्भ्यगोत्रो दाल्भ्यो द्व्यामुष्यायणो वा प्रवाहणो नामतो जीवलस्यापत्यं जैवलिरित्येते त्रयस्ते होचुरन्योन्यमुद्गीथे वै कुशला निपुणा इति प्रसिद्धाः स्मो हन्त यद्यनुमतिर्भवतामुद्गीथे उद्गीथज्ञाननिमित्तां कथां विचारणां पक्षप्रतिपक्षोपन्यासेन वदामो वादं कुर्म इत्यर्थः ॥ तथा च तद्विद्यसंवादे विपरीतग्रहणनाशोऽपूर्वविज्ञानोपजननं संशयनिवृत्तिश्चेत्यतः तद्विद्यसंयोगः कर्तव्य इति चेतिहासप्रयोजनं चायमिति परिभाषया धर्मतः परिगृहीत इति यावत् किमर्थो वादारंभ इत्यत आह ॥ तथा चेति ॥ प्रवृत्ते वादे तस्मिन्विवक्षितेऽर्थे विद्यायेषां तैः सह संवादे दृष्टमेव फलमिति तिशब्दस्य प्रयोजनमित्यनेन न संबंधः ॥ वादारंभस्य दृष्टफलत्वे फलितमाह ॥ अत इति ॥ इतिहासस्तु सुखावबोधार्थ इत्युक्तेन समुच्चयार्थश्च

दृश्यते हीति ॥ शिलकादीनां तद्विद्यसंयोगे विपरीतधीध्वंसादिकं फलमिति शेषः ॥ तत्रेति ॥ निर्द्धारणार्था सप्तमी ॥ राज्ञः प्रागल्भ्योपपत्तेरित्युक्तं त
स्य राजत्वे हेत्वभावादित्याशंक्याह ॥ ब्राह्मणयोरितीति ॥ पक्षान्तरं विशेषणसामर्थ्यादुत्थाप्यांगीकरोति ॥ अथेति ॥ राज्ञा यथोक्तेन प्रकारेणोक्त
योर्ब्राह्मणयोर्मध्ये शालावत्यो दाल्भ्य मत्युवाचेति संबंधः ॥ साम्नो गतिरित्यन्वयः सामशब्दार्थमाह ॥ प्रकृतत्वादिति ॥ तस्य पूर्वोत्तरग्रंथयोः
प्रकृतत्वं प्रकटयति ॥ उद्गीथो हीति ॥ गतिशब्दस्य क्रियाविषयत्वं व्यावर्त्तयति ॥ आश्रय इति ॥ औपचारिकमाश्रयं निरस्यति ॥ पराय

दृश्यते हि शिलकादीनां तथेत्युक्त्वा ते ह समुपविविशुर्ह उपविष्टवन्तः किल तत्र राज्ञः प्रागल्भ्योपपत्तेः स ह प्रवाहणो जैवलि
रुवाचेतरौ भगवन्तौ पूजावन्तावग्रे पूर्वं वदतां ॥ ब्राह्मणयोरिति लिंगाद्राजा सोऽहं च यो ब्राह्मणयोर्वदतोर्वाचं श्रोष्याम्यर्थं ॥ हि
तामित्यपरे वाचमिति विशेषणात् उक्तयोः स ह शिलकः शालावत्यश्चैकितायनं दाल्भ्यमुवाच हन्त यद्यनुमंस्यसे त्वा त्वां पृच्छा
नीत्युक्त इतरः पृच्छेति होवाच ॥ लब्धानुमतिराह ॥ का साम्नः प्रकृतत्वादुद्गीथस्योद्गीथो ह्यत्रोपास्यत्वेन प्रकृतः परावरीयां

स ह प्रवाहणो जैवलिरुवाच भगवन्तावग्रे वदतां ॥ ब्राह्मणयोर्वदतोर्वाचं श्रोष्यामीति स ह शिलकः शालाव
त्यश्चैकितायनं दाल्भ्यमुवाच हन्त त्वा पृच्छानीति पृच्छेति होवाच का साम्नो गतिरिति स्वर इति होवाच स्वरस्य का ग
तिरिति प्राण इति होवाच प्राणस्य का गतिरित्यन्नमिति होवाचा    समुद्गीथमिति च वक्ष्यति ॥ गतिराश्रयः परायण

मित्येतदेवं पृष्टो दाल्भ्य उवाच स्वर इति स्वरात्मकत्वात्साम्नो यो यदात्मकः स तद्गतिस्तदाश्रयश्च भवतीति युक्तं मृदाश्र
य इव घटादिः स्वरस्य का गतिरिति प्राण इति होवाच प्राणनिष्पाद्यो हि स्वरस्तस्मात्स्वरस्य प्राणो गतिः ॥ प्राणस्य का गतिरि
त्यन्नमिति होवाचान्नावष्टंभो हि प्राणः ॥ शुष्यति वै प्राण ऋतेऽन्नादिति हि श्रुतेरन्नं दाम इति चान्नस्य का गति    पामित्येतदिति ॥ स्व

रोध्वनिभेदः सकार्यस्योद्गीथस्य गतिरित्याशंक्याह ॥ स्वरात्मकत्वादिति ॥ तदंजकत्वात्तदाश्रयत्वेन तत्तादात्म्यादित्युक्ते स्वरस्तस्य गतिरि
त्यर्थः साम्नः स्वरात्मकत्वेपि कथं तद्गतित्वमित्याशंक्य दृष्टान्तेन परिहरति यो यदात्मक इति ॥ प्राणस्यान्नावष्टंभकत्वे वाजसनेयश्रुतिं प्र

वत्तस्थानीयस्य प्राणस्यान्नं दाम बंधनमिति च श्रुतेरित्यर्थः ॥ ता अन्नमसृजंतेति श्रुतेरन्नस्याप्संभवत्वं द्रष्टव्यं ॥ कथमसौ लोको गतिस्तत्राह
॥ अमुष्मादिति ॥ इति पृष्टो दाल्भ्य उवाचेति संबंधः तत्र छन्दसि कालनियमाभावमभिप्रेत्य क्रियापरं व्याकरोति ॥ आहेति ॥ यद्यपि परो ना
स्याश्रयांतरं प्रतिपद्यते तथापि त्वया तद्वाच्यमेवेत्याशंक्याह ॥ अत इति ॥ अतः शब्दार्थमेव स्फोरयति ॥ स्वर्गेति ॥ न स्मात्स्वर्गलोकप्रतिष्ठं सामे

रिति आप इति होवाचाप्संभवत्वादन्नस्य अपां का गतिरित्यसौ लोक इति होवाचामुष्माल्लोकाद्वृष्टिः संभवत्यमुष्य लोक
स्य का गतिरिति पृष्टो दाल्भ्य उवाच स्वर्गममुं लोकमतीत्याश्रयांतरं साम न नयेत्कश्चिदिति होवाच आह अतो वयमपि स्व
र्गलोकं सामाभिसंस्थापयामः ॥ स्वर्गलोकप्रतिष्ठं साम जानीम इत्यर्थः ॥ स्वर्गसंस्तावं स्वर्गत्वेन संस्तवनं संस्तावो यस्य तत्सा

न्नस्य का गतिरित्याप इति होवाचापां का गतिरित्यसौ लोक इति होवाचामुष्य लोकस्य का गतिरिति न स्वर्गं लोकमति
नयेदिति होवाच स्वर्गं वयं लोकꣳ सामाभिसꣳस्थापयामः स्वर्गसꣳस्तावꣳ हि सामेति तꣳ ह शिलकः शाला
वत्यश्चैकितायनं दाल्भ्यमुवाचाप्रतिष्ठितं वै किल ते दाल्भ्य साम ॥ यस्त्वेतर्हि ब्रूयान्मूर्धा ते विपतिष्यतीति मूर्धा ते वि

म स्वर्गसंस्तावं हि यस्मात्स्वर्गो वै लोकः सामवेद इति ॥ तमितरः शिलकः शालावत्यश्चैकितायनं दाल्भ्यमुवाचाप्रतिष्ठितमसं
स्थितं परोवरीयस्त्वेनासमाप्तगति सामेत्यर्थः ॥ वै इत्यागमं स्मारयति ॥ किलेति यद्दाल्भ्य तेतव साम ॥ यस्त्वसहिष्णुः सामवि
देतर्ह्येतस्मिन्काले ब्रूयात्कश्चिद्विपरीतविज्ञानमप्रतिष्ठितं साम प्रतिष्ठितमित्येवंवादापराधिनं मूर्धा शिरस्ते विपतिष्यति वि

ति पूर्वेण संबंधः ॥ स्वर्गसंस्तावं सामेत्यत्र प्रमाणमाह ॥ स्वर्ग इति ॥ उपदेशपारंपर्यमागमः यत्कृतकं तदनित्यमिति स्वर्गस्यानवत्वान्नप
रायणत्वं संभवतीत्याशयेनाह ॥ किलेति चेति ॥ यथोक्तन्याय सूचयतीति शेषः ॥ न्यायागमाभ्यामप्रतिष्ठितं ते सामेत्युपसंहरति ॥ दाल्भ्य इति ॥ स्व
र्गप्रतिष्ठितं सामेति विज्ञाने दोषं दर्शयति ॥ यस्त्विति ॥ असहिष्णुर्मिथ्यावचनमसहमानमः सन्निति यावत् ॥ एतस्मिन्काले मिथ्यावचनाव
स्थायामित्यर्थः ॥ विपरीतं विज्ञानं यस्य स तथोक्तः तं प्रतीति विग्रहः तदेव विपरीतज्ञानमभिनयति ॥ अप्रतिष्ठितमिति ॥ सामाप्रतिष्ठितं प्रति

नदीयवचनमेवदर्शयति ॥ एवमिति ॥ सतथाकथयतुममतु किंस्यादित्याशंक्याह ॥ एवमुक्तस्येति ॥ तथैव विदुषः शापवाक्यानुसारेणे
ति यावत् ॥ तदिति शिरोनिरुक्तिः ॥ शापदानायप्रवृत्तस्त्वयमिति शंकां वारयति ॥ नत्विति ॥ मूर्द्धपातोपन्यासानर्थक्यमाशंकते ॥ नन्विति ॥ अ
पराधाभावेपि परोक्तिवशान्मूर्द्धपाते दोषमाह ॥ अन्यथेति ॥ सति चापराधे परोक्तिवैधुर्यान्मूर्द्धपाताभावे दोषं कथयति ॥ अकृतेति ॥ अपरा
धस्य मूर्द्धपातहेतोरपि सहकार्यपेक्षत्वादभिव्याहरणं नानर्थकमित्युत्तरमाह ॥ नैष दोष इति ॥ कर्मणः शुभादेराचरितस्य निमित्तापेक्षयाफ



त्येवमुक्तस्यापराधिनस्तथैव तद्विपतेन्न संशयो न त्वहं ब्रवीमीत्यभिप्रायः ननु मूर्द्धपातार्हं चेदपराधं कृतवानतः परेणा
नुक्तस्यापि पतेन्मूर्द्धा नो चेदपराध्युक्तस्यापि नैव तत्पतत्यन्यथाऽकृतागमः कृतनाशश्च स्यातां नैष दोषः कृतस्य कर्मणः शु
भाऽशुभस्य फलप्राप्तेर्देशकालनिमित्तापेक्षत्वात् ॥ तत्रैवं सति मूर्द्धपातनिमित्तस्याप्यज्ञानस्य पराभिव्याहारनिमित्ता

पतेदिति ॥ हंताहमेतद्भगवत्तो वेदानीति विद्धीति होवाचामुष्य लोकस्य का गतिरित्ययं लोक इति होवाचास्य लो
कस्य का गतिरिति न प्रतिष्ठां लोकमतिनयेदिति होवाच प्रतिष्ठां वयं लोकꣳ ॥ पेक्षत्वमित्येवमुक्तो दाल्भ्य आह हंताह
मेतद्भगवत्तो वेदानि यत्प्रतिष्ठं सामेत्युक्तः प्रत्युवाच शालावत्यो विद्धीति होवाचामुष्य लोकस्य का गतिरिति पृष्टो दाल्भ्येन शाला
वत्योऽयं लोक इति होवाचायं हि लोको यागदानहोमादिभिरमुं लोकं पुष्यतीत्यतः प्रदानं देवा उपजीवन्तीति हि श्रुतयः प्रत्यक्षं हि
सर्वभूतानां धरणी प्रतिष्ठेत्यतः साम्नोऽप्ययं लोकः प्रतिष्ठैवेति युक्तं ॥

((लहेतुत्वेपि प्रकृतेऽपराधिनि कृतौ व्याहरणापेक्षेत्याशंक्याह ॥ तत्रे
ति ॥ तत्र शुभादौ कर्मण्येवं निमित्तापेक्षया फलप्रदे सतीत्यर्थः ॥ इति पराभिव्याहरणमर्थवदिति शेषः हंतेत्यादि व्याकरोति ॥ एवमिति ॥ कथ
ममुष्य लोकस्यैतल्लोकप्रतिष्ठितत्वं तदाह ॥ अयं हि लोक इति ॥ आदिशब्दः श्रद्धादिसंग्रहार्थः ॥ तत्रैव श्रुतिं प्रमाणयति ॥ इतीति ॥ अस्माल्लो
कात्प्रदीयमानं चरुपुरोडाशाद्यग्निद्वारोपजीवन्ति देवा इति श्रौती प्रसिद्धिरित्यर्थः भवतु परलोकं प्रति प्रतिष्ठात्वमस्य लोकस्य तथापि क
थमयं लोकः साम्नः प्रतिष्ठेत्याशंक्याह ॥ प्रत्यक्षं हीति ॥ पृथिव्याः सर्वाणि भूतानि प्रतिष्ठात्वं फलितमाह ॥ अत इति ॥ साम्नोपि सर्वांतर्भावा

तथापि प्रतिष्ठान्तरं त्वया वाच्यमित्याशंक्याह ॥ अतो वयमिति ॥ यस्मादेतल्लोकप्रतिष्ठात्वेन संस्तुतं साम तस्मादिदं साम प्रत्येतमेव लोकं प्रति
ष्ठां जानीम इति योजना ॥ कथं प्रतिष्ठात्वेन सामत्वाविशेषात्पृथिव्यात्मकत्वं स्तुतमित्याशंक्याह ॥ इयमिति ॥ इयं वै रथंतरशब्दवाच्यस्य साम
विशेषस्य पृथिवीत्वेन स्तुतत्वादुद्गीथस्यापि सामत्वाविशेषात्पृथिव्यात्मत्वं संभाव्यत इत्यर्थः ॥ हंताहमेतदित्यत्रानंतं सामेत्युच्यते
॥८॥ आकाशशब्दस्य भूताकाशविषयत्वव्यावृत्त्यै परमात्मविषयत्वं वाक्यशेषवशाद्दर्शयति ॥ आकाश इति चेति ॥ किंच परस्यात्मनः
सर्वभूतोत्पादकत्वं कर्मेति वेदांतमर्यादा तद्धि आकाशे श्रुतं तथा च परमात्मैवाकाशशब्द इत्याह ॥ तस्य हीति ॥ किंच परस्मिन्नेव भूतानां प्रल

अस्य लोकस्य का गतिरित्युक्त आह शालावत्यो न प्रतिष्ठां इमं लोकमतीत्य न नयेत्साम कश्चिदतो वयं प्रतिष्ठां लोकं सामा
भिसंस्थापयामो यस्मात्प्रतिष्ठासंस्तावं हि प्रतिष्ठात्वेन संस्तुतं सामेत्यर्थः ॥ इयं वै रथंतरमिति च श्रुतिस्तमेवमुक्तवंतं ह प्र
वाहणो जैवलिरुवाचांतवद्वै किल ते शालावत्य सामेत्यादि पूर्ववत् ततः शालावत्य आह हंताहमेतद्भगवतो वेदानीति विद्धी
ति होवाचेत्यनुज्ञात आह ॥८॥ अस्य लोकस्य का गतिरित्याकाश इति होवाच प्रवाहण आका
श इति च पर आत्मा आकाशो वै नामेति श्रुतेः ॥ तस्य हि कर्म सर्वभूतोत्पादकत्वं तस्मिन्नेव हि भूतप्रलयः तत्तेजोऽसृजत तेजः पर
स्यां देवतायामिति हि वक्ष्यति ॥ सर्वाणि ह वा इमानि स्थावरजंगमानि आकाशादेव समुत्पद्यंते तेजोबन्नादिक्रमेण सामर्थ्या

सामाभिसꣳस्थापयामः प्रतिष्ठासꣳस्तावꣳ हि सामेति ॥ तꣳ ह प्रवाहणो जैवलिरुवाचान्तवद्वै किल ते शा
लावत्य साम यस्त्वेतर्हि ब्रूयान्मूर्धा ते विपतिष्यतीति मूर्धा ते विपतेदिति हन्ताहमेतद्भगवतो वेदानीति विद्धीति होवा
च ॥८॥ अस्य लोकस्य

यः स चात्राकाशे श्रुतः तस्मात्पर एवात्माकाश इत्याह ॥ तस्मिन्नेवेति ॥ सर्वोत्पादकत्वं परस्य कर्मेत्यत्र मानमाह ॥ तत्तेजोऽसृजतेति ॥ परस्मिन्नेव ल
यो भूतानामित्यत्रापि मानमाह ॥ तेज इति ॥ भवतु परस्यात्मनः सर्वोत्पादकत्वं कर्म तथापि किमायातमाकाशस्येति चेत्तत्राह ॥ सर्वाणीति ॥ क
थमेकक्रम उपलभ्यते अविशेषेण हि ततः सर्वोत्पत्तिश्रुतेरित्याशंक्याह ॥ सामर्थ्यादिति ॥ आत्मन आकाशः संभूतस्तत्तेजोऽसृजतेत्यादिश्रु

तथापि कथमाकाशे सर्वभूतलयस्तत्राह ॥ आकाशं प्रतीति विपर्ययेण क्रमोऽतद्गतिन्यायेनाह ॥ विपरीतेति ॥ आकाशस्य परमात्मत्वे हेतुं
तत्राह ॥ यस्मादिति ॥ परायणत्वमपि तत्रैव लिङ्गमित्याह स्म तद्वति ॥ आकाशस्तल्लिङ्गादिति न्यायेनाकाशस्य परमात्मत्वमुक्तम् ॥ इदानीं
तस्योद्गीथे संपादितस्य परोवरीयस्त्वगुणमुपदिशति ॥ यस्मादिति ॥ उत्तरमुत्तरं श्रेष्ठाद्विशिष्टो यस्मिन्नित्युत्तमत्वमात्रस्य कथमयं गुणः स्या
दित्याशङ्क्याह ॥ परमात्मेति ॥ आकाशस्य परमात्मत्वे लिङ्गान्तरमाह ॥ अतएवेति ॥ परमात्मसंपन्नत्वादिति यावत् ॥ आकाशो हि मुक्तो

दाकाशं प्रत्यस्तं यन्ति प्रलयकाले तेनैव विपरीतक्रमेण हि यस्मादाकाश एभ्यः सर्वेभ्यो भूतेभ्यो ज्यायान्महत्तरोऽतः स
र्वेषां भूतानां परमयनं परायणं प्रतिष्ठा त्रिष्वपि कालेष्वित्यर्थः ॥ यस्मात्परं परं वरीयः वरीयसोऽप्येष वरः परश्च वरीयांश्च परोव
रीयानुद्गीथः परमात्मा संपन्न इत्यर्थोऽत एव स एषोऽनन्तोऽविद्यमानोऽन्तः तमेतं परोवरीयांसं परमात्मभूतमनन्तमेवं विद्वान्प

का गतिरित्याकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त आकाशं प्रत्यस्तं यन्त्याकाशो
ह्येवैभ्यो ज्यायानाकाशः परायणम् ॥१॥ स एष परोवरीयानुद्गीथः स एषोऽनन्तः परोवरीयो हास्य भवति परोवरीयसो
ह लोकाञ्जयति य एतदेवं विद्वान्परोवरीयांसमुद्गीथमुपास्ते ॥२॥ तं हैतमतिधन्वा शौनक उदरशाण्डिल्यायो

रोवरीयांसमुद्गीथमुपास्ते ॥ तस्यैतत्फलमाह ॥ परोवरीयः परं परं विशिष्टतरं जीवनं हास्य विदुषो भवति इह क्तो
ष्टं फलमदृष्टं च परोवरीयस उत्तरोत्तरविशिष्टतरानेव ब्रह्माकाशान्ताँल्लोकाञ्जयति ॥ य एतदेवं विद्वानुद्गीथमुपास्ते ॥
किं च तमेतमुद्गीथं विद्वानतिधन्वा नामतः शुनकस्यापत्यं शौनकः उदरशाण्डिल्याय शिष्यायैतमुद्गीथदर्शनमुक्त्वोवाच ॥
यावत्ते तव प्रजायां प्रजासंततावित्यर्थः ॥ एनमुद्गीथं त्वत्संततिजा वेदिष्यन्ते ज्ञास्यन्ति ॥ तावन्तं कालं परोवरीयो हैभ्यः प्र

द्गीथे संपादितोऽनन्तः श्रुतः ॥ न चानन्तं ब्रह्मणोऽन्यत्र युक्तं सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुतेस्तस्मादाकाशो ब्रह्मेत्यर्थः ॥ संप्रत्याकाशशब्दितस्य प
रस्योद्गीथे संपादितस्य परोवरीयस्त्वगुणविशिष्टस्योपास्तिं विदधाति ॥ तमेतमिति ॥ परं परमुपर्युपरीति यावत्तस्मादेवमुपासीतेति भा

दूतश्चात्र विधिस्तीत्येतत्तेभ्य स्तत्तं तति ज्यायं यथोक्तोद्गीथवेदितारस्तदर्थमित्यर्थः॥ तथाऽदृष्टे विशिष्टतरजीवनवदित्यर्थः॥ अदृष्टेऽपीति च्छेदः॥ स य एतमित्याद्युत्तरवाक्यं शंकोत्तरत्वेनोत्थाप्य व्याचष्टे॥ स्यादित्यादिना॥ अस्मिन्युगे भवंतीत्यैदंयुगीनास्तेषां मैदंयुगीनानां लोकः परोवरीयानिति शेषः॥ पुनरुक्तिरुद्गीथोपास्तिसमाप्त्यर्था॥ ९॥ अथोद्गीथाख्यस्योपासनस्यानेकधोक्तत्वात्तद्भक्त्यानवशेषात्

सिद्धेभ्यो लौकिकजीवनेभ्य उत्तरोत्तरविशिष्टतरं जीवनं तेभ्यो भविष्यति तथाऽदृष्टेऽपि परलोकेऽमुष्मिन्परोवरीयांल्लोको भविष्यतीत्युक्तवान् शांडिल्यायातिधन्वा शौनकः स्यादेतत्फलं पूर्वेषां महाभाग्यानां नैदंयुगीनानामित्याशंकानिवृत्तय आह॥ स यः कश्चिदेतदेवं विद्वानुद्गीथमेतद्दुपास्ते तस्याप्येवमेव परोवरीय एव हास्यास्मिंल्लोके जीवनं भवति तथामुष्मिंल्लोक इति॥ ९॥ उद्गीथोपासनप्रसंगेन प्रस्तावप्रतिहारविषयमप्युपासनं कर्तव्यमितीदमारभ्यते॥ आख्यायिका तु सुखावबोधार्था॥ मटचीह

वाचयावत्त एनं प्रजायामुद्गीथं वेदिष्यंते परोवरीयो हैभ्यस्तावदस्मिँल्लोके जीवनं भविष्यति तथामुष्मिँल्लोक इति स य एतदेवं विद्वानुपास्ते परोवरीय एव हास्यास्मिँल्लोके जीवनं भवति तथामुष्मिँल्लोक इति लोक इति॥ ९॥ मटचीहतेषु कुरुष्वाटिक्या सह जाययोषस्तिर्ह चाक्रायण इभ्यग्रामे प्रद्राणक उवास स हेभ्यं कुल्मा

तेषु मटच्योऽशनयस्ताभिर्हतेषु नाशितेषु कुरुषु कुरुसस्येष्वित्यर्थः॥ ततो दुर्भिक्षे जात आटिक्यानुपजातपयोधरादिस्त्रीव्यंजनया सह जायया उषस्तिर्ह नामतः चक्रस्यापत्यं चाक्रायणः इभो हस्ती तमर्हतीतीभ्यः ईश्वरो हस्त्यारोहो वा तस्य ग्राम इभ्यग्रामस्तस्मिन्प्रद्राणकोऽन्नालाभात् द्रा कुत्सायां गतौ कुत्सितां गतिं गतोऽन्त्यावस्थां प्राप्त इत्यर्थः

पाठकपरिसमाप्तिरेवमुक्तेत्याशंक्याह॥ उद्गीथेति॥ इदमाखंडानंतरं परामृश्यते॥ प्रस्तावाद्युपासनं विवक्षितं चेत्तदेवोच्यतां किमनयाख्यायिकयेत्याशंक्याह॥ आख्यायिकात्विति॥ मटच्यामर्दनहेतवोऽशनयः पाषाणवृष्टयो वा ततः सस्यनाशादित्येतत्सर्वतः स्वैरसंचारेऽपि न व्यभिचारशंकेति दर्शयितुं माटिक्येति विशेषणं प्रद्राणकपदस्य क्रियापदेन संबंधः कुत्सितगतिप्राप्तौ हेतुरन्नालाभादिति प्रद्राणक

यदृच्छया सह इत्यर्थः॥ नेत इति वाक्योपादानं तच्चाकरोन्य स्मादिति॥ यदित्यव्ययं बहुवचनांतं उपनिहिताः कुल्माषा इति शेषः ते
पात्रे खल्विमे भाजने प्रक्षिप्ता इति ये जनाहन्त कुल्माषा भक्षिताश्चेदित्यर्थः॥ किं प्रत्युवाचेत्याकांक्षापूर्वकमाह॥ किमित्यादिना॥ अनुपा
नाभावेपि तु त्वं जीवनराहित्यमित्याशंक्याह॥ काम इति॥ अन्योच्छिष्टकुल्माषभक्षणमृषेर्वदंत्याः श्रुतेस्तात्पर्यमाह॥ अतश्चेति॥ चाक्रा

उवास उषितवान् कस्यचिद्गृहमाश्रित्य सोऽन्नार्थमटन्निभ्यं कुल्माषान्कुत्सितान्माषान् खादंतं भक्षयंतं यदृच्छयोपलभ्य
बिभिक्षे याचितवान् तमुषस्तिं ह उवाचेभ्यो नेतोऽस्मान्मया भक्ष्यमाणादुच्छिष्टराशेः कुल्माषा अन्ये न विद्यंते यच्च ये राशौ मम
म उपनिहिताः प्रक्षिप्ता इमे भाजने किं करोमीत्युक्तः प्रत्युवाचोषस्तिरेतेषामेतानित्यर्थः॥ मे मह्यं देहीति होवाच तानस्मै स इभ्यो
ऽस्मा उषस्तये प्रददौ प्रदत्तवान्॥ अनुपानीयं समीपस्थमुदकं हंत गृहाणानुपानमित्युक्तः प्रत्युवाचोच्छिष्टं वै मे ममेदमुदकं

खादंतं बिभिक्षे तꣳ होवाच नेतोऽन्ये विद्यंते यच्च ये म इम उपनिहिता इत्येतेषां मे देहीति होवाच तानस्मै प्रददौ हं
तानुपानमित्युच्छिष्टं वै मे पीतꣳ स्यादिति होवाच॥ न स्विदेतेऽप्युच्छिष्टा इति न वा अजीविष्यमिमानखादन्निति हो
वाच कामो म उदकपानमिति॥ स ह खादित्वातिशेषाञ्जायाया ॥२॥ पीतं स्याद्यदि पास्यामीत्युक्तवंतं प्रत्युवाचेतरः॥ किं न
स्विदेते कुल्माषा अप्युच्छिष्टा इत्युक्त आहोषस्तिर्न वै अजीविष्यं न जीविष्यामीमान्कुल्माषानखादन्न भक्षयन्निति होवाच का
म इच्छातो मे मम उदकपानं लभ्यत इत्यर्थोऽतश्चैतामवस्थां प्राप्तस्य विद्याधर्मयशोवतः स्वात्मपरोपकारसमर्थस्यैतदपि कर्म
कुर्वतो नागः स्पर्श इत्यभिप्रायः॥ तस्यापि जीवितं प्रत्युपायांतरेऽजुगुप्सिते सति जुगुप्सितमेतत्कर्म दोषाय ज्ञानावलेपेन कुर्वतो

पणस्य विदुषोऽभक्ष्यभक्षणदर्शनादिति यावत्॥ एतां अवस्थां प्राप्तस्य जीवितसंदेहमापन्नस्येत्यर्थः॥ विद्याधर्मयशोवतो ज्ञानादिमत्
तया ख्यातिं प्रपन्नस्येत्येतत् स्वात्मोपकारे परोपकारे च सामर्थ्ये निग्रहानुग्रहशक्तिमत्त्व एतत्कर्म जीवनमात्रकारणं कुत्सितं चेष्टितमित्य
र्थः॥ उच्छिष्टोदकपानप्रतिषेधश्रुतेरभिप्रायमाह॥ तस्यापीति॥ एतत्कर्मेत्यभक्ष्यभक्षणोक्तिः ननु ज्ञानिनो यथेष्टचेष्टा स्यात् ज्ञायते भवं

प्रद्राणकेति ॥ चाक्रायणो प्रद्राणकशब्दप्रयोगात्परमापदमापन्नः सन् कुल्माषानुच्छिष्टानभक्षितवानिति प्रतिभाति तथा च ज्ञानिनो यथे
ष्टाचारे प्रमाणाभावादनेकप्रमाणविरोधाच्च नासावत्र विवक्षित इत्यर्थः ॥ स्त्रीस्वाभाव्यं पत्यु राज्ञाकरणं तस्याः कर्म कुल्माषाणां परिरक्ष
णं यक्ष्यतीति कस्मान्नोक्तं तत्राह ॥ यजमानत्वादिति ॥ राज्ञो यजमानत्वात् त्यागफलस्यात्मगामित्वाद्यक्ष्यत इत्यात्मनेपदं प्रयुक्तमि

प्रद्राणकशब्दश्रवणात्तांश्च स खादित्वा ऽतिशेषानतिशिष्टाञ्जायायै कारुण्यादाजहार सा टिक्याग्र एव कुल्माषप्राप्तेः
सुभिक्षा शोभनभिक्षा लब्धान्ना इत्येतत् बभूव सती तथापि स्त्रीस्वाभाव्यादनवज्ञाय तान् कुल्माषान् पत्युर्हस्तात्प्रतिगृ
ह्य निदधौ निक्षिप्तवती सा तस्याः कर्म जानन् प्रातः स एषः काले संजिहानः शयनं निद्रां वा परित्यजन्नुवाच पत्न्याः शृण्वन्त्याः य
द्यदिवतेति खिद्यमानोऽन्नस्य स्तोकं लभेमहि तद्भुक्त्वान्नं समर्थो गत्वा लभेमहि धनमात्रां धनस्याल्पं ततोऽस्माकं जीवनं भ

आजहार साग्र एव सुभिक्षा बभूव तान्प्रतिगृह्य निदधौ स ह प्रातः संजिहान उवाच यद् बतान्नस्य लभेमहि लभेमहि
धनमात्रां राजासौ यक्ष्यते स मा सर्वैरार्त्विज्यैर्वृणीतेति तं जायोवाच हन्त पत इम एव कुल्माषा इति तान्खादित्वा
मुं यज्ञं विततमेयाय तत्रोद्गातॄनास्तावे । विष्यतीति धनलाभे च कारणमाह ॥ राजासौ नातिदूरस्थाने यक्ष्यते यजमानत्वा
त्तस्यात्मनेपदं स च राजा मां मां पात्रमुपलभ्य सर्वैरार्त्विज्यैरृत्विक्कर्मभिरार्त्विक्कर्मप्रयोजनायेत्यर्थः वृणीतेत्येवमुक्तवन्तं
जायोवाच हन्त गृहाण हे पत इम एव ये मद्धस्ते विनिक्षिप्तास्त्वया कुल्माषा इति तान्खादित्वामुं यज्ञं राज्ञो विततं विस्तारितं ऋ
त्विग्भिरेयाय तत्र च गत्वोद्गातॄन् ॥ उद्गातृपुरुषानागत्य स्तुवन्त्यस्मिन्नित्यास्तावस्तस्मिन्नास्तावे स्तोष्यमाणानुपोपविवेश
समीप उपविष्टस्तेषामित्यर्थः ॥ उपविश्य स ह प्रस्तोतारमुवाच ॥ हे प्रस्तोतरित्यामन्त्र्याभिमुखीकरणाय या देवता प्रस्तावं

त्यर्थः ॥ अन्येषामुपद्रष्टृत्वसंभवे कुतस्त्वामेव राजा मामान यक्ष्यतीत्याशंक्याह ॥ स चेति ॥ हन्तेत्यन्नलेशलाभश्चेदेवं धनलब्धिद्वारा जीवनहेतु
रित्यर्थः ॥ राज्ञो यज्ञस्तत्रेत्युच्यते ॥ उद्गातुरेकत्वे कुतो बहुत्वमित्याशंक्याह ॥ उद्गातृपुरुषानिति ॥ स्तुवन्त्यस्मिन्निति सप्तम्यास्तावारदेशो वा निर्दि

विदुषः समीपे देवतामविद्वान्प्रस्तोष्यसि चेन्मूर्धा ते विपतिष्यतीत्यन्वयेन संबंधः॥ नन्वविद्वन्निंदाया विवक्षितत्वाद्विद्वत्समीपवचनमकिंचि
त्करमिति चेन्नेत्याह॥ तत्परोक्षेपीति॥ तस्येत्य विद्वान्प्रस्तोतोच्यते माभूत्कर्ममात्रविदां कर्मण्यधिकार इति चेन्नेत्याह॥ तच्चेति॥ तेनाभोक्तुरु
तइत्यादिश्रुताविति शेषः॥ अविदुषामपि कर्माधिकारे हेत्वंतरमाह॥ दक्षिणेति॥ तदेव व्यतिरेकद्वारा स्फोरयति॥ अनधिकारे चेति॥ तत्सव
समुच्चयफलत्वादित्यर्थः॥ ननु दक्षिणमार्गस्य वापीकूपतडाकादिस्मार्तकर्मप्रयुक्तत्वाद्वैदिके कर्मणि विद्वानेवाधिक्रियते नेत्याह॥ न चेति

प्रस्तावभक्तिमनुगता ऽन्वायत्तातां च देवतां प्रस्तावभक्तेर विद्वान्सन्प्रस्तोष्यसि विदुषो मम समीपे तत्परोक्षेपि चेद्विपतेत्तस्य
मूर्धा कर्ममात्रविदामपि अनधिकार एव कर्मणि स्यात्तच्चानिष्टं अविदुषामपि कर्मदर्शनाद्दक्षिणमार्गश्रुतेश्चानधिकारे चाविदु
षामुत्तर एवैको मार्गः श्रूयेत न च स्मार्तकर्मनिमित्त एव दक्षिणः पंथा यज्ञेन दानेनेत्यादिश्रुतेः॥ तथोक्तस्य मयेति च विशेषणाद्वि

तेस्तोष्यमाणानुपोपविवेश सह प्रस्तोतारमुवाच प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां चेदविद्वान्प्रस्तोष्यसि मू
र्धा ते विपतिष्यतीत्येवमेवोद्गातारमुवाचोद्गातर्या देवतोद्गीथमन्वायत्ता तां चेदविद्वानुद्गास्यसि मूर्धा ते विपतिष्यती
त्येवमेव प्रतिहर्तारमुवाच प्रतिहर्तर्या देवता प्रतिहारमन्वायत्ता तां चेदविद्वान्प्रतिहरिष्यसि मूर्धा ते विपतिष्यती

द्वत्समक्षमेव कर्मण्यनधिकारो न सर्वत्राग्निहोत्रस्मार्तकर्माध्ययनादिषु चानुज्ञायास्तत्र दर्शनात्कर्ममात्रविदा"ति
मप्यधिकारः सिद्धः कर्मणीति

॥ यज्ञेन दानेन लोकाञ्जयंतीति वैदिककर्मनिष्ठानामज्ञानामेव दक्षिणमार्गश्रवणादिति हेतुमा
ह॥ यज्ञेनेति॥ इतश्चाविदुषां विद्वत्समीपे कर्माधिकारो नास्तीत्याह॥ तथोक्तस्येति॥ देवताविज्ञानशून्यस्य ते मूर्धा विपतिष्यतीत्यनेन
प्रकारेण मयोक्तस्य मूर्धापतिष्यदिति विशेषणश्रवणाद्विद्वत्समीपे तदनुज्ञामंतरेण कर्म कुर्वतो पराधित्वात्तस्य कर्मण्यनधिकार एवेत्य
र्थः॥ विद्वत्समीपे पुनरविदुषोपि कर्मण्यधिकारोस्तीत्याह॥ न सर्वत्रेति॥ अग्निहोत्रादौ श्रौतकर्मणि स्मार्ते च वापीकूपतडागादिक
र्मस्वध्ययनजपादिषु च विद्वत्सन्निधिमंतरेणापि सर्वस्मिन्काले कर्ममात्रविदो नाधिकारोस्तीति शक्यं वक्तुमित्यर्थः॥ तत्र हेतुमाह अनुज्ञे

राज्ञा स्वकीयकर्मनिर्वर्तने प्रार्थनादेतदेवमस्या मतिरुष्टाः स्तुवतामिति चानुज्ञोपलंभादस्त्येवाविदुषामपि कर्मण्यधिकार इत्य-
र्थः उक्तमर्थमुपसंहरति ॥ कर्ममात्रेति ॥ विद्वत्समीपेन दत्तानुज्ञामलब्ध्वा नास्ति कर्मानुष्ठानमिति नियमयितुमितिशब्दः मूर्द्धा ते विपति-
ष्यतीत्येतदंतं प्रस्तोतृविषयं वाक्यं व्याख्यातमित्यनुवदति ॥ मूर्द्धेति ॥ तूष्णीमित्यस्यार्थमाह ॥ अन्यच्चेति ॥ तत्र हेतुमाह ॥ अर्थित्वादि-
ति ननद्देवताविषयविज्ञानार्थित्वेन कर्मांतरमकुर्वन्तश्चाक्रायणाभिमुखाः स्थिता इत्यर्थः ॥ १० ॥ अथ हैनमित्यादि व्याकरोति ॥

मूर्द्धा ते विपतिष्यतीत्येवमेवोद्गातारं प्रतिहर्तारमुवाचेत्यादि समानमन्यत्ते प्रस्तोत्रादयः कर्मभ्यः समारता उपरताः सं-
तो मूर्द्धपातभयात्तूष्णीमासांचक्रिरेऽन्यच्चाकुर्वन्तः अर्थित्वात् ॥ १० ॥ अथानन्तरं ह एनमुषस्तिं यजमानो राजोवाच भ-
गवन्तं वै पूजावन्तमहं विविदिषाणि वेदितुमिच्छामीत्युक्त उषस्तिरस्मि चाक्रायणस्तवापि श्रोत्रपथ्यमागतो यदीति होवाचोक्त-

ते ह समारतास्तूष्णीमासांचक्रिरे ॥ १० ॥ अथ हैनं यजमान उवाच भगवन्तं वा अहं विविदिषाणीत्युषस्तिरस्मि
चाक्रायण इति होवाच स होवाच भगवन्तं वा अहमेभिः सर्वैरार्त्विज्यैः पर्यैषिषं भगवतो वा अहमवित्त्यान्यानवृ-
षि भगवांस्त्वेव मे सर्वैरार्त्विज्यैरिति तथेत्यथ तर्ह्येत

वान् स ह यजमान उवाच सत्यमेवमहं भगवन्तं बहुगुणम
श्रौषं सर्वैश्चर्त्विक्कर्मभिरार्त्विज्यैः पर्यैषिषं पर्येषणं कृतवानस्मि अन्विष्य भगवतो वा अहमवित्त्या लाभेनान्यानिमा-
न्वृषि वृतवानस्म्यद्यापि भगवांस्त्वेव मे मम सर्वैरार्त्विज्यैरार्त्विक्कर्मार्थमस्त्वित्युक्तस्तथेत्याहोषस्तिः किन्त्वथैवं तर्ह्येत-

अथेति ॥ प्रस्तोतृप्रभृतीनां तूष्णींभावादिविशेषः ॥ चाक्रायणस्य वचनमंगीकरोति ॥ सत्यमिति ॥ अंगीकारमेव स्फोरयति ॥ एवमिति ॥
आर्त्विज्यैरित्यस्य व्याख्यानमृत्विक्कर्मभिरिति तदर्थमिति यावत् ॥ यदिमामार्त्विज्यार्थमनुसंहितवानसि किमितीमानन्यान्वृतवानि-
त्याशंक्याह ॥ अन्विष्येति ॥ एवं गते किमधुना कर्तव्यमित्याशंक्याह ॥ अद्यापीति ॥ चाक्रायणानुमतिं श्रुत्वा किमिदमिति व्याकुलितेषु
प्रस्तोतृप्रभृतिषु ब्रूते ॥ किन्त्विति ॥ उभयानुमत्यपेक्षयानंतर्यमप्रमालाभेनामीषां वृतत्वस्य निर्वृत्यवस्थायामित्याह ॥ न हीति ॥ अत्र

छां·भा·
२८

स्तुवतामिति ॥ अस्त्वेवं त्वदर्थं पुनर्मया किं विधेयमित्याशंक्याह ॥ त्वया त्विति ॥ यजमानं प्रत्युषस्तिप्रोक्तं वचः श्रुत्वानन्तरमेव प्रस्तु
स्तिं प्रस्तोता त्यक्तव्याकुलं शिष्यत्वेनोपसन्नवानित्याह ॥ अथेति ॥ उपगतिप्रकारमभिनयति ॥ प्रस्तोतरिति ॥ प्रतिवचनमाह

समतिसृष्टाः मया सम्यक्प्रसन्नेनानुज्ञाताः सन्तः स्तुवतां त्वया त्वेतत्कार्यं यावत्तेभ्यः प्रस्तोत्रादिभ्यः सर्वेभ्यो धनं दद्याः
प्रयच्छसि तावन्मम दद्या इत्युक्तस्तथेति ह यजमान उवाच ॥ अथ हैनमौषस्त्यं वचः श्रुत्वा प्रस्तोतोपससादोषस्तिं विन
येनोपजगाम प्रस्तोतर्या देवतेत्यादि मा मां भगवानवोचत्पूर्वं कतमा सा देवता या प्रस्तावभक्तिमन्वायत्तेति पृष्टः प्राण इति
होवाच युक्तं प्रस्तावस्य प्राणो देवतेति कथं सर्वाणि स्थावरजंगमानि भूतानि प्राणमेवाभिसंविशन्ति प्रलयकाले प्राणमभि

एवं समतिसृष्टाः स्तुवतां यावत्त्वेभ्यो धनं दद्यास्तावन्मम दद्या इति तथेति ह यजमान उवाच ॥ अथ हैनं प्रस्तोतोपस
साद प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां चेदविद्वान्प्रस्तोष्यसि मूर्द्धा ते विपतिष्यतीति मा भगवानवोचत्कतमा सा
देवतेति प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्ता
वमन्वायत्ता तां चेदविद्वान्प्रास्तोष्यो मूर्द्धा ते व्यपतिष्यत्तथोक्तस्य मयेत्यथ हैनमुद्गातोपससादोद्गातर्या देवतोद्गी
थमन्वायत्ता तां चेदविद्वानुद्गास्यसि मूर्द्धा ते विपतिष्यतीति मा भगवानवोचत्कतमा सा देवतेत्यादित्य इति होवाच

लक्ष्य प्राणात्मनैवोज्जिहते प्राणाद्देवाद्गच्छन्तीत्यर्थः उत्पत्तिकालेऽतः सैषा देवता प्रस्तावमन्वायत्ता तां चेदविद्वां
स्त्वं प्रास्तोष्यः प्रस्तवनं प्रस्तावभक्तिं कृतवानसि यदि मूर्द्धा शिरस्ते व्यपतिष्यद्विपतितमभविष्यत्तथोक्तस्य मया तत्काले मू
र्द्धा ते विपतिष्यतीत्यतः त्वया साधु कृतं मया निषिद्धः कर्मणो यदुपरममकार्षीरित्यभिप्रायः तथोद्गातापप्रच्छ कतमा सा

यप्रशब्दसामान्यं गृहीत्वा तात्पर्यमाह ॥ सर्व इति ॥ कथमिह प्राणशब्दार्थो निश्चीयतामित्याशंक्यात एव प्राण इतिन्यायेनाह कथमिति प्रा
णात्मनैव संविशन्तीति पूर्वेण संबंधः प्राणशब्दार्थस्य परमात्मत्वेन निर्णीतत्वमतः शब्दार्थः चेच्छब्दार्थो यदीत्युक्तः मया तथोक्तस्य मूर्द्धेति

अ·१

राम
२८

वस्थायां मूर्द्धा व्यपतिष्यद्देवेति योजना प्रमादस्य महतस्त्वया परिहृतत्वादित्यतःशब्दार्थः॥ यथा प्रशब्दसामान्यात्प्राणः प्रस्तावदेव
तेत्युक्तं तथादित्योद्गीथयोरुच्छब्दसामान्यादुद्गीथदेवतादित्य इत्याह॥ उच्छब्देति॥ उक्तसामान्यपरामर्शार्थोऽतःशब्दः॥ एवमेव प्रस्तोत
वदुद्गातृवच्चेत्यर्थः॥ ऋत्विग्भ्यो प्रस्तावोद्गीथदेवतयोर्विज्ञानानन्तर्यमथशब्दार्थः कथमन्नस्य प्रतिहारत्वं तदाह सर्वाणीति तां चेदविद्वा

देवतेति स्पष्ट आदित्य इति होवाच सर्वाणि ह वा इमानि भूतान्यादित्यमुच्चै रूर्ध्वं सन्तं गायन्ति शब्दयन्ति स्तुवन्तीत्यभिप्रायः
॥ उच्छब्दसामान्यात्प्रशब्दसामान्यादिव प्राणोऽतः सैषा देवतेत्यादि पूर्ववदेवमेवाथ हैनं प्रतिहर्तोपससाद कतमा सा देवता प्र
तिहारमन्वायत्ताइति पृष्टोऽन्नमिति होवाच सर्वाणि ह वा इमानि भूतान्यन्नमेवात्मानं प्रति सर्वतः प्रतिहरमाणानि जीवन्ति

सर्वाणि ह वा इमानि भूतान्यादित्यमुच्चैः सन्तं गायन्ति॥ सैषा देवतोद्गीथमन्वायत्ता तां चेदविद्वानुदगास्यो मूर्द्धा ते व्य
पतिष्यत्तथोक्तस्य मयेत्यथ हैनं प्रतिहर्तोपससाद प्रतिहर्तर्या देवता प्रतिहारमन्वायत्ता तां चेदविद्वान्प्रतिहरिष्यसि
मूर्द्धा ते विपतिष्यतीति मा भगवानवोचत्कतमा सा देवतेत्यन्नमिति होवाच सर्वाणि ह वा इमानि भूतान्यन्नमेव प्र
तिहरमाणानि जीवन्ति सैषा देवता प्रतिहारमन्वायत्ता तां चेदविद्वान्प्रत्यहरिष्यो मूर्द्धा ते व्यपतिष्यत्तथोक्तस्य मये
ति तथोक्तस्य मयेति ॥११॥ अथातः शौव उद्गीथः॥ १ सैषा देवता प्रतिशब्दसामान्यात्प्रतिहारभक्तिमनुगता समान
मन्यत्तथोक्तस्य मयेति प्रस्तावोद्गीथप्रतिहारभक्तिः प्राणादित्यान्नदृष्ट्योपासीतेति समुदायार्थः॥ प्राणाद्याप्तिः कर्म
समृद्धिर्वा फलमिति॥ ११॥ अतीते खण्डे अन्नानाप्तिनिमित्ता कष्टावस्था प्राप्ता उच्छिष्टोच्छिष्टपर्युषितभक्षणलक्षणा सा मा
भूदित्यन्नलाभाय अथानन्तरं शौवः श्वभिर्दृष्ट उद्गीथ उद्गानं सामातः प्रस्तूयते॥ १ नित्याद्यन्यदित्युच्यतेनेन तथोक्तस्य मयेत्येतदन्तमि

ति शेषः कीदृगुपासनमस्मिन्प्रकरणे विवक्षितमित्याशंक्याह॥ प्रस्तावेति॥ उपास्तित्रयस्य फलं दर्शयति॥ प्राणादीति॥ ११॥ पूर्वोत्तरखं
डयोः सङ्गतिं दर्शयन्नुपासनान्तरं प्रस्तौति॥ अतीत इति॥ अन्नलाभस्यापेक्षितत्वमतःशब्दार्थः॥ ॥ ॥ ॥ ॥

प्रकारांतरेणोद्गीथोपासनमन्नकामस्य प्रस्तुत्य प्रतिपत्तिसौकर्यार्थमाख्यायिकामाहेति ॥ तत्रेति ॥ न केवलं दल्भस्यापत्यं किंतु मित्रा-
याश्चेति चार्थः ॥ ननु सा दल्भस्य पत्नी नियुक्तेत्यास्तामिति मैत्रेयपदस्यैव षष्ठ्यांत्यत्वमनुरापत्यत्वस्यादन्यथेमिति चेन्न प्रयोजनाभावात् ॥ न-
न्वत्र वाशब्दाद्द्वावृषी विवक्षितावितिचेन्नेत्याह ॥ वाशब्द इति ॥ कथं पुनर्दाल्भ्यस्यापत्यस्यैव कस्तद्भार्यायामित्रायाश्चापत्यं भवितुमर्हत्यहनेत-
त्राह ॥ द्व्यामुष्यायणो हीति ॥ चैकितायनो दाल्भ्य इत्यत्रोक्तमेतदिति सूचयितुं हिशब्दः । उदितानुदितहोमवत्केषांचिद्व्यवकासावन्येषां
ग्लाव इत्येकस्मिन्नपि विकल्पो भविष्यति नेत्याह वस्तुविषय इति ॥ कथं पुनर्विना मानमेकस्यैव द्विनामत्वाद्यंगीक्रियते तत्राह ॥ द्विनामेति

तत्र ह किल बको नामतः दल्भस्यापत्यं दाल्भ्यो ग्लावो वा नामतः मित्रायाश्चापत्यं मैत्रेयो वाशब्दश्चार्थे द्व्यामुष्यायणो ह्य-
सौ वस्तुविषये क्रियास्विव विकल्पानुपपत्तेर्द्विनामा द्विगोत्र इत्यादि हि स्मृतिर्दृश्यते चोभयतः पिंडभाक उद्गीथे बद्धचित्तत्वा-

न्न ह बको दाल्भ्यो ग्लावो वा मैत्रेयः ॥ स्वाध्यायमुद्वव्राज तस्मै श्वा श्वेतः प्रादुर्बभूव तमन्ये श्वान उपसमेत्योचुरन्नं
नो भगवानागायत्वशनायाम वा इति

इषावनादराद्वा वाशब्दः ॥ स्वाध्यायार्थं स्वाध्यायं कर्तुं ग्रामाद्बहिः उद्वव्राज उ-
द्गतवान्विविक्तदेशस्थोदकाभ्याशं उद्वव्राज प्रतिपालयांचकारेति चैकवचनाल्लिंगादेकोसावृषिः श्वोद्गीथकालप्रति-
पालनादृषेः स्वाध्यायकरणमन्नकामनयेति लक्ष्यत

इत्यादिवाक्यं स्मृतिरूपं धर्मशास्त्रे प्रसिद्धमित्यर्थः ॥ द्विगोत्रत्वमेकस्य
लोकेऽपि प्रसिद्धमित्याह ॥ दृश्यते चेति ॥ यतः सुतो जायते येन चायं धर्मतो गृह्यते तयोरुभयोरित्याह ॥ उभयत इति ॥ उभयोरप्यसौ पि-
त्रोः पिंडदाता च धर्मत इति स्मरंतीत्यर्थः ॥ दाल्भ्यादन्यो मैत्रेय इत्यंगीकृत्याह ॥ उद्गीथ इति ॥ न तूपासीतात्यंत ऋषावनादरे हेतुस्त-
स्मादृषित्वयमृषिद्वयं वा विवक्षितमित्यर्थः ॥ पक्षांतरद्योतनार्थो वाशब्दः श्रौतो वाशब्दस्तर्हि किमर्थ इत्याशंक्य पाठादन्यत्र तस्य फ-
लमित्याह ॥ वाशब्द इति ॥ मैत्रेयेणेति वाक्यव्याख्यायस्वाध्यायमित्यादिव्याचष्टे ॥ स्वाध्यायार्थमिति ॥ यदुक्तमृषिरेको बकादिशब्दैरु-
च्यत इति तत्र लिंगमाह ॥ उद्वव्राजेति ॥ शुनामुद्गीथः श्वोद्गीथस्तत्कालस्य प्रतिपालनं प्रतीक्षणं ऋषेर्दृश्यते तेषां चोद्गानमन्नार्थेन

वाविशब्दाभावेपि सामर्थ्यादयमर्थो भातीत्याह॥अभिप्रायतइति॥तस्मादित्यादि व्याचष्टे॥स्वाध्यायेनेति॥क्षुल्लकाः क्षुद्रकाः शिशव इति यावत्॥श्वानः श्वा कश्चिदृषिर्देवता वा अन्ये च श्वानो देवता ऋषयो वेत्युक्तं संप्रति विवक्षितं पक्षमाह॥मुख्येति॥तमूचुरिति संबंधः॥तानेव विशिनष्टि॥प्राणमन्विति॥मुख्यप्राणसहितवागादिग्रहे हेतुमाह॥स्वाध्यायेति॥अन्यथा वाक्यमनिर्धारितं स्यादिति भावः॥किमित्यन्नं भवद्भ्यो मया संपाद्यते न हि भवतामभोक्तृणां तेन कृत्यमस्तीत्याशंक्याह त्वन्निष्ठेन तद्द्वारेणास्माकमपि भोगसिद्धेर्भव

इत्यभिप्रायतः॥स्वाध्यायेन तोषिता देवता ऋषिर्वा श्वरूपं गृहीत्वा श्वा श्वेतः सन् तस्मैस ऋषये तदनुग्रहार्थं प्रादुर्बभूव प्रादुश्चकार॥तम न्येक्षुल्लश्वानः क्षुल्लकाः श्वानः उपसमेत्योचुरुक्तवन्तोऽन्नं नोऽस्मभ्यं भगवानागायत्वागानेन निष्पादयत्वित्यर्थः मुख्यप्राणं वागादयो वा प्राणमन्वन्नभुजः स्वाध्यायपरितोषिताः संतोऽनुगृह्णीयुरेनं श्वरूपमादायेति युक्तमेवं प्रतिपत्तुमशनायाम वै बुभुक्षिताः स्मो वै इत्येवमुक्तवतः श्वा श्वेतस्तान् क्षुल्लकान् श्वनः इहैवास्मिन्नेव देशे मा मां प्रातः प्रातःकाल उपसमीयातेति दैर्घ्यं

तान्होवाचेहैव मा प्रातरुपसमीयातेति॥तद्ध बको दाल्भ्यो ग्लावो वा मैत्रेयः प्रतिपालयांचकार ते ह यथैवेदं

छांदसं समीयातेति प्रमादपाठो वा॥प्रातःकालकरणं तत्काल एव कर्तव्यार्थं अन्नदस्य वा सवितुरपराह्णे नाभिमुख्यात्तत्रैव बको दाल्भ्यो ग्लावो वा मैत्रेय ऋषिः प्रतिपालयांचकार प्रतीक्षणं कृतवानित्यर्थः॥ते श्वानस्तत्रैवागत्य ऋषेः समक्षं यथैवेह कर्मणि बहिष्पवमानेन स्तोत्रेण स्तोष्यमाणा उद्गातृपुरुषाः संरब्धाः संलग्नाः अन्योन्यमेव सर्पन्ति॥एवं मुखेनान्योन्यस्य पुच्छं गृहीत्वा आससृपुरासृप्तवन्तः परिभ्रमणं कृतवन्त इत्यर्थः॥त एवं संसृप्य समुपविश्यो

मित्याह॥अशनायाम वा इत्यादिना॥किमिति प्रातःकालप्रतीक्षणं कृतं तत्राह॥प्रातरिति॥उद्गानस्येति शेषः प्रातःकालप्रतीक्षणकरणे कारणांतरमाह॥अन्नदस्येति॥तस्य रश्मिद्वारान्नदत्वं द्रष्टव्यं तद्धेत्यादि व्याचष्टे॥तत्रेति॥ऋषेरन्नकामत्वमितोऽवगतं ते हेत्यादि व्याकरोति॥ते श्वान इति॥समक्षमाससृपुरिति संबंधः॥उद्गातृपुरुषा इत्यध्वर्युप्रमुखा यजमानपर्यंता गृह्यन्ते॥अ

ओमित्यादिना॥ त्रिवारमोंकारो गानार्थमुच्चरितः अदामाद्यानं करवाम पिबाम पानं करवामेत्येतत्॥ इतिशब्दो हिंकारसमाप्त्यर्थः॥ अन्नमसवितृत्वमादित्यस्य साधयति॥ नहीति॥ इहेति प्रकृतदेशोक्तिः॥ ओंकारः सवितृप्रार्थनामन्त्रसमाप्त्यर्थः॥ भक्तिविषयोपास्तिसमाप्त्यर्थमितिपदं॥१२॥ ननु भक्तिसंबंधानामुपासनानां जातत्वात्समस्तस्येत्यादि वक्तव्ये किमनन्तरखंडेनेत्याशंक्याह॥ भक्तीति॥ इत्यतोऽस्मात्प्रसंगादितियावत्॥ ऋगक्षराणि गीयन्ते तद्व्यतिरिक्तानि वाच्यशून्यानि गीतिसिद्ध्यर्थानि स्तोभाक्षराणि परिभाष्यन्ते तानि च

हिंकारं कृतवन्तः॥ ओमदामोंपिबामों देवो द्योतनाद्वरुणो वर्षणाज्जगतः प्रजापतिः पालनात्प्रजानां सविता प्रसवितृत्वात्सर्वस्यादित्य उच्यते एतैः पर्यायैः स एवंभूत आदित्योऽन्नमस्मभ्यमिहाहरत् आहरत्विति नित एवं हिंकृत्वा पुनरप्यूचुः स त्वं हेऽन्नपते स हि सर्वस्यान्नस्य प्रसवितृत्वात्पतिर्नहि तत्पाकेन विना प्रसूतमन्नमणुमात्रमपि जायते प्राणिनामतोऽन्नपतिः हेऽन्नपते अ

वहिष्पवमानेन स्तोष्यमाणाः संरब्धाः सर्पन्तीत्येवमास स्रप्तुस्तेह समुपविश्य हिं१चक्रु२रों१मदा२मों१पिबा२मों१देवोवरुणः प्रजापतिः सविता२न्नमिहा२हरद२न्नपते२न्नमिहाहरा२हरो३मिति॥१२॥ अयंवावलोको हाउका

न्नमस्य मिहाहराहरेत्यभ्यास आदरार्थः॥ ओमिति॥१२॥ भक्तिविषयोपासनं सामावयवसंबद्धमित्यतः सामावयवान्तरस्तोभाक्षरविषयाण्युपासनान्तराणि संहतान्युपदिश्यन्ते नन्वनन्तरं सामावयवसंबद्धत्वाविशेषादयंवावलोको हाउकारस्तोभो रथन्तरे साम्नि प्रसिद्धः इयं वै रथन्तरमित्यस्मात्संबन्धसामान्याद्धाउकारः स्तोभोऽयं लोक इत्येवमुपासीत वा

कर्मापूर्वनिर्वृत्तिद्वारेण फलवत्त्वादुपास्यानि तदुपास्तिविधिपरमुत्तरं वाक्यमित्यर्थः॥ वस्य  युर्हाइकारो वामदेव्यसामनिहाइ

माणोपासनानां प्रत्येकं स्वातंत्र्यं नास्तीत्याह॥ संहतानीति॥ तेषामनंतरमुपदेशे हेतुमाह॥ सामावयवेति॥ न चैवंविधस्तोभो नास्तीति वाच्यमित्याह॥ रथंतर इति॥ तस्यापि कथं पृथिवीदृष्ट्या यथोक्तस्तोभस्योपास्यत्वं तदाह॥ इयमिति॥ इयं वै रथंतरमित्यत्र पृथिव्या रथंतरत्वं श्रुतं प्रस्तुतश्च स्तोभो रथंतरे स्तोत्रं तु गं॥ तथा च यथोक्तात्संबंधरूपात्सादृश्यात्पृथिवीदृष्ट्या हाउकार उपास्य इत्यर्थः

वाय्वप्संबंधश्चेति ॥ हाइकारो वामदेव्ये साम्नि च प्रसिद्धस्तस्य च वायोरपां च संबंधो योनिमैथुनेच्छावती नामपां वायुः प्रवृत्यवर्तनत
तो वामदेव्यं सामाभवदिति श्रुतेस्तस्मादुभयोः कादाचामदेव्यसामसंबंधसामान्याद्वायुदृष्ट्या हाइकारमुपासीतेत्यर्थः ॥ कथमथका
रस्य चंद्रदृष्ट्योपासनं तत्राह ॥ अन्नेहीति ॥ तथा च थकारसामान्यादथयोक्तोपास्तिसिद्धिरिति शेषः थकारवदकारसामान्याच्चंद्रदृष्ट्या
थकारमुपासीतेत्याह ॥ थकारेति ॥ अथकारे तावदकारोऽकारः अन्नात्मनि चंद्रमस्यपि सोऽस्तीति तद्युक्तं यथोक्तमुपासनमित्यर्थः ॥ प्रथम
मप्रत्यक्षः पश्चात्प्रत्यक्षी भवन्निति शेषः ॥ तत्सामान्यमिहेति व्यपदिश्यमानत्वं तस्मादात्मदृष्टिरिहेतिस्तोभे कर्तव्येत्याह ॥ तत्सामान्या

वाय्वप्संबंधश्च वामदेव्यस्य साम्नो योनिरित्यस्मात्सामान्याद्धाइकारं वायुदृष्ट्योपासीत ॥ चंद्रमा अथकारश्चंद्रदृ
ष्ट्याथकारमुपासीत ॥ अन्ने हीदं स्थितमन्नात्मा चंद्रस्थकारोऽकारसामान्याच्च आत्मा इहकार इहेति स्तोभः प्रत्यक्षो ह्यात्मा
इहेति व्यपदिश्यते इहेति च स्तोभस्तत्सामान्यादग्निरीकार ई निधनानि चाग्नेयानि सर्वाणि सामानीत्यतस्तत्सामान्यादा

वायुर्हाइकारश्चंद्रमा अथकारः आत्मेहकारोऽग्निरीकार आदित्य ऊकारो निहव एकारो विश्वेदेवा औहोइका

दित्य ऊकारः उच्चैरूर्ध्वं संतमादित्यं गायंत्यूकारश्चायं स्तोभः आदित्यदैवत्ये साम्नि स्तोभ ऊ((रः प्रजापतिर्हिङ्कारः ॥
हूत्यादित्य ऊकारो निहव इत्याह्वानमेकारस्तोभः एहीति चाह्वयतीति तत्सामान्याद्विश्वेदेवा औहोइकारो वैश्वदेव्ये साम्नि

((स्तोभस्य दर्शनात्प्रजापतिर्हिंकारः आनिरु

दिति ॥ अग्निदृष्टिरीकाराख्ये स्तोभास्येकर्तव्येत्यत्र हेतुमाह ॥ ई निधनानीति ॥ ईकारो
निधीयते तेषु सामसु तान्याग्नेयानि प्रसिद्धानि ॥ तथा चेतरयोरग्निरीकारश्चेत्युभयोर्भावादस्मात्सादृश्यादीकारमग्निदृष्ट्योपासीतेत्यर्थः
॥ ऊकारमादित्यदृष्ट्या कथमुपासीतेत्याशंक्याह ॥ उच्चैरिति ॥ ऊकारादित्ययोर्विधांतरेण सादृश्यमाह ॥ आदित्येति ॥ एकारसामान्या
न्निहवदृष्टिरेकारे स्तोभे कार्येत्याह ॥ निहव इत्यादिना ॥ औहोइकारस्य विश्वेदेवदृष्ट्योपास्तौ हेतुमाह ॥ वैश्वदेव्य इति ॥ प्रजापतिदृ
ष्ट्या हिंकारोपास्यत्वे हेतुः ॥ अनिरुक्तत्वादिति ॥ नीलपीतादिरूपेण निरुक्तविषयत्वात्प्रजापतेरित्यर्थः ॥ अप्रत्यक्षत्वाद्रूपादिरहितत्वादित्य

॥प्राणस्य चेति चकारात्स्वरस्य चेत्यर्थः॥ स्वरहेतुत्वं तन्निर्वर्तकत्वेन तदात्मकत्वं॥ वाक्यं व्याचष्टे॥ याइ तीति॥ अन्नदृष्टिर्या इति स्तोभे कार्येत्यत्र हेतुमाह॥ अन्नेनेति॥ विराड्दृष्टिर्वागिति स्तोभे कार्येत्यत्र हेतुमाह॥ वैराजइति॥ अनिरुक्तः कारणात्मा॥ तस्या निरुक्तत्वं साधयति॥ अव्यक्तत्वादिति॥ स चानेकधा कार्यरूपेण संचरतीति संचरः हुंकारो विश्वाख्याभेदेन विकल्प्यमानस्वरूपस्त्रयोदशश्चायं वावेत्यारभ्य गण्यमानत्वात्तस्य कारणदृष्ट्या हुंकारमुपासीतेत्यर्थः॥ उक्तमेवोपपादयति॥ अव्यक्तो हीति॥ तत्र वि

॥ प्राणः स्वरः स्वर इति स्तोभः प्राणस्य च स्वरहेतुत्वसामान्यात् अन्नं या या इति स्तोभोऽन्नं अन्नेन हीदं यातीत्यतस्तत्सामान्याद्वागिति स्तोभो विराडन्नं देवताविशेषो वा वैराजे साम्नि स्तोभदर्शनादनिरुक्तोऽव्यक्तत्वादिदं चेदं चेति निर्वक्तुं न शक्यत इत्यतः संचरो विकल्प्यमानस्वरूप इत्यर्थः॥ कोऽसावित्याह हुंकारः अव्यक्तो ह्ययमतोऽनिरुक्तविशेष एवोपास्य इत्यभि

प्राणः स्वरोऽन्नं या वाग्विराडनिरुक्तस्त्रयोदशः स्तोभः संचरो हुंकारो दुग्धेऽस्मै वाग्दोहं यो वाचो दोहोऽन्नवानन्नादो भवति य एतामेवꣳ साम्नामुपनिषदं वेदोपनिषदं वेद॥१३॥ इति छांदोग्योपनिषद्ब्राह्मणे प्रथमः प्रपाठकः॥

प्रायः स्तोभाक्षरोपासनाफलमाह दुग्धेऽस्मै वाग्दोहमित्याद्युक्तार्थं य एतामेवं यथोक्तलक्षणां साम्नां सामावयवस्तोभाक्षरविषयामुपनिषदं दर्शनं वेद तस्यैतद्यथोक्तं फलमित्यर्थः॥ द्विरभ्यासोऽध्यायसमाप्त्यर्थः सामावयवविषयोपासनाविशेषपरिसमाप्त्यर्थो वेति॥ इति श्रीमत्परिव्राजकाचार्यश्रीमच्छंकरभगवत्पादकृतौ छांदोग्योपनिषद्विवरणे प्रथमः प्रपाठकः समाप्तः॥ १॥

कल्प्यमानत्वं हेतुः॥ नैतानि व्यस्तान्युपासनानि प्रत्येकं फलाश्रवणात्समस्तं पुनरेकमिदमुपासनमेकफलत्वादित्यभिप्रेत्याह॥ स्तोभाक्षरेति॥ उपनिषदं वेदोपनिषदं वेदेत्यावृत्ते तात्पर्यमाह॥ द्विरभ्यास इति॥ प्रथमप्रपाठकव्याख्यानसमाप्ताविति शब्दः॥१३॥ इति श्रीमत्परमहंसपरिव्राजकश्रीशुद्धानंदपूज्यपादशिष्यभगवत्

॥दानंदज्ञानकृतायां छांदोग्यभाष्यटीकायां प्रथमः प्रपाठकः॥१॥

इतिसटीकछान्दोग्योपनिषद्भाष्यस्यप्रथमोऽध्यायः समाप्तः ॥ १ ॥

॥अथसटीकछांदोग्योपनिषद्भाष्यस्यद्वितीयोध्यायःप्रारभ्यते॥

छां॰ भा॰ १ — अ॰ २

॥श्रीगणेशाय नमः॥ पूर्वोत्तरग्रन्थयोः संगतिं दर्शयति॥ ओमित्येतदित्यादिना॥ सर्वथापि सामावयवविषयत्वे स्तोभाक्षरविषयत्वे चेत्यर्थः॥ इतिशब्दो हेत्वर्थः॥ यस्मादेकदेशविषयाण्युपासनान्युक्तानि तस्मात्तानि समस्तविषयाणि वक्तव्यानीत्यर्थः॥ एकदेशोपास्तिव्याख्यानंतर्यमथशब्दार्थः॥ कथमुक्तवक्ष्यमाणोपासनयोरिदं पौर्वापर्यं तत्राह॥ युक्तं हीति॥ समस्तसामोपासनं साध्विति वचनादवयवोपासनस्य निंदितत्वादननुष्ठेयमित्याशंक्याह॥ समस्तइति॥ अर्थादस्ति निन्देति शंकते॥ नन्विति॥ पूर्वत्रापि साधुत्वस्य विद्यमानस्यैव वि

॥श्रीगणेशाय नमः॥ ॐमित्येतदक्षरमित्यादिना सामावयवविषयमुपासनमनेकफलमुपदिष्टमनंतरं च स्तोभाक्षरविषयमुपासनमुक्तं सर्वथापि साम्नैकदेशसंबद्धमेवेति॥ अथेदानीं समस्ते साम्नि समस्तसामविषयाण्युपासनानि वक्ष्यामीत्यारभते श्रुतिः। युक्तं हि एकदेशोपासनानंतरमनेकदेशविषयमुपासनमुच्यत इति॥ समस्तस्य सर्वावयवविशिष्टस्य पांचभक्तिकस्य साप्तभक्तिकस्य चेत्यर्थः। खल्विति वाक्यालंकारार्थः। साम्न उपासनं साधु समस्ते साम्नि साधुदृष्टिविधिप

॥श्रीगणेशाय नमः॥ ॐ॥ समस्तस्य खलु साम्न उपासनꣳ साधु यत्खलु साधु तत्सामेत्याचक्षते॥ यदसाधु तदसामेति तदुताप्याहुः साम्नैनमुपागादिति साधुनैनमुपागादित्येव तदाहुरसाम्नैनमुपागादित्यसाधुनैनमुपागा

रत्वान्न पूर्वोपासननिंदार्थत्वं साधुशब्दस्य॥ ननु पूर्वत्राविद्यमानं साधुत्वं समस्ते साम्न्यभिधीयते न साधु सामेत्युपास्त इत्युपसंहारात् साधुशब्दः शोभनवाची कथमवगम्यत इत्याह॥ यत्खलु लोके साधु शोभनमनवद्यं प्रसिद्धं तत्सामेत्याचक्षते कुशलाः॥ यदसाधु विपरीतं तदसामेति॥ तत्रैव साध्वसाधुविवेककरण उताप्याहुः साम्नाएनं राजानं सामंतमुपागादित्युक्तवान्कोसौ यतोऽसाधुत्वप्राप्त्याशंकासदित्यभिप्रायः॥

((शेषणत्वेनानुपादानात्तयोरपि निन्देति परिहरति न साध्विति॥ यत्खल्वित्यादिव्याख्यातुं पातनिकामाह॥ साधुशब्द इति॥ वाक्यमक्षरार्थं व्याचष्टे॥ कथमित्यादिना॥ किंपुनरेवं विवेककरणे कारणमित्याशंक्याह॥ तत्रेति॥ विवेककरणोपायभेदविकल्पार्थं मुतेत्युभयत्र पदं॥ साम्नैनमित्यादिना साधुनेत्यादिवाक्यस्य पौनरुक्त्यमा

खं॰ १

॥शोभनेति॥शोभनकार्यदर्शनेसतीतियावत्तत्रैवहेतुंतस्माहः॥बंधनादीति॥असाम्नेत्यादिव्याचष्टे॥यत्रेति॥कार्यगम्यंसाधुत्वमसाधुत्वंचो
क्त्वास्वानुभवगम्यंतदुपन्यस्यति॥अथेति॥कार्याक्तस्यसाधुत्वादिविवेकानंतर्यमथशब्दार्थः॥स्वसंवेद्यंसाधुत्वम साधुत्वंचेतिशेषःतत्रसा
धुत्वंस्वानुभवसिद्धंइत्येतद्युत्पादयति॥सामेति॥यत्साध्वित्यादिवाक्यस्यपूर्वेणपौनरुक्त्यमाशंक्याह॥एतदिति॥असामेत्यादिव्याचष्टे
विपर्ययइति॥वतेत्याहुरितिसंबंधःकिंनैरुक्त्यंभवतिनत्याह॥यद्साध्विति॥साधुशब्दःशोभनवाचीत्युक्तमुपसंहरति॥तस्मादिति॥न

शोभनाभिप्रायेणसाधुनेनेउपागादित्येवतत्त्वाहुर्लौकिकाबंधनाद्यसाधुकार्यमपश्यंतोयत्रपुनर्विपर्ययेणबंधनाद्यसा
धुकार्यंपश्यंतितत्रासाम्नैनमुपागादित्यसाधुनेनमुपागादित्येवतदाहुरथोताप्याहुःस्वसंवेद्यंसामनोस्माकंवतेत्यनुकंपय
तःसंवृत्तमित्याहुरेतेनैरुक्त्यंभवतियत्साधुभवतिसाधुवतेत्येवतदाहुविपर्ययजातःसामनोवतेति॥यद्साधुभवत्यसाधु
वतेत्येवतदाहुःतस्मात्सामसाधुशब्दयोरेकार्थत्वंसिद्धमतःसयःकश्चित्साधुसामेतिसाधुगुणवत्सामेत्युपास्तेसमस्तंसाममसा

दित्येवतदाहुरथोताप्याहुःसामनोवतेतियत्साधुभवतिसाधुवतेत्येवतदाहुरसामनोवतेतियद्साधुभवत्यसा
धुवतेत्येवतदाहुःसयएतदेवंविद्वान्साधुसामेत्युपास्तेअभ्याशोहयदेनं७साधवोधर्माआचगच्छेयुरुपच

धुगुणवद्विद्वांस्तस्यैतत्फलंअभ्याशोहक्षिप्रंयदितिक्रियाविशेषणार्थमेनमुपासकंसाधवःशोभना ८८नमेयुः॥१॥
धर्माःश्रुतिस्मृत्यविरुद्धाआचगच्छेयुःआगच्छेयुश्चनकेवलमागच्छेयुरुपचनमेयुश्चभोग्यत्वेनापतिष्ठेयुरित्यर्थः॥
१॥कानितानिसाधुदृष्टिविशिष्टानिसमस्तानिसामान्युपास्यानीतिइमानितान्युच्यंतेलोकेषुपंचविधमित्यादीनि॥
ननुलोकादिदृष्ट्यातान्युपास्यानिसाधुदृष्ट्याचेतिविरुद्धं॥नसाध्वर्थस्य ८८योरेकार्थत्वमतःशब्दार्थः॥उपासकमेवविशि

नष्टि॥समस्तमिति॥आगच्छेयुरिति॥यततक्षिप्रमेवेतिक्रियाविशेषणत्वं यदित्यस्यद्रष्टव्यं॥१॥एकस्योभयदृष्टिविषयत्वमयुक्तंन
हिघटदृष्टिगोचरःसन्पटदृष्टेरपिगोचरःस्यादितिशंकते॥नन्विति॥एकस्मिन्नपिवस्तुनिदृष्टिद्वयमविरुद्धमितिसमाधत्ते॥नसाध्वर्थस्य

गतत्वात्तद्दृष्टौ साधुदृष्टेरनुगमान्न दृष्टिद्वयस्यैकत्र विरोधोऽस्तीत्यर्थः॥ तदेव स्फुटयति॥ साधुशब्देति॥ साध्वर्थस्य लोके ह्यनुगति रपि
शब्दार्थः॥ यत्र निर्देवदुक्तिः॥ साधुघटादि दृष्टिस्तत्रेति शेषः॥ ननु साधुशब्दार्थयोर्धर्मब्रह्मणोस्तुल्यं कारणत्वं तथा चात्र साधुशब्दार्थो
नव्यवस्थितः स्यादन्याय्यं चानेकार्थत्वमित्याशंक्याह॥ यद्यपीति॥ धर्म एवेत्यत्र तथापीति च वक्तव्यं॥ ब्रह्मणि तु परमानन्दे साधुशब्दो भ
क्त्यागमयितव्यः॥ न च धर्मस्य निमित्तकारणत्वान्न कार्यानुगतिरिति वाच्यं॥ कर्मापूर्वसहितदधिपयःप्रभृत्यवयवसमुदायस्य धर्मत्वात्

लोकादिकार्येषु कारणस्यानुगतत्वान्मृदादिवत् घटादिविकारेषु साधुशब्दवाच्योऽर्थो धर्मो ब्रह्म वा सर्वथापि लोकादि
कार्येष्वनुगतमतो यथा यत्र घटादिदृष्टिर्मृदादिदृष्ट्यनुगतैव सा तथा साधुदृष्ट्यनुगतैव लोकादिदृष्टिर्धर्मादिकार्यत्वा
ल्लोकादीनां यद्यपि कारणत्वमविशिष्टं ब्रह्मधर्मयोस्तथापि धर्म एव साधुशब्दवाच्य इति युक्तं साधुकारी साधुर्भवतीति
धर्मकार्यविषये साधुशब्दप्रयोगात्॥ ननु लोकादिकार्येषु कारणस्यानुगतत्वादर्थप्राप्तैवं तद्दृष्टिरिति साधु सामेत्युपा

॥ लोकेषु पंचविधꣳ सामोपासीत पृथिवी हिंकारो

सेति न वक्तव्यं न शास्त्रगम्यत्वात्तद्दृष्टेः सर्वत्र हि शास्त्रप्रापिता एव धर्मा उपास्या न विद्यमाना अप्यशास्त्रीयाः लो
केषु पृथिव्यादिषु पंचविधं पंचभक्तिभेदेन पंचप्रकारं साधु समस्तं सामोपासीत॥ कथं पृथिवी हिंकारः लोकेष्विति
या सप्तमी तां प्रथमात्वेन विपरिणमय्य पृथिवीदृष्ट्या हिंकारे पृथिवी हिंकार इत्युपासीत॥ ९ त्परिणामत्वाच्च कार्यस्य तत्र तद
नुगतिसिद्धेरिति द्रष्टव्यं॥ अपूर्वत्वाभावेन विधिमाक्षिपति॥ नन्विति॥ कारणानुगमस्यानुमानिकत्वेऽपि तद्दृष्टिकरणमपूर्वमेवेति परिहरति
॥ न शास्त्रगम्यत्वादिति॥ यस्यार्थोदर्थो न स चोदनार्थ इति न्यायेनोक्तं विवृणोति॥ सर्वत्रेति॥ लोकेष्वित्यादिवाक्ये पंचविधसामदृष्ट्या लो
कानामुपास्यत्वप्रतीतेस्तत्रापि हिंकारदृष्ट्या पृथिव्या ध्येयत्वे प्राप्ते प्रत्याह॥ लोकेष्वितीति॥ लोकाः पंचविधं सामेत्युपासीतेति विभक्तिपरि
णामेन प्रथमवाक्यार्थपर्यवसानात्तदनुसारेणात्रापि पृथिवीदृष्ट्या हिंकारो ध्येय इति पृथिवी हिंकार इति पृथिवीदृष्टिमारोप्य हिंकारमुपासी

लोकसंबद्धा सप्तमी हिंकारादिषु तत्तं बद्धा च द्वितीया लोकेषु नेतव्या ॥ तथा च लोकविषयां सप्तमीं श्रुतिं हिंकारादिषु तत्संबद्धां च द्वितीयां लोकेषु व्यत्यस्य पृथिव्यादिदृष्टिं हिंकारादिषु कृत्वोपासीतेति पक्षांतरमाह ॥ व्यत्यस्येति ॥ ब्रह्मदृष्टिरुत्कर्षादिति न्यायेनानुपपन्नद्वयमुक्त्वा प्रतिवाक्यं व्याचष्टे ॥ तत्रेति ॥ उक्तरीत्योपासने प्रस्तुते सतीति यावत् ॥ अध्यासस्य सादृश्यनिबंधनत्वाद्व्यक्तसादृश्याभावेपि यथा कथंचित्कल्पनीयमिति मत्वाह ॥ प्राथम्येति ॥ लोकेषु पृथिव्याः सामसु च हिंकारस्य प्राथम्यमस्ति तस्मात्सामान्यादिति यावत् ॥ अग्निदृष्ट्या प्रस्ता

व्यत्यस्य वा सप्तमीश्रुतिं लोकविषयां हिंकारादिषु पृथिव्यादिदृष्टिं कृत्वोपासीत ॥ तत्र पृथिवी हिंकारः प्राथम्यसामान्यात् ॥ अग्निः प्रस्तावोऽग्नौ हि कर्माणि प्रस्तूयंते प्रस्तावश्च भक्तिः ॥ अंतरिक्षमुद्गीथोंऽतरिक्षं हि गगनं गकारविशिष्टश्चोद्गीथः आदित्यः प्रतिहारः प्रतिप्राण्यभिमुखत्वान्मां प्रति मां प्रतीति द्यौर्निधनं दिवि निधीयंते हीतो गताः इत्यूर्ध्वेषूर्ध्वगते

ऽग्निः प्रस्तावोंऽतरिक्षमुद्गीथ आदित्यः प्रतिहारो द्यौर्निधनमित्यूर्ध्वेषु ॥ अथावृत्तेषु ॥ द्यौर्हिंकार आदित्यः प्रस्तावोंतरिक्षमुद्गीथोऽग्निः प्रतिहारः पृथिवी निधनं कल्पंते हास्मै लोका ऊर्ध्वाश्चावृत्ताश्च य एतदेवं विद्वांल्लोकेषु पंच

षु लोकदृष्ट्या सामोपासनं ॥ अथावृत्तेषु अवाङ्मुखेषु पंचविधमुच्यते सामोपासनं ॥ गत्यागतिविशिष्टा हि लोकाः यथा तेन तथा दृष्ट्यैव सामोपासनं विधीयते यतोऽत आवृत्तेषु लोकेषु द्यौर्हिंकारः ॥ ((वोपासने प्रस्तावत्वं सामान्यमाह ॥ अग्नौ

हीति ॥ अंतरिक्षदृष्ट्योद्गीथोपासने गकारसंबंधसादृश्यं दर्शयति ॥ अंतरिक्षे हीति ॥ आदित्यदृष्ट्या प्रतिहारोपास्तौ प्रतिशब्दसामान्यहेतुमाह ॥ प्रतिमापीति ॥ द्युदृष्ट्या निधनोपासने निधनत्वसामान्यमाह ॥ दिवीति ॥ उक्तमुपासनमुपसंहरति ॥ इत्यूर्ध्वेगतेष्विति ॥ अथावृत्तेष्विति वाक्यं व्याकरोति ॥ अथेति ॥ पृथिवीमुखेषु द्युपर्यंतेषु पंचविधसामोपासनकथनानंतर्यमथशब्दार्थः ॥ पूर्वोत्तरग्रंथयोर्मिथो विरोधं शंकित्वा परिहरति ॥ गत्यागतीति ॥ यथावाने गतिविशिष्टास्तथा दृष्ट्यैव हिंकाराद्युपासनं विहितं यथा चागतिविशिष्टास्तेन तथा दृष्ट्यैवतदुपासनं विधीयते ॥ तथा च शास्त्रानुसारेण क्रियमाणयोरुपासनयोर्न विरोधो स्तीत्यर्थः ॥ द्विधोपास्तिविषयसंदर्भयोर्विरोधाभा

द्युलोकदृष्ट्या हिंकारोपास्यहेतुमाह॥ प्राथम्यादिति॥ आवृत्तौ द्युलोकस्यारंभे च हिंकारस्य प्राथम्यं द्रष्टव्यं॥ आदित्यदृष्ट्या प्रस्ताव-
स्योपास्यत्वे हेतुमाह॥ उदित इति॥ पूर्ववदिति॥ गकाराक्षरसामान्यं विवक्षितं॥ अग्निदृष्ट्या प्रतिहारोपास्तौ हेतुमाह॥ प्राणिभिरिति
॥ प्रतिहरणमितस्ततो नयनं साध्विति पदं सर्वत्र द्रष्टव्यमित्याह॥ इति सर्वत्रेति सर्वत्रेत्यस्य व्याख्या॥ पंचविध इत्यादि॥ ३॥ ननु लोकदृ-
ष्ट्या सामोपास्त्यनंतरं किमिति वृष्टिदृष्ट्या तदुपास्तिरुपन्यस्यते तत्राह॥ लोकस्थितेरिति॥ पुरोवातदृष्ट्या हिंकारोपासने हेतुमाह॥ पु-

प्राथम्यादादित्यः प्रस्ताव उदिते हि आदित्ये प्रस्तूयंते कर्माणि प्राणिनामंतरिक्षमुद्गीथः पूर्ववदग्निः प्रतिहारः प्राणिभिः
प्रतिहरणादितस्ततः पृथिवी निधनं तत आगतानामिह निधानादुपासनफलं कल्पंते समर्था भवंति ह अस्मै लोका ऊर्ध्वा-
श्चावृत्ताश्च गत्यागतिविशिष्टा भोग्यत्वेन व्यवतिष्ठंत इत्यर्थो य एतदेवं विद्वाँल्लोकेषु पंचविधं समस्तं साधु सामेत्युपा-
स्त इति सर्वत्र योजना पंचविधे सप्तविधे च॥ ३॥ वृष्टौ पंचविधं सामोपासीत लोकस्थितेर्वृष्टिनिमित्तत्वादानंतर्यं पुरो-

विधं सामोपास्ते॥ ३॥ वृष्टौ पंचविधं सामोपासीत पुरोवातो हिंकारो मेघो जायते स प्रस्तावो वर्षति स उ-
द्गीथो विद्योतते स्तनयति स प्रतिहार उद्गृह्णाति तन्निधनं॥ वर्षति हास्मै वर्षयति ह य एतदेवं विद्वान्वृष्टौ पंचविधं

वातो हिंकारः॥ पुरोवाताद्युद्ग्रहणांता हि वृष्टिर्यथा साम हिंकारादिनिधनांतमतः पुरोवातो हिंकारः साम सामोपास्ते॥ २॥ ३॥
हिंकारः प्राथम्यान्मेघो जायते स प्रस्तावः प्रावृषि मेघजननेन वृष्टेः प्रस्ताव इति हि प्रसिद्धिः वर्षति स उद्गीथः श्रैष्ठ्याद्विद्योत-
ते स्तनयति स प्रतिहारः प्रतिहृतत्वादुद्गृह्णाति तन्निधनं समाप्तिसामान्यात्फलमुपासनस्य वर्षति हास्मा इच्छातस्तथाव-

रोवातादीति॥ उद्ग्रहणं वर्षोपसंहरणं॥ अतःशब्दार्थमाह॥ प्राथम्यादिति॥ मेघजन्मदृष्ट्या प्रस्तावोपास्तौ हेतुमाह॥ प्रावृषीति॥ वर्षण-
दृष्ट्योद्गीथोपासने हेतुमाह॥ श्रैष्ठ्यादिति॥ विद्योतनस्तनयित्नुदृष्ट्या प्रतिहारोपासने कारणमाह॥ प्रतिहृतत्वादिति विद्युतां स्तनयि-
त्नूनां च प्रतिहृतत्वं विप्रकीर्णत्वं तेन प्रतिशब्दसादृश्याद्विद्योतनादिदृष्ट्या कर्तव्या प्रतिहारोपास्तिरित्यर्थः॥ उद्ग्रहणदृष्ट्या निधनोपा-

न त्वमकिंचित्करमित्याशंक्याह ॥ असत्यामपीति ॥ ३ ॥ किमिति वृष्टिदृष्टेरनंतरमपां दृष्टिः साम्नि क्षिप्यते तत्राह ॥ वृष्टिपूर्वकत्वादिति ॥ मेघसंप्लवदृष्ट्या हिंकारमारभ्य साम्न्यादुपासीतेत्याह ॥ मेघइति ॥ वर्षदृष्ट्या प्रस्तावस्योपास्यत्वे हेतुमाह ॥ आपइति ॥ प्राच्यो नद्यो गंगाद्याः प्रतीच्यस्तु नर्मदाद्या इति भेदः ॥ तर्हि गंगादाववेक्षितमपि मरणं न स्यादिति चेत्तत्राह ॥ नेच्छतिचेदिति ॥ असावुपासको मरुस्थलीष्वपि यथेच्छमुदकवान्भवतीत्यर्थः ॥ ४ ॥ किमिति सलिलदृष्ट्यनंतरमृतुदृष्टिः साम्न्यारोप्यते तत्राह ॥ ऋतुव्यवस्थायाइति ॥ ऋतुव्यवस्थानुरूपं

सत्यामपि वृष्टौ यएतदित्यादि पूर्ववत् ॥ ३ ॥ सर्वास्वप्सु पंचविधं सामोपासीत वृष्टिपूर्वकत्वात्सर्वासामपामानंतर्येण मेघो यत्संप्लवते एकीभावेनेतरेतरं घनीभवति मेघो यदा उन्नतस्तदा संप्लवत इत्युच्यते मेघस्तदापामारंभः स हिंकारो यद्वर्षति स प्रस्ताव आपः सर्वतो व्याप्तुं प्रवृत्ताः याः प्राच्यः स्यंदंते स उद्गीथः श्रैष्ठ्यात् याः प्रतीच्यः स प्रतिहारः प्रतिशब्दसामान्यात्समुद्रो निधनं तन्निधनत्वादपां न हाप्सु प्रैति ॥ नेच्छति चेदप्सुमान्भवति फलं ॥ ४ ॥ ऋतुषु पंचविधं सामोपासी

सर्वास्वप्सु पंचविधꣳसामोपासीत मेघो यत्संप्लवते स हिंकारो यद्वर्षति स प्रस्तावो याः प्राच्यः स्यंदंते स उद्गीथो याः प्रतीच्यः स प्रतिहारः समुद्रो निधनं न हाप्सु प्रैत्यप्सुमान्भवति य एतदेवं विद्वान्सर्वास्वप्सु पंचविधꣳसामोपास्ते ॥ ४ ॥ ऋतुषु पंचविधꣳसामोपासीत वसंतो हिंकारो ग्रीष्मः प्रस्तावो वर्षा उद्गीथः शरत्प्रतिहारो हेमंतो निधनं कल्पंते हास्मा ऋतव ऋतुमान्भवति य एतदेवं विद्वानृतुषु पंचविधꣳसामोपास्ते ॥ ५ ॥ पशुषु पंचविधꣳसामोपासीताजा हिं

त ऋतुव्यवस्थायाः यथोक्तोपास्तिनिमित्तत्वादानंतर्येण वसंतो हिंकारः प्राथम्याद्ग्रीष्मः प्रस्तावो यवादिसंग्रहः प्रस्तूयते हि प्रावृड्वर्षा उद्गीथः प्राधान्याच्छरत्प्रतिहारो रोगिणां मृतानां च प्रतिहरणाद्धेमंतो निधनं निवाते निधनात्प्राणिनां फलं कल्पंते ह ऋतुव्यवस्थानुरूपं भोग्यत्वेनास्मा उपासकाय ऋतवः ऋतुमानार्तवैर्भोगैश्च संपन्नो भवतीत्यर्थः ॥ ५ ॥ पशुषु पंच

तत्क्रियाविशेषणं कस्यचिदृतूपास्तिरपि क्रमेण तद्धेतुफलभोगभागिनोपपद्येनेदमुपासनानुरूपं फलमित्याशंक्याह ॥ ऋतुमानिति ॥ संपन्नः

॥सम्यगिति॥अजादृष्ट्या हिंकारोपासने हेतुद्वयमाह॥प्राधान्यादित्यादिना॥अजायाः पशुसंबंधात् प्राधान्यं प्राथम्यं तु प्रथमपाठादिति द्र
ष्टव्यं॥ब्राह्मणो मनुष्याणामजः पशूनां तस्मात्ते मुख्या मुखतो ह्यसृज्यंते इति श्रुतिमजाप्राधान्ये प्रमाणयति॥अज इति॥तस्मात् जाता अजावय
इति श्रुतेरजानामवीनां च साहचर्यं हिंकारप्रस्तावयोश्च साहचर्यं प्रसिद्धं॥पशुमान्भवतीत्यस्य पूर्वेण पौनरुक्त्यं परिहरति॥पशुफलैश्चे

सम्यक्वृत्तेष्वृतुषु पशव्यः कालस्तदानंतर्यं॥अजा हिंकारः प्राधान्यात्प्राथम्याद्वा अजः पशूनां प्रथम इति श्रुतेः अवयः
प्रस्तावः साहचर्यदर्शनादजावीनां गाव उद्गीथः श्रैष्ठ्यात् अश्वाः प्रतिहारः प्रतिहरणात्पुरुषाणां पुरुषो निधनं पुरुषाश्र
यत्वात्पशूनां फलं भवंति हास्य पशवः पशुमान्भवति॥पशुफलैश्च भोगत्यागादिभिर्युज्यत इत्यर्थः॥६॥प्राणेषु पंचविधं
परोवरीयः सामोपासीत परं परं वरीयस्त्वगुणवत्प्राणदृष्टिविशिष्टं सामोपासीतेत्यर्थः॥प्राणो घ्राणो हिंकारः उत्तरोत्त

कारोऽवयः प्रस्तावो गाव उद्गीथोऽश्वाः प्रतिहारः पुरुषो निधनं भवंति हास्य पशवः पशुमान्भवति य एतदेवं वि
द्वान्पशुषु पंचविधꣳ सामोपास्ते॥६॥प्राणेषु पंचविधं परोवरीयः सामोपासीत प्राणो हिंकारो वाक् प्रस्तावश्चक्षु

रवरीयसां प्राथम्याद्वाक्प्रस्तावः वाचा हि प्रस्तूयते सर्वं वाग्वरीयसी प्राणादप्राप्तमप्युच्यते वाचा प्राप्तस्यैव तु गंधस्य
ग्राहकः प्राणो वाचो वरं बहुतरं विषयं प्रकाशयति चक्षुरतो वरीयो वाचश्च उद्गीथः श्रैष्ठ्याच्छ्रोत्रं प्रतिहारः प्रतिहृतत्वाद्वरीय
श्चक्षुषः सर्वतः श्रवणान्मनो निधनं मनसि हि निधीयन्ते पुरुषस्य भोग्यत्वेन सर्वेंद्रियाहृता विषयाः वरीयस्त्वं च श्रोत्रान्मन
सः सर्वेंद्रिय

ति॥६॥पशुप्रस्तुतपर्योहृतादिनिमित्तत्वात्प्राणस्थितेस्तत्दृष्ट्यनंतरं प्राणदृष्ट्या सामोपास्तिं प्रस्तौति॥प्राणेष्विति॥प्रा
णशब्दस्य मुख्यप्राणविषयत्वं व्यावर्तयति॥प्राण इति॥मुख्यप्राणादुत्तरेषां वरीयस्त्वासंभवात्तस्य सर्वश्रेष्ठतायाः निर्द्धारितत्वात्परं प
रं वरीयसां वागादीनां मध्ये प्रथमभावित्वेनोक्तत्वात् घ्राणमेवात्र प्राणशब्दमित्यर्थः॥कथं घ्राणाद्वाचो वरीयस्त्वं तत्राह॥वाचेति॥अप्राप्त
त्वं व्यवहितत्वं चक्षुषो वरीयस्त्वं साधयति॥वाच इति॥शब्दस्येति यावत्॥वाचः शब्दात्मकाशादित्यर्थः॥उद्गीथत्वे चक्षुषो हेतुमाह॥श्रै

इतिवरीयस्त्वमितिपूर्वेणसंबंधः॥ अप्राप्तमप्युच्यतेवाचेत्यादर्योयथोक्तहेतवः उक्तोपसंहारविरहे विवक्ष्यमाणेबुद्धिसमाधानंकिंनस्यादि
त्याशंक्याह॥ निरपेक्षोहीति॥१॥ अधिकसंख्याज्ञानस्याल्पसंख्याज्ञानपूर्वकत्वात्पंचविधोपासनानंतरंसप्तविधोपासनमस्तीति॥ अथेति॥
पूर्ववल्लोकेष्वितिवत्सप्तमीचनेतव्येत्यर्थः॥ वाक्शब्देनशब्दसामान्यमुच्यतेतत्सप्तधाप्रविभक्तसामावयवेष्वारोप्योपासनंकर्तव्यमितिवा

विषयोपिमनसोगोचरएवेतियथोक्तहेतुभ्यःपरोवरीयांसिप्राणादीनिवैएतान्येतद्दृष्ट्याविशिष्टंयःपरोवरीयःसामोपास्तेपरो
वरीयोहास्यजीवनंभवतीत्युक्तार्थमितितुपंचविधस्यसाम्नउपासनमुक्तमितिसप्तविधेचवक्ष्यमाणविषयेबुद्धिसमाधानार्थंनि
रपेक्षोहिपंचविधेवक्ष्यमाणेबुद्धिंसमाधित्सतीति॥१॥ अथानंतरंसप्तविधस्यसमस्तस्यसाम्नउपासनंसाध्विदमारभ्यते॥ वाचीति
सप्तमीपूर्ववद्वाग्दृष्टिविशिष्टंसप्तविधंसामोपासीतेत्यर्थःयत्किंचवाचःशब्दस्यहुंइतियाविशेषःसहिंकारोहुंकारसामान्यात्प

स्तद्गीथःश्रोत्रंप्रतिहारोमनोनिधनंपरोवरीयांसिवाएतानिपरोवरीयोहास्यभवतिपरोवरीयसोहलोकान्जयति
यएतदेवंविद्वान्प्राणेषुपंचविधंपरोवरीयःसामोपास्तइतितुपंचविधस्य॥१॥ अथसप्तविधस्यवाचिसप्तविधंसा
मोपासीतयत्किंचवाचोहुमितिसहिंकारोयत्प्रेतिसप्रस्तावोयदेतिसआदिर्यदुदितिसउद्गीथोयत्प्रतीतिसप्रतिहारो
यदुपेतिसउपद्रवोयन्नीतितन्निधनंदुग्धेऽस्मैवाग्दोहंयोवाचोदोहोन्नवानन्नादोभवति ॥ प्रेतिशब्दरूपंसप्रस्तावःप्रसा

मान्यात्यदाइतिसआदिःआकारसामान्यादादिरित्योंकारःसर्वादित्वात्यदुदितिसउद्गीथःउत्पूर्वत्वादुद्गीथस्ययत्प्रतीतिसप्र
तिहारःप्रतिसामान्यात्यदुपेतिसउपद्रवउपोपक्रमत्वादुपद्रवस्ययन्नीतितन्निधनंनिशब्दसामान्यात्दुग्धेस्माइत्याद्युक्तार्थं
॥८॥ अवयवमात्रेसाम्निआदित्यस्यदृष्टिःपंचविधेषूक्ताप्रथमेचाध्याये॥ अथेदानींखल्वमुमादित्यंसमस्तेसाम्न्यवयवविभागशोऽध्यस्यसप्तविधंसामोपासी

क्यार्थमाह॥ वाग्दृष्टीति॥ यत्किंचवाचइतिवाक्योपादानंतस्यार्थमाह॥ शब्दस्येति॥८॥ वाग्
टेरनंतरमादित्यदृष्टिर्विधीयतेतस्यवाङ्गत्वान्नचतद्विधानंयुक्तंपूर्वमप्यादित्यदृष्टिविशिष्टस्योपासनस्योपदिष्टत्वादित्याशंक्याह॥१

कथमिति॥सर्वदेत्यादिवाक्यं उत्तरत्वेनादत्ते॥उच्यत इति॥उच्चैः संतमादित्यं गायंतीत्यादित्यस्योद्गीथत्वे हेतुः श्रुत्योक्तस्तथा सामत्वेपि तस्य हेतुरुच्यत इत्यर्थः॥ तमेव प्रश्नपूर्वकं विवृणोति॥ कोसाविति॥ नोदेता नास्तमेतादृत्यादिदर्शनादित्यर्थः॥ मां प्रतीत्यादि व्याचष्टे॥ मां प्रतीति॥ अन्यशब्दस्यान्यत्रवृत्तिर्नांतरेण किंचिन्निमित्तमित्यादित्यस्य सामत्वे हेतुरुच्यते चेत्तर्हीदानीं हिंकारादित्वेपि वक्तव्यो निमित्तं श्रुत्या नोक्तमित्याशंक्याह॥ उद्गीथेति॥ आदित्यस्योद्गीथेन सहोर्ध्वत्वसामान्यं श्रुत्योक्तं तदनुसारेणास्मदुक्तभाष्यस्यादिसामान्यं यथा पृथि-

कथं पुनः सामत्वमादित्यस्येति॥ उच्यते उद्गीथत्वे हेतुवदादित्यस्य सामत्वे हेतुः॥ कोसौ सर्वदा समो वृद्धिह्रासाभावात्तेन हेतुना साम आदित्यो मां प्रति मां प्रतीति तुल्यां बुद्धिमुत्पादयत्यतः सर्वेण समोऽतः साम समत्वादित्यर्थः॥ उद्गीथभक्तिसामान्यवचनादेव लोकादिषूक्तसामान्याद्धिंकारादित्वं गम्यत इति हिंकारादित्वे कारणं नोक्तं सामत्वे पुनः सवितुरनुक्तं का-

य एतदेवं विद्वानादित्यं सप्तविधꣳ सामोपास्ते॥ ८॥ अथ खल्वमुमादित्यꣳ सप्तविधꣳ सामोपासीत॥ सर्वदा समस्तेन साम मां प्रति मां प्रतीति सर्वेण समस्तेन साम तस्मिन्निमानि सर्वाणि भूतान्यन्वायत्तानीति विद्यात्॥ तस्य यत्पुरोदयात्स हिंकारस्तदस्य पशवोन्वायत्तास्तस्मात्ते हिं कुर्वंति हिंकारभाजिनो ह्येतस्य साम्नः॥

रणं न सुबोधमिति समत्वमुक्तं तस्मिन्नादित्येऽवयवविभागश इमानि वक्ष्यमाणानि सर्वाणि भूतानि अन्वायत्तान्यनुगतान्यादित्यमुपजीव्यत्वेनेति विद्यात्॥ कथं तस्यादित्यस्य यत्पुरोदयाद्धर्मरूपं स हिंकारो भक्तिस्तत्रेदं सामान्यं यत्तस्य हिंकारभक्तिरूपं तदस्यादित्यस्य साम्नः पशवो गवादयोन्वायत्ता अनुगतास्तद्भक्तिरूपमुपजीवंतीत्यर्थः॥

भक्त्यादिषु हिंकारादित्वं गम्यते तथादित्यप्रभेदानामपि हिंकारादित्वं शक्यावगममिति श्रुत्या तेषां तद्भावे नोक्तं कारणमित्यर्थः तर्हि सामत्वेपि कारणानपेक्षाऽसंभवान्न वक्तव्यं कारणमित्याशंक्याह॥ सामत्वे पुनरिति॥ सामत्वं तत्र निमित्तमिति यावत् समः सर्वेणेत्युक्तं व्यक्तीकरोति॥ तस्मिन्निति॥ वेदनप्रकारं प्रश्नपूर्वकं प्रकटयति॥ कथमित्यादिना॥ धर्मरूपत्वं सुखकरत्वाद्धर्मकार्यात्मकं रूपमिति यावत्तद्दृष्ट्या हिंकारोपासने साम्यं हेतुः॥ पशवो

यस्मादिति॥तेषांहिंकरणंसाधयति॥तस्मादित्यादिना॥तद्भक्तिभजनशीलत्वादित्यस्मात्प्रागेवतस्मादित्यस्यसंबंधःसवितरि प्रथमो
दितेसतियत्तस्यरूपंतदृष्ट्वाप्रस्तावस्योपास्यत्वेपूर्वस्मादानंतर्यंहेतुः॥यथोदयात्प्राचीनंरूपंपशुभिरुपजीव्यंतेनतथेत्याह॥पूर्ववदिति॥उ
दयात्पराचीनमादित्यरूपंमनुष्याउपजीवंतीत्यत्रलिङ्गमाह॥तस्मादिति॥प्रत्यक्षपरोक्षभावेनप्रस्तुतिप्रशंसयोर्भेदः॥गोशब्दवाच्यानांरश्मी
नांजगन्मण्डलेसंगमनंसंबध्यगमनमित्यर्थःवत्सैःसंगमनमितिसंबंधः॥सङ्गवकालीनमादित्यरूपमारोप्यादिभक्तेरोंकारस्योपास्यत्वेहेतुर्यो

यस्मादेवंतस्मात्तेहिंकुर्वंतिपशवःप्रागुदयात्तस्माद्धिंकारभाजिनोह्येतस्यादित्याख्यस्यसाम्नस्तद्भक्तिभजनशीलत्वाद्धितए
वंवर्तंते॥अथयत्प्रथमोदितेसवितृरूपंतदस्यादित्याख्यस्यसाम्नःसप्रस्तावस्तदस्यमनुष्याअन्वायत्ताःपूर्ववत्तस्मात्तेप्र
स्तुतिंप्रशंसांकामयंतेयस्मात्प्रस्तावभाजिनोह्येतस्यसाम्नोऽथयत्संगववेलायांगवांरश्मीनांसंगमनंसंगवोयस्यांवेला

यत्प्रथमोदितेसप्रस्तावस्तदस्यमनुष्याअन्वायत्तास्तस्मात्तेप्रस्तुतिकामाःप्रशꣳसाकामाःप्रस्तावभाजिनो
ह्येतस्यसाम्नोऽथयत्संगववेलायाꣳसआदिस्तदस्यवयाꣳस्यन्वायत्तानि॥तस्मात्तान्यंतरिक्षेऽनारंबणान्या
दायात्मानंपरिपतंत्यादिभाजीनिह्येतस्यसाम्नोऽथयत्संप्रतिमध्यंदिनेसउद्गीथस्तदस्यदेवाअन्वायत्तास्तस्मात्तेसत्त

यांगवांवावत्सैःसहसंगववेलातस्मिन्कालेयत्सावित्रंरूपंसआदिर्भक्तिविशेषओंकारस्तदस्यवयांसिपक्षिणोऽन्वायत्ता
नि॥यतएवंतस्मात्तानिवयांस्यंतरिक्षेऽनारंबणान्यनालंबनान्यात्मानमादायात्मानमेवालंबनत्वेनगृहीत्वापरिपतंतिगच्छं
त्यतआकारसामान्यादादिभक्तिभाजीनिह्येतस्यसाम्नोऽथयत्संप्रतिमध्यंदिनेसवितुर्मध्यंदिनइत्यर्थः॥सउद्गीथभक्तिस्तदस्य
देवाअन्वायत्ताद्योतनातिशयात्तत्कालेतस्मात्तेसत्तमाविशिष्टतमाःप्राजापत्यानांप्रजापत्यपत्यानामुद्गीथभाजिनोह्येतस्य

दाकारसामान्यंहेतुः॥पक्षिणांयथोक्तमादित्यरूपमुपजीव्यमित्यत्रहेतुमाह॥यतइति॥ऋतुमध्यंदिनेयदादित्यस्यरूपंतदस्योद्गीथोपासने
श्रैष्ठ्यंहेतुःतत्कालीनादित्यरूपस्यदेवोपजीव्यत्वेहेतुमाह॥द्योतनेति॥तथापितस्यदेवैरुपजीव्यत्वंकथमितिचेत्तत्राह॥तस्मादिति॥अथयदूर्ध्वं

मध्यंदिनादिति॥ तद्दृष्ट्याप्रतिहारोपासने प्रतिशब्दसामान्यं हेतुः॥ तस्मिन्काले सवितुरस्तं गिरिं प्रतिहरणात् यथोक्तमादित्यरूपं गर्भैरुपजीव्य
मित्यत्र गमकमाह॥ अत इति॥ ऊर्ध्वं योनेरुपरिष्टात् जठरं प्रतीत्यर्थः॥ एतो गर्भाः पूर्वोक्तविशेषणवंत इति यावत्॥ तद्द्वारं पतनद्वारं तत्र तत्कालीना
दित्यदृष्ट्योपद्रवमुपासीत तस्य तद्दृष्ट्याचलं मृत्युपद्रवणादित्याह॥ अथेति॥ आरण्यानां पशूनां यथोक्तरूपोपजीवनमुपपादयति॥ तस्मादि

मध्यंदिनात्प्रागपराह्णाद्यद्रूपं सवितुः स प्रतिहारस्तदस्य गर्भा अन्वायत्ता अतस्ते सवितुः प्रतिहारभक्तिरूपेणोर्ध्वं प्र
तिहृताः संतो नावपद्यंते नाधः पततीति तद्द्वारे सत्यपीत्यर्थः॥ यतः प्रतिहारभाजिनो ह्येतस्य साम्नो गर्भा अथ यदूर्ध्वमपराह्णा
त्प्रागस्तमयात्स उपद्रवस्तदस्यारण्याः पशवोऽन्वायत्ताः॥ तस्मात्ते पुरुषं दृष्ट्वा भीताः कक्षमरण्यं श्वभ्रं भयशून्यमित्युपद्रवं

प्राजापत्यानामुद्गीथभाजिनो ह्येतस्य साम्नोऽथ यदूर्ध्वं मध्यंदिनात्प्रागपराह्णात्स प्रतिहारस्तदस्य गर्भा अन्वा
यत्तास्तस्मात्ते प्रतिहृता नावपद्यंते प्रतिहारभाजिनो ह्येतस्य साम्नोऽथ यदूर्ध्वमपराह्णात्प्रागस्तमयात्स उपद्रव
स्तदस्यारण्या अन्वायत्तास्तस्मात्ते पुरुषं दृष्ट्वा कक्षं श्वभ्रमित्युपद्रवन्त्युपद्रवभाजिनो ह्येतस्य साम्नोऽथ यत्प्र
थमास्तमिते तन्निधनं तदस्य पितरोऽन्वायत्तास्तस्मात्तान्निदधति निधनभाजिनो ह्येतस्य साम्न एवं खल्वमुमादित्यं

ति॥ उपगच्छंति दृष्ट्वोपद्रवणादुपद्रवभाजिनो ह्येतस्य साम्नोऽथ यत्प्रथमास्तमिते दर्शनं जि ((सप्तविधं सामोपास्ते॥८॥
गमिषतः सवितरि तन्निधनं तदस्य पितरोऽन्वायत्तास्तस्मात्तान्निदधति पितृपितामहप्रपितामहरूपेण दर्भेषु निक्षिपंति
तानुद्दिश्य पिंडान्स्थापयंति निधनसंबंधान्निधनभाजिनो ह्येतस्य साम्नः पितर एवमवयवशः सप्तधा विभक्तं खल्वमुमादि
त्यं सप्तविधं सामोपास्ते यः तस्य तदापत्तिः फलमिति वाक्यशेषः॥८॥ त्यादिना श्वभ्रं गर्तं गुहेति यावत् तत्सवितृरूपमिति शेषः॥ तद्
दृष्ट्या निधनोपासने समाप्तिसामान्यं हेतुः यथोक्तमादित्यरूपं पितृभिरुपजीव्यमित्यत्र गमकमाह॥ तस्मादित्यादिना॥ तत्र तत्रायं शब्दस्त
दुपासनानंतर्यार्थो व्याख्येयः॥ एवं खल्वित्यादिवाक्यमपेक्षितं पूरयन्व्याकरोति॥ एवमिति॥ ८ ॥ ९ ॥ ६ ॥ ४ ॥

अथ खल्वात्मसंमितमित्यादेस्तात्पर्यमाह ॥ मृत्युरिति ॥ अनंतरमित्यस्यापेक्षितं निक्षिपति ॥ आदित्येति ॥ स्वशब्देन सामोच्यते ॥ तस्याऽवयवा
हिंकारादयः तन्नामाक्षराणां त्रित्वेन तुल्यतया मितं ज्ञातं सामेत्यर्थः ॥ यथा परमात्मावगमो मृत्योर्मोक्षणहेतुस्तथेदंउपासनमपीत्यर्थांतरमाह ॥ प
रमात्मेति ॥ कीदृगत्रोपासनं विवक्षितं इत्यपेक्षायामस्पष्टांतमुत्तरमाह ॥ यथेत्यादिना ॥ उद्गीथइत्युद्गीथभक्तेर्नामतदक्षराणीति यावत्सामत्वं

मृत्युरादित्यः अहोरात्रादिकालेन जगतः प्रमापयितृत्वात्तस्यातितरणायेदं सामोपासनमुपदिश्यते ॥ अथ खल्वनंतरं आदि
त्यमृत्युविषयसामोपासनस्यात्मसंमितं स्वावयवतुल्यतया मितं परमात्मतुल्यतया वा संमितं अतिमृत्यु मृत्युमत्ययहेतु
त्वात् ॥ यथा प्रथमेऽध्याये उद्गीथभक्तिनामाक्षराणि उद्गीथ इत्युपास्यत्वेनोक्तानि तथेह साम्नः सप्तविधभक्तिनामाक्षराणि समी
हृत्य त्रिभिस्त्रिभिः समतया सामत्वं परिकल्प्योपास्यत्वेनोच्यते ॥ तदुपासनेन मृत्युगोचराक्षरसंख्यासामान्येन मृत्युमाप्य तद

अथ खल्वात्मसंमितमतिमृत्यु सप्तविधꣳ सामोपासीत हिंकार इति त्र्यक्षरं प्रस्ताव इति त्र्यक्षरं तत्सममादिरिति
द्व्यक्षरं प्रतिहार इति चतुरक्षरं तत इहैकं तत्सममुद्गीथ इति त्र्यक्षरमुपद्रव इति चतुरक्षरं त्रिभिस्त्रिभिः समं भवत्यक्ष

तिरिक्ताक्षरेण तस्यादित्यस्य मृत्योरतिक्रमणायैव संक्रमणं कल्पयति ॥ अतिमृत्यु सप्तविधं सामोपासीत मृत्युमतिक्रां
तमतिरिक्ताक्षरसंख्यया इति अतिमृत्यु साम तस्य प्रथमभक्तिनामाक्षराणि हिंकार इत्येतत् त्र्यक्षरं भक्तिनाम प्रस्ताव इति च भ
क्तेस्त्र्यक्षरमेव नाम तत्पूर्वेण सममादिरिति द्व्यक्षरं सप्तविधस्य साम्नः संख्यापूरणे ओंकार आदिरित्युच्यते ॥ प्रतिहार इति च
तुरक्षरं तत इह एकमक्षरमवच्छिद्याद्यक्षरयोः प्रक्षिप्यते तेन तत्सममेव भवत्युद्गीथ इति त्र्यक्षरमुपद्रव इति चतुरक्षरं त्रि

णां नामाक्षराणामित्यध्याहार्यं तदुपासनं तेषामक्षराणामादित्यदृष्ट्योपासनमित्यर्थः ॥ मृत्युगोचराक्षरसंख्यैकविंशतित्वलक्षणा सा त्वेकाने
केष्वक्षरेषु तत्सामान्येन तेष्वक्षरेष्वादित्यदृष्ट्या मृत्युमादित्यमित्यर्थः ॥ अतिक्रमणायेत्ययं साधनमुपासनमिति शेषः ॥ अतिमृत्यु मृत्योरत्यय
हेतुत्वादित्युक्तमेव स्पष्टयति ॥ मृत्युमिति ॥ नामाक्षराणि कथं तदिति शेषः ॥ आद्यक्षरयोरादि भक्तिनामाक्षरयोरिति यावत् ॥ तेन प्रक्षेपणेन तत्

दारिभक्तिनामप्रतिहारनाम्नातुल्यमेवेत्यर्थः॥ ननुयथोक्तयारीत्याचतुर्विंशत्यक्षराणितत्कथंतानिहवाएतानिद्वाविंशतिरक्षराणिइतित
त्राह॥ एवमिति॥ आदित्यस्यास्माल्लोकादेकविंशत्वेश्रुत्यन्तरंप्रमाणयति॥ द्वादशेति॥ हेमन्तशिशिरावेकीकृत्यपञ्चर्तवइत्युक्तआदित्य
स्याहोरात्राभ्यांपौनःपुन्येनमृत्युहेतुत्वमस्मिंल्लोकेदृश्यतेनेदयंलोकोमृत्युविषयत्वाद्दुःखात्मकस्तदभावाद्ब्रह्मलोकःसुखात्मकइतिम

समंभवन्त्यक्षरमतिशिष्यतेअतिरिच्यतेतेनवैषम्यप्राप्तस्यसाम्नःसमत्वकरणायाह॥ तदेकमपिसदक्षरमितित्र्यक्षरमेव
भवतिअतस्तत्समंनिधनमितित्र्यक्षरंतत्सममेवभवति॥ एवंत्र्यक्षरसमतयासाम्नःसंपाद्ययथाप्राप्तान्येवाक्षराणिसं
ख्यायन्तेतानिहवाएतानिसप्तभक्तिनामाक्षराणिद्वाविंशतिस्तत्रैकविंशत्यक्षरसंख्ययाऽऽदित्यमाप्नोतिमृत्युंयस्मादेकविं
शइतोऽस्माल्लोकादसावादित्यःसंख्ययाद्वादशमासाःपञ्चर्तवस्त्रयइमेलोकाःअसावादित्यएकविंशइतिश्रुतेरवशिष्टेन

मतिशिष्यतेत्र्यक्षरंतत्समंनिधनमितित्र्यक्षरंतत्सममेवभवतितानिहवाएतानिद्वाविꣳशतिरक्षराण्येकविꣳ
शत्यादित्यमाप्नोत्येकविꣳशोवाइतोऽसावादित्योद्वाविꣳशेनपरमादित्याज्जयतितन्नाकंतद्विशोकमाप्नोति
हादित्यस्यजयंपरोहास्यादित्यजयाज्जयोभवतियएतदेवंविद्वानात्मसंमितमतिमृत्युसप्तविधꣳसामोपास्ते

द्वाविंशेनाक्षरेणपरंमृत्योरादित्याज्जयत्याप्नोतीत्यर्थः॥ यच्चतदादित्यात्परंकिंतन्नाकंकमितिसुखंत ((सामोपा
स्यप्रतिषेधोऽकंतन्नभवतीतिनाकंकमेवेत्यर्थः॥ मृत्युविषयत्वाद्दुःखस्यविशोकंचतद्विगतशोकमानसदुःखर
हितमित्यर्थः तदाप्नोतीत्युक्तस्यैवपिंडितार्थमाह॥ एकविंशतिसंख्ययाऽऽदित्यस्यजयमाप्नोतिपरोहास्यैवविदआदि

त्याह॥ मृत्युविषयत्वादिति॥ पूर्वेणोत्तरस्यपौनरुक्त्यमाशंक्याह॥ उक्तस्यैवेति॥ व्याख्यातस्यैवग्रंथस्यसमुदायार्थःसंक्षिप्यव
क्ष्यतेऽतोनपौनरुक्त्यमित्यर्थः॥ जयमनु परोजयोभवतीतिसंबंधः॥ परोहास्येत्युपात्तंवाक्यंव्याक
रोति॥ एवंविदइति॥ फलमितिशेषइतियावत्सप्तविधंसप्तविधत्वंतदुपेतसामोपासनस्यसमास्यर्थोऽभ्यासइत्यर्थः॥ १०॥

॥ ॥ ननु पंचविधस्य सप्तविधस्य च साम्नो ध्यानं व्याख्यातं तथा च ज्ञानविषये वक्तव्याभावादलमनंतरग्रंथेनेत्याशं
क्य पूर्वोत्तरग्रंथयोरर्थभेदमाह ॥ विनेत्यादिना ॥ गायत्रं रथंतरमित्यादिनामग्रहणेन विशिष्टानि विशिष्टफलानि चेत्यर्थः कथं पुन
र्वेदस्य माणेषु पासनेषु निर्दिष्टक्रमसिद्धिस्तत्राह ॥ यथाक्रममिति ॥ यादृशं क्रममाश्रित्य तेषां कर्मणि प्रयोगः कर्मणामिष्टस्तेनैव क्र
मेण तदुपासनोक्तिरित्यर्थः ॥ तत्र प्राणस्य क्रियाज्ञानयोः संभवात्प्राणस्य प्रधानत्वात्तद्दृष्ट्या गायत्रोपास्तिमादौ दर्शयति ॥ मनो
भवति ह्यविंशन्त्यस्य सर्वसंख्यये इत्यर्थः य एतदेवं विद्वानित्यादि उक्तार्थं तस्यैतद्यथोक्तं फलमिति द्विरभ्यासः सामविध्य
समाप्त्यर्थः ॥ १० ॥ विनानामग्रहणं पंचविधस्य सप्तविधस्य च साम्न उपासनमुक्तं ॥ अथेदानीं गायत्रादिनामग्रहण
पूर्वकं विशिष्टफलानि सामोपासनान्तराण्युच्यंते यथाक्रमं गायत्रादीनां कर्मणि प्रयोगस्तथैव मनो हिंकारो मनसः

मनो हिंकारो वाक्प्रस्तावश्चक्षुरुद्गीथः श्रोत्रं प्रतिहारः प्राणो निधनमेतद्गायत्रं प्राणेषु प्रोतं ॥ १ ॥ स य एवमेतद्गा
यत्रं प्राणेषु प्रोतं वेद प्राणी भवति सर्वमायुरेति ॥ ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या महामनाः

सर्वकरणप्रवृत्तीनां प्राथम्यात्तदानंतर्याद्वाक्प्रस्तावश्चक्षुरुद्गीथः श्रैष्ठ्याच्छ्रोत्रं प्रतिहारः प्रतिहृतत्वात् स्यात्तद्व्रतं
प्राणो निधनं यथोक्तानां प्राणे निधनात्स्वापकाले एतद्गायत्रं साम प्राणेषु प्रोतं गायत्र्याः प्राणसंस्तुतत्वात् स य एवमेतद्गाय
त्रं प्राणेषु प्रोतं वेद प्राणी भवति अविकलकरणो भवतीत्येतत् सर्वमायुरेति ॥ शतं वर्षाणि सर्वमायुः पुरुषस्येति श्रुतेः ॥ ज्यो
क् उज्ज्वलं जीवति महान्भवति प्रजादिभिः महांश्च कीर्त्या गायत्र्युपासकस्यैतद्व्रतं भवति यन्महामनाः स्यादक्षुद्रचित्तः स्यादित्यर्थः

हिंकार इत्यादिना ॥ प्राणमेव वागप्येतीत्यादिश्रुतेः स्वापकाले प्राणे वागादीनां निधनमवधेयं प्रोतं प्रगतं प्रतिष्ठितमिति यावद्गायत्र्यस्य
प्राणेषु प्रतिष्ठितत्वे हेतुमाह ॥ गायत्र्या इति ॥ प्राणो वै गायत्रीति हि श्रुतिः ॥ अविदुषोपि प्राणित्वसिद्धेरेनं विद्याफलमित्याशंक्याह ॥ अवि
कलेति ॥ कथं पुनर्नानाजनीनं सर्वमायुरेको ध्यातागंतुमलमित्याशंक्याह ॥ शतमिति ॥ शतायुर्वै पुरुष इति श्रुतेरित्युच्यते ॥ ज्योक्शब्दो नि

समग्रप्राणवृत्तो मंथनकर्तृत्वसंभवात्प्राणदृष्ट्यनंतरं मंथनादिदृष्टिमवतारयति॥ अभिमंथतीत्यादिना॥ उपशमः संशमश्चेत्यर्थभेदाभा
वात्पुनरुक्तिमाशंक्य सावशेषनिरवशेषत्वाभ्यां विशेषमाह॥ उपशाम इति॥ कथं पुनः रथंतरसाम्नोऽग्नौ प्रतिष्ठितत्वं न हि तत्र किंचिन्निमित्त
मुपलभ्यते अत आह॥ मंथने हीति॥ मंथनंनिमित्तीकृत्याग्नेरुत्पत्तौ रथंतरसाम्नो गीयमानत्वदर्शनादग्नौ तस्य प्रतिष्ठितत्वसिद्धिरित्यर्थः
॥ नन्वत्र ब्रह्मवर्चस्वीति फलमुक्तं बृहदुपासने तु तेजस्वी भवतीति वक्ष्यते॥ न च ब्रह्मवर्चसतेजसोर्भेदः तथा च बृहद्रथंतरोपासनयोर्न

अभिमंथति स हिंकारः प्राथम्यादग्नेर्धूमो जायते स प्रस्तावः आनंतर्याज्ज्वलति स उद्गीथो हविःसंबंधाच्छ्रैष्ठ्यं ज्वलनस्यां
गारा भवंति स प्रतिहारः अंगाराणां प्रतिहृतत्वादुपशमः सावशेषत्वमग्नेः संशमो निःशेषोपशमः समाप्तिसामान्यान्निधन
मेतद्रथंतरमग्नौ प्रोतं मंथने ह्यग्नेर्गीयते स य इत्यादि पूर्ववत् ब्रह्मवर्चसी वृत्तस्वाध्यायनिमित्तं तेजो ब्रह्मवर्चसं तेजस्तु केव
लं त्विड्भावः॥ अन्नादो दीप्ताग्निर्न प्रत्यङ्ङग्नेरभिमुखो नाचामेन्न भक्षयेत् किंचिन्न निष्ठीवेत् श्लेष्मनिरसनं च कुर्यान्न व्रतं॥

अभिमंथति स हिंकारो धूमो जायते स प्रस्तावो ज्वलति स उद्गीथोऽङ्गारा भवंति स प्रतिहार उपशाम्यति तन्निधनं
संशाम्यति तन्निधनमेतद्रथंतरमग्नौ प्रोतं स य एवमेतद्रथंतरमग्नौ प्रोतं वेद ब्रह्मवर्चस्यन्नादो भवति सर्व
मायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या न प्रत्यङ्ङग्निमाचामेन्न निष्ठीवेत्तद्व्रतं॥ १॥ उपमं
त्रयते स हिंकारो ज्ञपयते स प्रस्तावः स्त्रिया सह शेते स उद्गीथः प्रति स्त्रीं सह शेते स प्रतिहारः कालं गच्छति तन्निधनं

१२॥ उपमंत्रयते संकेतं करोति प्राथम्यात्स हिंकारो ज्ञपयते तोषयति स प्रस्तावः सह शयनमेकपर्यंके गमनमुद्गीथः श्रै
ष्ठ्यात्प्रति स्त्रीशयनं स्त्रियाऽभिमुखीभावः स प्रतिहारः कालं गच्छति मैथुनेन पारं समाप्तिं गच्छति तन्निधनमेतद्वामदेव्यं

फलवैषम्यमत आह॥ वृत्तेति॥ १२॥ उत्तराधरारणिस्थानीययोः स्त्रीपुरुषयोरवाच्ये कर्मणि प्रवृत्तयोर्मंथनसामान्यान्मंथनादिदृष्ट्यनंतरं
मैथुनदृष्टिं विदधाति॥ उपमंत्रयत इत्यादिना॥ पुरुषो हि पशुकर्मार्थी स्त्रियं वस्त्रादिना प्रीणयति तस्मिन्नारंभसामान्यात्प्रस्तावदृष्टिरित्या

वायोरपांच मिथुनतया संबंधाद्वामदेव्योत्पत्तेः कृतत्वात्तस्य मिथुने प्रतिष्ठितत्वं युक्तमित्यर्थः॥ नकांचनेति वाक्यमादाय व्याचष्टे॥ कांचिद
पीति॥ परांगनानोपगच्छेदिति स्मृतिविरोधमाशंक्याह॥ वामदेव्येति॥ विधिनिषेधयोः सामान्यविशेषविषयत्वेन व्यवस्थाप्रसिद्धेरितिभावः
॥ किंच शास्त्रप्रामाण्यादत्र धर्मोवगम्यते॥ नकांचन परिहरेदिति च शास्त्रावगमत्वादवाच्यमपि कर्म धर्मो भवितुमर्हति॥ तथाच प्रोतेर्थे

संबंधात्सयइत्यादिपूर्ववत्मिथुनी भवत्यविधुरो भवतीत्यर्थः॥ मिथुनान्मिथुनात्प्रजायत इत्यमोघरेतस्त्वमुच्यते॥ नकांचन
कांचिदपिस्त्रियं स्वात्मतल्पप्राप्तां न परिहरेत्समागमार्थिनीं वामदेव्यसामोपासनांगत्वेन विधानात् एतस्मादन्यत्र प्रतिषेध
स्मृतयो वचनप्रामाण्याच्च धर्मावगतेर्न प्रतिषेधशास्त्रेणास्य विरोधः॥१३॥ उद्यन्सविता स हिंकारः प्राथम्याद्दर्शनस्यादितः

पारंगच्छति तन्निधनमेतद्वामदेव्यं मिथुने प्रोतꣳ स य एवमेतद्वामदेव्यं मिथुने प्रोतं वेद मिथुनी भवति मिथुनान्मिथुना
त्प्रजायते सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या न कांचन परिहरेत्तद्व्रतं॥१३॥ उद्यन्हिंकार
उदितः प्रस्तावो मध्यंदिन उद्गीथोऽपराह्णः प्रतिहारोऽस्तं यन्निधनमेतद्बृहदादित्ये प्रोतꣳ स य एवमेतद्बृहदादित्ये प्रोतं
वेद तेजस्व्यन्नादो भवति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या तपन्तं न निन्देत्तद्व्रतं॥१४
॥ अभ्राणि संप्लवन्ते स हिंकारो मेघो जायते स प्रस्तावो वर्षति स उद्गीथो विद्योतते स्तनयति स प्रतिहार उद्गृह्णाति तन
न्निधनमेतद्वैरूपं पर्जन्ये प्रोतꣳ स य एवमेतद्वैरूपं पर्जन्ये प्रोतं वेद विरूपाꣳश्च सुरूपाꣳश्च पशूनवरुन्धे सर्वमायु

प्रस्तावः प्रस्तवनहेतुत्वात्कर्मणां मध्यंदिन उद्गीथः श्रैष्ठ्यादपराह्णः प्रतिहारः पश्वादीनां गृहान्प्रतिहरणादस्तं यन्निधनं रात्रौ
गृहे निधानात्प्राणिनाम् एतद्बृहदादित्ये प्रोतं बृहत आदित्यदैवत्यत्वात्स य इत्यादि पूर्ववत्तपन्तं न निन्देत्तद्व्रतं॥१४॥ अभ्राण्यब्भ

दुर्बलायाः स्मृतेर्न प्रतिस्पर्धितेत्याह॥ वचनेति॥ यथोक्तोपासनावतो ब्रह्मचर्यनियमाभावो व्रतत्वेन विवक्षितस्तन्न प्रतिषेधशास्त्रविरोधा
शंकेति भावः॥१३॥ आदित्यस्य प्रजाप्रसवहेतुत्वात्तद्धेतुमैथुनदृष्ट्यनंतरमादित्यदृष्टिमुत्थापयति॥ उद्यन्नित्यादिना॥१४॥ आदित्याज्जा

कथं वैरूपं साम तस्मिन्प्रतिष्ठितं तत्राह ॥ अनेकेति ॥ १५ ॥ पर्जन्यायतनत्वादृतुव्यवस्थायास्तद्दृष्टेरनंतरं ऋतुदृष्टिमाचष्टे ॥ वसंत इत्यादिना
॥ वैराजस्य साम्नः ऋतुषु प्रोतत्वं तेषां स्वधर्मैर्विराजनादित्याह ॥ एतदिति ॥ यद्वा ऋतुत्वनाम्नानोत्पत्तिनिमित्तत्वाद्विराडात्मनस्त्वात्त
त्वात् तस्य तेषु प्रतिष्ठितत्वात्तद्द्वारा वैराजमपि साम तेषु प्रोतमिति भावः ॥ १६ ॥ ऋतुषु सम्यग्वर्तते षु लोकस्थितेः प्रसिद्धत्वादृतुदृष्ट्यनंतरं
मन्यदे तद्वैरूपं नाम साम पर्जन्ये प्रोतमनेकरूपत्वादभ्रादिभिः पर्जन्यस्य वैरूप्यं विरूपांश्च सुरूपांश्च अजाऽविप्रभृती
न्पशूनवरुंधे प्राप्नोतीत्यर्थः वर्षंतं न निंदेत्तद्व्रतं ॥ १५ ॥ वसंतो हिंकारः प्राथम्याद्ग्रीष्मः प्रस्ताव इत्यादि पूर्ववत् ॥ एतद्वैराजमृ
तुषु प्रोतं वेद विराजति ऋतुवद्यथर्तव आर्तवैर्द्धर्मैर्विराजंते एवं प्रजादिभिर्विद्वानित्युक्तमन्यदृतून्न निंदेत्तद्व्रतं ॥ १६ ॥ पृथि

ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या वर्षंतं न निंदेत्तद्व्रतं ॥ १५ ॥ वसंतो हिंकारो ग्रीष्मः प्रस्तावो वर्षा उ
द्गीथः शरत्प्रतिहारो हेमंतो निधनमेतद्वैराजमृतुषु प्रोतं ॥ १ ॥ स य एवमेतद्वैराजमृतुषु प्रोतं वेद विराजति प्रजया पशु
भिर्ब्रह्मवर्चसेन सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्यर्तून्न निंदेत्तद्व्रतं ॥ १६ ॥ पृथिवी हिंका
रोंतरिक्षं प्रस्तावो द्यौरुद्गीथो दिशः प्रतिहारः समुद्रो निधनमेताः शक्वर्यो लोकेषु प्रोताः स य एवमेताः शक्वर्यो लोके
षु प्रोता वेद लोकी भवति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या लोकान्न निंदेत्तद्व्रतं ॥ १७
॥ अजा हिंकारोऽवयः प्रस्तावो गाव उद्गीथोऽश्वाः प्रतिहारः पुरुषो निधनमेता रेवत्यः पशुषु प्रोताः स य एवमेता रेवत्यः

वी हिंकार इत्यादि पूर्ववत् शक्वर्य इति नित्यं बहुवचनं ॥ रेवत्य इव लोकेषु प्रोताः लोकी भवति लोकफलेन युज्यत इत्यर्थः लो
कान्न निंदेत्तद्व्रतं ॥ १७ ॥ अजा हिंकार इत्यादि पूर्ववत् ॥ लोकदृष्टिमाह ॥ पृथिवीति ॥ कथं शक्वर्य इत्येकस्यैव साम्नो नामधेयं बहुवचना
द्बहूनि सामानि प्रतीयंते तत्राह ॥ शक्वर्य इतीति ॥ नित्यबहुवचनत्वमुभयत्र तुल्यमिति द्योतनाय वक्ष्यमाणं दृष्टांतयति ॥ रेवत्य इवेति
॥ महानाम्नीषु ऋक्षु शक्वर्यो गीयंते ता सांचाप्यो वै महानाम्नीरित्यद्भिः संबंधः स्मृत अप्सु लोकाः प्रतिष्ठिता इति च श्रुतं तथा स्मात्संबंधाल्लो

रेवत्यइतिसामनामधेयं पूर्ववन्नित्यबहुवचनांतं पशवो वै रेवत्य इति श्रुत्यंतरमाश्रित्याह॥ पशुष्विति॥१८॥ पशुविकारपयोदध्यादिना पुष्टिं गतानां दृष्टेति पशुदृष्ट्यनंतरं अंगदृष्टिमाह॥ लोमेति॥ रसो वै यज्ञायज्ञीयमिति श्रुतेरन्नरसविकारेण लोमादीनां संबंधाद्यज्ञायज्ञीयसामांगेषु प्रतिष्ठितमित्याह॥ एतदिति॥ कुणिः हस्तरहितः॥१९॥ अग्न्यादीनामंगेषु प्रतिष्ठितत्वादंगदृष्ट्यनंतरमग्न्यादिदृष्टिमुत्थापयति॥

पशुषु प्रोताः पशून्न निंदेदिति व्रतं॥१८॥ लोमहिंकारो देहावयवानां प्राथम्यात्त्वक्प्रस्तावः॥ आनंतर्यान्मांसमुद्गीथः श्रैष्ठ्यादस्थि प्रतिहारः प्रतिहृतत्वान्मज्जा निधनमंत्यादेतद्यज्ञायज्ञीयं नाम सामदेहावयवेषु प्रोतमंगी भवति समग्रांगो भवतीत्यर्थः॥ नांगेन हस्तपादादिना विहूर्छति न कुटिलीभवति पंगुः कुणी वेत्यर्थः॥ संवत्सरं संवत्सरमात्रं मज्ज्ञो मांसानि नाश्नीयान्न भक्षयेत्

पशुषु प्रोतं वेद पशुमान्भवति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या पशून्न निंदेत्तद्व्रतं॥१८॥ लोमहिंकारस्त्वक्प्रस्तावो मांसमुद्गीथोऽस्थि प्रतिहारो मज्जा निधनमेतद्यज्ञायज्ञीयमंगेषु प्रोतं॥ स य एवमेतद्यज्ञायज्ञीयमंगेषु प्रोतं वेदांगी भवति नांगेन विहूर्छति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या संवत्सरं मज्ज्ञो नाश्नीयात्तद्व्रतं मज्ज्ञो नाश्नीयादिति वा॥१९॥ अग्निर्हिंकारो वायुः प्रस्ताव आदित्य उद्गीथो नक्षत्राणि प्रतिहारश्चंद्रमा निधनमेतद्राजनं देवतासु प्रोतं॥ स य एवमेतद्राजनं देवतासु प्रोतं वेदैतासामेव देवतानां सलोकतां

बहुवचनं मज्ज्ञ उपलक्षणार्थं मज्ज्ञो नाश्नीयाद्वा सर्वदैव नाश्नीयादिति वा तद्व्रतं॥१९॥ अग्निर्हिंकारः प्रथमस्थानत्वाद्वायुः प्रस्तावः आनंतर्यसामान्यादादित्य उद्गीथः श्रैष्ठ्यान्नक्षत्राणि प्रतिहारः प्रतिहृतत्वाच्चंद्रमा निधनं कर्मिणां तन्निधनत्वादेतद्राजनं देवतासु प्रोतं॥ देवतानां दीप्तिमत्त्वाद्धि इत्फलमेतासामेवाग्न्यादीनां सलोकतां समानलोकतां सार्ष्टितां समानर्द्धित्वं सायुज्यं सयुग्भावमेकदेहदेहित्वमित्येतद्वाशब्दोऽत्र समुच्चये द्रष्टव्यः सलोकतां वेत्यादिभावनाविशेषतः॥२०॥ अग्निरित्यादिना॥ राजनस्य साम्नो देवतासु प्रोतत्वे हेतुमाह॥ देवतानामिति॥ फलविकल्पार्थो वाशब्दः स्यात्तत्र सत्वे कथं वाक्यं स्यादित्याशंक्याह॥ सलोकतां वेत्यादीति॥ कथं पुन

ननु फलत्रयमत्र समुच्चितमिष्यतां किमिति वाशब्दं गृहीत्वा विकल्प्यते तत्राह ॥ समुच्चयेति न हि मिथो विरुद्धं फलत्रयमेकत्र समुच्चेतुं श-
क्यमतो विकल्पसिद्धिरित्यर्थः ॥ ननु देवताद्दृष्ट्या राजनस्य साम्नो ध्यानाद्देवतानां निन्देति वक्तव्ये कथमन्यथोच्यते तत्राह ॥ एतद्धीति ॥
२०॥ अग्न्यादिदृष्टेरनन्तरं त्रयीविद्यादृष्टिविधाने कारणमाह ॥ अग्न्यादीति ॥ यदग्न्याद्यात्मकसामोपास्यमुक्तं तस्मादानन्तर्येणोपास्या
यास्त्रयीविद्याया युज्यते ऋग्वेदोऽग्नेर्यजुर्वेदो वायोरादित्यात्सामवेद इति श्रुतेस्त्रय्यास्तत्कार्यत्वावगमादित्यर्थः ॥ तत्कार्यत्वात्त्रयीसा

फलविशेषोपपत्तेर्गच्छति प्राप्नोति समुच्चयानुपपत्तेश्च ब्राह्मणान्न निन्देत्तद्व्रतमेते वै देवाः प्रत्यक्षं यद्ब्राह्मणा इति श्रुतेर्ब्राह्म-
णनिन्दा देवतानिन्देवेति ॥२०॥ त्रयी विद्या हिंकारः अग्न्यादिसाम्न आनन्तर्यं त्रयीविद्याया अग्न्यादिकार्यत्वश्रुतेर्हिंकारः प्र-
थमत्वात्सर्वकर्तव्यानां त्रय इमे लोकास्तत्कार्यत्वादनन्तरा इति प्रस्तावः अग्न्यादीनामुद्गीथत्वं श्रैष्ठ्यान्नक्षत्रादीनां प्रतिहर्तृ-
त्वात्प्रतिहारत्वं सर्पादीनामधःकारसामान्यान्निधनत्वमेतत्साम नामविशेषाभावात्सामसमुदायः सामशब्दः सर्वस्मि-

सार्ष्टिताँ सायुज्यं गच्छति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या ब्राह्मणान्न निन्देत्त-
द्व्रतं ॥२०॥ त्रयी विद्या हिंकारस्त्रय इमे लोकाः स प्रस्तावोऽग्निर्वायुरादित्यः स उद्गीथो नक्षत्राणि वयाँसि मरीच-
यः स प्रतिहारः सर्पा गन्धर्वाः पितरस्तन्निधनमेतत्साम सर्वस्मिन्प्रोतं ॥१॥ प्रोतं त्रयीविद्यादि हि सर्वं त्रयीविद्यादिदृ-

ष्ट्या हिंकारादिसामभक्तय उपास्या अतीतेष्वपि सामोपासनेषु येषु येषु प्रोतं यद्यत्साम तत्तद्दृष्ट्या तत्तदुपास्यमिति कर्माङ्गानां
दृष्टिविशेषणादाज्यस्येव संस्कार्यत्वात्सर्वविषयसामविदः फलं सर्वं ह भवति सर्वेश्वरो भवतीत्यर्थः ॥१॥ अकर्मफलत्वादित्यर्थः ॥

कथं सर्वस्मिन्प्रोतमित्युक्तं त्रयीविद्यादौ प्रोतमिति वक्तव्यत्वादत आह ॥ त्रयी विद्यादीति ॥ कथं पुनरत्र त्रयीविद्यादिदृष्ट्या साम ध्येय-
त्वं गम्यते तत्राह ॥ त्रयीति ॥ नन्वस्याः प्रतिज्ञायाः पूर्वेण संदर्भेण विरोधः शङ्कामर्हतीत्याह ॥ अतीतेष्वपीति ॥ तत्र हेतुमाह ॥ कर्माङ्गाना-
मिति ॥ दर्शपूर्णमासाधिकारे पत्न्यावेक्षितमाज्यं भवतीति दृष्टिविशेषणमाज्यं संस्क्रियते ॥ तथा सामप्रभेदानां दृष्टिविशेषणत्वा-

॥अथ यथाश्रुतं सर्वात्मत्वमेव किं न स्यादित्यत आह॥ निरुपचरितेति॥ सर्वेश्वर्यसामविदः॥ सर्वेश्वरत्वमित्यत्र मन्त्रं संवादयति॥ तदेत स्मिन्निति॥ परमित्यस्यैव व्याख्यानमन्यदिति॥ वस्त्वन्तराभावे हेतुमाह॥ तत्रैवेति॥ सर्वज्ञत्वं सर्वेश्वरत्वं च तच्छब्दार्थः॥२१॥ सामोपा

निरुपचरितसर्वभावे हि दिक्स्थेभ्यो बलिप्राप्त्युपपत्तेः तदेतस्मिन्नर्थे एष श्लोको मन्त्रोऽप्यस्ति यानि पञ्चधा पञ्चप्रकारेण हिंकारादिविभागैः प्रोक्तानि त्रीणि त्रीणि त्रयीविद्यादीनि तेभ्यः पञ्चत्रिकेभ्यो ज्यायो महत्तरं परं च व्यतिरिक्तमन्यद्वस्त्वन्तरं नास्तीन विद्यत इत्यर्थः तत्रैव हि सर्वस्यान्तर्भावः यस्तद्यथोक्तं सर्वात्मकं सामवेद स वेद सर्वं स सर्वं भवतीत्यर्थः॥ सर्वा दिशः सर्वे दिक्स्था अस्मा एवंविदे बलिं भोगं हरन्ति प्रापयन्तीत्यर्थः॥ सर्वमस्मि भवामीत्येवमेतत्सामोपासीत तस्यैतदेव व्रतं द्विरुक्तिः

स य एवमेतत्साम सर्वस्मिन्प्रोतं वेद सर्वं ह भवति तदेष श्लोको यानि पंचधा त्रीणि त्रीणि तेभ्यो न ज्यायः परमन्यदस्ति यस्तद्वेद स वेद सर्वं सर्वा दिशो बलिमस्मै हरन्ति सर्वमस्मीत्युपासीत तद्व्रतं तद्व्रतं॥२१॥ विनर्दि साम्नो वृणे पशव्यमित्यग्नेरुद्गीथोऽनिरुक्तः प्रजापतेर्निरुक्तः सोमस्य मृदु श्लक्ष्णं वायोः श्लक्ष्णं बलवदिन्द्रस्य क्रौञ्चं बृहस्पतेरपध्वान्तं वरुणस्य तान्सर्वानेवोपसेवेत वारुणं त्वेव वर्जयेत्॥ अमृतत्वं देवेभ्य आगायानीत्यागायेत्स्वधां पितृ

सामोपासनसमाप्त्यर्थो॥२१॥ सामोपासनप्रसंगेन गानविशेषादिसंपदुद्गातुरुपदिश्यते फलविशेषसंबन्धात् विनर्दि विशिष्टो नर्दः स्वरविशेषः ऋषभकूजितसमोऽस्यास्तीति विनर्दि गानमिति वाक्यशेषः तच्च साम्नः संबन्धि पशुभ्यो हितं पशव्यमग्नेरग्निदेवत्यं चोद्गीथ उद्गानं तदहमेवं विशिष्टं वृणे प्रार्थये इति कश्चिद्यजमान उद्गाता वा मन्यते॥ अनिरुक्तोऽमुकसमइत्य

सनं समाप्तं किमुत्तरग्रन्थेनेत्याशंक्याह॥ सामेति॥ आदिशब्देन स्वरादयो वर्णा गृह्यन्ते॥ किमित्युद्गातुर्यथोक्तोपास्तिरुच्यते तत्राह॥ फलेति मृत्युपरिहारादिफलविशेषसत्त्वसंबन्धाद्देषोपास्तिरनुष्ठेयेत्यर्थः॥ पशुभ्यो हितत्वमस्य वचनात्क्रमपि न व्यवाकस्यमिति शङ्क्याचष्टे॥ इति कश्चिदिति॥ इत्यविशेषितः॥ अनेन प्रकारेणायमिति विशेषितोऽनवच्छिद्यज्ञानो न भवतीत्यर्थः॥ तस्य प्राजापत्यत्वे हेतुमाह॥

॥अनिरुक्तत्वादिति॥ नीलपीतादिभिर्निर्वक्तुमशक्यत्वादित्यर्थः स्वरविशेषज्ञानपूर्वकमुद्गानकाले ध्यातव्यार्थमाह ॥ अमृतत्वमिति॥ स्वरोष्मव्यं-
जनादिष्वित्यत्रादिशब्देन स्थानप्रयत्नादिसंग्रहः॥ केनाप्याक्षिप्तस्योद्गातुरुद्गानकाले प्रतीकारज्ञानाय स्वरादिदेवताज्ञानमुपन्यस्यति

प्रजापतिर्दैवत्यः स गानविशेष आनिरुक्तत्वात्प्रजापतेर्निरुक्तः स्पष्टः सोमस्य सोमदेवत्यः स उच्यते। मृदु श्लक्ष्णं च गानं वा-
योर्वायुदैवत्यं तत्। श्लक्ष्णं बलवच्च प्रयत्नाधिक्योपेतं ऐन्द्रं तद्गानं क्रौञ्चं क्रौञ्चपक्षिनिनदसमं बृहस्पतेर्बार्हस्पत्यं तदपध्वा-
न्तं भिन्नकांस्यस्वरसमं वरुणस्यैतद्गानं तान्सर्वानेवोपसेवेत प्रयुञ्जीत वारुणं त्वेवैकं वर्जयेत्। अमृतत्वं देवेभ्य आगायानि साध-
यानि स्वधां पितृभ्यः आगास्यान्याशां मनुष्येभ्य आशां प्रार्थनां प्रार्थितमित्येतत्तृणोदकं पशुभ्यः स्वर्गं लोकं यजमानायान्न-

आशां मनुष्येभ्यस्तृणोदकं पशुभ्यः स्वर्गं लोकं यजमानायान्नमात्मन आगायानीत्येतानि मनसा ध्यायन्नप्रमत्तः
स्तुवीत॥ सर्वे स्वरा इन्द्रस्यात्मानः सर्व ऊष्माणः प्रजापतेरात्मानः सर्वे स्पर्शा मृत्योरात्मानस्तं यदि स्वरेषूपालभेतेन्द्र-
ं शरणं प्रपन्नोऽभूवं स त्वा प्रति वक्ष्यतीत्येनं ब्रूयात्॥ अथ यद्येनमूष्मसूपालभेत प्रजापतिं शरणं प्रपन्नोऽभूवं स त्वा

मात्मने मह्यमागायानीत्येतानि मनसा चिन्तयन्ध्यायन्नप्रमत्तः स्वरोष्मव्यञ्जनादिभ्यः स्तुवीत॥ सर्वे स्वरा अकारादय इन्द्रस्य
बलकर्मणः प्राणस्य आत्मानो देहावयवस्थानीयाः सर्व ऊष्माणः शषसहादयः प्रजापतेर्विराजः कश्यपस्यात्मानः स-
र्वे स्पर्शाः कादयो व्यञ्जनानि मृत्योरात्मानस्तमेवंविदमुद्गातारं यदि कश्चित्स्वरेषूपालभेत स्वरस्त्वया दुष्टः प्रयुक्त इत्येव-
मुपालब्धः इन्द्रं प्राणमीश्वरं शरणमाश्रयं प्रपन्नोऽभूवं स्वरान्प्रयुञ्जानोऽहं स इन्द्रो यत्तव वक्तव्यं तत्त्वा प्रति वक्ष्यति स एव
देव उत्तरं दास्यतीत्येनं ब्रूयात्॥ अथ यद्येनमूष्मसु तथैवोपालभेत प्रजापतिं शरणं प्रपन्नोऽभूवं स त्वा प्रति पेक्ष्यति संचूर्णयिष्यती-
((त्येनं ब्रूयादथ यद्येनं स्पर्शेषूपालभेत मृत्युं शरणं प्र

॥सर्वे स्वरा इति॥ शषसहा इत्यादिशब्दस्तदवान्तरभेदाभिप्रायः॥ यत्तव वक्त-
व्यमित्यस्मादूर्ध्वं तच्छब्दो द्रष्टव्यः॥ तथैव स्वरेष्विवेति यावत्॥ देवताज्ञानवत्त्वेनोद्गात्रा न प्रमत्तेन भवितव्यं स्वरादीनामन्यथोच्चारणे दे-

॥ यत इति ॥ प्रयोगकाले चिंतनीयमर्थं कथयति ॥ तथेति ॥ यथोक्तरीत्या स्वराणां प्रयोगावस्थायामित्यर्थः ॥ आदधानीति चिंतयेदिति शे
षः ॥ तथेत्यूष्मणां प्रयोगावस्थायामिति यावद्विवृतप्रयत्नोपेताः प्रयोक्तव्या इति शेषः ॥ तत्रापि ध्यातव्यं दर्शयति ॥ प्रजापतेरिति ॥ अतिद्रु
तोच्चारणेन वर्णांतरे यथा निक्षिप्तो न भवति तथा प्रयुज्यमानत्वमनभिनिक्षिप्तत्वं मृत्योरात्मानमिति वाक्योपादानं तस्यार्थमाह ॥ बा
लानिवेति ॥ यथा लोकः शनकैर्जलादिभ्यो बालान्परिहरति ॥ तथा मृत्योरात्मानमहं परिहराणीति ध्यात्वा स्पर्शानां प्रयोगः कर्तव्य इत्य

तीत्येनं ब्रूयात् यत इंद्रस्यात्मानः स्वरा इतः सर्वे स्वरा घोषवंतो वक्तव्या बलवंतस्तथाहमिंद्रे बलं ददानि बलमादधानी
ति तथा सर्व ऊष्माण अग्रस्ता अनंतःप्रवेशिता अनिरस्ता बहिरप्रक्षिप्ता विवृता विवृतप्रयत्नोपेताः ॥ प्रजापतेरात्मानं परि
ददानि प्रयच्छानीति सर्वे स्पर्शा लेशेन शनकैरनभिनिहिता अनभिनिक्षिप्ता वक्तव्या मृत्योरात्मानं बालानिव शनकैः परि
हरन् मृत्योरात्मानं परिहराणीति ॥ २२ ॥ ओंकारस्योपासनविध्यर्थं त्रयो धर्मस्कंधा इत्याद्यारभते ॥ नैवं मंतव्यं सावयव

प्रतिवक्ष्यतीत्येनं ब्रूयादथ यद्येनं स्पर्शेषूपालभेत मृत्युं शरणं प्रपन्नोऽभूवं स त्वा प्रति धक्ष्यतीत्येनं ब्रूयात्स
र्वे स्वरा घोषवंतो बलवंतो वक्तव्या इंद्रे बलं ददानीति सर्व ऊष्माणोऽग्रस्ता अनिरस्ता विवृता वक्तव्याः ॥ प्रजापतेरा
त्मानं परिददानीति सर्वे स्पर्शा लेशेनानभिनिहिता वक्तव्या मृत्योरात्मानं परिहराणीति ॥ २२ ॥ त्रयो धर्मस्कंधा य

भूतस्यैवोद्गीथादिलक्षणस्योंकारस्योपासनात्फलं प्राप्यत इति ॥ किं तर्हि यत्सर्वैरपि सामोपासनैः कर्मभिश्चाप्राप्यं तत्फ
लममृतत्वं केवलादोंकारोपासनात्प्राप्यत इति तत्स्तुत्यर्थं सामप्रकरणे तदुपन्यासः ॥ त्रयस्त्रिसंख्याका धर्मस्कंधा धर्मप्रवि

र्थः ॥ २२ ॥ अधिकृताधिकाराण्यंगावबद्धान्युपासनान्युक्तानि संप्रति स्वतंत्राधिकारिणो भागा इत्यर्थः के त इत्याह यज्ञोऽग्निहोत्रा
दिरोंकारोपासनविधानमारभते ॥ ओंकार इति ॥ अंगावबद्धोपासनाधिकारे यथोक्तस्वतंत्रोपासनविधाने कोऽभिप्रायः श्रुतेरित्याशंका
ह ॥ नैवमिति ॥ न स्वतंत्रस्य तस्योपासनादित्येवकारार्थः ॥ कथं तर्हि मंतव्यमित्यपेक्षायामाह ॥ किं तर्हीति ॥ स नियमस्य ॥ प्राङ्मुखत्वादि

अभ्यासश्च ।स्वीकरणंविचारोजपःशिष्येभ्योवादानमावृत्तिश्चेतिपंचविधःवेदाध्ययनेनतस्यसांगत्वात्पृथक्फलवत्वंनास्ती
तिमन्वानोविशिनष्टि॥बहिर्वेदीति॥गृहस्थेननदान्तमनेत्यर्थः॥कथंगृहस्थस्यप्राथम्यंब्रह्मचारिणस्तथात्वादित्याशंक्याह॥एक
इत्यर्थ इति॥उक्तव्याख्यानेवाक्यशेषस्यगमकत्वमाह॥द्वितीयेति॥प्राथम्यमेवप्रथमशब्दस्यनार्थोब्रह्मचारिप्राथम्यप्रसि
द्धिविरोधादित्याशंक्याह॥नाद्यार्थइति॥कीदृगत्रपरिव्राड्गृह्यतेतत्राह॥नेति॥कुतोब्रह्मसंस्थोनगृह्यतेतत्राह॥ब्रह्मसंस्थस्ये

देरभ्यासोदानंबहिर्वेदियथाशक्तिद्रव्यसंविभागोभिक्षमाणेभ्यइत्येषप्रथमोधर्मस्कंधोगृहस्थसमवेतत्वात्तन्निर्व
र्तकेनगृहस्थेननिर्दिश्यतेप्रथमएकइत्यर्थः॥द्वितीयतृतीयश्रवणान्नाद्यार्थः॥तपएवद्वितीयस्तपइतिकृच्छ्रचांद्राय
णादितद्वांस्तापसःपरिव्राड्वानब्रह्मसंस्थआश्रममात्रसंस्थःब्रह्मसंस्थस्यत्वमृतत्वश्रवणात्द्वितीयोधर्मस्कंधोब्र

ज्ञोऽध्ययनंदानमितिप्रथम स्तपएवद्वितीयोब्रह्मचार्याचार्यकुलवासीतृतीयोऽत्यंतमात्मानमाचार्यकुलेऽ
वसादयन्सर्वएतेपुण्यलोकाभवंतिब्रह्मसंस्थोऽमृतत्वमेति॥

ह्मचार्याचार्यकुलेवस्तुंशीलमस्येत्याचार्यकु
लवास्यत्यंतंयावज्जीवमात्मानंनियमैराचार्यकुलेवसादयन्क्षपयन्तृतीयोधर्मस्कंधोऽत्यंतमित्यादिविशेषणान्नै
ष्ठिकइतिगम्यते उपकुर्वाणस्यस्वाध्यायग्रहणार्थत्वान्नपुण्यलोकत्वंब्रह्मचर्येणसर्वएतेत्रयोप्याश्रमिणोयथोक्तैर्ध
र्मैःपुण्यलोकाभवंतिपुण्योलोकोयेषांतइमेपुण्यलोकाआश्रमिणोभवंति॥अवशिष्टस्त्वनुक्तःपरिव्राड्ब्रह्मसं
स्थोब्रह्मणिसम्यक्स्थितःसोऽमृतत्वंपुण्यलोकविलक्षणममरणभाव

इति॥वानप्रस्थग्रहणंमुख्यपरिव्राजोपिप्र
दर्शनार्थंब्रह्मचारीत्यादिवाक्यस्यनैष्ठिकविषयत्वंविशेषणसामर्थ्याद्दर्शयति॥अत्यंतमित्यादीति॥अथोपकुर्वाणस्यात्रब्र
ह्मचारित्वाविशेषात्किमित्युपादानंनभवेत्तत्राह॥उपकुर्वाणस्येति॥ननुब्रह्मचारिणोब्रह्मचर्येणपुण्यलोकोत्रश्रूयतेतत्राह॥
सर्वइति॥कथमाश्रमिणांपुण्यलोकत्वविशेषवतांतदात्मत्वमुच्यतेतत्राह॥पुण्यइति॥आश्रमिषुप्रदर्श्यमानेषुकिंपरिव्राडप्युक्तो

शंकयोक्तं ॥ आत्यंतिकमिति ॥ तस्यापेक्षितत्वाभावे हेतुमाह ॥ पुण्यलोकादिति ॥ अमृतत्वस्य पुण्यलोकात्पृथग्विभागकरणात्ततोऽस्य त्वा
दात्यंतिकत्वसिद्धिरिति योजना ॥ उक्तमेवार्थं व्यतिरेकमुखेन साधयति ॥ यदि चेत्यादिना ॥ ब्रह्मशब्दस्य यथाश्रुतं मुख्यमर्थं गृहीत्वा परब्र
ह्मात्मना साक्षात्कारवतो निरंकुशममृतत्वमुक्तं प्रकरणालोचनया तु प्रणवप्रतीकब्रह्मोपासकस्य क्रमेणामृतत्वं भेदबुद्धेरनपायाद्द्रष्टव्यं
॥ कर्मिणाममृतवत्फलवत्त्वाभिधानेन तन्निंदया ब्रह्मसंस्थतास्तुतिदर्शनात्तस्याश्च विध्यर्थत्वादमृतत्वकामो ब्रह्मसंस्थः स्यादित्येकार्थप
त्वादेकमिदं वाक्यमित्याह ॥ अत्रेत्यादिना ॥ स्तुतये फलविधये चेदं वाक्यं किं न स्यादित्याशंक्याह ॥ स्तुतये चेति ॥ अर्थैकत्वादेकं वाक्यं त
द्भेदे तद्भेदनियमादित्यर्थः ॥ किं परं तर्हीदं वाक्यं तत्राह ॥ तस्मादिति ॥ स्मृतिप्रसिद्धेति ॥ श्रुतेः स्मृत्यर्थानुवादत्वे वैपरीत्यात्तदनुमितश्रुतिसिद्ध

मात्यंतिकमेतिनापेक्षितं देवाद्यमृतत्ववत्पुण्यलोकात्पृथगमृतत्वस्य विभागकरणाद्यदि च पुण्यलोकातिशयमात्रममृ
तत्वमभविष्यत्ततः पुण्यलोकत्वाद्विभक्तं नावक्ष्यत् विभक्तोपदेशात्त्वात्यंतिकममृतत्वमिति गम्यते ॥ अत्र चाश्रमधर्म
फलोपन्यासः प्रणवसेवास्तुत्यर्थं न तत्फलविध्यर्थं स्तुतये च प्रणवसेवाया आश्रमधर्मफलविधये चेति हि भिद्येत वा
क्यं तस्मात्स्मृतिप्रसिद्धाश्रमफलानुवादेन प्रणवसेवाफलममृतत्वं ब्रुवन्प्रणवसेवां स्तौति ॥ यथा पूर्णवर्मणः सेवा भक्त
परिधानमात्रफला राजवर्मणस्तु सेवा राज्यतुल्यफलेति तद्वत्प्रणवश्च तत्सत्यं परं ब्रह्म तत्प्रतीकत्वादेतद्ध्येवाक्षरं ब्रह्मैत
द्ध्येवाक्षरं परमित्याद्याम्नायात्काठके युक्तं तत्सेवातोऽमृतत्वं ॥ अत्राहुः केचिच्चतुर्णामाश्रमिणामविशेषेण स्वकर्मानु
ष्ठानात्पुण्यलोकता इहोक्ता ज्ञानवर्जितानां सर्व एते पुण्यलोका भवंतीति ॥ तियोज्यं स्तुतिमेव दृष्टांतावष्टंभेन स्पष्टयति ॥ यथे

त्यादिना ॥ इतिशब्दोऽध्याहृतस्तुतये इत्यनेन संबध्यते ॥ ननु ब्रह्मतत्त्वसेवातोऽमृतत्वं भवति न प्रणवसेवातस्तत्किमिति तत्स्तु
तिरित्याशंक्याह ॥ प्रणवश्चेति ॥ तत्र प्रमाणं दर्शयन्फलितमाह ॥ एतद्ध्येवेति ॥ स्वव्याख्यानं निर्दोषमुक्त्वा ब्रह्मसंस्थोऽमृतत्वमेतीत्य
त्र वृत्तिकारीयव्याख्यानमनुत्थापयति ॥ अत्रेति ॥ ये खल्वाश्रमिणश्चत्वारो ज्ञानवर्जितास्तेषामप्यविशेषेण स्वाश्रमविहितधर्मानु
ष्ठानेन पुण्यलोकभागिता सर्व एते पुण्यलोका भवंत्यत्रोक्ता न तु पूर्वस्मिन्ग्रंथे परिव्राडनुक्तः सन्नवशेषितोऽस्तीति योजना ॥ ननु पूर्वं

वर्जितदोषं

तथा चासावविशेषितस्तत्राह ॥ परिव्राजकस्यापीति ॥ ज्ञानं यमा नियमाश्चोपायभूता इति यावत् ॥ परिव्राडपि पूर्वं अभिहितश्चेद्ब्रह्मसं
स्थवाक्यस्य कोऽर्थः स्यादित्याशंक्याह ॥ अतइति ॥ परिव्राजकस्यानवशिष्टत्वेन चतुर्णामुपदिष्टत्वाविशेषेऽतः शब्दार्थः सामान्यनिर्देशो हे
तुमाह ॥ चतुर्णामिति ॥ अप्रतिषेधाच्चेति च्छेदः ॥ नन्वाश्रमान्तराणां कर्मार्थत्वात्तत्रैव व्यापृतत्वान्न ब्रह्मसंस्थतार्थासामर्थ्यमिति परिव्राज
कस्य तु निर्व्यापारस्य ब्रह्मसंस्थता सुकरेत्यत आह ॥ स्वकर्मेति ॥ ननु परिव्राजके ब्रह्मसंस्थशब्दो रूढो यथादिशब्दवत्तन्न स चाश्रमान्तर
मास्कन्दतीति तत्राह ॥ न चेति ॥ निमित्तमादाय प्रवृत्तत्वेऽपि किमिति रूढिर्न स्यादित्याशंक्याह ॥ नहीति ॥ नन्वेवं शब्दो नैमित्तकोऽपि परिव्राजक
मात्रमधिकरोति ॥ तत्रैव निमित्तस्य सत्त्वात्तत्राह ॥ सर्वेषां चेति ॥ ननु पंकजादिशब्दानिमित्तमस्तीति एतावता नेन्दीवरादौ वर्तते किंतु तामर

नात्र परिव्राडविशेषितः परिव्राजकस्यापि ज्ञानं यमा नियमाश्च तप एवेति ॥ तप एव द्वितीय इत्यत्र तपःशब्देन परिव्राट्ताप
सौ गृहीतौ ॥ अतस्तेषामेव चतुर्णां यो ब्रह्मसंस्थः प्रणवसेवकः सोऽमृतत्वमेतीति चतुर्णामधिकृतत्वाविशेषाद्ब्रह्मसंस्थत्वेऽप्रतिषे
धात्स्वस्वकर्मच्छिद्रे च ब्रह्मसंस्थतायां सामर्थ्योपपत्तेः ॥ न च यववराहादिशब्दवद्ब्रह्मसंस्थशब्दः परिव्राजके रूढो ब्रह्मणि संस्थि
तिनिमित्तमुपादाय प्रवृत्तत्वान्न हि रूढशब्दा निमित्तमुपाददते सर्वेषां च ब्रह्मणि स्थितिरुपपद्यते यत्र यत्र निमित्तमस्ति ब्रह्म
णि संस्थितिस्तस्य तस्य निमित्तवतो वाचकं सन्तं ब्रह्मसंस्थशब्दं परिव्राडेकविषये संकोचकारणाभावान्निरोद्धुमयुक्तं न च पा
रिव्राज्याश्रमधर्ममात्रेणामृतत्वं ज्ञानानर्थक्यप्रसंगात्पारिव्राज्यधर्मयुक्तमेव ज्ञानममृतत्वसाधनमिति चेन्नाश्रमधर्मत्वा

सादिमात्रविषयीकुर्वन्तीति तथा ब्रह्मसंस्थशब्दो निमित्तवत्त्वेऽपि गृहस्थादावनवस्थितः परिव्राजकमेव परं गोचरयेदत आह ॥ यत्रेति ॥ ब
ह्मसंस्थशब्दं निरोद्धुमयुक्तमिति संबन्धः ॥ रूढिपक्षे दोषान्तरमाह ॥ न चेति ॥ धर्मसहितस्य ज्ञानस्य ज्ञानसहितस्य वा धर्मस्यामृतत्वसाध
नत्वान्न ज्ञानानर्थक्यमित्याशंक्याद्यं पक्षमनुवदति ॥ पारिव्राज्येति ॥ पारिव्राज्यधर्मेणैवेति नायं नियमो गृहस्थादिधर्माणामप्याश्रमध
र्मत्वेन तुल्यत्वान्न हि विशिष्टज्ञानममृतत्वहेतुरित्यपि वक्तुं सुकरत्वादित्याह ॥ नाश्रमेति ॥ द्वितीयं दूषयति ॥ धर्मो वेति ॥ यदि परिव्राजकध
र्मो ज्ञानविशिष्टो मुक्तिहेतुरित्युच्यते तदेतरदपि मुक्तिहेतुत्वं सर्वाश्रमधर्माणां ज्ञानविशिष्टानामविशिष्टं तथा च रूढिपक्षेऽपि न परिव्राजक

कृतश्च परिव्राजकस्यैव मुक्तिभाक्त्वमसिद्धमित्याह॥ न चेति॥ मा तर्हि कस्यचिदपि मुक्तिर्भूयादिति तत्राह॥ ज्ञानादिति॥ ब्रह्मसंस्थवाक्या
र्थमुपसंहरति॥ तस्मादिति॥ परिव्राजकस्यैवामृतत्वमित्यनियमात् ज्ञानादेवेति नियमादित्यर्थः॥ ब्रह्मसंस्थः समुच्चयानुष्ठायीति वृत्ति
कारमतं निराकरोति॥ न कर्मेति॥ न कर्मजनितमन्यस्य शुद्धब्रह्मात्मतासाक्षात्कारस्य च मिथो विरोधान्न समुच्चयसिद्धिरिति वक्तुं संग्रहवा
क्यं विवृणोति॥ कर्त्रादीति॥ कर्मविधयो निषिद्धाश्चेति द्रष्टव्यं॥ तथापि प्रत्ययत्वाविशेषात्कारकाकारकविधिनिषेधयोर्नैव विरोधोस्तीत्या
शंक्याह॥ तच्चेति॥ प्रत्ययत्वेपि शास्त्रीयाशास्त्रीयत्वाविद्याविद्याभावेन विरोधोस्तीत्यर्थः सति विरोधे किं स्यादित्याह॥ स्वाभाविकमिति

ज्ञानविशिष्टोमृतत्वसाधनमित्येतदपि सर्वाश्रमधर्माणामविशिष्टं जल्पवचनमस्ति परिव्राजकस्यैव ब्रह्मसंस्थस्य मोक्षो
नान्येषामिति ज्ञानान्मोक्ष इति च सर्वोपनिषदां सिद्धान्तस्तस्माद्य एव ब्रह्मसंस्थः स्वाश्रमविहितकर्मवान्सोमृतत्वमेतीति॥
न कर्मनिमित्तविद्याप्रत्यययोर्विरोधात्॥ कर्त्रादिकारकक्रियाफलभेदप्रत्ययवत्त्वं हि निमित्तमुपादायेदं कुर्विदं माकार्षी
रिति कर्मविधयः प्रवृत्तास्तच्च निमित्तं न शास्त्रकृतं सर्वप्राणिषु दर्शनात्सदेकमेवाद्वितीयमात्मैवेदं सर्वं ब्रह्मैवेदं सर्वमिति
शास्त्रजन्यः प्रत्ययो विद्यारूपः स्वाभाविकं क्रियाकारकफलभेदप्रत्ययं कर्मविधिनिमित्तमनुपमृद्य न जायते भेदाभेद
प्रत्यययोर्विरोधान्न हि तैमिरिकद्विचन्द्रादिभेदप्रत्ययमनुपमृद्य तिमिरापगमे चन्द्राद्येकत्वप्रत्यय उपजायते विद्याविद्या
प्रत्यययोर्विरोधात्तत्रैवं सति यं भेदप्रत्ययमुपादाय कर्मविधयः प्रवृत्ताः स यस्योपमर्दितः सदेकमेवाद्वितीयं तत्सत्यं विकार
भेदोनृतमित्येतद्वाक्यप्रमाजनितेनैकत्वप्रत्ययेन स सर्वेभ्यः कर्मभ्यो निवृत्तो निमित्तनिवृत्तेः स च निवृत्तकर्मा ब्रह्मसंस्थ उच्यते स
च परिव्राडेवान्यस्यासंभवात् अन्यो ह्यनिवृत्तभेदप्रत्ययः सोन्यत्पश्यन्शृण्वन्मन्वानो विजानन्निदं प्राप्नुयामिति हि मन्य
ते तस्यैवं कुर्वतो न ब्रह्मसंस्थता वाचारंभणमात्रविकारानृताभिसंधिप्रत्ययवत्त्वात्

विद्यारूपः प्रत्यय इति पूर्वेण संबंधः॥ तत्रो
क्तमेव हेतुं स्मारयति॥ भेदेति॥ तत्र लोकप्रसिद्धमुदाहरणमाह॥ न हीति॥ भेदाभेदप्रत्यययोर्विद्याविद्यात्मनोर्विरोधेन समुच्चयासंभ
वानदनुष्ठायी ब्रह्मसंस्थो न भवति चेत्कस्तर्हि ब्रह्मसंस्थः स्यादित्याह॥ तत्रेति॥ उक्तरीत्या समुच्चयायोगे सतीति यावत् अन्यस्य गृहस्था

विकारेनृते शरीरादौ ब्राह्मणोहमित्याद्यभिसंधानरूपो मिथ्याभिनिवेशात्मको यः प्रत्ययस्तद्वत्त्वादिति हेत्वर्थः॥ ननु ब्रह्मविदोपि संस्का
रवशात्तद्वैतसत्यत्वाभिनिवेशपूर्वकं कर्मप्रवृत्तिसंभवान्न ब्रह्मसंस्थतासु प्रतिपाद्येत्यत आह॥ न चेति॥ असत्यमिदमिति विवेकेनस
त्यत्वाभिनिवेशे शिथिलीकृतेपुनः सत्यत्वाभिनिवेशेन न प्रवृत्तिरुपपद्यते आभासरूपानुभेदबुद्धिर्न कर्मप्रवृत्तिहेतुरित्यर्थः॥ अद्वैत
ज्ञानवतो निमित्तनिवृत्त्या कर्मनिवृत्तिरवश्यंभाविनीत्युक्ते विपक्षे दोषमाह॥ उपमर्दितेपीति॥ एकत्वप्रत्ययजनकं शास्त्रं न भवत्येवप्र
माणं पूर्वप्रवृत्तभेदप्रत्ययविरोधादिति मतमाशंक्याह॥ अभक्ष्येति॥ यथा नकलंजं भक्षयेदिति शास्त्रं पूर्वप्रवृत्तकलंजादिभक्षणप्रत्ययवि
रोधेपि प्रमाणं रागादिदोषात्तस्य प्रत्ययस्याप्रमाणत्वात्तथैव भेदप्रत्ययस्याविद्यात्मत्वात्प्रामाण्यासंभवान्न विरोधेपि अद्वैतशास्त्रस्यायुक्तमे

न चासत्यमित्युपमर्दिते भेदप्रत्यये सत्यमिदमनेन कर्तव्यं मयेति प्रमाणप्रमेयबुद्धिकल्प्यते आकाशादूवतलमलिनबु
द्धिविवेकिन उपमर्दितेपि भेदप्रत्यये कर्मभ्यो न निवर्तते चेत्प्रागिव भेदप्रत्ययोपमर्दनादेकत्वप्रत्ययविधायकं वाक्यमप्रमा
णीकृतं स्यात्॥ अभक्ष्यभक्षणादिप्रतिषेधवाक्यानां प्रामाण्यवद्युक्तमेकत्ववाक्यस्यापि प्रामाण्यं सर्वोपनिषदां न त्वरत्वा
न कर्मविधीनामप्रामाण्यप्रसंग इति चेन्नानुपमर्दितभेदप्रत्ययवत्पुरुषविषये प्रामाण्योपपत्तेः स्वप्नादिप्रत्यय इव प्राक्
प्रबोधाद्विवेकिनामकरणात्कर्मविधिप्रामाण्योच्छेद इति चेन्न काम्यविध्यनुच्छेद

१ वप्रामाण्यमित्यर्थः॥ कार्यपरत्वाद्वेदे तात्प
र्याभावात्कुतस्तच्छास्त्रस्य प्रामाण्यमित्याशंक्याह॥ सर्वोपनिषदामिति॥ उपक्रमोपसंहारैकरूप्यादिषड्विधतात्पर्यलिंगदर्शनाद्वैते
तात्पर्यतामामवसीयते तेन युक्तमद्वैतशास्त्रस्य स्वार्थे प्रामाण्यमित्यर्थः॥ भेदालंबनकर्मविधिविरोधान्नाद्वैतशास्त्रं स्वार्थे मानमिति शंक
ते॥ कर्मविधीनामिति॥ यथा स्वप्नप्रत्ययो गंधर्वनगरादिप्रत्ययश्च प्राक्तत्वज्ञानादृत्तं पुरुषमधिकृत्य प्रमाणं॥ तथा कर्मविधीनामप्य
विदुषि प्रामाण्यसंभवान्नाद्वैतशास्त्रस्य तद्विरोधोस्तीति परिहरति॥ नानुपमर्दितेति॥ यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जन इति स्मृतेस्त
त्वदर्शिनां कर्मभ्यः सकाशादुपरमे सत्यन्येष्वपरेष्वपि तेन तथा च कर्मविधिविरोधतादवस्थ्यमिति शंकते॥ विवेकिनामिति॥ प्रकृतिपरवश
त्वाल्लोकस्य नासौ विवेकी प्रकृतिमनुवर्तते प्रकृतिं यांति भूतानि निग्रहः किं करिष्यतीति स्मृतेस्ततो ब्रह्मविदां नैष्कर्म्येपि न कर्मविधीना

तदेवप्रपंचयति नहीति॥इति नोच्छिद्यंत इति शेषः अस्तु प्रकृते किमायातं तदाह॥तथेति॥अनुष्ठीयंत एवेति तत्तद्धीनामनुच्छित्तिरिति
वाक्यशेषः॥अद्वैतवेदिनोऽवश्यंभाविनी कर्मनिवृत्तिरित्युक्तं दृष्टांतेन विघटयन्नाशंकते॥परिव्राजकानामिति॥अद्वैतधीस्वभावा
लोचनया भिक्षाटनादिप्रवृत्तिरप्यघटमानैवेति मन्वानः समाधत्ते॥नप्रामाण्येति॥समुच्चयस्याप्रामाणिकत्वनिरूपणायां प्रवृत्त्याभा
समूलस्य प्रवृत्त्याभासस्य नोदाहरणत्वमग्निहोत्रादिप्रवृत्तेरपि आभासत्वे प्रामाणिकसमुच्चयसिद्धांतहानिरतो नैनत्वेवाद्यमित्यर्थः॥त
देवदृष्टांतेन स्पष्टयति॥नहीति॥तद्वद्विवेकिना कर्म क्रियमाणं दृष्टमिति विवेकिभिरपि तन्न क्रियते भिक्षाटनादि॥प्रवृत्त्याभासत्व
प्रामाणिकोऽग्निहोत्रादिप्रवृत्तेर्नोदाहरणमिति शेषः॥इतश्च नेदमुदाहरणमित्याह॥नचेति॥अग्निहोत्रादावपि प्रवर्तकमस्तीति शं
दर्शनान्न हि कामात्मता न प्रशस्तेत्येवं विद्वद्भिः काम्यानि कर्माणि नानुष्ठीयंत इति काम्यकर्मविषयमुच्छिद्यंते॥
अनुष्ठीयंत एव कामिभिरिति न चाब्रह्मसंस्थब्रह्मविद्भिर्नानुष्ठीयंते कर्माणीति न तद्विषयमुच्छिद्यंते अब्रह्मविद्भिरनुष्ठी
यंत एवेति परिव्राजकानां भिक्षाचरणादिवदुपन्नैकत्वमन्ययानामपि गृहस्थादीनामग्निहोत्रादिकर्मानिवृत्तिरिति
चेन्न॥नप्रामाण्यचिंतायां पुरुषप्रवृत्तेर्दृष्टांतत्वान्नहि नाभिचरेदिति प्रतिषिद्धमप्यभिचरणं कश्चित्कुर्वन्दृष्ट इति श
मोहद्वेषरहितेनापि विवेकिनाभिचरणं क्रियते॥नच कर्मविधिप्रवृत्तिनिमित्तभेदप्रत्ययबाधितेऽग्निहोत्रादौ प्रवर्तकनि
मित्तमस्ति परिव्राजकस्येव भिक्षाचरणादौ बुभुक्षादि प्रवर्तकं इहाप्यकरणे प्रत्यवायभयं प्रवर्तकमिति चेन्न भेदप्रत्य
यवतोऽधिकृतत्वादिदमन्यथावा न तूपमर्दितभेदबुद्धिर्विद्यया यः स कर्मण्यधिकृत इत्यवोचाम यो ह्यधिकृतः कर्मणि तस्य
तत्करणे प्रत्यवायो न निवृत्ताधिकारस्य गृहस्थस्येव ब्रह्मचारिणो विशेषधर्माननुष्ठाने एवं तर्हि सर्वः [illegible]कते॥इहापीति॥अ
करणकृतं प्रत्यवायाख्यं भयं अविवेकिनो विवेकिनो वेति विकल्प्याद्यमंगीकरोति॥नभेदेति॥कर्मणि भेदबुद्धिमतोऽधिकृतत्वेपिन
स्य तत्करणे किं स्यादित्याशंक्याह॥योहीति॥द्वितीयं दूषयति॥ननिवृत्तेति॥विवेकिनो निवृत्ताधिकारस्य प्रत्यवायाप्राप्त्या कर्म
सु प्रवर्तकाभावात्कर्मभ्यो निवृत्तिरूपं पारिव्राज्यं चेदिति प्रसंगस्तर्हीति शंकते॥एवं तर्हीति॥कर्मसाधनस्य यज्ञोपवीतादिस्त्यज्यते

ततो यज्ञोपवीताद्यंतरेण गार्हस्थ्यादिभावासंभवान्न त्यजते चेन्न स्वाश्रमधर्मः ततो यज्ञोपवीताद्यंतरेण गार्हस्थ्यादिभावासंभवान्न पारिव्राज्यप्राप्तिः॥ साधनेति संग्रहस्य साध्यार्थत्वादिति परिहरति॥ न स्वस्वामित्वेति॥ इतश्चानाश्रमान्तरेषु पारिव्राज्यमित्याह॥ कर्मार्थत्वादिति॥ जायापुत्रवित्तसपत्न्यानंतर्यश्रुतावथशब्दार्थः॥ गृहस्थादिषु स्वाश्रमस्थेष्वेव पारिव्राज्यस्य दुर्वचत्वं फलितमाह॥ तस्मादिति॥ विवेकवशाद्यज्ञोपवीतादौ स्वकृत्वार्थे स्वामित्वबुद्ध्यभावादिति यावत्॥ यत्तु परिव्राजकस्य निवृत्ताधिकारस्य प्रत्यवायप्राप्तिरिति तत्रानिष्टापत्तिमाशंक्याह॥ एकत्वेति॥ न ह्विषयप्रत्ययस्य विधिकृत्वादेकत्वमस्यादि चाक्यतज्जनितेनैकत्वविषयेण प्रत्ययेनेति यावत् तथा च यथेष्टचेष्टाप्रसक्तिरिति शेषः॥ ज्ञानिनां वैधं यमादि नास्ति तत्प्रवृत्तिस्तु संस्कारवशादित्याशयेनाह॥ ननु मुमु

स्वाश्रमस्य उत्पन्नैकत्वप्रत्ययः परिव्राडिति चेन्न स्वस्वामित्वभेदबुद्ध्यनिवृत्तेः कर्मार्थत्वाच्चेतराश्रमाणाम् अर्थं कर्म कुर्वीयेति श्रुतेः तस्मात्स्वस्वामित्वाभावाद्भिक्षुरेक एव परिव्राट् न गृहस्थादिः॥ एकत्वप्रत्ययविधिजनितेन प्रत्ययेन विधिनिमित्तभेदप्रत्ययस्योपमर्दितत्वाद्यमनियमाद्यनुपपत्तिः परिव्राजकस्येति चेन्न बुभुक्षादिनैकत्वप्रत्ययात्प्रच्यावितस्योपपत्तेर्निवृत्त्यर्थत्वान्न च प्रतिषिद्धसेवाप्राप्तिरेकत्वप्रत्ययोत्पत्तेः प्रागेव प्रतिषिद्धत्वान्न हि रात्रौ कूपे कंटके वा पतितउदितेपि सवितरि पतति तस्मिन्नेव तस्मात्सिद्धो निवृत्तकर्मा भिक्षुक एव ब्रह्मसंस्थ इति॥ यत्पुनरुक्तं सर्वेषां ज्ञानवर्जितानां पुण्यलोकतेति सत्यमेतज्ज्ञानवर्जितत्वात्तपःशब्देन परिव्राडप्युक्त इत्येतत्तदसत् ((

दिनेति॥ यो हि दृष्टेन दोषेण तत्त्वज्ञानात्कथंचित्प्रच्युतिमापादितः तस्य स्वसंस्कारवशाद्यमनियमाद्यनुष्ठानमुपपद्यते तस्य दोषवशात्तत्त्वप्रच्युतिप्रसूतानिष्टचेष्टानिवृत्त्यर्थत्वेनावश्यानुष्ठेयत्वात्तथा च न यथेष्टचेष्टापत्तिरित्यर्थः॥ इतश्च विदुषो वैधप्रवृत्त्यभावेपि यथेष्टचेष्टा नास्तीत्याह॥ न चेति॥ अविदुषोपि न यथेष्टचेष्टा विदुषस्तु सा कुतस्त्येति दृष्टान्तेन स्पष्टयति॥ नहीति॥ अन्येषां ब्रह्मसंस्थत्वासंभवे फलितमुपसंहरति॥ तस्मादिति॥ परोक्तमनूद्यांगीकरोति॥ यत्पुनरिति॥ उक्तमर्थांतरमनुवदति॥ यच्चेति॥ किं परिव्राजकस्य ज्ञानहीनस्याश्रममात्रनिष्ठस्य तपःशब्देनोपादानमाहो ज्ञानवतोपीति विकल्पाद्यमंगीकृत्य द्वितीयं दूषयति॥ तदसदिति॥ ज्ञानवतोपि त

पवित्रत्वात्तपःशब्देनोपादानमुचितमिति शंकित्वा प्रत्याह ॥ कस्मादित्यादिना ॥ तपःशब्देनासौ गृहीत इति शेषः तस्य च ज्ञानवतो विशिष्ट
त्वं प्रागेवोपदिष्टमित्याह ॥ स एवेति ॥ इतश्च परमहंसपरिव्राजको न तपःशब्देन परामृष्ट इत्याह ॥ एकत्वेति ॥ तदेव स्फारयति ॥ भेदेति ॥ प
नुकर्मच्छिद्रे गृहस्थादेरपि ब्रह्मसंस्थतासामर्थ्यमिति तत्प्रत्याह ॥ एतेनेति ॥ अनिवृत्तभेदप्रत्ययस्य ब्रह्मसंस्थत्वासंभवेनेति यावत्साम
र्थ्यं प्रत्युक्तमिति संबंधः ॥ यत्तु चतुर्णामपि ब्रह्मसंस्थता या अप्रतिषेध इति तत्राह ॥ अप्रतिषेधश्चेति ॥ एकत्वोपदेशेन भेदप्रत्ययनिरासा
दनिवृत्तभेदप्रत्ययस्यार्थात् ब्रह्मसंस्थता प्रतिषिद्धेत्यर्थः ॥ पारिव्राज्यमात्रेणामृतत्वे ज्ञानवैयर्थ्यमुक्तं परिहरति ॥ तथेति ॥ चोद्यांतरमनू
द्योक्तपरिहारं स्मारयति ॥ यत्तु नरूक्तमिति ॥ तत्र रूढोयं शब्द इति शेषं पंचम्या सूचयति ॥ चोद्यांतरमनूद्य दूषयति ॥ यत्तु नेत्यादिना ॥

कस्मात्परिव्राजकस्यैव ब्रह्मसंस्थतासंभवात्स एव ह्यवशेषित इत्यवोचाम एकत्वविज्ञानवतोऽग्निहोत्रादिवत्तपो निवृत्ते
श्च भेदबुद्धिमत एव हि तपःकर्तव्यता स्यादेतेन कर्मच्छिद्रे ब्रह्मसंस्थतासामर्थ्यमप्रतिषेधश्च प्रत्युक्तः ॥ तथा ज्ञानवानेव निवृ
त्तकर्मा परिव्राडिति ज्ञानवैयर्थ्यं प्रत्युक्तं यत्तु नरूक्तं यववराहादिशब्दवत्परिव्राजके न रूढो ब्रह्मसंस्थशब्द इति परिहृतमे
तत्तस्यैव ब्रह्मसंस्थतासंभवान्नान्यस्येति यत्तु नरूक्तं रूढशब्दाः निमित्तं नोपाददत इति तन्न गृहस्थतक्षपरिव्राजकादिश
ब्ददर्शनात् गृहस्थितिपारिव्राज्यतक्षणादिनिमित्तोपादाना अपि गृहस्थपरिव्राजकावाश्रमविशेषे विशिष्टजातिमति च गृ
हस्थ इति परिव्राजक इति च तक्षेति रूढा दृश्यंते शब्दाः न यत्र यत्रतानि निमित्तानि तत्र तत्र वर्तंते प्रसिद्ध्यभावात्तथेहापि ब्र
ह्मसंस्थशब्दो निवृत्तसर्वकर्मतत्साधनपरिव्राडेकविषयोऽत्याश्रमिणि परमहंसाख्ये वृत्तः इह भवितुमर्हति मुख्यामृतत्व
फलश्रवणादतश्चेदमेवैकं वेदोक्तं पारिव्राज्यं न यज्ञोपवीतत्रिदंडकमंडल्वादिपरिग्रहवान्मुंडोऽपरिग्रहोऽसंग इति च श्रुति

आदिपदेन पंकजादिशब्दो गृह्यते ॥ उक्तं प्रपंचयति ॥ गृहस्थेतीति ॥ इहापीति प्रकृतवाक्योपादानं प्रकृते परमहंसे परिव्राजके ब्र
ह्मसंस्थपदमित्यत्र हेतुमाह ॥ मुख्येति ॥ इतश्च पारमहंस्यमेव श्रौतमित्याह ॥ अतश्चेति ॥ एवकारार्थं कथयति ॥ न यज्ञोपवीतेति ॥
इति शब्दः संन्यासप्रकरणे तथाविधश्रुत्यभावप्रदर्शनार्थः ब्रह्मसंस्थशब्दस्य परमहंसविषयत्वे श्रुत्यंतरं संवादयति ॥ श्रुतिरिति

स्थितेभ्यः परमहंसपरिव्राजकेभ्य इति यावत् परमं पवित्रं निरतिशयपरिशुद्धिकारणं परमपुरुषार्थसाधनं सम्यग्ज्ञानं प्रोवाचेत्यर्थः
स्मृतिभ्यश्च यथोक्तपारिव्राज्यं सिध्यतीति शेषः ॥ अनाशिषमनारंभमित्यादिवाक्यसंग्रहार्थमादिपदं कर्मणो बंधहेतुत्वं तच्छब्दार्थः
लिंगस्य धर्मकारणत्वराहित्यं तस्मादित्युक्तं ॥ अलिंगो धर्मधृगिति विरहितः ॥ धर्मज्ञो यथावद्धर्मानुष्ठाता अधर्मज्ञ इति वा पाठः ॥ धर्मवि
चारनिष्ठारहितस्तत्त्वासारत्वमस्य यद्वानित्यर्थः ॥ अलिंग इत्युक्तेऽनाश्रमित्वमाशंक्याह ॥ अव्यक्तेति ॥ न व्यक्तं दंभेन गृहीतं लिंगमाश्र
मित्वमस्यास्तीत्यव्यक्तलिंगः किंतु दंभेन श्रुतिस्मृत्युक्तप्रकारेण न तु हस्तास्तीत्यर्थः आदिपदं त्यजेद्धर्ममधर्मं चेत्यादि गृहीतं ॥ अत्रापि
पूर्ववदन्वयः ॥ ननु कर्मनिवृत्तिमुपदिशता न्यासो स्वमतमेवाश्रितं तेनापि शरीरादिव्यापारो परमहाराध्याननिष्ठतायाः स्वीकृतत्वा
त्तत्राह ॥ यत्त्विति नहि तन्मते कूटस्थात्मधीबलेन नैष्कर्म्यमुक्तं क्रियाकारकादिबुद्धेरविवेकस्य च सत्यत्वेन ज्ञानमात्रापनोद्यत्वायोगात्त

परमं पवित्रमित्यादिः श्वेताश्वतरीये निस्तुतिर्निर्नमस्कार इत्यादिस्मृतिभ्यश्च तस्मात्कर्म न कुर्वीत यत यः पारदर्शिनस्त
स्मात् अलिंगो धर्मज्ञः ॥ अव्यक्तलिंग इत्यादिस्मृतिभ्यश्च यत्तु सांख्यैः कर्मत्यागोऽभ्युपगम्यते क्रियाकारकफलभेदबुद्धेः स
त्यत्वाभ्युपगमात्तन्मृषा यच्च बौद्धैः शून्यताभ्युपगमादकर्तृत्वमभ्युपगम्यते तदप्यसत् तदभ्युपगंतुः सत्त्वाभ्युपगमाद्यच्चा
लसैरलसतयाऽकर्तृत्वाभ्युपगमः सोऽप्यसत्कारकबुद्धेरनिवर्तितत्वान्नप्रमाणेन तस्माद्वेदांतप्रमाणजनितैकत्वप्रत्ययवत एव

च सर्वव्यापारोपरमसंभवो मनोबुद्ध्यादीनां तच्छीलत्वान्न हि कश्चित्क्षणमपीत्यादिस्मृतेरतः सांख्यवचो मिथ्यैवेत्यर्थः ॥ ननु बौद्धेनापि
नैरात्म्यमिच्छता नैष्कर्म्यमिष्टं तथा च कर्मत्यागमुपदिशता त्वयापि तन्मतमेवानुमोदितं नेत्याह ॥ यच्चेति तदभ्युपगंतुरित्यत्राकर्तृत्वं त
च्छब्दार्थः ॥ दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेदिति स्मृतेरालस्योपहतैः अहो रकर्तृत्वमुपेयते भवतापि कर्मत्यजता तन्मतमादृत
मित्याशंक्याह ॥ यच्चालसैरिति ॥ अकर्तृत्वाभ्युपगम इतिच्छेदः ते हि मोहादेव कर्म त्यजंतो न तत्फलं लभंते स कृत्वा राजसं त्यागं नैव त्यागफलं
लभेदिति स्मृतेर्वयं तु प्रमाणवशादेव कर्म त्यजंतो न व्यामूढपक्षमाद्रियामहे तस्मान्नैष्कर्म्यं श्रुतिस्मृतिप्रसिद्धमप्रत्याख्येयमिति भावः
॥ पक्षांतरे नैष्कर्म्योक्तेरमूलत्वं मिथ्यात्वे फलितमुपसंहरति ॥ तस्मादिति ॥ यत्तु कैश्चिदैकाश्रम्यमाश्रितं तन्नेत्यादि शांति ॥

॥एतेनेति॥ एकत्वविज्ञानेन भेदप्रत्ययस्योपमर्दितत्वोपपादनेनेति यावत् एकत्वविज्ञानं परोक्षं विवक्षितं अपरोक्षस्य पारिव्राज्य-
मंतरेणायोगात्तस्योपरतिशब्दितस्य शमादिवत्साधनत्वश्रुतेरिति द्रष्टव्यं॥ गृहस्थस्य पारिव्राज्यश्रुतिविरोधं शंकते नन्विति॥ ऐ-
कात्म्यमेव सत्यं द्वैतमसत्यमिति विवेके जाते सति अन्यादृग्वस्तुत्वाध्यवसायात्तदभिनिवेशशैथिल्यात्तत्त्यागे दोषप्राप्तिरिति दूष-
यति॥ नदैवेति॥ सम्यग्ज्ञाने सत्यग्न्यादेः कृत्स्नत्वमानमाह॥ अपागादिति॥ गृहस्थस्यापि विवेकवतो वैराग्यद्वारा युक्तं पारिव्राज्यमि-
त्याह॥ अत इति॥ इतिशब्दो ब्रह्मसंस्थवाक्यव्याख्यानसमाप्त्यर्थः॥ किंलक्षणेत्याकांक्षायामाह॥ यत्तस्य इति॥ लोकानामभितो द-

कर्मनिवृत्तिलक्षणं पारिव्राज्यं ब्रह्मसंस्थत्वं चेति सिद्धं॥ एतेन गृहस्थस्यैकत्वविज्ञाने सति पारिव्राज्यमर्थसिद्धं नन्वस्मु-
त्वादन दोषभाक्स्यात्परिव्रजन्वीरहा वा एष देवानां योऽग्निमुद्वासयत इति श्रुतेः न दैवान्मादितत्वाद्भूतस्त्व एव हि स एकत्व-
दर्शने जाते अपागादग्नेरग्नित्वमिति श्रुतेरतो न दोषभाग्गृहस्थः परिव्रजन्निति॥ यत्तत्स्थोऽमृतत्वमेतीति तन्निरूपणार्थमाह॥

प्रजापतिर्लोकानभ्यतपत्तेभ्योऽभितप्तेभ्यस्त्रयी विद्या संप्रास्रवत्तामभ्यतपत्तस्या अभितप्ताया एतान्यक्षराणि संप्रा- ‹‹स्रवन्त

प्रजापतिर्विराट् कश्यपो वा लोकानुद्दिश्य तेषु सारजिघृक्षयाऽभ्यतपदभितापं कृतवान्ध्यानं तपः कृतवा-
नित्यर्थः॥ तेभ्योऽभितप्तेभ्यः सारभूता त्रयी विद्या संप्रास्रवत् प्रजापतेर्मनसि प्रत्यभादित्यर्थः॥ तामभ्यतपत्पूर्ववत्तस्या
अभितप्ताया एतान्यक्षराणि संप्रास्रवन्त व्याहृतयः तएतान्यक्षराण्यभ्यतपत्तेभ्योऽभितप्तेभ्यः ओंकारः संप्रास्रवत्तद्ब्रह्म कीदृ-
शं किंरूपमित्याह तद्यथा शंकुना पर्णनालेन सर्वाणि पर्णानि निपन्नाश्रयवजातानि संतृण्णानि विद्धानि व्याप्तानीत्यर्थः॥ ‹‹एवमोंकारे

ध्यतयाभितापप्रतिभासं व्यवच्छिनत्ति ध्यानमिति द्रव्यात्मत्वाभावे कथं प्रस्रवणं त्रय्याः स्यादित्याशंक्याह॥ प्रजापतेरिति
॥पूर्ववदिति त्रयीविद्यासारजिघृक्षयालोचितवानित्यर्थः॥ कथं तस्य ब्रह्मशब्दवाच्यत्वमित्याशंक्य महत्तरत्वादित्याह॥ कीदृशमित्यादि-
ना॥ तत्र ब्रह्मशब्दप्रवृत्तौ हेत्वंतरं सूचयति॥ परमात्मन इति॥ ओंकारावयवस्याकारस्यापि सर्ववाग्व्याप्तिरस्ति किमु वक्तव्यमोंकारस्ये-

अकार इति॥ ओमितीदं सर्वमित्यादिवाक्यमादिपदार्थः॥ ओंकारस्यात्मत्वे विवाग्जातस्य सर्वात्मत्वमाकाशादिपरमात्मविकारस्य पृथ
गेव विद्यमानत्वादित्याशंक्याह॥ परमात्मेति॥ सकलमपि जगत्परमात्मविकारत्वात्तदतिरेकेण नास्ति स च प्रकृतादोंकारान्नातिरिच्यते॥
एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकार इति श्रुतेस्तस्मादुक्तमोंकारस्य सर्वात्मत्वमित्यर्थः॥ ओंकारं सर्वात्मकं ब्रह्मरूपमुपासीते
ति विधिसमाप्त्यर्थमिति शब्दः॥ किमित्योंकारस्य लोकादिद्वारा निष्पत्तिरुच्यते तत्राह॥ लोकादीति॥ स्तुतिश्चोपास्त्यर्था यत्तु यतेतदि

प्रतीकभूतेन सर्वा वाक् शब्दजातं संतृण्णा ॐकारो वै सर्वा वागित्यादिश्रुतेः परमात्मविकारश्च नामधेयमात्रमित्यत ओंका
र एवेदं सर्वमिति द्विरभ्यास आदरार्थः॥ लोकादिनिष्पादनकथनमप्योंकारस्तुत्यर्थमिति॥ २३॥ सामोपासनप्रसंगेन कर्मगु
णभूतत्वान्निवर्त्योंकारं परमात्मप्रतीकत्वादमृतत्वहेतुत्वेन महीकृत्य प्रकृतस्यैव यज्ञस्यांगभूतानि सामहोममन्त्रोत्थाना

भूर्भुवः स्वरिति तान्यभ्यतपत्तेभ्योऽभितप्तेभ्य ओंकारः संप्रास्रवत्तद्यथा शंकुना सर्वाणि पर्णानि संतृण्णान्येवमोंका
रेण सर्वा वाक् संतृण्णोंकार एवेदꣳ सर्वमोंकार एवेदꣳ सर्वम्॥ २३॥ ब्रह्मवादिनो वदन्ति यद्वसूनां प्रातःसवनꣳ रु

न्युपरिदिश्यतन्नाह ब्रह्मवादिनो वदन्ति यत्प्रातःसवनं प्रसिद्धं तद्वसूनां तेषां प्रातःसवनसंबद्धोऽयं लोको वशी द्राणां मा
कृतः सवनेशानैस्तथा रुद्रैर्माध्यंदिनसवनेशानैरन्तरिक्षलोक आदित्यैश्च विश्वैर्देवैश्च तृतीयसवनेशानैस्तृतीयो लोको वशी
कृत इति यजमानस्य लोकोऽन्यः परिशिष्टो न विद्यते धीयत इति स्थिते सत्याञ्च सिद्धमोंकारोपासनममृतत्वफलमिति शब्दः॥ ॥

२४॥ प्रासंगिकं हित्वा प्रकृतमनुसंधत्ते॥ सामेति॥ पंचविधं सप्तविधं च यज्ञांगीभूतं सामनस्योपासनवचनादोंकारस्य तद्गुणस्य
सुतरामेव कर्मगुणत्वे प्राप्ते ततस्तं व्यावर्त्य ब्रह्मप्रतीकत्वात्कैवल्यहेतुत्वेन तमेव महीकृत्य प्रकृतयज्ञांगभूतसामादिविज्ञानविधा
नार्थमुत्तरवाक्यमित्यर्थः सामादिज्ञानविधित्सया तदपरिज्ञाने दोषमाह॥ ब्रह्मेत्यादिना॥ तेषां प्रातःसवनेशानत्वेऽपि यजमानस्य
काहानिरित्याशंक्याह॥ तेष्वति॥ यथायं पृथिवीलोको वसुभिस्तथेति यावत्॥ अन्तरिक्षलोको वशीकृत इति पूर्वेण संबंधः तृतीयो लोको द्यु

परिशिष्टलोकाभावेतः शब्दार्थः॥ तर्हि देहपातादूर्ध्वमित्येतत्॥ लोकापेक्षां विनापि विधिवशाद्यागो भविष्यतीत्याशंक्याह॥ लोकाये
ति॥ लोकत्वस्य स्वत्वाद्याधीनतया यजमानानधीनत्वेन तस्य तदधीनत्वाद्यथ यज्ञाद्यनुष्ठानमित्याशंक्याह॥ लोकाभावे चेति॥ अज्ञो यद्य
स्वर्गादिसाधनीभूतं कथं कुर्यादित्याक्षेपाद विद्वत्कर्मानुष्ठाननिंदापरं वाक्यमित्याशंक्याह॥ सामादीति॥ अथेदं वाक्यं स्तुत्यर्थं निषेधा
र्थं च भविष्यतीनेत्याह॥ स्तुतये चेति॥ इतश्चाविद्वत्कर्तृत्वनिराकरणमशक्यमित्याह॥ आद्ये चेति॥ मरीचीहतेषित्यादौ विदुषः सन्निधा

नतः क्व न तर्हि यजमानस्य लोको यदर्थं यजते न क्वचिल्लोकोऽस्तीत्यभिप्रायः॥ लोकाय वै यजते यो यजत इति श्रुतेर्लोकाभावे
च स्याद्यो यजमानस्तु लोकस्वीकरणोपायं साम होममंत्रोत्थानलक्षणं न विद्यान्न विजानीयात्सोऽज्ञः कथं कुर्याद्यज्ञं न कथं
चन तस्य कर्तृत्वमुपपद्यत इत्यर्थः॥ सामादिविज्ञानस्तुतिपरत्वान्नाविदुषः कर्तृत्वं कर्ममात्रविदः प्रतिषिध्यते स्तुतये च

दिनं ७ सवनमादित्यानां च विश्वेषां च देवानां तृतीयसवनं क्व तर्हि यजमानस्य लोक इति॥ स यस्तं न विद्यात्क
थं कुर्यादथ विद्वान्कुर्यात्पुरा प्रातरनुवाकस्योपाकरणाज्जघनेन गार्हपत्यस्योदङ्मुख उपविश्य स वासवं ७
सामाभिगायति लो३कद्वारमपावा३र्णू ३४ ७२ पश्येम त्वा वयं ७ रा २३३२ हुं आ ३३ ४७२ सामादिविज्ञानस्याविद्वत्कर्तृ

त्वप्रतिषेधार्थं चेति भिद्येत वाक्यमाद्ये चोपसंहारे विदुषोऽपि कर्मोऽस्तीति हेतुमवोचाम अथैतद्वक्ष्यमाणसामाद्युपायं वि
द्वान्कुर्यात्किं तद्वेद्यमित्याह॥ पुरा पूर्वं प्रातरनुवाकस्य शस्त्रस्य प्रारंभाज्जघनेन गार्हपत्यस्य पश्चादुदङ्मुखः सन्नुपविश्य

नेतदनुज्ञामंतरेण विदुषः कर्मकर्तृमयुक्तमन्यथा प्रसंगात्तदसन्निधौ तु तेनापि क्रियमाणं कर्म न दुष्यतीत्युपपादितमित्यर्थः॥ अथ
शब्दो हेत्वर्थः॥ सामाद्यविज्ञाने यस्माद्यज्ञाद्यकरणमेव प्राप्नोति तस्मादित्यर्थः॥ ज्ञातव्यं सामादि मन्त्रपूर्वकं विवृणोति॥ किं तदित्यादिना
॥ अप्रगीतमृग्जातं शस्त्रं यत्प्रातःकाले शस्यते प्रातरनुवाकस्तस्येति यावत्॥ उपाकरणादित्यस्यार्थमाह॥ प्रारंभादिति॥ जघनेनेत्येत
द्व्याचष्टे॥ पश्चादिति॥ स गार्हपत्यस्य उत्तरः उदग्भागे स्थित्वा वसुदेवताकं सामगानं कृतवानित्यर्थः॥ सवासवमित्यत्र सशब्दो यजमान

छां·भा·
१८

राज्यायत्वद्दर्शनेनत्वदनुज्ञयापृथिवीप्रयुक्तभोगायेत्यर्थः॥पृथिव्यांक्षयतिवसतीतिपृथिवीक्षित्तस्मैपृथिवीक्षिते॥पृथिवीलोकेम
मालक्ष्येनवकिंस्यादित्याशंक्याह॥एषवैममयजमानस्येति॥स्वाहाशब्दोमंत्रसमाप्त्यर्थोहोमद्योतकःसर्वेषुमंत्रेष्वेतैःसामहोममंत्रोन्त्या
सामाभिगायति॥लोकद्वारमस्यपृथिवीलोकस्यप्राप्तयेद्वारमपावृणुहेअग्नेतेनद्वारेणपश्येमत्वात्वांराज्यायेति॥अ
थानंतरंजुहोत्यनेनमंत्रेणनमोग्नयेप्रह्वीभूतास्तुभ्यंवयंपृथिवीक्षितेपृथिवीनिवासायलोकक्षितेपृथिवीलोकनिवासा
येत्यर्थः॥लोकंमेमह्यंयजमानायविंदलभस्व॥एषवैममयजमानस्यलोकएतागंतास्म्यत्रास्मिन्लोकेयजमानोहमायु
जायेआ २३।४५ इत्यथजुहोतिनमोग्नयेपृथिवीक्षितेलोकक्षितेलोकंमेयजमानायविंदैषवैयजमानस्यलो
कएतास्म्यत्रयजमानःपरस्तादायुषःस्वाहापजहिपरिघमित्युक्त्वोत्तिष्ठतितस्मैवसवःप्रातःसवनꣳसंप्रयच्छं
तिपुरामाध्यंदिनस्यसवनस्योपाकरणाज्जघनेनाग्नीध्रीयस्योदङ्मुखउपविश्यसरौद्रꣳसामाभिगायतिलो
कद्वारमपावार्णू॥४॥७२॥पश्येमत्वावयंविरा २१२१ हुं आ ४७२॥जायोआ॥२३॥४॥५॥इत्यथजुहोतिनमोवा
यवेंतरिक्षक्षितेलोकक्षितेलोकंमेयजमानायविंदैषवैयजमानस्यलोकएतास्म्यत्रयजमानःपरस्तादायुषःस्वा
हा॰पजहिपरिघमित्युक्त्वोत्तिष्ठतितस्मैरुद्रामाध्यंदिनꣳसवनꣳसंप्रयच्छंति॥ वःपरस्तादूर्ध्वंमृतःसन्नित्यर्थः॥
स्वाहेतिजुहोत्यपजह्यपनयपरिघंलोकद्वारार्गलमित्येतंमंत्रमुक्त्वोत्तिष्ठतिएवमेतैर्वसुभ्यःप्रातःसवनसंबद्धोलोकोनि
ष्क्रीतःस्यात्ततस्तेप्रातःसवनंवसवोयजमानायसंप्रयच्छंतितथाग्नीध्रीयस्यदक्षिणाग्रेर्जघनेनोदङ्मुखउपविश्यस
रौद्रंसामाभिगायतियजमानोरुद्रदैवत्यंवैराज्यायांतरिक्षक्षितेइत्यादिसमानं॥ नैरित्यर्थः॥यथापृथिवीलोकजयोपा
योदर्शितः॥तथांतरिक्षलोकजयोपायोपिप्रदर्श्यतइत्याह॥तथेति॥अंतरिक्षेक्षयतीत्यंतरिक्षक्षित्वायुस्तस्मैवायवे॥यथापृथिव्यंत

अ·
२

राम
१८

॥तथेति॥ स्वाराज्यमंतरिक्षे स्वातंत्र्यं आदित्यानामिव स्वातंत्र्यमिह विवक्षितं किमिदं सामाद्यार्त्विज्यमाहो याजमानिकमिति वीक्षायामाह॥ याजमानं त्विति॥ आदिपदेन लोकं मे यजमानायेति निर्देशो गृह्यते॥ सामादिज्ञानफलं कथयति॥ एष इति॥ य एवं विदित्यस्य व्याख्यायं

तथाहवनीयस्योदङ्मुख उपविश्य स आदित्यदैवत्यं आदित्यं वैश्वदेवं च सामाभिगायति क्रमेण स्वाराज्याय साम्राज्याय दिविक्षिद्भ्यः इत्येवमादि समानमन्यद्धिंदनापहतेति बहुवचनमात्रविशेषः याजमानं त्वित्तास्म्यत्र यजमान इत्यादिलिंगादे

पुरा तृतीयसवनस्योपाकरणाज्जघनेनाहवनीयस्योदङ्मुख उपविश्य स आदित्यꣳ स वैश्वदेवꣳ सामाभिगायति लोकद्वारमपावार्णू ४७॥२॥ पश्येम त्वा वयꣳ स्वरा॥२ऽ२ऽ॥ हुंआ॥४७ २॥ जायोआ॥२३५॥५॥ इत्यादित्यमथ वैश्वदेवं लोकद्वारमपावार्णू॥४७॥२॥ पश्येम त्वा वयꣳ सम्रा॥२ऽ२ऽ२॥ हुंआ॥ ४७२॥ जायोआ॥२३५॥ इत्यथ जुहोति नम आदित्येभ्यश्च विश्वेभ्यश्च देवेभ्यो दिविक्षिद्भ्यो लोकक्षिद्भ्यो लोकं मे यजमानाय विंदतैष वै यजमानस्य लोक एतास्म्यत्र यजमानः परस्तादायुषः स्वाहाऽपहत परिघमित्युक्त्वोत्तिष्ठति तस्मा आदित्याश्च विश्वे च देवास्तृतीयसवनꣳ संप्रयच्छन्त्येष ह वै यज्ञस्य मात्रां वेद य एवं वेद य एवं वेद॥२४॥ ॥इति द्वितीयः प्रपाठकः॥२॥

एष ह वै यजमान एवंवित् यथोक्तस्य सामादेर्विद्वान्यज्ञस्य मात्रां यज्ञयाथात्म्यं वेद यथोक्तं य एवं वेद य एवं वेदेति द्विरुक्तिरध्यायपरिसमाप्त्यर्थो॥ ॥ ॥इति छांदोग्योपनिषद्भाष्ये द्वितीयः प्रपाठकः॥ २॥ ॥ ॥

थोक्तस्येति यथोक्तं सामादीत्येतत् एवमित्युक्तप्रकारोक्तिस्तस्य यज्ञयाथात्म्यविदस्तदनुष्ठानद्वारा तत्फलं संभवतीत्यर्थः॥ इति श्रीशुद्धानंदपूज्यपादशिष्यभगवदानंदकृतायां छांदोग्यभाष्यटीकायां द्वितीयः प्रपाठकः॥२॥ ॥ ॥ ॥

इतिसटीकछांदोग्योपनिषद्भाष्यस्यद्वितीयोध्यायः समाप्तः॥२

अथसटीकछान्दोग्योपनिषद्भाष्यस्यतृतीयोध्यायः प्रारभ्यते॥ ३ ॥

52

॥श्रीगणेशायनमः॥ कर्मांगावबद्धं विज्ञानं परिसमाप्य कर्मफलस्यादित्यस्य स्वतंत्रोपास्तिविध्यर्थमध्यायांतरमारभमाणः संबंधं प्रतिजानीते असाविति॥ पूर्वोत्तरग्रंथयोः संबंधं प्रतिज्ञातं प्रकटयितुं वृत्तं कीर्तयति अतीतेति॥ विशिष्टफलं पृथिव्यादिलोकत्रयं॥ समनंतरसंदर्भस्य तात्पर्यं वक्तुं पातनिकां करोति सर्वेति॥ तस्य प्रेप्सितत्वं सूचयति महत्येति॥ कथं पुनरादित्यस्य सर्वप्राणिकर्मफलभूतत्वमित्याशंक्य सर्वैरुपजीव्यत्वोपलंभादित्याह स एष इति पातनिकां कृत्वानंतरग्रंथमुत्थापयति अत इति॥ आदित्यस्य कर्मफलत्वादिति यावत्तदुपदेशे हेत्वंत

असौ वा आदित्य इत्याद्यध्यायारंभे संबंधोऽतीतानंतराध्यायांते उक्तः यज्ञस्य मात्रां वेदेति यज्ञविषयाणि च सामहोममंत्रोत्थानानि विशिष्टफलप्राप्तये यज्ञांगभूतान्युपदिष्टानि सर्वयज्ञानां च कार्यनिर्वृत्तिरूपः सविता महत्या श्रिया दीप्यते स एष सर्वप्राणिकर्मफलभूतः प्रत्यक्षं सर्वैरुपजीव्यतेऽतो यज्ञव्यपदेशानंतरं तत्कार्यभूतसवितृविषयमुपासनं सर्वपुरुषार्थेभ्यः

हरिः ओं असौ वा आदित्यो देवमधु तस्य द्यौरेव तिरश्चीनवꣳशोऽन्तरिक्षम

श्रेष्ठतमं फलं विधास्यामीत्येवमारभते श्रुतिः असौ वा आदित्यो देवमध्वित्यादि देवानां मोदनान्मध्विव मधु असावादित्यो वस्वादीनां च मोदनहेतुत्वं वक्ष्यति सर्वयज्ञफलरूपत्वादादित्यस्य कथं मधुत्वमित्याह तस्य मधुनो द्यौरेव भ्रामरस्येव मधुनस्तिरश्चीनश्चासौ वंशश्चेति तिरश्चीनवंशः तिर्यग्गतेव हि द्यौर्लक्ष्यते॥

१ रमाह॥ सर्वपुरुषार्थेभ्य इति॥ श्रेष्ठतमं फलं क्रमेण मुक्तिलक्षणमस्यास्तीति तथोक्तं॥ आदित्ये कर्मफलशब्दप्रवृत्तिनिमित्तमुक्तं व्यक्तीकर्तुमाह वस्वादीनां चेति॥ चकारो विद्वत्संग्रहार्थः वस्वाद्यादित्यस्येति संबंधः तस्य सर्वेषां यज्ञानां फलरूपत्वादिति हेतुः वस्वादयश्च कर्मफलभोक्तारः तत्फलमादित्यं दृष्ट्वा तृप्यंतीति युक्तमित्यर्थः॥ आदित्यं मधुदृष्ट्योपासीतेत्युक्तं तत्र प्रसिद्धमधुसाम्यमादित्यस्य श्रुत्युक्तमाकांक्षापूर्वकं दर्शयति कथमित्यादिना॥ दिवि तिरश्चीनवंशदृष्टौ निमित्तमाह तिर्यग्गतेति॥ अंतरिक्षनिवासिभिरुपरि विसारितनयनैरिति शेषः अंतरिक्षे मध्वपूपदृष्टिं कथय

अंतरिक्षमिति॥मधुनइत्युभयत्रसंबंधः मरीचयःपुत्राइतिवाक्यंव्याचष्टे मरीचयइति॥आपोभूमेराकृष्टा रश्मिस्थाः संतीत्यत्रप्रमाण
माह॥एताइति॥ स्वराजःस्वतोभासमानस्यसवितुरितियावत् तासांपुत्रत्वंप्रकटयतितादृति॥लोकेहिभ्रमरबीजभूताःपुत्रामध्वपूपच्छिद्र
स्थाइत्यनेनएताश्चापोंतरिक्षलक्षणमध्वपूपांतर्गतरश्मिस्थाभवंतितत्रश्चैतास्वप्युभ्रमरबीजदृष्टिः कर्तव्येत्यर्थः प्राचीदिग्गतेष्वादि
त्यरश्मिषुप्राचीनमधुनाडीदृष्टिंविधेयेत्याहतस्येति॥मध्वाश्रयस्यलोहितादिरूपंमधुवक्ष्यमाणंतदाधारस्येत्यर्थः॥ऋचस्तुमंत्ररूपा

अंतरिक्षंचमध्वपूपोद्युवंशेलग्नःसल्लंबतइवातोमध्वपूपसामान्यादंतरिक्षंमध्वपूपोमधुनःसवितुराश्रयत्वाच्चमरी
चयोरश्मयोरश्मिस्थाःआपोभौमाःसवित्राकृष्टाएतावाआपःस्वराजोयन्मरीचयइतिहिविज्ञायंतेताअंतरिक्षमध्वपूप
स्यरंध्रान्तर्गतत्वात् भ्रमरबीजभूताःपुत्राइवहितालक्ष्यंतइतिपुत्राइवपुत्राःमध्वपूपनाड्यंतर्गताहिभ्रमरपुत्रास्तस्य

पूपोमरीचयःपुत्रास्तस्ययेप्रांचोरश्मयस्ताएवास्यप्राच्योमधुनाड्यऋचएवमधुकृतऋग्वेद

सवितुर्मध्वाश्रयस्यमधुनोयेप्रांचःप्राच्यांदिशिगतारश्मयस्ताएवास्यप्राच्यःप्रागंचनान्मधुनोनाड्योमधुनाड्य
इवमध्वाधारच्छिद्राणीत्यर्थः तत्रर्चएवमधुकृतः॥ लोहितरूपंसवित्राश्रयंमधुकुर्वंतीतिमधुकृतोभ्रमराइवय
तोरसानादायमधुकुर्वंतितत्पुष्पमिवपुष्पमृग्वेदएवतत्रऋग्ब्राह्मणसमुदायस्यऋग्वेदाख्यत्वाच्छब्दमात्राच्चभो
ग्यरूपरसनिस्रावासंभवात् ऋग्वेदशब्देनात्रऋग्वेदविहितंकर्मततोहिकर्मफलभूतमधुरसनिस्रावसंभवान्मधु

सुभ्रमरदृष्टिमारोपयतित्रेति॥ प्रकृतंमधुसप्तम्यर्थः॥ तासांमधुकृत्त्वंसाधयतिलोहितेति॥ ऋग्वेदविहितेकर्मणिपुष्पदृष्टिंसंपा
दयतिपतइति॥ऋचोमधुकृतइतिमंत्राणांपृथक्कृतत्वादृग्वेदःपुष्पमित्यृग्वेदशब्देनब्राह्मणसमुदायस्यवक्तव्यत्वात्कथमृग्वे
दविहितेकर्मणितच्छब्देनलक्षितपुष्पदृष्ट्याध्यासःपिकृतस्ततोमधुनिष्पत्तिरित्याशंक्याहततोहीति॥ तदेवोपपादयतिमधुकरेति

निर्वर्त्यतेनेनेत्यर्थेहापिमधुकरस्थानीयैर्ऋग्मंत्रैस्तद्वेदविहितात्पुष्पस्थानीयात्कर्मणःसकाशाद्रसो गृहीत्वामधुनिष्पाद्यतेतस्मात्कर्मणःस्व
फलभूतमधुनिष्पत्तेरुपपत्तेस्तस्मिन्मधुबुद्धिरित्यर्थः ता अमृता आप इति वाक्यं प्रश्नपूर्वकं व्याचष्टे कास्ता इत्यादिना॥कर्मणिप्रयुक्तत्वमभि
नयति॥अग्नाविति अग्निपाकाभिनिर्वृत्तत्वमपूर्वात्मत्वंपरंपरयामुत्रार्थत्वंअमृतार्थत्वं यद्वा रोहितरूपामृतनिर्वर्तकत्वंतदर्थत्वंउत्कृष्ट
फलवत्त्वंअत्यन्तरसवत्त्वं॥ तावाएताइत्यादिव्याचष्टे तद्रसानिति॥ यथाहिपुष्पेभ्योभ्रमरारसानाददानास्तान्यभितपंतितथैतेमंत्रास्त

ऋग्वेदविहितात्कर्मणअपआदायऋग्भिर्मधुनिर्वर्त्यंतेकास्ताआपइत्यतआह ताः कर्मणिप्रयुक्ताः सोमाज्यपयोरू
पाअग्नौप्रक्षिप्तास्तत्पाकाभिनिर्वृत्ताःअमृतार्थत्वादत्यंतरसवत्यआपोभवंति॥तद्रसानादायतावाएताऋचःपुष्पेभ्यो
रसमाददानाइवभ्रमराऋचएतमृग्वेदविहितंकर्मपुष्पस्थानीयमभ्यतपन्नभितापंचक्रुरित्येतदृचःकर्मणिप्रयुक्ता
ऋग्भिर्हिमंत्रैःशस्त्राद्यंगभावमुपगतैःक्रियमाणंकर्ममधुनिर्वर्तकंरसंमुंचतीत्युपपद्यतेपुष्पाणीवभ्रमरैराचूष्यमाणा:

एवपुष्पंताअमृताआप स्तावाएताऋचएतमृग्वेदमभ्यतपं स्तस्याभितप्तस्ययशस्तेजइंद्रियंवीर्यमन्नाद्यं रसो

नितदेतदाहतस्यऋग्वेदस्याभितप्तस्यकोसौरसोयः ऋङ्मधुकराभितापान्निःसृतइत्युच्यतेयशोविश्रुतत्वंतेजोदेहगतादी
प्तिरिंद्रियंसामर्थ्योपेतैरिंद्रियैरवैकल्यंवीर्यंसामर्थ्यंबलमित्यर्थः॥ अन्नाद्यमन्नंचतदाद्यंचयेनोपयुज्यमानेनाहन्यहनिदे
वानांस्थितिःस्यात्तदन्नाद्यमेषरसोजायतयागादिलक्षणात्कर्मणोयशआद्यमन्नाद्यपर्यंतंतंव्यक्षरद्विशेषेणाक्षरद्गमद्गत्वा

स्मिन्कर्मणिस्थितानम्मयान्रसानादायमधुनिर्वर्तयंतोयथोक्तंकर्माभितप्तंसमालोचयंतिस्मेत्यर्थः कथंपुनर्मंत्राणांभ्रमरस्थानीयानांपु
ष्पस्थानीयमृग्वेदविहितंकर्माभितपनेनाफलवत्त्वमित्याशंक्याह॥एताऋचइति॥तासांकर्मणिप्रयुक्तत्वेपिकिमायातंतदाह ऋग्भिरिति॥अ
भितप्तस्यरसोजायतेतिसंबंधः॥तंप्रश्नपूर्वकंविशदयतिकोसाविति॥तच्छब्दार्थमाहयशआदीति॥ अथानुष्ठितकर्मजनितंफलंकथमादित्य

अमुष्मिन्निति॥ दृष्टांते भोक्ष्यामहे व्रीह्यादिजनितं फलमित्यभिप्रायेण व्रीह्यादिप्राप्त्यर्थमिति शेषः॥ किं तत्कर्मफलं यदादित्यमाश्रित्य
तिष्ठतीत्याशंक्याह तद्व्यक्षरमिति। कर्मफलप्रत्यक्षेन तत्साधने कर्मणि कर्मिणां श्रद्धासिध्यर्थमिति यावत्तदेव फलं प्रश्नपूर्वकं विशदयति किमि
त्यादिना॥१॥ मध्वेतदेव दर्शयति अथेति। वक्तव्यविशेषं कथयति यजूंषीति कथं तेषां मधुकृत्त्वं तदाह पूर्ववदिति॥ ऋग्मन्त्राणामृग्वेदविहितकर्म

पार्श्वतः पूर्वभागं सवितुरश्रयदाश्रितवदित्यर्थः अमुष्मिन्नादित्ये संचितं कर्मफलाख्यं मधु भोक्ष्यामहे इत्येवं हि यशआदि
लक्षणफलप्राप्त्यर्थं कर्माणि क्रियंते मनुष्यैः केदारनिष्पादनमिव कर्षकैः॥ न त्वन्यत्संप्रदर्श्यते श्रद्धाहेतोः तद्वा एतत् किं तद्य
देतदादित्यस्योद्यतो दृश्यते रोहितं रूपं॥१॥ अथ येस्य दक्षिणा रश्मय इत्यादि समानं यजूंष्येव मधुकृतो यजुर्वेदविहितकर्म

जायमानं व्यक्षरत्तदादित्यमभितोऽश्रयत॥ तद्वा एतद्यदेतदादित्यस्य रोहितꣳ रूपं॥१॥ अथ येऽस्य दक्षिणा र
श्मयस्ता एवास्य दक्षिणा मधुनाड्यो यजूꣳष्येव मधुकृतो यजुर्वेद एव पुष्पं ता अमृता आपस्तानि वा एतानि यजूꣳ
ष्येतं यजुर्वेदमभ्यतपꣳस्तस्याभितप्तस्य यशस्तेज इंद्रियं वीर्यमन्नाद्यꣳ रसोऽजायत तद्व्यक्षरत्तदादित्यमभितो
ऽश्रयत् तद्वा एतद्यदेतदादित्यस्य शुक्लꣳ रूपं॥२॥ अथ येऽस्य प्रत्यंचो रश्मयस्ता एवास्य प्रतीच्यो मधुनाड्यः सा
मान्येव मधुकृतः सामवेद एव पुष्पं ता अमृता आपस्तानि सामान्येतꣳ सामवेदमभ्यतपꣳस्तस्याभितप्तस्य यश
स्तेज इंद्रियं वीर्यमन्नाद्यꣳ ५ णि प्रयुक्तानि पूर्ववन्मधुकृत इव यजुर्वेदविहितं कर्म पुष्पस्थानीयं पुष्पमित्युच्यते
ताश्च सोमाद्या अमृता आपस्तानि वा एतानि यजूंष्येतं यजुर्वेदं अभ्यतपन्नित्येवमादि सर्वं समानं मध्वेतदादित्यस्य

णि प्रयुक्तानां यथा पूर्वं मधुकृत्त्वं तथा यजुषामपीत्यर्थः यजुर्वेदविहिते कर्मणि पुष्पदृष्टिमाचष्टे यजुर्वेदेति॥ ता वा अमृता आप इत्य
स्य पूर्ववद्व्याख्यानमित्याह ता एवेति॥ यजुषामादित्यसंबंधि मधु प्रत्यक्षं दर्शयति एतदिति॥२॥ तृतीयं मधु कथयति अथेति॥ ऋचा य

तस्य शास्त्रप्रत्यक्षत्वं दर्शयति एतदिति। चतुर्थं मधु दर्शयति। अथेति॥ किं तत्कर्मेत्याशंक्याह इतिहासेति॥ तथाथर्वणानामंगिरसानां च प्र
सिद्धं ब्राह्मणगतं हि हितं कर्म पुष्पं पुष्पस्थानीयमित्यर्थः॥ यदा प्रसिद्धयोरितिहासपुराणयो रूपादानं तदापि न दूषणमित्याह तयोश्चेति॥ अश्व
मेधे कर्मणि जामितापरिहारार्थं पारिप्लवो नाम नानाविधोपाख्यानसमुदायो यत्र तत्पारिप्लवमाचक्षीरन्निति विधिवशात्प्रयुज्यते तासु रात्रिषु



प्रत्यंचो रश्मय इत्यादि समानं तथा सामाख्यं मध्वेतदादित्यस्य कृष्णं रूपं॥३॥ अथ येऽस्योदंचो रश्मय इत्यादि समानं अथर्वांगिरसो
अथर्वणांगिरसा च दृष्टा मंत्रा अथर्वांगिरसः कर्मणि प्रयुक्ता मधुकृत इतिहासपुराणं पुष्पं तयोश्चेतिहासपुराणयोरश्वमेधे पारिप्लु
वासु रात्रिषु कर्मांगत्वेन विनियोगः सिद्धो मध्वेतदादित्यस्य परः कृष्णं रूपमतिशयेन कृष्णमित्यर्थः॥४॥ अथ येऽस्योर्ध्वा इत्यादि पू

रसोऽजायत तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य कृष्णꣳरूपं॥३॥ अथ येऽस्योदंचो रश्मय
स्ता एवास्योदीच्यो मधुनाड्योऽथर्वांगिरस एव मधुकृत इतिहासपुराणं पुष्पं ता अमृता आपस्ते वा एतेऽथर्वांगिरस
एतदितिहासपुराणमभ्यतपꣳस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳरसोऽजायत तद्व्यक्षरत्तदादित्यम
भितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य परः कृष्णꣳरूपं॥४॥ अथ येऽस्योर्ध्वा रश्मयस्ता एवास्योर्ध्वा मधुनाड्यो गु

ह्या एव गुह्या गोप्या रहस्या आदेशा लोकद्वारीयादिविधय उपासनानि च कर्मांगविषयाणि मधुकृतो ब्रह्मैव शब्दाधिकारात्प्र
णवाख्यं पुष्पं समानमन्यत् मध्वेतदादित्यस्य मध्ये क्षोभत इव समाहितदृष्टेर्दृश्यते संचलतीव

॥ तस्यैव कर्मणोऽङ्गत्वेन मनुर्वैवस्वतो
राजेत्येवंप्रकारयोरितिहासपुराणयोर्विनियोगस्य पूर्वतंत्रे पारिप्लवार्थाधिकरणेनैव सिद्धत्वात्तत्संबंधि कर्म पुष्पमित्यर्थः अस्यापि मधुनः
शास्त्रप्रत्यक्षतामाह॥ मध्वेतदिति॥४॥ पंचमं मधु दर्शयति अथेति॥ लोकद्वारीयादि विधयो लोकद्वारमपावृणु पश्येम त्वा वयमित्यादयः ब्रह्म
शब्दार्थमाह शब्दाधिकारादिति॥ ऋगादिशब्दानां प्रकृतत्वादित्यर्थः अस्यापि मधुनः शास्त्रवशात्प्रत्यक्षतामाह मध्वेतदिति॥ समाहितदृष्टेः शास्त्रा

पंचमधु निर्व्याख्यायते तेषां ध्येयत्वसिध्यर्थं स्तुतिं प्रकुरुते ते वा एते इति तस्मात्तेषामिति संबंधः॥ कर्मणि विनियुक्तत्वेन तदंगत्वात्तद्भावाप
त्ति वेदानां कार्यत्वेपि प्रयत्नपूर्वकत्वाभावान्नित्यत्वं॥ या मधुनि स्तुतिः सा कर्मस्तुतिरित्याह रसानामिति॥ कर्मस्तुतिमभिनयति यस्यैवमि
ति॥ रसानां रसा अमृतानाममृतानीत्येवं विशिष्टान्यमृतानि यस्य फलं कर्मणस्तस्य महाभाग्यं किं वक्तव्यमिति स्तूयते कर्मेत्यर्थः॥५॥ अमृ

ते वा एते यथोक्ता रोहितादिरूपविशेषा रसानां रसाः केषां रसानामित्याह वेदा हि यस्माल्लोकनिष्यंदत्वात्सारा इति रसा
स्तेषां रसानां कर्मभावमापन्नानामप्येते रोहितादिविशेषा रसा अत्यंतसारभूता इत्यर्थः तथा अमृतानाममृतानि वे
दा ह्यमृताः नित्यत्वात्तेषामेतानि रोहितादीनि रूपाण्यमृतानि रसानां रसा इत्यादि कर्मस्तुतिरेषा यस्यैवं विशिष्टान्यमृ।

देशा मधुकृतो ब्रह्मैव पुष्पं ता अमृता आपस्ते वा एते गुह्या आदेशा एतद्ब्रह्माभ्यतपंस्तस्याभितप्तस्य यशस्ते
ज इंद्रियं वीर्यमन्नाद्यं रसोऽजायत तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य मध्ये क्षोभत इ
व ते वा एते रसानां रसा वेदा हि रसास्तेषामेते रसास्तानि वा एतान्यमृतानाममृतानि वेदा ह्यमृतास्तेषामेता।
न्यमृतानि॥५॥ तद्यत्प्रथमममृतं ((तानि फलमिति॥५॥ तत्तत्र यत्प्रथमं अमृतं रोहितरूपलक्षणं तद्वसवः प्रा

तः सवनेशाना उपजीवंति अग्निना मुखेन अग्निना प्रधानभूतेनाग्निप्रधानाः संतः उपजीवंतीत्यर्थः अन्नाद्यं रसोऽजाय
तदिति वचनात् कवलग्राहमश्नंतीति प्राप्ते तत्प्रतिषिध्यते नवै देवा अश्नंति न पिबंतीति कथं तर्ह्युपजीवंतीति उच्यते एत।
देव हि यथोक्तममृतं रोहितरूपं दृष्ट्वोपलभ्य सर्वकरणै रनुभूय तृप्यंतीति दृशेः सर्वकरणद्वारोपलब्ध्यर्थत्वात्॥ ((तानिध्येया

स्युक्ता तदुपजीविनो देवतागणाननुचिंतनीयाननुपदिशतीति तत्रेति॥ कवलग्राहं कवलं गृहीत्वा यथा लोकोऽश्नातीति तद्वदित्येतन्न तु अ
शनपानाभावेनयुक्तमुपजीवनवचनमित्याशंक्य परिहरतिकथमित्यादिना॥ चक्षुषेतिवक्तव्ये कथं सर्वकरणैरित्यधिकमुच्यते तत्राह

चक्षुषैव रूपग्रहणमिति नियममाश्रित्याशंकते नन्विति॥ कर्मफलभूतस्य रसस्य लोहितात्मकस्य नास्ति चक्षुर्मात्रग्राह्यत्वमिति परि
हरति नेत्यादिना॥ किमेतावता रसस्यापादितं तदाह रसो हीति॥ इतिनस्यापि श्रोत्रादिग्राह्यत्वेनाविशेषः एतदेवेत्यादिवाक्यमुपसंहरति देवा इति
किं तेषां स्वतन्त्राणां तृप्तिरित्याह आदित्येति॥ वैगंध्यादौ गंधं आदिपदेन संभाविताः सर्वेऽपि देहकरणदोषा गृह्यंते एतस्माद्रूपादिति व्याख्यात

ननु रोहितं रूपं दृष्ट्वेत्युक्तं कथमन्येंद्रियविषयत्वं रूपस्येति न यशआदीनां श्रोत्रादिगम्यत्वात् श्रोत्रग्राह्यं यशस्तेजो रू
पं चाक्षुषमिंद्रियविषयग्रहणकार्यानुमेयं करणसामर्थ्यं वीर्यं बलं देहगतमुत्साहः प्राणवतो अन्नाद्यमन्वहमुपजी
व्यमानं शरीरस्थितिकरं यद्भवति रसो ह्येवमात्मकः सर्वो यं देवा दृष्ट्वा तृप्यन्तीत्येतत्सर्वं स्वकरणैरनुभूय तृप्यंतीत्यर्थः
आदित्यसंश्रयाः संतो वैगंध्यादिदेहकरणदोषरहिताश्च किं ते निरुद्यमा अमृतमुपजीवंति न कथं तर्हि एतदेव रूपमभिल

तद्वसव उपजीवंत्यग्निना मुखेन न वै देवा अश्नंति न पिबंत्येतदेवामृतं दृष्ट्वा तृप्यंति॥ त एतदेव रूपमभिसं
विशंत्येतस्माद्रूपादुद्यंति स य एतदेवममृतं वेद वसूनामेवैको भूत्वाग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति

तद्यत्प्रथमममृतं

स्याधुना भोगावसरो नास्माकमिति बुध्वाभिसंविशंत्युदासते यदा वै नस्यास्यामृतस्य भोगावसरो भवेत्तदैवैतस्मा
दमृतादमृतभोगनिमित्तमित्यर्थः एतस्माद्रूपादुद्यंत्युत्साहवंतो भवंतीत्यर्थः नह्यनुत्साहवतामननुतिष्ठतामल
सानां भोगप्राप्तिर्लोके दृष्टा स यः कश्चिदेतदेवं यथोक्तमृङ्मधुकरतापरससंक्षरणमृग्वेदविहितकर्मपुष्पात्तस्य चा
दित्यसंश्रयणं रोहितरूपत्वं चामृतस्य प्राचीदिग्गतरश्मिनाडीसंस्थतां वसुदेवभोग्यतां तद्विदश्च वसुभिः सहैकतां ग

स्यानुदयादमात्रेउत्साहवतां देवानां यथोक्तामृतोपजीवित्वमित्यत्र लोकप्रसिद्धिमनुकूलयति नहीति॥ पाठक्र ((न्याग्निना मु
मेणोक्तं ध्येयस्वरूपमनूद्य साधिकारं ध्यानविधिं दर्शयति स य इति॥ वसुदेवभोग्यतां वसुभिर्देवैरुपजीव्यत्वमिति यावत् एतदित्य

एवं शब्दार्थं विशदयति यथोक्तमिति॥ तथैव वस्तुत्युक्तक्रमेणैवेत्यर्थः॥ भोगकालपरिमाणं प्रश्नपूर्वकं निर्द्धारयति कियन्तमिति॥ आधिपत्यं स्वा
राज्यमिति विशेषणयोस्तात्पर्यमाह नयत्येति॥६॥ प्रथममममृतमधिकृत्य चिंतनीयमुक्त्वा द्वितीयममृतमाश्रित्य तद्दर्शयति अथेति॥ विद्याफलं

मात्रेण तृप्तिं भोगावसरउद्यमनं तत्कालालाभाये च संवेशनं वेद सोपि वसुवत्सर्वं तथैवानुभवति॥ कियंतं कालं विद्वांस्तदमृ
तमुपजीवतीत्युच्यते स विद्वान्यावदादित्यः पुरस्तात्प्राच्यादिश्युदेता पश्चात्प्रतीच्यामस्तमेता तावद्वसूनां भोगकाल
स्तावंतमेव कालं वसूनामाधिपत्यं स्वाराज्यं पर्येता परितो गंता भवतीत्यर्थः न यथा चंद्रमंडलस्थः केवलकर्मी परतंत्रो

स एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति॥ स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता वसूनामेव ताव
दाधिपत्यꣳ स्वाराज्यं पर्येता॥६॥ अथ यत्द्वितीयममृतं तद्रुद्रा उपजीवंतींद्रेण मुखेन न वै देवा अश्नंति न पिबं
त्येतदेवामृतं दृष्ट्वा तृप्यंति त एतदेव रूपमभिसंविशंत्येतस्माद्रूपादुद्यंति स य एतदेवममृतं वेद रुद्राणामेवैको
भूत्वेंद्रेणैव मुखे नैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभि संविशत्येतस्माद्रूपादुदेति स यावदादित्यः पुर
स्तादुदेता पश्चादस्तमेता द्विस्तावद्दक्षिणत उदेतोत्तरतोऽस्तमेता रुद्राणामेव तावदाधिपत्यꣳ स्वाराज्यं पर्येता॥७॥
॥अथ यत्तृतीयममृतं तदादित्या उपजीवंति वरुणेन मुखेन न वै देवा अश्नंति न पिबंत्येतदेवामृतं दृष्ट्वा तृप्य

देवानामन्नभूतः किं तर्हि यमाधिपत्यं स्वराड्भावं चाधिगच्छति॥६॥ अथ यत्द्वितीयम ((तिन एतदेव रूपमभि
मृतं तद्रुद्रा उपजीवंतीत्यादि समानं स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता द्विस्तावत्ततो द्विगुणं कालं दक्षिणत उ

कथयति॥ स यावदिति॥ यावद्वसूनां भोगकालः ततो द्विगुणो रुद्राणां भोग ((देतोत्तरतोऽस्तमेता रुद्राणां तावत् भोगकालः॥७॥ तथा
कालः यथा प्रथमामृतव्यापिनां वसुभिस्तुल्यो भोगकालस्तथा द्वितीयामृतव्यापिनामपि रुद्रैस्तुल्यो भोगकाल इत्यर्थः॥७॥ इतरामृतव्यापिनां

छां·भा·
५

यथापुरस्तादुदेतापश्चाच्चास्तमेताततोदक्षिणतोद्विगुणेनकालेनोदेताउत्तरतश्चास्तमेतेत्युक्तंतथाततोद्विगुणेनकालेनपश्चादुदेतापु
रस्ताच्चास्तमेतातावानादित्यानांभोगकालस्तृतीयामृतध्यायिनामपितावानेवभोगकालः॥८॥ततोद्विगुणेनकालेनयावदादित्यउत्तर

स्तमेता॥८॥पूर्वस्मात्पूर्वस्मात्द्विगुणोत्तरोत्तरेणकालेनेत्यपौराणंदर्शनंसवितुश्चतुर्दिशमिन्द्रयमवरुणसोमपुरी

तस्माद्रूपादुद्यन्तिसयएतदेवममृतंवेदादित्यानामेवैकोभूत्वावरुणेनैवमुखेनैतदेवामृतंदृष्ट्वातृप्यतिसए
तदेवरूपमभिसंविशत्येतस्माद्रूपादुदेतिसयावदादित्योदक्षिणतउदेतोत्तरतोऽस्तमेताद्विस्तावत्पश्चादुदेतापु
रस्तादस्तमेतादित्यानामेवतावदाधिपत्यंस्वाराज्यंपर्येता॥८॥अथयच्चतुर्थममृतंतन्मरुतउपजीवन्तिसो
मेनमुखेननवैदेवाअश्नन्तिनपिबन्त्येतदेवामृतंदृष्ट्वातृप्यन्तितएतदेवरूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्तिसय
एतदेवममृतंवेदमरुतामेवैकोभूत्वासोमेनैवमुखेनैतदेवामृतंदृष्ट्वातृप्यतिसएतदेवरूपमभिसंविशत्येतस्मा
द्रूपादुदेतिसयावदादित्यःपश्चादुदेतापुरस्तादस्तमेताद्विस्तावदुत्तरतउदेतादक्षिणतोऽस्तमेतामरुतामेवता
वदाधिपत्यंस्वाराज्यंपर्येता॥९॥अथयत्पञ्चमममृतंतत्साध्याउपजीवन्तिब्रह्मणामुखेननवैदेवाअश्नन्ति
नपिबन्त्येतदेवामृतंदृष्ट्वातृप्यन्तितएतदेवरूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्तिसयएतदेवममृतंवेदसाध्याना
मेवैकोभूत्वाब्रह्मणैवमुखेनैतदेवामृतंदृष्ट्वातृप्यतिसएतदेवरूप ११ पूर्वयावदस्तमयकालस्यतुल्यत्वंहिपौराणिके

तउदेतादक्षिणतोऽस्तमेतातावान्मरुतांभोगकालश्चतुर्थामृतध्यायिनामपितावानेवभोगकालः॥९॥ततोद्विगुणेनकालेनोर्ध्वमुदेता
अधस्तादस्तमेतातावान्साध्यानांभोगकालःपंचमामृतचिंतकानामपितावानेवेत्यर्थःयत्पूर्वपूर्वोदयास्तमयकालापेक्षयाद्विगुणेनका
लेनोत्तरोत्तरोदयास्तमयावित्युक्तंतत्पुराणविरुद्धमितिशंकते॥पूर्वस्मात्पूर्वस्मादिति॥कथमुक्तस्यार्थस्यपुराणविरुद्धतेत्याशंक्याहस

अ·
३

राम
५

उक्तमेवसंक्षिपति॥ मानसोत्तरस्येति॥ महागिरेर्मेरोः प्राकारवत्परितः स्थितस्य मूर्द्धनि संलग्नरथचक्राक्षस्य सवितुर्मेरोः प्रदक्षिणावर्त्तत्वे
तुल्यत्वात्कालाधिक्ये कारणाभावाच्च तत्रस्थपुरीषूदयास्तमयकालस्य तुल्यत्वं॥ उक्तं हि विष्णुपुराणे॥ शक्रादीनां पुरे तिष्ठन्स्पृशत्येष
पुरत्रयं॥ विकर्णौ द्वौ विकर्णस्थस्त्रीन्कोणान्द्वे पुरे तथेति॥ लैङ्गे चोक्तं मानसोपरि माहेन्द्री प्राच्यां मेरोः स्थिता पुरी॥ दक्षिणे भानुपुत्रस्य वरुण
स्य तु वारुणे॥ सौम्ये सोमस्य विपुला तासु दिग्देवताः स्थिताः॥ अमरावती संयमनी सुखा चैव विभा क्रमात्॥ लोकपालोपरिष्टात्तु सर्वतो द
क्षिणायने॥ काष्ठां गतस्य सूर्यस्य गतिर्यां तां निबोधत॥ दक्षिणां प्रक्रमे ह्यानुः क्षिप्तेषुरिव धावति॥ पुरान्तगो यदा भानुः शक्रस्य भवति प्रभुः॥ स
र्वैः सांयमनैः सौरो ह्यदृश्यः दृश्यते द्विजाः॥ स एव सुखवत्यां तु निशान्तस्थः प्रदृश्यते॥ अस्तमेति यदा सूर्यो विभायां विश्वदृग्विभुः॥ मयामाञ्चाम
रावत्यां यथासौ वारितस्करः तथा संयमनीं प्राप्य सुखां चैव विभां खगः॥ यदापराह्णस्त्वाग्नेय्यां पूर्वाह्णो नैर्ऋते द्विजाः॥ तदा त्वपररात्रश्च वा

भा॰ मानसोत्तरस्य मूर्द्धनि मेरोः प्रदक्षिणावर्त्ते तुल्यत्वादिति॥

मभिसंविशन्त्येतस्माद्रूपादुदेति स यावदादित्य उत्तरत उदेता दक्षिणतोऽस्तमेता द्विस्तावदूर्ध्वं उदेतार्वाङस्तमेता साध्या
नामेवतानामेवाधिपत्यं स्वाराज्यं पर्येता॥ १० भा॰ अत्रोक्तः परिहार आचार्यैः

पुभागे सुदारुणः॥ ईशान्यां पूर्वरात्रस्तु गतिरेषा
स्यसर्वतद्वृति॥ तस्याश्चोपरिष्टादमरावत्यास्तिष्ठन्मध्याह्नं तत्रैशकोणस्थानां तृतीययाममाग्नेयकोणस्थानामाद्ययामं संयमन्यामुदयं च क
रोति सविता॥ एवं यदा याम्ये मध्याह्ने तिष्ठति तदैन्द्रेऽस्तमयः आग्नेये तु तृतीययामः निर्ऋतिकोणे प्रथमयामः वारुणे उदयः॥ यदा च वारु
णे मध्याह्नः तदा याम्ये स्तमयः नैर्ऋतिकोणे तृतीययामः वायव्ये प्रथमो यामः सौम्ये उदयः॥ यदा च सौम्ये मध्याह्नस्तदा वारुणेऽस्तमयः वा
यव्ये तृतीययामः ईशान्यकोणे प्रथमो यामः ऐन्द्रे उदयः॥ तथाग्नेयकोणे वर्त्तमानस्तत्रत्यानां मध्यं दिनं यमेन्द्रपुर्योराद्यतृतीययामौ नैर्ऋ
तीशानकोणयोरुदयास्तमयौ च करोत्येवं सर्वासु दिक्षु विदिक्षु च निपौराणिके दर्शने तद्विरुद्धमिदं श्रुत्योक्तमित्यर्थः यद्यपि श्रुतिविरोधे
स्मृतिरप्रमाणं तथापि यथाकथंचिद्विरोधपरिहारः द्रविडाचार्यैः कृत उपपादयति॥ अत्रेति॥ यदाऽमरावती शून्या स्यात्तदा हितां प्रति पुरस्ता

हुदेतीति प्रयोगश्च न्यत्वाद्दसूनां भोगानां तत एव मुत्तरासां पुरीणां विनाशे द्विगुणकालेन रुद्रादीनां भोगच्युतिरत इमां वचनव्यक्तिमाश्रि त्यानेनैव परिहारमाह॥ अमरावत्यादीनामिति॥ तत्रापि कथं विरोधसमाधिरत आह॥ उदयश्चेति॥ यैर्यत्र दृश्यते भास्वान्स तेषामुदयः स्मृतः॥ तिरोधानं च यत्रैतत् तत्रैवास्तमनं रवेः॥ नैवास्तमनमर्कस्य नोदयः सर्वदा सतः॥ उदयास्तमनेनाम दर्शनादर्शने रवेरिति॥ अमरावत्यादिपुरीषु पूर्वपूर्वापेक्षयोत्तरोत्तरस्यां ह्रासकाले द्वैगुण्यमस्तु आलोचदर्शनादर्शने सन्निरुदयास्तमयौ॥ सवाएष न कदाचनास्तमेति नोदेतीति श्रुतेर्वस्तुतो नोदयास्तमयौ स्तस्तथा च पुरीषूत्तरत्वेन गच्छतः सवितुरुदयास्तमयकालवैषम्यमयुक्तमित्याशंक्याह॥ तन्निवासिनां चेति॥ भोगकालद्वैगुण्यं सवितृगतेराधिक्यापेक्षयानश्रुत्योश्च नैव पुराणविरोधः किं त्वमरावत्यादीनां पुरीणां दैत्यापहृतानां पूर्वपूर्वापेक्षयोत्तरोत्तरपुरीणां द्विगुणेन कालेनोद्ह्रासात्तदपेक्षयोत्तरेषु स्थानेषु भोगकालद्वैगुण्यं युक्तमिति भावः अथोद्दा

रमरावत्यादीनां पुरीणां द्विगुणोत्तरोत्तरेण कालेनोद्ह्रासः स्यात्॥ उदयश्च नाम सवितुस्तन्निवासिनां प्राणिनां चक्षुर्गोचरापत्तिस्तदन्यथा चास्तमनं न परमार्थत उदयास्तमने स्तः तन्निवासिनां च प्राणिनामभावेनान्यत्रैव मार्गेण गच्छन्नपि नैवोदेता नास्तमेतेति चक्षुर्गोचरापत्तेस्तदन्यथाभावात्तथामरावत्याः सकाशाद्द्विगुणं कालं संयमनीपुरीवसन्तस्तन्निवासिनः प्राणिनः प्रति दक्षिणत इवोदेत्युत्तरतोऽस्तमेतीत्युच्यते अस्मद्बुद्धिं चापेक्ष्य तथोत्तरास्वपि पुरीषु योजना॥ सकालाधिक्याद्भोग

च्युतिकालाधिक्यं न भोगकालाधिक्यमत आह॥ तथेति॥ यथोद्ह्रासकालद्वैगुण्यमुक्तं तद्दर्शितं यावत् अमरावतीनिवासिप्राणिवर्गापेक्षया संयमिनीनिवासिनः प्राणिनः प्रति द्विगुणेन कालेन सवितुरुदयास्तमयाविति युक्तं च वक्तुं दर्शनादर्शनयोर्द्विगुणकालभावित्वान्न च तन्निवासिदृष्ट्यपेक्षया दक्षिणोत्तरयोरुदयास्तमयौ न तद्दृष्ट्या पूर्वपश्चिमयोरेव तद्भावादस्मद्बुद्धिमपेक्ष्य तु दक्षिणत उदेति उत्तरतश्चास्तमेतीत्युच्यते॥ इवशब्दस्तयोस्तन्निवासिजनापेक्षया दक्षिणोत्तरस्ययोरसत्त्वं द्योतयतीत्यर्थः यथामरावत्यपेक्षया संयमिन्या उद्ह्रासकालाधिक्यमुक्तं तथा तदपेक्षया वारुण्या तदपेक्षया च विभायां तत्कालाधिक्यमवधेयमित्याह॥ तथेति॥ संयमिनीं चान्तर्भाव्य बहुवचनं इतश्चास्मद्बुद्धिमपेक्ष्य दक्षिणगत्यादि वचनं तूत्याह॥

सर्वेषां चेति उदयंतमादित्यं पुरतो विलोकयतां वामभागे स्थितत्वान्मेरुः सर्वेषामेवोत्तरतो भवति तथा चोदयास्तमयाभ्यां पूर्वापरदिग्वि
भागान्न तत्सुरवासिदृष्ट्यपेक्षया दक्षिणतइत्यादिवचनं किंतु अस्मद्दृष्ट्यपेक्षयेत्यर्थः ॥ उद्गासकालद्वैगुण्यापेक्षया भोगकालद्वैगुण्यमि
त्युक्तं संप्रति सवितृगत्याधिक्यापेक्षयैव भोगकालाधिक्यं किं न स्यादित्याशंक्य उगणविरोधसमाधानासंभवान्मैवमित्याह ॥ यदेत्यादि
ना ॥ यथा संयमिन्यां मध्याह्नगो वारुण्यामुद्यन्भवति तथा नस्यां मध्याह्नगो विभायामुद्यन्दृश्यत इत्याह ॥ तथेति ॥ उक्तं च वायुप्रोक्ते मध्य
गस्त्वमरावत्यां यावद्भवति भास्करः ॥ वैवस्वते संयमने उदयस्तत्र दृश्यते ॥ सुखायामर्धरात्रश्च विभायामस्तमेति चेति कथं पुनः स्याव
दादित्य उत्तरतउद्देनादक्षिणतोऽस्तमेनादिलावद्र्ध्वमुदेता वोऽस्तमेतेत्युच्यते न हि तत्रोदास्तकालस्य बाधितत्वमस्ति येनारयास्तमय
कालाधिक्याद्भोगकालाधिक्यं स्यादत आह ॥ इलावृतेति ॥ मेरोश्चतुर्दिशमिलावृतनामवर्षं प्रसिद्धं तन्निवासिनां प्राणिनामुभयतः पर्वता

सर्वेषां च मेरुरुत्तरतो भवति ॥ यदामरावत्यां मध्याह्नगतः सविता तदा संयमिन्यामुद्यन्दृश्यते ततः मध्याह्नगोचरो वा
रुण्यामुद्यन्दृश्यते तथोत्तरस्यां प्रदक्षिणावृत्तस्तुल्यत्वादिलावृतवासिनां सर्वतः पर्वतप्राकारनिवारितादित्यरश्मीनां
सविता ध्वेद्दवोदेता ऽवोगस्तमेता दृश्यते पर्वतोर्ध्वछिद्रप्रवेशात्सवितृप्रकाशस्य तथा गोदमृतोपजीविनां अमृतानां च द्वि
गुणोत्तरोत्तरवीर्यवत्त्वमनुमीयते भोगकालद्वैगुण्यलिङ्गेनोद्यमनसंवेशनादिदेवानां रुद्रादीनां विदुषश्च समानं ॥ १० ॥

भ्यां मानसोत्तरस्तु मेरुभ्यां प्राकारस्थानीयाभ्यामुभयोर्ध्वस्थितमहाशेण विनिवारितादित्यरश्मीनामूर्ध्वमुदेता वोऽस्तमेता च सवि
ता दृश्यते ॥ इव शब्द उदयास्तमययोर्वस्तुतोऽसत्त्वद्योतनार्थः कथं सविता ऊर्ध्वः सन्नुदेत्यथवोऽस्तमेतीत्यत्राह ॥ पर्वतेति ॥ सर्वावृतप्रका
शस्य पर्वतयोरुपरितनच्छिद्रप्रवेशादधोवर्तिनां प्राणिनामुपरिप्रसारितनेत्राणां सावित्रप्रकाशं पश्यतां तत्रोद्यन्निव सविता उपलभ्यते
प्रदेशान्तरे चादृश्यमानोऽस्तादिवास्तमेति यथा परिशिष्टान्त्यरूपलम्भाभ्यनीमेयः ततो दूरादृश्ये भूततलस्तम्भश्च न्येवावसीयते न तथा हापी
त्यर्थः भोगकालस्याविरोधेनाधिक्यमापाद्यते नैव लिङ्गेनातिशयवत्त्वममृतादपि कथयतीति ॥ तथेति ॥ भोगकालाधिक्ये सतीति यावत्
अनुमीयते कल्प्यते यत्र भोगकालमाकल्प्योद्यमनानन्तरं तदभावं ज्ञात्वोपरमणमन्यादिसुखत्वं दृष्टिमात्रेण तृप्तिमत्त्वं तत्सर्वं विदुषा

पञ्चभिःपर्यायैर्मधुविद्यांयथावदुक्त्वाक्रमेणमुक्तिफलपर्यवसायित्वंतस्यादर्शयितुंअनंतरवाक्यमवरुध्याह॥कृत्वेत्यादिना॥तस्मा
त्प्राण्यनुग्रहकालादनंतरमिति तच्छब्दार्थः॥ऊर्ध्वःब्रह्मीभूतोवर्तमानइतियावत्आत्मन्युदेत्यस्वमहिम्निप्रकाशंलब्ध्वेत्यतस्याने
तिप्रयोगात्क्रममुक्तिरत्रविवक्षितेत्यत्रविद्वदनुभवंप्रमाणयति॥तत्रेति॥क्रममुक्तिःसत्यमर्थः॥यथोक्तक्रमेणासौवाआदित्योदेव

कृत्वैवमुदयास्तमनेनप्राणिनांस्वकर्मफलभोगनिमित्तमनुग्रहंतत्कर्मफलोपभोगक्षयेतानिप्राणिजातान्यात्मनिसंहृ
त्याथततस्तस्मादनंतरंप्राण्यनुग्रहकालादूर्ध्वःसन्नात्मन्युदेत्योद्गम्ययान्प्रत्युदेतितेषांप्राणिनामभावात्स्वात्मस्थोनैवो
देतानास्तमेताएकलोऽद्वितीयोऽनवयवोमध्येस्वात्मन्येवस्थातातत्रकश्चिद्विद्वान्वस्वादिसमानचरणोरोहिताद्यमृतभो
गभागीयथोक्तक्रमेणस्वात्मानंसवितारमात्मत्वेनोपेत्यसमाहितःसन्नेतंमन्त्रंदृष्ट्वोत्थितोऽन्यस्मैपृष्टवतेजगादयत्तत्स्वमाग

अथततऊर्ध्वउदेत्यनैवोदेतानास्तमेतैकलएवमध्येस्थातातदेषश्लोकोनवैतत्रननिम्लोचनोदियायकदाचनदेवा
स्तेनाहंसत्येनमाविराधिषिब्रह्मणेतिनहवाअस्मा

तोब्रह्मलोकात्किंतत्राप्यहोरात्राभ्यांपरिवर्तमानःसविताप्राणि
नामायुःक्षपयतियथेहास्माकमित्येवंपृष्टःप्रत्याहतत्त्रयथापृष्टेयथोक्तेचार्थेएषश्लोकोभवतितेनोक्तोयोगिनेतिश्रुतेर्वच
नमिदंनवैतत्रयतोऽहंब्रह्मलोकादागतःतस्मिन्नवैतत्रतदस्तियत्पृच्छसिनहितत्रनिम्लोचास्तमगमत्सवितानचोदियायोद्गतः
कुतश्चित्कदाचनकस्मिंश्चिदपिकालइत्युदयास्तमयवर्जितोब्रह्मलोकइत्युपपन्नमित्युक्तःशपथमिवप्रतिपेदेहेदेवाःसाक्षिणो

मधुइत्यादिनापंचामृतत्वेनस्थितमित्यर्थः॥स्वमात्मानंवेद्यतयाविद्वदात्मसंभूतमित्यर्थः॥आत्मत्वेनोपेत्याहंग्रहेणगृहीत्वेत्येतत्का
र्यप्रभृत्याकांक्षायामाह॥यत्तदिति॥लब्धब्रह्मोपदेशोब्रह्मविद्याक्रान्तावस्थायांब्रह्मणोऽवियुक्तोवियुक्तावस्थायांकेनचित्पृष्टःप्रत्युवा
चेत्यर्थःकथंप्रत्युक्तिरितितत्राह॥तत्रेति॥श्लोकमुपादायव्याकरोति॥नवैतत्रेत्यादिना॥निम्लोचेत्यस्मिन्नर्थेछांदसःप्रयोगः॥इतिप्र

लोकत्वाविशेषादितरलोकवत्ब्रह्मलोकोपिनोदयास्तमयवर्जितइत्युक्तोविद्वानुनरार्थेनशपथंकुर्वन्परिहरतीत्यर्थः एवंमंत्र
कृशपथद्वारानिर्णीतेर्थेनहेत्याद्याकिमर्थाश्रुतिरित्याशंक्याह॥सत्यमिति॥नहेत्याद्याश्रुतिमादायव्याचष्टे॥यथोक्तेति॥ब्रह्मोप
निषदमित्यस्यार्थमाह॥वेदगुह्यमिति॥एवंशब्दमादायव्याकरोति॥एवमित्यादिना॥वंशादित्रयंपतिरश्चीनवंशोमध्वपूपोमधुनाड्य
श्चेत्येवंरूपमित्यर्थः॥मत्यमृतसंबंधंचलोहितादामृतपंचकेकवस्वादीनांसंबंधमित्यर्थः॥अन्यदित्युदयमनसंवेशनादिग्रहणेनउक्तविद्याफ

मपोक्तंसत्यवचः तेनसत्येनाहंब्रह्मणाब्रह्मस्वरूपेणमाविराधिषिमाविरुध्येयंअप्राप्तिर्ब्रह्मणोमाभूदित्यर्थः सत्येनेनोक्त
मित्याहश्रुतिर्नहवाअस्मा॥ यथोक्तब्रह्मविदेनोदेतिननिम्लोचतिनास्तमेतिकिंतुब्रह्मविदेऽस्मैसकृद्दिवाहैवसदैवाहर्भवतिस्वयं
ज्योतिष्ट्वाद्यएतांयथोक्तांब्रह्मोपनिषदंवेदगुह्यंवेदएवंतंत्रेणवंशादित्रयंप्रत्यमृतसंबंधंचयत्नान्यदेवोपासमेवंजानातीत्यर्थो

उदेतिननिम्लोचतिसकृद्दिवाहैवास्मैभवतियएतामेवंब्रह्मोपनिषदंवेदतद्धैतद्ब्रह्माप्रजापतयउवाचप्रजाप
तिर्मनवेमनुःप्रजाभ्यस्तद्धैतदुद्दालकायारुणयेज्येष्ठायपुत्रायपिताब्रह्मप्रोवाचेदंवावतज्ज्येष्ठायपुत्रायपिता

विद्वानुदयास्तमयकालापरिच्छेद्यंनित्यमजंब्रह्मभवतीत्यर्थः तद्धैतन्मधुज्ञानंब्रह्माहिरण्यगर्भोवि ब्रह्मप्रब्रूयात्
राजेप्रजापतयउवाचसोपिमनवे मनुरिक्ष्वाक्वादिभ्यःप्रजाभ्यःप्रोवाचेतिविद्यांस्तौतिब्रह्मादिविशिष्टक्रमाग
तेतिकिंचतद्धैतन्मधुज्ञानमुद्दालकायारुणयेपिताब्रह्मब्रह्मविज्ञानंज्येष्ठायपुत्रायप्रोवाचइदंवावतद्यथोक्तमन्योपि

लमुपसंहरति॥विद्वानिति॥ननुविद्यासफलावेदुक्तातर्हिकिमुत्तरग्रंथेनेत्याशंक्याह॥नहेतदिति॥स्तुतिमेवाभिनयति॥ब्रह्मादी
नितद्धैतदुद्दालकायेत्यादिनाविद्यायायोग्यपात्रंप्रदर्शयतेतद्व्याचष्टे॥किंचेति॥इतश्चस्तुत्यर्हमेतद्विज्ञानमित्यर्थः मधुविज्ञानंव्या
करोति॥ब्रह्मविज्ञानमिति॥तस्यपरोक्षत्वंव्यावर्तयति॥इदंवावेति॥अथज्येष्ठायपुत्रायब्रह्मवक्तव्यमितिपूर्वेणासंबंधनियमेन॥

पात्रांतरमनुजानाति॥प्रणाय्यायेति॥उत्तरशिष्याभ्यां पात्रांतरं मत्वा चष्टे॥नेति॥तीर्थद्वयं विद्याप्रदानेऽधिकारिद्वयमित्यर्थः।निर्द्धार
णे षष्ठी आचार्यो विद्यादाता॥आदिपदाद्धनदायी श्रोत्रियो मेधावी च गृह्यते सर्वेषामर्थिनामत्राधिकारमाशंक्य दूषयति॥कस्मा
दित्यादिना॥आचार्यायेति॥पुनरुपदेशानुक्रियापदेन तस्यान्वयद्योतनार्थं विद्यायामादरो वा मुख्यमधिकारकारणं फलतीति
भावः॥११॥गतेन ग्रंथेनोत्तरग्रंथस्य गतार्थत्वं परिहरति॥यत इति॥सविनद्वारकब्रम्हविद्यानंतरं तद्देवतागायत्रीद्वारेण तद्विद्योप

सर्वेभ्यो ह्यो यब्रह्म प्रब्रूयात् प्रणाय्याय वा योग्यायांतेवासिने शिष्याय नान्यस्मै कस्मैचन प्रब्रूयात्तीर्थद्वयमनुज्ञातमने
केषां प्राप्तानां तीर्थानामाचार्यादीनां कस्मात्पुनस्तीर्थसंकोचनं विद्यायाः कृतमित्याह यद्यप्यस्मै आचार्याय इमां कश्चित्पृ
थिवीमद्भिः परिगृहीतां समुद्रपरिवेष्टितां सर्वस्तामपि दद्यादस्याः विद्याया निष्क्रयार्थमाचार्याय धनस्य पूर्णां संपन्नां भोग्या

प्रणाय्याय वांतेवासिने नान्यस्मै कस्मैचन यद्यप्यस्मा इमामद्भिः परिगृहीतां धनस्य पूर्णां दद्यादेतदेव ततो
भूय इत्येतदेव ततो भूय इति॥११॥ अह्नः॥

((पकरणैर्नासावस्याः निष्क्रयो यस्मात्ततो दानादेतदेव यन्मधुविद्यादानं
भूयो बहुतरफलमित्यर्थः द्विरभ्यास आदरार्थः॥११॥ यत एवमतिशयफलैषा ब्रह्मविद्या अतः प्रकारांतरेणापि वक्त
व्येति गायत्री वा इदं सर्वमित्यारभ्यते गायत्रीद्वारेण चोच्यते ब्रह्मणः सर्वविशेषरहितस्य नेति नेतीत्यादिविशेषप्रतिषेधगम्य
स्य दुर्बोधत्वात्॥ सत्स्वनेकेषु छंदःसु गायत्र्या एव ब्रह्मज्ञानद्वारतयोपादानं प्राधान्यात्सोमाहरणात् ((दिग्यत इत्यर्थः ब्रह्म

विद्याया विवक्षितत्वेन ब्रह्मैवोपदिश्यतां किं गायत्र्युपदेशेनेत्याशंक्याह॥गायत्रीति॥तथापि छंदोंतराणि विहाय किमिति गायत्रीद्वा
रेण ब्रह्मोपदिश्यते तत्राह॥सत्स्विति॥ब्रम्हज्ञानद्वारतया तदुपायत्वेनेत्यर्थः प्राधान्ये हेतुमाह॥सोमाहरणादिति॥सोमस्याहरणमानयनं त
त्साधनत्वं गायत्र्याश्छंदसां नामृचां याजकैरिष्यते तत्रुक्तत्वस्याप्यत्र प्राधान्यमित्यर्थः यद्वा देवैः सोमाहरणमिच्छद्भिश्छंदसां गायत्रीत्रि

एम ८

तादर्थ्येन नियोगे जगतीत्रिष्टुभोर्मध्ये मार्गमशक्तयोर्निवृत्तौ गायत्री सोमं प्राप्य रक्षिणस्तस्य विजित्य तं देवेभ्यः समाहरदित्येतरेयक
ब्राह्मणे सोमो वै राजामुष्मिंलोके आसीदित्यत्र प्रसिद्धमतस्तत्प्राधान्यमित्यर्थः॥ तत्रैव हेत्वन्तरमाह॥ इतरेति॥ उष्णिगनुष्टुप्प्रभृतीनीत
राणि छन्दांसि तेषां पादशोऽक्षराणि सप्ताष्टादिसंख्याकानि तेषामाहरणमापादनं गायत्र्यक्षरैः पादशः पङ्क्तिः क्रियते नाधिकसंख्याया न्यू
नसंख्यामन्तरेणासंभवात्तस्मादितरेषु छन्दःसु गायत्र्या व्याप्तेश्च प्राधान्यमित्यर्थः॥ अथवा गायत्र्यतिरिक्तयोस्त्रिष्टुब्जगतीछन्दसोः
सोमाहरणाद्यनयोरशक्तयोर्मार्गमध्ये जगत्यास्त्यक्तानि त्रीण्यक्षराणि त्रिष्टुभा चैकमक्षरं ततश्चतुरक्षरा त्रिष्टुप्त्र्यक्षरा संवृत्ता तत
त्र गायत्री सोममाहरती त्यक्तानामक्षराणामाहरणेन पूर्णतां तयोरापादयते प्रतिव्याप्य स्थिता तेन तत्प्राधान्यमित्यर्थः॥ तत्रैव हेत्वन्तर

इतरछन्दोक्षराहरणेनेतरछन्दोव्याप्त्या च सर्वसवनव्यापकत्वाच्च यज्ञे प्राधान्यं गायत्र्याः॥ गायत्रीसारत्वाच्च ब्राह्मण

गायत्री वा इदꣳ सर्वं भूतं यदिदं किञ्च वाग्वै गायत्री वाग्वा इदꣳ सर्वं भूतं गायति च त्रायते च

स्यमातरमिव हित्वा गुरुतरां गायत्रीं ततोऽन्यद्गुरुतरं न प्रतिपद्यते यथोक्तं ब्रह्मापीति तस्यामत्यन्तगौरवस्य प्रसिद्धत्वा
द्धतो गायत्रीमुखेनैव ब्रह्मोच्यते गायत्री वै इत्यवधारणार्थो वैशब्दः इदं सर्वं भूतं ((माह॥ सर्वसवनेति सर्वाणि प्रातःसवनं मा
ध्यंदिनं सवनं तृतीयसवनमिति एतानि तेषु गायत्र्या व्यापकत्वं मिश्रणं गायत्रं प्रातःसवनं त्रैष्टुभं माध्यंदिनं सवनं जागतं तृती
यसवनमिति स्थितेऽपि त्रिष्टुप्जगत्योर्गायत्र्यासेकृतत्वात्तस्याश्च पादाभ्यां मुखेन च सोमाहरणद्वारेण सवनत्रयसंबंधा
दतश्च तस्या अस्ति यज्ञे प्राधान्यमित्यर्थः॥ कर्मणि तत्प्राधान्येऽपि कुतो ब्रह्मविद्यायां तत्प्राधान्यमित्याशंक्याह॥ गायत्रीति॥ ब्रह्म
विद्यायाः तत्प्राधान्यमिति शेषः गायत्रीमेवालम्बनत्वेन प्रतिपद्यते ब्रह्मेत्यत्र लोकप्रसिद्धिमनुकूलयति॥ तस्यामिति॥ गायत्र्या ब्रह्म
ज्ञानद्वारेणोपादानमुक्तहेतुभ्यः सिद्धमित्युपसंहरति अत इति॥ तथा चेतोर्पणनिगदादिन्यायेन गायत्र्युपाधिकं ब्रह्मोपास्यमिति प्रति

तदिदं सर्वं गायत्र्येवेति योजना गायत्र्याः सर्वात्मकत्वाद्ब्रह्मदृष्ट्योपास्तिर्युक्तेत्युक्तं तत्रानुपपत्तिमाशंक्यानंतरवाक्येनोत्तरमाह ॥ तस्या इति ॥ कथं वाचो गायत्रीत्वमित्याशंक्य तस्याः सर्वभूतसंबंधं दर्शयति ॥ वागिति ॥ कुतो गायत्रीत्वं तत्राह ॥ यस्मादिति ॥ भवत्वेवं वाचः स्वरूपं गायत्र्यास्तु किमायातं तदाह ॥ यद्वागिति ॥ गायत्रीनाम निर्वचनादपि वाच्युक्तं रूपं गायत्र्यामेव द्रष्टव्यमित्याह ॥ गानादिति ॥ अस्ति हि वाचः सर्वभूतात्मकत्वं तद्वाचकत्वाद्वाच्यस्य च वाचकातिरेकेण निरूपणात्तथा च वाग्भूता गायत्री सर्वभूतात्मिकेत्युक्तमिदानीं तस्या वि

प्राणिजातं यत्किंच स्थावरं जंगमं वा तत्सर्वं गायत्र्येव तस्याश्छंदोमात्रायाः सर्वभूतत्वमनुपपन्नमिति गायत्रीकारणं वाचं शब्दरूपामापादयति गायत्री वाग्वै गायत्री वाग्वा इदं सर्वं भूतं यस्माद्वाक् शब्दरूपा सती सर्वं भूतं गायति च शब्दयति असौ गौरसावश्व इति त्रायते च रक्षत्यमुष्मान्माभैषीः किं ते भयमुत्थितमित्यादिना सर्वतो भयान्निवर्त्यमानो वाचा त्रातः स्या

या वै सा गायत्रीयं वाव सा येयं पृथिव्यस्याꣳ हीदꣳ सर्वं भूतं प्रतिष्ठितमेतामेव नातिशीयते या वै सा पृथिवीयं वाव सा यदिदमस्मिन्पुरुषे शरीरमस्मिन्हीमे प्राणाः

॥ यद्वाग्भूतं गायति च त्रायते च गायत्र्येव तद्गायति च त्रायते च वाचोऽनन्यत्वाद्गायत्र्याः गानात्त्राणाच्च गायत्र्या गायत्रीत्वं या वै सैवंलक्षणा सर्वभूतरूपा गायत्री इयं वाव सा येयं पृथिवी कथं पुनरियं पृथिवी गायत्रीत्युच्यते सर्वभूतसंबंधात्कथं सर्वभूतसंबंधोऽस्याः पृथिव्या हि यस्मात्सर्वं स्थावरं जंगमं च भूतं प्रतिष्ठितमेतामेव पृथिवीं नातिशीयते नातिवर्तत इत्येतत् यथा गानत्राणाभ्यां भूतसंबंधो गायत्र्या एवं भूतप्रतिष्ठानाद्भूतसंबंधा

धांतरमाह ॥ या वै सेति ॥ एवंलक्षणत्वं व्याचष्टे ॥ सर्वेति ॥ गायत्रीमनूद्य पृथिवीत्वं तस्या विहितं प्रश्नपूर्वकमुपपाद ॥ द्वा पृथिवी अ यति ॥ कथं पुनरिति ॥ गायत्र्याः सर्वभूतसंबंधस्योक्तत्वात्पृथिव्यास्तत्संबंधं चोद्यपूर्वकमुत्पादयति ॥ कथमिति ॥ सर्वस्य पृथिव्यां प्रतिष्ठितत्वं साधयति ॥ एतामेवेति ॥ तथापि कथं पृथिव्या गायत्रीत्वं तदाह ॥ यस्येति ॥ संप्रति गायत्र्याः शरीररूपत्वं निरूपयति ॥ या

पृथिवीमनूद्यतस्याः शरीराभेदेहेतुमाह ॥ पार्थिवत्वादिति ॥ इदानींगायत्रीशरीरयोरेकत्वंप्रश्नपूर्वकंकथयति ॥ कथमित्यादिनाप्राणा-
नांशरीरेप्रतिष्ठितत्वंप्रकटयति ॥ एतदेवेति ॥ अथगायत्र्याहृदयत्वमावेदयति ॥ यद्वैतदिति ॥ हृदयस्यगायत्र्याश्चैकत्वंप्रश्नपूर्वकं
विवृणोति ॥ एतदित्यादिनाहृदयेप्राणानांप्रतिष्ठितत्वंप्रकटयति ॥ एतदेवेति ॥ प्राणानांभूतशब्दवाच्यत्वेतत्संबन्धेसतिभूतसंबन्धा-
त्गायत्र्याः शरीरादिभावः संभवतितेषांभूतशब्दवाच्यत्वेतुकिंमानमित्याशङ्क्याह ॥ प्राणोहेति ॥ अहिंसावाक्येपिप्राणपरिमारणं

पृथिवीगायत्रीयंवावसाइदमेवतत्किंयदिदमस्मिन्पुरुषेकार्यकरणसंघातेजीवतिशरीरंपार्थिवत्वात्शरीरस्यक-
थंशरीरस्यगायत्रीत्वमित्युच्यते अस्मिन्हीमेप्राणाभूतशब्दवाच्याः प्रतिष्ठिता अतः पृथिवीवत्भूतशब्दवाच्यप्रतिष्ठाना
शरीरंगायत्री एतदेवयस्माच्छरीरंनातिशीयन्तेप्राणा यद्वैतत्पुरुषेशरीरंगायत्रीदंवावतद्यदिदमस्मिन्नन्तर्मध्येपुरुषेहृद-
यपुण्डरीकाख्यंएतद्गायत्रीकथमित्याहास्मिन्हीमेप्राणाः प्रतिष्ठिता अतः शरीरवत्गायत्रीहृदयंएतदेवनातिशीयन्तेप्राणाः

प्रतिष्ठिताएतदेवनातिशीयंतेयद्वैतत्पुरुषेशरीरमिदंवावतद्यदिदमस्मिन्नंतःपुरुषेहृदयमस्मिन्हीमेप्राणाःप्रति-
ष्ठिताएतदेवनातिशीयंतेसैषाचतुष्पदाषड्विधागायत्रीतदेतदृचाभ्यनूक्तंतावानस्यमहिमाततोज्यायांश्चपूरुषः

प्राणोहपिताप्राणोमाताअहिंसन्सर्वभूतानीतिचश्रुतेर्भूतशब्दवाच्याः प्राणाः ॥ सैषाचतुष्पदाषडक्षरपादाछन्दोरू-
पासतीभवतिगायत्रीषड्विधावाग्भूतपृथिवीशरीरहृदयप्राणरूपासतीषड्विधाभवतिवाक्प्राणयोरन्यार्थनिर्दि-
ष्टयोरपिगायत्रीप्रकारत्व मन्यथाषड्विधसंख्यापूरणानुपपत्तेस्तदेतस्मिन्नर्थे

((प्रतिषिध्यतेनतथाचभूतशब्दस्तत्रप्रतीतिगो-
चरोभवत्येवेत्याह ॥ भूतेति ॥ आध्यानशेषत्वेनगायत्र्याश्चतुष्पात्त्वंदर्शयति ॥ सैषेति ॥ लक्षयित्वातस्याःषड्विधत्वमनूद्यसाधयति ॥
षड्विधेति ॥ गायत्रीहृदययोःसर्वभूतसंबन्धसिध्यर्थमुपदिष्टयोर्वाक्प्राणयोर्गायत्रीप्रभेदत्वेनकथंव्या ख्यानमित्याशङ्क्याह ॥

वाक्भूतपृथिवीशरीरहृदयप्राणभेदात् षड्विधां गायत्रीमनुचिंत्याजहल्लक्षणयानवच्छिन्नब्रह्मत्वेन तदनुचिंतयेदिति तच्छेषत्वेने
न पूर्वोक्ते स्थिते सतीत्यर्थः॥ समस्तस्य पादविभागविशिष्टस्येति यावत् विस्तारमेव विवृणोति॥ यावानिति॥ वाचारंभणं विकारो नाम
धेयमिति वाक्यशेषमाश्रित्य विशिनष्टि॥ वाचारंभणमात्रादिति॥ परमार्थसत्यत्वे हेतुमाह अविकार इति॥ तावानस्येत्यादिसंक्षेप
ति॥ तस्येति॥ आदिपदेन वायुराकाशश्चेत्युभयमुक्तं ततो ज्यायानित्यादि स्फुटयति॥ त्रिपादिति॥ समस्तस्य सर्वप्रपंचात्मकस्यास्य

एतद्गायत्र्याख्यं ब्रह्म गायत्र्यनुगतं गायत्रीमुखेनोक्तमृचापि मंत्रेणाभ्युक्तं प्रकाशितं तावानस्य गायत्र्याख्यस्य
ब्रह्मणः समस्तस्य महिमा विभूतिविस्तारो यावांश्चतुष्पात् षड्विधश्च ब्रह्मणो विकारः पादो गायत्रीत्याख्यातः ततस्त
स्माद्विकारलक्षणाद्गायत्र्याख्यात् वाचारंभणमात्रात् ततो ज्यायान्महत्तरश्च परमार्थसत्यरूपोऽविकारः पूरुषः पुरुषः सर्व
पूरणात्पुरिशयनाच्च तस्यास्य पादः सर्वा सर्वाणि भूतानि तेजोवन्नादीनि सस्थावरजंगमानि त्रिपात्त्रयः पादा अस्य सोयं त्रि

पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवीति॥ यद्वै तद्ब्रह्मेतीदं वाव तद्योऽयं बहिर्द्धा पुरुषादाकाशो यो वै स बहिर्द्धा पु
रुषादाकाशः अयं वाव स योऽयमन्तः पुरुष आकाशो यो वै सोऽन्तः पुरुष आकाशः अयं वाव स योऽयमन्तर्हृदय आकाशस्त॥१८॥

पादमृतं पुरुषाख्यं समस्तस्य गायत्र्यात्मनो दिवि द्योतनवति स्वात्मन्यवस्थितमित्यर्थ इति॥ यद्वै तत्त्रिपादमृतं गा
यत्रीमुखेनोक्तं ब्रह्मेतीदं वाव तदिदमेव तद्योऽयं प्रसिद्धो बहिर्धा बहिः पुरुषादाकाशो भौतिको यो वै स बहिर्द्धा पुरुषा
दाकाश उक्तोऽयं वाव स योऽयमन्तः पुरुषे शरीर आकाशोऽयं वाव स योऽयमन्तर्हृदये पुण्डरीक आकाशः कथमेकस्य स
र्थः श्रुताविति शब्दो मंत्रसमाप्त्यर्थः॥ यद्ब्रह्म गायत्र्यवच्छिन्नमुपास्यमुक्तं हृदयाकाशे तच्चेय "त आकाशस्य त्रिधाभेदइ
मिति वक्तुं क्रमेण हृदयाकाशमवतारयति यद्वै तदित्यादिना एकस्याकाशस्य कथं त्रैविध्यमुक्तमिति शंकते॥ कथमिति॥ ओ

विषयत्वंतद्विषयशब्दाद्याश्रयत्वंस्वप्नस्थानभूतेनभसीतिसंबंधः॥नकंचनेत्यादिनानिषेधद्वयेनपूर्वप्रकारमवस्थाद्वयंनिषिध्य
तेनिषेधफलमाह॥अतइति॥सर्वदुःखस्थूलवासनामयंचतन्निवृत्त्यानिरूप्यमाणंहृदयाकाशमित्यर्थः।औपाधिकंत्रैविध्यमुपसं
हरति॥अतइति॥तथापिकिमित्यनेनक्रमेणाकाशस्यसंकोचोहृदयेक्रियतेतत्राह॥वहिर्द्धेतिस्थानस्तुतिमुदाहरणेनस्फुटयति॥
यथेति॥अत्रकुरुक्षेत्रमर्धतोर्धस्थानीयपृथूदकमपितथेतिद्विदलयुगलमिवतदुभयंलोकत्रयापेक्षयाविशिष्टतरमित्यर्थः।हृद

विषयेजागरितस्थानेनभसिदुःखबाहुल्यंदृश्यतेततोंतःशरीरेस्वप्नस्थानभूतेमंदतरंदुःखंभवतिस्वप्नान्पश्यतोहृ
दयस्थेपुनर्नभसिनकंचनकामंकामयतेनकंचनस्वप्नंपश्यत्यतःसर्वदुःखनिवृत्तिरूपमाकाशंसुषुप्तस्थानमतोपु
क्रमेकस्याप्रित्रिधाभेदान्वास्थानवहिर्द्धापुरूषादारभ्याकाशस्यहृदयेसंकोचकारणंचेतःसमाधानस्थानस्तुतयेयथा
त्रयाणामपिलोकानांकुरुक्षेत्रंविशिष्यतेअर्द्धतस्तुकुरुक्षेत्रंअर्द्धतस्तुपृथूदकमितितद्वत्तदेतद्वादाकाशाख्यंब्रह्मपूर्णं

तत्पूर्णमप्रवर्त्तिपूर्णामप्रवर्त्तिनीःश्रियंलभतेयएवंवेद॥१०॥तस्यहवाएतस्यहृदयस्यपंचदेवसुषयः

सर्वगतंनहृदयमात्रपरिच्छिन्नमितिमंतव्यंयद्यपिहृदयाकाशेचेतःसमाधीयतेअप्रवर्त्तिनकुतश्चित्प्रवर्तितुंशी
लमस्यत्यप्रवर्त्तितदनुच्छित्तिधर्मकंयथान्यानिभूतानिपरिच्छिन्नान्युच्छित्तिधर्मकाणिनतथाहार्द्दंनभःपूर्णामप्रव
र्तिनीमनुच्छेदात्मिकांश्रियंविभूतिंगुणफलंलभतेदृष्टंयएवंयथोक्तंपूर्णाप्रवर्तिगुणंब्रह्मवेदजानातीहैवजीवंस्तद्भाव

याकाशेचेतःसमाधीयतेचेत्तत्रभात्रपरिच्छिन्नंब्रह्मप्राप्तमित्याशंक्याह॥तदेतदिति॥(प्रतिपद्यतेइत्यर्थः॥१०॥तस्यहवा
पूर्णत्वेनजन्मनाशशून्यत्वंसिध्यतीत्याह॥अप्रवर्त्तीतिप्रधानफलतंव्यावर्तयति॥गुणफलमिति॥दृष्टेफलवत्वेस्वर्गादिरि
तिदृष्टमित्युक्तं॥ज्ञानमेवविशिनष्टि॥इहैवेति॥वर्तमानोदेहःसप्तम्यर्थःयोविद्वानेवंसयथोक्तफलंलभतइतिसंबंधः॥वक्ष्य

द्वारपालादीत्यादि पदेन तज्ज्ञानो विशेषो गृह्यते ब्रह्मण्युपासनेनाप्रसिद्धितो द्वारपालोपास्तिरयुक्तेत्याशंक्याह ॥ यथेति इति ॥ तदुपास्ति
रर्थवती निःशेषः ॥ स्वर्गलोकशब्दः परमात्मविषयः स्वर्गलोकमित ऊर्ध्वो विमुक्ता इति श्रुत्यन्तरात्तदेवसुषित्वं साधयति ॥ देवेति ॥
स्वर्गलोकस्य परमात्मनो भवनमायतनं तस्य निर्यावत् प्राङ्त्वेऽनुत्वस्यामाशंक्योक्तं ॥ पूर्वाभिमुखस्येति ॥ तत्स्थत्वेनेति तच्छब्दो हृद
यविषयः ॥ तेनैवेति ॥ प्राणविषयस्तच्छब्दः ॥ तदन्यत्ति रिक्तत्वात्तत्त्वेण चक्षुषोऽकिंचित्करत्वं न हि चक्षुषः प्राणस्य संबंधो न हि वाह्य



इत्यादिना गायत्र्याख्यस्य ब्रह्मण उपासनांगत्वेन द्वारपालादिगुणविधानार्थमारभ्यते यथा लोके द्वारपाला राज्ञ उपा
सनेन वशीकृता राजप्राप्त्यर्था भवंति तथेहापीति तस्य ह वा एतस्य हृदयस्येत्यर्थः एतस्यानंतरनिर्दिष्टस्य पंच पंचसंख्या
का देवानां सुषयो देवसुषयः स्वर्गलोकप्राप्तिद्वाराणि छिद्राणि देवैः प्राणादित्यादिभी रक्ष्यमाणानीत्यतो देवसुषयस्तस्य स्वर्ग
लोकभवनस्य यः प्राङ् सुषिः पूर्वाभिमुखस्य प्राग्गतं यच्छिद्रं द्वारं स प्राणः तत्स्थस्तेन द्वारेण यः संचरति वायुविशेषः सः

स योऽस्य प्राङ् सुषिः स प्राणस्तच्चक्षुः स आदित्य स्तदेतत्तेजोन्नाद्य

प्रागनितीति प्राणः तेनैव संबद्धमव्यतिरिक्तं तच्चक्षुस्तथैव स आदित्यः आदित्यो ह वै बाह्यः प्राण इति श्रुतेश्चक्षूरूपप्रति
ष्ठाक्रमेण हृदि स्थितः ॥ स आदित्यः कस्मिन्प्रतिष्ठित इति चक्षुषीत्यादिवाजसनेयके प्राणवाय्वदेवतैवैका चक्षुरादित्य

स्यतत्संबंधे निबंधनमस्तीत्याह ॥ चक्षुरिति ॥ अधिष्ठातृत्वेनादित्यश्चक्षुषि प्रतिष्ठितश्चक्षुश्च ग्राहकतया रूपे प्रतिष्ठितं रूपद
र्शने करणीभवति तथैव प्राणस्य चक्षुष्ट्वमित्यर्थः प्राणादित्ययोरैक्ये प्रमाणमाह ॥ आदित्यो हेति कथं पश्चात्कस्यादित्यस्य हृद
यसुषिद्वारस्थानित्वं वासनात्मना हृदये प्रतिरूपाणि प्रतिष्ठितानि तदानेन क्रमेणादित्यो हृदये प्रतितिष्ठतीत्यर्थः ॥ तत्रश्रुत्यंतरं प्र
माणयति ॥ स आदित्य इति ॥ एकदेवताभिन्नत्वादपि प्राणाभेदेन चक्षुरादित्ययोरध्यानं युक्तमित्याह ॥ प्राणेति ॥ ~ ॥ ~ ॥

॥आश्रयशब्देन रूपाणि हृदयं चोच्यते द्युलोको वा आदित्यश्चक्षुषो देवस्तदधिष्ठितस्य सर्वस्य प्राणात्मत्वे वाक्यशेषमनुकूलयति
॥वक्ष्यति चेति। न हि प्राणे तृप्यति सर्वस्य तृप्तिस्तादात्म्यमन्तरेण संभवतीति भावः तदेतत्प्राणाख्यं ब्रह्म स्वर्गलोकप्रतिपित्सुः सत्पुरुषस्ते
जोन्नाद्यमित्याभ्यां गुणाभ्यां विशिष्टमुपासीतेति संबंधः॥ किमिति यथोक्ताधिकारी प्राणोपासने नियुज्यते तत्राह॥ स्वर्गेति॥ तथापि कथं
यथोक्तगुणद्वयविशिष्टप्राणात्मस्य ब्रह्मणः सिध्यति तत्र तेजः शब्दं व्याकुर्वन्नाह॥ तेजस्वीति॥ एतत्प्राणाख्यं ब्रह्मोभयरूपेणोत

सहाश्रयेण वक्ष्यति च प्राणाय स्वाहेति हुतं हविः सर्वमेतत्तर्पयतीति तदेतत्प्राणाख्यं स्वर्गलोकद्वारपालत्वाद्ब्रह्म स्वर्ग
लोकप्रतिपित्सुः तेजस्वित्वेन चक्षुरादित्यस्वरूपेणान्नादत्वाच्च सवितृत्तेजोन्नाद्यमित्याभ्यां गुणाभ्यां उपासीत ततस्तेजु
स्वी अन्नादश्च आमयावित्वविरहितो भवति य एवं वेद तस्यैतद्गुणफलमुपासनेन वशीकृतो द्वारपः स्वर्गलोकप्राप्तिहे

मित्युपासीत तेजस्व्यन्नादो भवति य एवं वेद॥ अथ योऽस्य दक्षिणः सुषिः स व्यानस्तच्छ्रोत्रं स चन्द्रमास्तदेतच्छ्रीश्च

तुर्भवतीति मुख्यं च फलं॥ अथ योऽस्य दक्षिणः सुषिः तत्स्थो वायुविशेषः स वीर्यवत्कर्म कुर्वन्विगृह्य वा प्राणापानौ ना
नावा नितीति व्यानस्तत्संबद्धमेव च तच्छ्रोत्रमिन्द्रियं तथा स चन्द्रमाः ॥१॥ सवितुश्चात्तेजोगुणविशिष्टतया तदुपासनामर्हेति

सवितुश्चान्नदत्वं वृष्टिद्वारेण आदित्याज्जायते वृष्टिरित्यादौ दृष्टमतश्चान्नं च तदाद्यं चेति गुणान्तरविशिष्टत्वेनापि सवितृरूपं प्राणा
स्य ब्रह्म ध्यानार्हमित्यर्थः॥ किं तर्हि मुख्यं फलमिति तत्राह॥ उपासनेनेति॥ हृदयस्य पूर्वदिग्गवस्थितच्छिद्रसंबंधित्वेन प्राणस्य त्वा
व्यानः श्रोत्रं चन्द्रमाश्चेति त्रितयमितरेतरसंबंधमुपास्यमित्याह॥ अथेति॥ वीर्यवत्कर्म कुर्वन्निति संबंधः॥ प्राणापानौ विगृह्य
विरुध्य वा यमनितीति पक्षान्तरं॥ नानास्कंधसंधिमर्मसु विविधमानिति चेष्टते इति विकल्पान्तरं तेन व्यानेन संबंधः श्रोत्रस्य श्रुत्युक्तं
वाऽऽमानार्थो मन्तव्यः यथा श्रोत्रस्य व्यानेन संबंधः तथा चन्द्रमसोऽपि तेन संबंधस्य श्रुत्युक्तत्वादेव ध्यानार्थतया ग्राह्यत्वात्॥ तथेति॥

श्रोत्रचंद्रमसोः संबंधेऽप्युक्तं तत्स्मारयति ॥ श्रोत्रेणेति ॥ यद्विराजः श्रोत्रं तदात्मना दिशश्चंद्रमाश्चेत्येते सृष्टा इति श्रुतेरित्यर्थः । मिथः सं
बंधोऽपि कथमनयोर्ध्यानात्मत्वं ध्यानेनानुपपत्तीत्यादिनाक्षेपादवधेयमित्यर्थः ॥ तदेतद्ध्यानालंबं ब्रह्म श्रीश्च यशश्चेत्याभ्यां गुणाभ्यामुपा
सीतेति संबंधः कथं तस्य गुणद्वयवत्त्वमित्याशंक्य श्रोत्रस्य ज्ञानहेतुत्वाच्चंद्रमसोऽन्नहेतुत्वात्तयोश्च यशस्त्वे तदात्मनो ध्यानस्यापि
तद्गुणत्वोपपत्तिरिति आह ॥ श्रोत्रेति ॥ ध्यानालंबे ब्रह्मणि गुणानंतरं साधयति ज्ञानेति ॥ उक्तस्य ब्रह्मणो गुणद्वयसंभवोऽतः शब्दार्थः श्रीम

श्रोत्रेण सृष्टा दिशश्चंद्रमाश्चेति श्रुतेः सहाश्रयत्वात्पूर्ववत् तदेतत् श्रीश्च विभूतिः श्रोत्रचंद्रमसोर्ज्ञानान्नहेतुत्वमतस्ताभ्यां
श्रीत्वं ज्ञानान्नवतश्च यशः ख्यातिर्भवतीति यशोहेतुत्वाद्यशस्त्वमतस्ताभ्यां गुणाभ्यामुपासीतेत्यादि समानं ॥ अथ यो

यशश्चेत्युपासीत श्रीमान्यशस्वी भवति य एवं वेद ॥ २ ॥ अथ योऽस्य प्रत्यङ् सुषिः सोऽपानः सा वाक् सोऽग्निस्तदेतद्ब्रह्म

ऽस्य प्रत्यङ् सुषिः पश्चिमस्तस्थो वायुविशेषः स मूत्रपुरीषाद्यपनयन्नधोऽनितीत्यपानः तथा सा वाक् तत्संबंधात्तथाग्निः त
देतत् ब्रह्मवर्चसं वृत्तस्वाध्यायनिमित्तं तेजो ब्रह्मवर्चसं च समग्निसंबंधात् वृत्तस्वाध्यायस्यान्नग्रसनहेतुत्वादपानस्यान्नाद्य

नित्यादिफलवाक्यमादिशब्दार्थः ॥ समानं तेजस्वीत्यादिवाक्येनेति शेषः ॥ हृदयस्य पश्चिमदिगवस्थितसुषिसंबंधत्वेनापानो वा
गग्निश्चेति त्रितयमन्योन्यसंबद्धं ध्येयमित्याह ॥ अथ योऽस्येति ॥ सोऽपानइत्यस्यार्थमाह ॥ तत्स्थइति ॥ सोऽपानइति संबंधः अपान
शब्दं वायुविशेषं व्युत्पादयति ॥ मूत्रेति ॥ आदिशब्देन शुक्रादिगृह्यते यथा चक्षुषः श्रोत्रस्य प्राणत्वं व्यानत्वं चोक्तं तथा वागपानो
भवत्यपाने तृप्यतीत्यादिश्रुतेरित्याह ॥ तथेति ॥ यथा चक्षुरादिद्वारेणादित्यादेः प्राणादिरूपत्वमुक्तं तथा वाचोऽधिष्ठातृत्वेन संबंधाद
ग्निस्तद्द्वारेणापानो भवतीत्याह ॥ तत्संबंधादिति ॥ तदेतदपानालंबं ब्रह्म ब्रह्मवर्चसमन्नाद्यमित्याभ्यां गुणाभ्यां विशिष्टमुपासीतेति सं
बंधः ब्रह्मवर्चसं व्याचष्टे ॥ वृत्तेति ॥ कथमपानालंबे ब्रह्मणि यथोक्तौ गुणौ सिध्यत इत्याशंक्याग्निद्वारेणेत्याह ॥ अग्निसंबंधादिति ॥ तथा

ब्रह्मवर्चसीत्यादिफलवाक्यं श्रीमानित्यादिना तुल्यार्थत्वान्न व्याख्यानापेक्षमित्याह॥ समानमिति॥ हृदयस्योत्तरसुषिसंबंधत्वेन
समानो मनः पर्जन्यश्चेति त्रितयं परस्परसंबद्धमुपास्यमित्याह॥ अथेति॥ स समान इति संबंधः समानशब्दं वायुविशेषे व्युत्पादयति॥
अशितेति॥ मनसः समानेन संबंधः समाने तृप्यतीत्यादिश्रुतेर्मोह्यावृत्याह॥ तत्संबंधमिति॥ मनसि तृप्यति पर्जन्यस्तृप्यतीति तद्देवता
का शेषमाश्रित्य तयोः संबंधमाह॥ पर्जन्य इति॥ श्रुत्यंतरादर्पितयोः संबंधं वक्तुं पातनिकामाह॥ पर्जन्येति॥ शेषः प्रसिद्धिपरामर्शार्थः
तथापि कथं पर्जन्यमनसोः संबंधसिद्धिरित्याशंक्य वायोरपि कारणत्वेनाद्भिः संबंधात्तद्द्वारा मिथोऽपि तत्सिद्धिरित्याह॥ मनसेति॥ तदे

समानमन्यत् अथ योऽस्योदङ् सुषिः उदङ्गतः सुषिः तत्स्थो वायुविशेषः सोऽशितपीते समं नयतीति समानः॥ तत्संबं
द्धं मनोऽन्तःकरणं स पर्जन्यो वृष्ट्यात्मको देवः पर्जन्यनिमित्ताश्चाप इति मनसा सृष्टा आपश्च वरुणश्चेति श्रुतेस्तदेतत्कीर्तिश्च
मनसो ज्ञानस्य कीर्तिहेतुत्वादात्मपरोक्षं विश्रुतत्वं कीर्तिर्यशः स्वकरणसंवेद्यं विश्रुतत्वं व्युष्टिः कांतिर्देहगतं लावण्यं यतनत

वर्चसमन्नाद्यमित्युपासीत ब्रह्मवर्चस्यन्नादो भवति य एवं वेदाथ योऽस्योदङ् सुषिः स समान स्तन्मनः स पर्ज
न्यस्तदेतत्कीर्तिश्च व्युष्टिश्चेत्युपासीत कीर्तिमान्व्युष्टिमान्भवति य एवं वेदाथ योऽस्योर्ध्वः सुषिः स उदानः स वायुः॥

श्च कीर्तिसंभवात्कीर्तिश्चेति समानमन्यत् अथ योऽस्योर्ध्वः सुषिः स उदान आपादतलादारभ्योर्ध्वमुत्क्रमणादुत्क

त्समानास्यं ब्रह्म कीर्तिश्च व्युष्टिश्चेत्याभ्यां गुणाभ्यामुपासीतेति संबंधः तस्मिन्ब्रह्मणि कीर्तिरूपं गुणं साधयति॥ मनस इति॥ व्यु
ष्टेरर्थांतरत्वं कीर्तेर्दर्शयति॥ आत्मेति॥ ततो व्युष्टेराचष्टे॥ स्वकरणेति॥ तामेवानुभवारूढं तया कथयति॥ कांतिरिति॥ कथं पुन
र्देहगतस्य लावण्यस्य कीर्तितास्तवः शक्यते तत्राह॥ ततश्चेति॥ लावण्यं पंचम्यर्थः इत्यसंकीर्णगुणद्वयविशिष्टमुपासनं सिद्धमि
त्यर्थः कीर्तिमानित्यादिफलवाक्यस्य ब्रह्मवर्चसीत्यादिना तुल्यार्थत्वादव्याख्येयत्वमाह॥ समानमिति हृदयस्योर्ध्वच्छिद्रं वैशिष्टे

64

उत्क्रमणादुदान इति संबंधः उदानेन तूर्ध्वमनिवायुरूर्ध्वतीति वायुविशेषमाश्रित्याह ॥ वायुरिति ॥ वाय्वोराकाशत्वमाधाराधेयसंबंधा
द्वायोरप्यत्याकाशस्तूर्ध्वतीतिश्रुतेश्चेत्याह ॥ तदाधार इति ॥ तदेतदुदानाख्यं ब्रह्म पूर्ववदोजो महश्चेत्याभ्यां विशिष्टमुपासीतेति
संबंधः उक्तगुणद्वयं निर्दिशति ॥ वाय्वाकाशयोरिति ॥ ओजस्वीत्यादिवाक्यस्य कीर्तिमानित्यादिनातुल्यार्थत्वमाह ॥ समानमिति ॥
तस्य ह वा एतस्येत्यादिना क्रममनुवदति ॥ ते वा इति ॥ कथं ब्रह्मपुरुषात्वं तत्राह ॥ राजपुरुषा इति ॥ व्यपदिश्यन्त इत्यर्थः तेषां द्वारपाल

नितीत्युदानः स वायुः ॥ तदाधारश्चाकाशस्तदेतद्वाय्वाकाशयोरोजोहेतुत्वादोजो बलं महत्त्वाच्च मह इति समानमन्य
नैवैते यथोक्ताः पंचसुषिसंबंधात्पंच ब्रह्मणो हार्दस्य पुरुषा राजपुरुषा इव द्वारस्थाः स्वर्गस्य हार्दस्य लोकस्य द्वारपाः
द्वारपाला एते हि चक्षुःश्रोत्रवाङ्मनःप्राणा बहिर्मुखप्रवृत्ते ब्रह्मणो हार्दस्य प्राप्तिद्वाराणि निरुद्धानि प्रत्यक्षं ह्येतदजितक

स आकाशस्तदेतदोजश्च महश्चेत्युपासीतौजस्वी महस्वान्भवति य एवं वेद ते वा एते पंच ब्रह्मपुरुषाः स्वर्गस्य
लोकस्य द्वारपाः स य एतानेवं पंच ब्रह्मपुरुषान्स्वर्गस्य लोकस्य द्वारपान्वेदास्य कुले वीरो जायते प्रतिपद्यते

रणतया बाह्यविषयासंगानृतप्ररूढत्वान्न हार्दे ब्रह्मणि मनस्तिष्ठति तस्मात्सत्यमुक्तमेते पंच ब्रह्मपुरुषाः स्वर्ग
स्य लोकस्य द्वारपा इत्यतः स एतानेवं यथोक्तगुणविशिष्टान्स्वर्गस्य लोकस्य द्वारपान्वेदोपास्त उपासनया वशीक
रोति स राजद्वारपालानिवोपासनेन वशीकृत्यैतैरनिवारितः (त्वं प्रपंचयति ॥ एते इति ॥ तत्र स्वानुभवं प्रमाणयति प्रत्यक्षं ही
ति ॥ विवेकवैराग्याभ्यां वशीकृतश्रोत्रादिकरणग्रामोपेतत्वाभावात्परोक्षेण शब्दादिविषयसंगरूपानृताक्रान्तत्वादित्यर्थः एतेरेवावि
षयविमुखैर्ब्रह्मप्राप्तिद्वाराणि समाव्याहृतानीत्यभिप्रेत्योपसंहरति ॥ तस्मादिति ब्रह्मपुरुषानुक्ताननूद्य सफलमुपासनं द
र्शयति ॥ अत इति ॥ अनियतानां चक्षुरादीनां ब्रह्मप्राप्तिप्रतिबंधकत्वं नियतानां तु तत्प्राप्तिहेतुत्वमित्यतः शब्दार्थः यथोक्तगुणवि

अदृष्टफलमुक्त्वा दृष्टफलमाह ॥ किंचेति ॥ यथोक्तगुणोपास्तिर्विवक्षितब्रह्मप्राप्तावनुपयुक्तेत्याशंक्याह ॥ तस्य चेति ॥ पुत्रस्य ध्या
नानुसारित्वं हेतुत्वं ततः शब्दार्थः प्रागुपन्यस्तगुणोपासनाद्वारेणेति यावत् पुत्रस्य ध्यानद्वारा ब्रह्मप्राप्तिहेतुत्वे फलितमाह ॥ इति स्वर्गेति
॥ गायत्र्युपाधिकब्रह्मोपासनाङ्गत्वेन द्वारपालोपास्तिरुक्ता तेन ध्यानं स्वर्गेषु श्रुतानि फलानि समुच्चित्य प्रधानोपासनादेव ब्रह्मप्रा
प्तिरित्युक्तमिदानीं विशेषान्तरमस्तीति ॥ अथेति ॥ परस्तादिवो दीप्यमानं ब्रह्म लोकोक्तं ज्योतिषि प्रतीके ध्यस्य दृष्टत्वं श्रुतत्वाभ्यामु
पासितव्यमिति श्रौतमर्थं सिद्धवत्कृत्वार्थिकमर्थमादाय तात्पर्यमाह ॥ य एवं विद्वानिति ॥ वीराणां वीर्यवतामादित्यादीनां पुरुषा

प्रतिपद्यते स्वर्गलोकं राजानमिव द्वारैर्ब्रह्म किंचास्य विदुषः कुले वीरः पुत्रो जायते वीरपुरुषसेवनात्तेषां चर्णापाक
रणेन ब्रह्मोपासनप्रवृत्तिहेतुत्वं ततश्च स्वर्गलोकप्रतिपत्तये पारंपर्येण भवतीति स्वर्गलोकप्रतिपत्तिरेवैकं फलमथ
य एवं विद्वान्स्वर्गलोकं वीरपुरुषसेवनात्प्रतिपद्यते यच्चोक्तं त्रिपादस्यामृतं दिवीति तदिह लिङ्गेन चक्षुःश्रोत्रेन्द्रिय

स्वर्गलोकं य एतानेवं पञ्च ब्रह्मपुरुषान्स्वर्गस्य लोकस्य द्वारपान्वेदा॥ अथ यदतः परो दिवो ज्योतिर्दीप्यते

गोचरमापादयितव्यं यथाग्न्यादि धूमादिलिङ्गेन ॥ तथाह्येवमेवेदमिति यथो (विश्वतः पृष्ठेषु सर्वतः
क्तेऽर्थे दृढा प्रतीतिः स्यात् अनन्यत्वेन च (णां सेवनादाध्यानादिति यावत् लिङ्गेन स्पर्शविशेषेण चेत्यर्थः ॥ चक्षुःश्रोत्रे
न्द्रियगोचरमिति महदृष्टिं प्रतिदृष्टं श्रुतं च मयेत्यापादयितव्यं अन्यथा दृष्टत्वश्रुतत्वाभ्यां ब्रह्मणि ध्यानासिद्धेरित्यर्थः परस्या
प्रतिपत्तौ लिङ्गेन प्रत्यायने दृष्टान्तमाह ॥ यथेति ॥ विप्रतिपन्नं प्रति धूमादिलिङ्गेनाग्न्यादिप्रत्याय्यते तथा स्पर्शादिलिङ्गेन दृष्ट
त्वादिविशिष्टमिदं प्रत्येतव्यमित्यर्थः ॥ यथोक्तस्य ज्योतिषो लिङ्गेन प्रत्यायने किमिति क्रियते तत्राह ॥ तथाहीति लिङ्गद्वारेण प्रत्य
त्यायने सति गुणद्वयविशिष्टमेवेदं ज्योतिर्नान्यथेत्येवं यथोक्ते परस्मिन्नुपास्ये ज्योतिषि दृढा धीः स्यात्तदभावात्तद्गुणस्य ज्योतिषो ध्या

नादित्यर्थः माभूत्परस्य ज्योतिषो यथोक्तगुणस्याशे
वोपासनमित्याशंक्याह ॥ अनन्यत्वेनेति ॥

69

कौक्षेयस्य ज्योतिषः सन्निकर्षो जीवाभेदं परिकल्प्य जाठरं ज्योतिर्ब्रह्मेत्यनन्यत्वेन ध्याने जीवब्रह्मणोरेकतया निश्चयश्चाथोक्ति
ध्यानतो यथोक्ता प्राप्तिरर्थवतीत्यर्थः ॥ अथशब्दस्य विद्यान्तरारंभार्थत्वमभ्युपेत्यानन्तरग्रन्थस्य तात्पर्यमुक्त्वाऽवशिष्टान्यक्षराणि
अवतार्य व्याकरोति ॥ अत आहेत्यादिना यदित्युपक्रम्य ज्योतिरित्युपसंहारात्परमिति पुंलिंगाप्रयोगमाशंक्याह ॥ परमिति ॥ का-
दाचित्कप्रकाशत्वाभावात्कथं दीप्यत इति प्रयोगस्तत्राह ॥ स्वयंप्रभमिति ॥ कस्माद्दिव इति प्रयुज्यते सर्वत्र समेव दीप्यमानत्वं कि-
न स्यादित्याशंक्याह ॥ असंसारीति ॥ हेतोरुभयत्र संबंधः सर्वशब्दस्यासंकुचितवर्तित्वादात्मनोपि तेन संगृहीतत्वात्कथंत

निश्चयइत्यत आह परतोऽमुष्माद्दिवो द्युलोकात्परः परमिति लिंगव्यत्ययेन ज्योतिर्दीप्यते स्वयंप्रभं सदाप्रकाशत्वा
द्दीप्यत इव दीप्यत इत्युच्यते अग्न्यादिवज्ज्वलनलक्षणाया दीप्तेरसंभवात् विश्वतः पृष्ठेष्वित्येतस्य व्याख्यानं सर्वतः

पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद्यदिदमस्मिन्नन्तः

पृष्ठेष्विति संसारादुपरीत्यर्थः संसार एव हि सर्वः असंसारिण एकत्वान्निर्भेदत्वाच्चानुत्तमेषु तत्पुरुषसमासाशंकानि
वृत्तये आहोत्तमेषु लोकेष्विति सत्यलोकादिषु हिरण्यगर्भादिकार्यस्य परस्येश्वरस्यासन्नत्वादुच्यते उत्तमेषु लोकेष्वि-

स्मादूर्ध्वं ब्रह्मेत्युपपन्नमित्याशंक्याह ॥ संसारादिति तेनैव सर्वशब्दवाच्यत्वमुपपादयति ॥ संसार एव हीति ॥ तस्यानेकत्वेन स
र्वशब्दार्हत्वादित्यर्थः ॥ आत्मनि सर्वशब्दानुपपत्तिमाह ॥ असंसारिण इति ॥ सर्वशब्दस्यानेकार्थवाचित्वादात्मनश्चैकत्वात्प्र
कारभेदस्य च नित्यमुक्ते तस्मिन्नसंभवान्न तस्य सर्वशब्दात्प्रतीतिरित्यर्थः ॥ उत्तमा न भवंतीत्यनुत्तमास्तेष्विति तत्पुरुषाशंकां दा
तन्निवृत्तिद्वारा बहुव्रीहिसिद्ध्यर्थं विशेषणमित्याह ॥ तत्पुरुषेति ॥ किमिति तेषु परं ब्रह्म निर्दिश्यते तस्य सर्वगतत्वादित्याशंक्या
ह ॥ हिरण्यगर्भादीति तत्कार्यात्मना स्थितं परं ब्रह्मोत्तमेषु लोकेष्वित्युच्यते तस्य सर्वत्र सतोपि सत्यलोकादिषु हिरण्यगर्भाद्या

र्दिति सर्वनाम्ना प्रकृतं ब्रह्म परामृश्यते तेन तस्योपास्यत्वार्थं संसारादुपरिष्टादवस्थानमुक्तं इदानीं कौक्षेयज्योतिषि तदारोपयति ॥ इदमि-
ति ॥ कौक्षेयज्योतिषि प्रतीके प्रमाणं दर्शयति ॥ चक्षुरिति ॥ चक्षुष्यो भवतीति फलवचनानुसारेण स्पर्शरूपैकमाध्यासिकमादाये-
क्षिप्नुश्चाक्षुषत्वं द्रष्टव्यं रूपस्पर्शयोरैक्याध्यासं स्फुटयति ॥ यत्त्वचेति ॥ यदुष्णं तेजो द्रव्यात्मकं त्वगिन्द्रियेण स्पर्शरूपेण गृह्यते तत्
चक्षुषैव गृह्यते तत्र हेतुमाह ॥ दृढेति ॥ त्वचा दृढायां प्रतीतौ हि तस्याश्चक्षुषा तादात्म्यारोपादित्यर्थः यद्रूपवद्भवति तत्स्पर्शवदिति नि-
यमाच्च रूपस्पर्शयोस्तादात्म्याध्यासात्तस्य चाक्षुषत्वसिद्धिरित्याह ॥ अविनाभूतत्वाच्चेति ॥ शब्दोऽप्यस्य ज्योतिषो लिङ्गमित्यस्यैत-

इदं वावेदमेव तद्यदिदमस्मिन्पुरुषेऽन्तर्मध्ये ज्योतिश्चक्षुःश्रोत्रग्राह्येण लिङ्गेनोष्णिम्ना शब्देन चावगम्यते यत्त्वचा स्पर्श-
रूपेण गृह्यते तच्चक्षुषैव दृढप्रतीतिकरत्वात्त्वचोऽविनाभूतत्वाच्च रूपस्पर्शयोः ॥ कथं पुनस्तस्य ज्योतिषो लिङ्गत्वं दृष्टि-

पुरुषे ज्योतिस्तस्यैषा दृष्टिः यत्रैतदस्मिञ्छरीरे सं

गोचरत्वमापद्यत इत्याह यत्र यस्मिन्काल एतदिति क्रियाविशेषणं अस्मिन्शरीरे हस्तेनालभ्य संस्पर्शेनोष्णिमा-
नं रूपसहभाविनमुष्णस्पर्शभावं विजानाति स ह्युष्णिमा नामरूपव्याकरणाय देहमनुप्रविष्टस्य चैतन्यात्मज्योतिषो
लिङ्गमव्यभिचारात् न हि जीवन्तमात्मानमुष्णिमा व्यभिचरत्युष्ण

(स्यत्वं लिङ्गं इन्द्रियग्राह्यस्य चाक्षुषत्वमुपपादयितुं पृच्छति ॥
कथमिति ॥ तस्यैषा दृष्टिरित्यादिवाक्येनोत्तरं दर्शयन्यत्रेत्यादि व्याकरोति ॥ आहेत्यादिना यत्रैतदिति ज्ञानं स्यात्तथेति विज्ञानक्रियायां
विशेषणमेतदिति पदमित्यर्थः संस्पर्शेनोष्णिमानं विजानाति चेत्कथं तर्हि तस्य चाक्षुषत्वमित्याशङ्क्याह ॥ रूपसहभाविनमिति ॥ भ-
वत्वौपचारिकमौष्ण्यस्य चाक्षुषत्वं तथापि कुतस्तस्य लिङ्गत्वमित्याशङ्क्य जीवनमत्प्राय तद्द्वारा कौक्षेयज्योतिषि तस्य लिङ्गत्वं साध-
यति ॥ स हीति ॥ जीवात्मना तस्याव्यभिचारं स्फारयति ॥ न हीति ॥ तत्रैव श्रुतिं संवादयति ॥ उष्ण एवेति ॥ यदा जीवस्य लिङ्गमौष्ण्यं तदा

ज्योतिषस्तल्लिङ्गं भवति जीवपरयोरेकत्वावगमादित्याह ॥ मरणकाले चेति ॥ वागादिर्मनसि मनः प्राणे प्राणस्तेजसि तदध्यक्ष-
लक्षणं परस्यां देवतायां संपद्यत इति श्रुत्या जीवस्य परेण तदर्थात्मना सह ह्यभिन्नत्वस्योपगमाज्जीवस्य लिङ्गं तद्भवति परस्य
लिङ्गमित्यर्थः यदा हि जीवस्य परस्य च यथोक्तलिङ्गादवगतिस्तदा तत्र कोष्ठस्थज्योतिषस्तदधिकरणस्य सुतरामवगतिरस्तीत्या-
ह ॥ अत इति ॥ उष्णत्वस्य जाठरे ज्योतिषि प्रतीकलिङ्गत्वे सति यल्लिङ्गमाह ॥ तस्येति ॥ शिलादिव प्रतिमायां जाठरेण ज्योतिषा परस्य

एव जीविष्यन् शीतो मरिष्यन्निति हि विज्ञायते मरणकाले च तेजः परस्यां देवतायामिति परेणाविभागत्वोपगमा-
दतोऽसाधारणं लिङ्गमौष्ण्यमग्नेरिव धूमः । अतस्तस्य परस्यैषा दृष्टिः साक्षादिव दर्शनं दर्शनोपाय इत्यर्थः ॥ तथा त-
स्य ज्योतिष एषा श्रुतिः श्रवणं श्रवणोपायोऽप्युच्यमानो यत्र यदा पुरुषो ज्योतिषो लिङ्गं शुश्रूषति श्रोतुमिच्छति त-

॰ स्पर्शेनोष्णिमानं विजानाति ॥ तस्यैषा श्रुतिर्यत्रैतत्कर्णावपिगृह्य निनदमिव नदथुरिवाग्नेरिव ज्वलत उप

दैतत्कर्णावपिगृह्येतच्छब्दः क्रियाविशेषणमपिगृह्यापिधायेत्यर्थोऽङ्गुलीभ्यां प्रोर्णुत्य निनदमिव रथस्य घोषो
निनदस्तमिव शृणोति नदथुरिव ऋषभकूजितमिव शब्दो यथा वाग्नेर्बहिर्ज्वलत एवं शब्दमन्तःशरीर उपशृणो-
ति ॥ तदेतज्ज्योतिर्दृष्टश्रुतलिङ्गत्वाद्दृष्टं च श्रुतं चेत्युपासीत तथोपासनाच्चक्षुष्यो दर्शनीयः ॥ श्रुतो विश्रुतश्च

ज्योतिषस्तादात्म्यादित्यर्थः ॥ प्रतीकद्वारा दृष्ट्युपायवत्तस्य श्रवणोपायं लिङ्गान्तरं दर्शयति ॥ तथेति ॥ अपिगृह्य शृणोतीति संब-
न्धः यथा श्रवणमेतद्भवति तथा शृणोतीति श्रवणक्रियाया विशेषणमेतच्छब्द इति योजना ॥ प्रोर्णुत्यापिधायेति यावत् ॥ श्रूयमा-
णशब्दस्य वाच्यार्थभावस्फुटीकरणार्थमनेकदृष्टान्तोपादानं ॥ कोष्ठे यज्ज्योतिस्तस्यारोपितस्य ज्योतिषो ध्येयस्य ध्यानोपायांगत्वेन
गुणद्वयमुपदिशति ॥ तदेतदिति ॥ दृष्टमित्युपासने फलमाचष्टे ॥ तथेति ॥ श्रुतमित्युपासने फलमाह ॥ श्रुत इति ॥ ॥ ॥

कथं पुनः स्पर्शगुणोपासने स्पर्श्यो भवतीति वक्तव्ये चक्षुष्यो भवतीत्युच्यते तत्राह ॥ यत्स्पर्शेति ॥ संपादने निमित्तमाह ॥ रूपस्पर्शयोरिति ॥ द्रष्टव्यश्चक्षुष्यो भवतीति फलवचनमुचितमित्याह ॥ द्रष्टत्वाच्चेति ॥ फलवचनमपि संपादयति न कल्पकमित्याह ॥ एवं चेति ॥ यदा स्पर्शगुणोपासननिमित्तं फलं रूपे संपाद्यते तदा विद्यायाः श्रुतं फलमुपपन्नमिति फलश्रुतिरनुकूलिता स्याद्रूपविशेषत्वाच्चक्षुष्यभावस्य प्रसिद्धत्वादित्यर्थः ॥ यदि पुनर्मृदुत्वादि स्पर्शगुणस्योपासननिमित्तं फलं कल्प्यते तदा चक्षुष्यो भवतीति श्रुतफलं नैवोपपन्नं स्यात्ततश्च फलश्रुतिरपि बाधिता भवेदित्याह ॥ नन्विति ॥ कस्येदं फलमित्यपेक्षायामाह ॥ य एवमिति ॥ ननु परस्य ज्योतिषो जाठरे ज्योतिष्यारोपित

यत्स्पर्शगुणोपासननिमित्तं फलं तद्रूपे संपादयति चक्षुष्य इति रूपस्पर्शयोः सहभावित्वादिष्टत्वाच्च दर्शनीयता या एवं च विद्यायाः फलमुपपन्नं स्यात् न तु मृदुत्वादिस्पर्शवत्त्वे य एवं यथोक्तौ गुणौ वेद स्वर्गलोकमेति पतिस्तूक्तमदृष्टं फलं द्विरभ्यास आदरार्थः ॥ १४ ॥ पुनस्तस्यैव त्रिपादमृतस्य ब्रह्मणोऽनन्तगुणवतोऽनन्तशक्तेरनेकभेदोपास्यस्य विशिष्टगुणशक्ति

शृणोति तदेतद्दृष्टं च श्रुतं चेत्युपासीत चक्षुष्यः श्रुतो भवति य एवं वेद य एवं वेद ॥ ८ ॥

मत्त्वेनोपासनं विधित्सन्नाह सर्वं समस्तं खल्विति वाक्यालंकारार्थो निपातः इदं जगन्नामरूपविकृतं प्रत्यक्षादिविषयं ब्रह्म

स्य यथोक्तगुणवतोऽध्यानात्कथमिदमनन्यत्वं फलमनन्तरूपं उपदिश्यते तत्राह ॥ स्वर्गलोकेति ॥ फलवत्त्वां विद्यायां आदरो विवक्षितः ॥ १४ ॥ प्रतीकद्वारा ब्रह्मोपासनमुक्त्वा प्रतीकं हित्वा सगुणब्रह्मोपासनमुपन्यस्यति ॥ पुनरित्यादिना तस्य निरुपाधिकत्वं व्यावर्तयति ॥ अनन्तेति ॥ कथमेकस्यानन्तगुणत्वं तत्राह ॥ अनन्तशक्तेरिति ॥ ननु पूर्वमेवास्योपासनान्यतिदृष्टानि तथा च वक्तव्यशेषो नास्तीत्याशंक्याह ॥ अनेकेति ॥ अनेकेषु भेदेषु गायत्र्याद्युपाधिषूपास्यस्यापि ब्रह्मणो मनोमयत्वादिविशिष्टगुणत्वेन विशिष्टशक्तिमत्त्वेनोपासनान्तरविधानार्थमुत्तरवाक्यमित्यर्थः तस्येदमाद्यपरामर्शे हेतुमाह ॥ प्रत्यक्षादीति ॥ ब्रह्मशब्दस्य निरुपाधिकार्थविषयत्वं व्याव

कथं तस्य ब्रह्मत्वं तत्राह ॥ इदन्तमत्वादिति ॥ निरतिशयमहत्त्वादित्यर्थः ॥ सर्वमनूद्य तस्य ब्रह्मत्वविधाने युक्तिं प्रश्नपूर्वकमाह ॥ कथ
मित्यादिना तज्जतल्लत्वतदनत्वतज्जलानवयवलोपच्छान्दसः ॥ तत्र तज्जत्वं जगतो व्युत्पादयति ॥ तस्मादिति ॥ तल्लत्वमुपपादयति ॥ त
थेति ॥ विपर्ययेणतु क्रमोऽतइतिन्यायात् प्रतिलोमतया जननव्युत्क्रमेण तस्मिन्नेव ब्रह्मणि विलीयते जगदिति कृत्वा यथा तज्जं तथे
ति योजना तत्र लयानामजगतः शून्यतेति शङ्कां व्यावर्तयति ॥ तदात्मतयेति ॥ तदात्मत्वं प्रतिपादयति ॥ तथेति ॥ यथा तज्जं तल्लं च तत्
था तदनं च जगदित्यर्थः ॥ इति तदनमिति शेषः युक्तिसिद्धमर्थं निगमयति ॥ एवमिति ॥ ब्रह्मव्यतिरेकेण त्रिष्वपि कालेषु जगतोऽग्र

इदन्तमत्वाद्ब्रह्म कथं सर्वस्य ब्रह्मत्वमित्यत आह तज्जलानिति ॥ तस्माद्ब्रह्मणो जातं तेजोबन्नादिक्रमेण सर्वमतस्तज्जं त
था तेनैव जननक्रमेण प्रतिलोमतया तस्मिन्नेव ब्रह्मणि लीयते तदात्मतया श्लिष्यत इति तल्लं तथा तस्मिन्नेव स्थितिका
लेऽनिति प्राणिति चेष्टत इति तदनं इत्येवं ब्रह्मात्मतया त्रिषु कालेषु अविशिष्टं तद्व्यतिरेकेणाग्रहणात् अतस्तदेवेदं जगद्यथा

सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीताऽथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिँल्लोके

चेदं तदेव एकमद्वितीयं तथा षष्ठे विस्तरेण वक्ष्यामो यस्माच्च सर्वमिदं ब्रह्मातः शान्तो रागद्वेषादिदोषरहितः संयतः सन् यत्त
त्सर्वं ब्रह्म तद्वक्ष्यमाणैर्गुणैरुपासीत कथमुपासीत क्रतुं कुर्वीत क्रतुर्निश्चयोऽध्यवसाय एवमेव नान्यथेत्यविचलः प्रत्ययस्तं क्र
तुं कुर्वीतोपासीतेत्यनेन व्यव

हणात्तदात्मत्वेनाविशिष्टमिदं जगत्तदेव स्यादिति योजना ॥ युक्तिसिद्धमपि जगतो ब्रह्मत्वं प्रत्यक्षादि
विरुद्धं नाङ्गीकारमर्हति नहि सहितो यमद्वितीये युक्तमित्याशङ्क्याह ॥ यथा चेति ॥ सर्वस्य ब्रह्मत्वफलितमाह ॥ यस्माच्चेति ॥ कियन्तं कालं
मन्त्वयमावर्तयेदित्याकाङ्क्षापूर्वकं तन्निश्चयपर्यन्तमिति दर्शयितुं व्यवहितं वाक्यमवतार्य व्याचष्टे ॥ कथमित्यादिना उपासीतेत्यस्य क्रतुं
कुर्वीतेत्यनेन व्यवहितेन संबन्ध इति योजना ॥ क्रत्वनुष्ठानस्य फलं पृच्छति ॥ किं पुनरिति ॥ क्रतुकरणं च केन प्रकारेणेति प्रश्नान्तरं दर्शं

कथं वेति ॥ ब्रह्मभावासाधनत्वात् क्रतुकरणस्य फलं मृग्यं नास्तीत्याशंक्याह ॥ क्रतुकरणं चेति न हि जीवस्य नष्टस्य वा सद्भावः संभवती-
तिभावः ॥ क्रतुकरणस्येदं प्रयोजनं स च क्रतुरेवं क्रियतेतत्करणं चाः नयाशीत्या ब्रह्मसद्भावं साधयतीत्यस्यार्थजातस्य प्रतिपादनार्थमाख-
ड समाप्तेरथेत्यादि कृत्स्नोऽयं ग्रन्थ इत्याह ॥ अर्थस्येति ॥ अथ खल्वित्यत्र पूर्ववत्तच्छब्दोऽथ शब्दस्तु हेत्वर्थ इत्यत्र हेतुरूपमर्थं विवृणोति ॥ य-
स्मादिति ॥ यद्वा अथेत्यारभ्य पुरुष इत्यंतो ग्रन्थो हेत्वर्थ इत्युक्तात्तमेव हेतुरूपमर्थं दर्शयति ॥ यस्मादिति ॥ यथाक्रतुरित्यस्यादौ यस्मात्

क्रतुकरणेन तु कर्तव्यं प्रयोजनं कथं वा क्रतुः कर्तव्यः ॥ क्रतुकरणं चाभिप्रेतार्थसिद्धिसाधनं ॥ कथमित्यस्यार्थस्य प्रति-
पादनार्थमथेत्यादि ग्रन्थः ॥ अथ खल्विति हेत्वर्थो यस्मात् क्रतुमयः क्रतुप्रायोऽध्यवसायात्मकः पुरुषो जीवो यथाक्रतुर्यादृशः
क्रतुरस्य सोऽयं यथाक्रतुर्यथाध्यवसायो यादृङ्निश्चयोऽस्मिँल्लोके जीवन्निह पुरुषो भवति तथेतोऽस्माद्देहात्प्रेत्य मृत्वा

पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत मनोमयः

भवति क्रत्वनुरूपफलात्मको भवतीत्यर्थः ॥ एवं ह्येतच्छास्त्रतो दृष्टं यं यं वापि स्मरन्भावं त्यजत्यंते कलेवरमित्यादि
यत एवं व्यवस्था शास्त्रदृष्टाऽतः स एवं जानन् क्रतुं कुर्वीत ॥ यादृशं क्रतुं वक्ष्यामस्तं यत एवं शास्त्रप्रामाण्यादुपपद्यते क्र-
त्वनुरूपं फलमतः स क-

स्माच्छब्दो द्रष्टव्यः अस्मिँल्लोक इति श्रुतिमादाय व्याचष्टे ॥ जीवन्निहेति ॥ इह वर्तमाने देहे जीवन्सन्नि-
तियावत् क्रतुकरणेन किं कर्तव्यं फलमिति प्रश्नं व्याचष्टे ॥ तथेति ॥ क्रत्वनुरूपफलात्मकत्वे पुरुषस्य स्मृतिं संवादयति ॥ एवं हीति ॥
शास्त्रमेवोदाहरति ॥ यं यमिति ॥ कथं वा क्रतुः कर्तव्य इति प्रश्नं प्रत्याह ॥ यत इति ॥ क्रत्वनुरूपफलात्मकः पुरुषो भवतीत्येवं रूपा
व्यवस्थेति यावदेवं जानन् क्रत्वनुरूपं फलमिति शास्त्रतः पश्यन्नित्यर्थः ॥ कोऽसौ क्रतुरित्याशंक्याह ॥ यादृशमिति ॥ स क्रतुं कु-
र्वीतेत्यस्यार्थं निगमयति ॥ यत एवमिति ॥ क्रतुकरणप्रकारमेव प्रश्नपूर्वकं प्रकटयति ॥ कथमित्यादिना ॥ ॥ १ ॥

कथमिदं मनःप्रायत्वमित्यपेक्षायां मनःशब्दार्थप्रदर्शनपूर्वकं तत्प्रायत्वं स्फुटयति ॥ मनुत इति ॥ मनोद्वारा तदुपाधिः पुरुषो वि
षयप्रवणो भवतीत्यर्थः ॥ तत्प्रायत्वफलमाह ॥ तथेति ॥ पुरुषो हि तत्प्रायः सन्मनसि प्रवर्तमाने स्वयमपि तद्वदेव प्रवृत्त इव लक्ष्यते
तथा निवर्तमाने मनसि निवृत्त इव चावगम्यते ॥ वस्तुतस्तु पुरुषो न प्रवृत्तो निवृत्तो वा ध्यायतीव लेलायतीवेति श्रुतेरित्यर्थः ॥ अत एव मनोमय
त्वादेवेति यावत् ॥ संमूर्छितत्वं संपिंडितत्वं विज्ञानशक्तेः क्रियाशक्तेश्चैकस्मिन्नेव लिंगात्मनि संपिंडितत्वे श्रुत्यंतरं प्रमाणयति ॥ यो
वा इति ॥ आथर्वणी श्रुतिः यथोक्तविशेषणद्वयं प्रमापयति मनोमयः प्राणेति ॥ मनोवृत्तिभिर्विभाव्यमानत्वादात्मा मनोमयः ॥ प्रा

मनोमयः मनःप्रायो मनुतेऽनेनेति मनस्तत्स्ववृत्त्या विषयेषु प्रवृत्तं भवति तेन मनसा तन्मयः तथा प्रवृत्त इव तत्प्रायो निवृ
त्त इव चात एव प्राणशरीरः प्राणो लिंगात्मा विज्ञानक्रियाशक्तिद्वयसंमूर्छितो यो वै प्राणः सा प्रज्ञा या वा प्रज्ञा स प्राण इति
श्रुतेः स शरीरं यस्य स प्राणशरीरः ॥ मनोमयः प्राणशरीरनेतेति च श्रुत्यंतरात् ॥ भारूपो भा दीप्तिश्चैतन्यलक्षणं रूपं यस्य

प्राणशरीरो भारूपः सत्यसंकल्प आकाशात्मा सर्वकर्मा

स भारूपः ॥ सत्यसंकल्पः सत्या अवितथाः संकल्पा यस्य सोऽयं सत्यसंकल्पः ॥ न यथा संसारिण इवानैकांतिक
फलः संकल्प ईश्वरस्येत्यर्थः ॥ अनृतेन मिथ्याफलत्वहेतुना असंस्पृष्टत्वात्संकल्पस्य मिथ्याफलत्वं ह्यस्यानृतेन हि प्र
स्पृष्टा इत्याकाशात्मा आकाश इवात्मा स्वरूपं यस्य स आकाशात्मा सर्वगतत्वं (( ण एव प्रत्यगात्मनः सूक्ष्मशरीरं तस्य चा

सौ स्थूलाद्देहाद्देहांतरं प्रतिनेनेत्याथर्वणीश्रुतेरात्मनि विशेषणद्वयसिद्धिः ॥ एतच्च विशेषणद्वयं जीवगतमपि तदभेदविवक्षया
ब्रह्मणि द्रष्टव्यमित्यर्थः ॥ सत्यसंकल्प इत्यत्र विशेषणेन ध्वनितमर्थं दर्शयति ॥ न यथेति ॥ इवशब्दस्तु यथार्थः कथं संसारिसंकल्प
स्यानैकांतिकफलत्वं तत्राह ॥ अनृतेनेति ॥ संकल्पस्याऽनृतेन संसारिणि प्रस्पृष्टत्वं वाक्यशेषे प्रमाणयति ॥ वक्ष्यतीति ॥ जडाजडसो

॥सर्वकर्मेति॥ सर्वक्रियाश्रयत्वमीश्वरस्योच्यते तदयुक्तं निष्क्रियत्वश्रुतेरित्याशंक्य व्याचष्टे॥ सर्वमिति॥ संसारिभ्यो विशेषसि
ध्यर्थं विशिनष्टि॥ दोषरहिता इति॥ उदाहृतां स्मृतिमाश्रित्योक्तमाक्षिपति॥ नन्विति॥ काम सामानाधिकरण्यबाधकोपलंभाद्ब
हुव्रीहिरेवेति परिहरति॥ न कामस्येति॥ तस्य कार्यत्वात्तैरेव ब्रह्मणो नादित्वं बाध्येत चेतन विशेषणत्वाच्च कामस्य तैरेव ब्रह्मणः स्वा
तंत्र्यं हीयेत न तथा च कर्मधारयासंभवाद्बहुव्रीहिरेवेत्यर्थः॥ कथं तर्हि कामोस्मीति तादात्म्यस्मृतिरित्याशंक्याह॥ तस्मादिति॥ कामेश्व
रयोः सामानाधिकरण्यासंभवात्प्रकृतश्रुतौ बहुव्रीहिर्यथेष्टः तथा स्मृतावपि ब्रह्मपारतंत्र्यमात्रं कामस्य विवक्षितं श्रुत्यनुसारेण स्मृ

सूक्ष्मत्वं रूपादिहीनत्वं चाकाशतुल्यता ईश्वरस्य सर्वकर्मा सर्वं विश्वं तेनेश्वरेण क्रियत इति जगत्सर्वं कर्मास्य स सर्व
कर्मा स हि सर्वस्य कर्तेति श्रुतेः सर्वकामः सर्वे कामा दोषरहिता अस्येति सर्वकामः धर्माविरुद्धो भूतेषु कामोस्मीति स्मृतेः॥ ननु
कामोस्मीति वचनादिह बहुव्रीहिर्न संभवति सर्वकाम इति न कामस्य कर्त्तव्यत्वाच्छब्दादिवत्पारार्थ्यप्रसंगाच्च देवस्य तस्मा

सर्वकामः सर्वगंधः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादर एषम

द्यथेह सर्वकाम इति बहुव्रीहिस्तथा कामोस्मीति स्मृत्यर्थो वाच्यः सर्वगंधः सर्वे गंधाः सुखकरा अस्य सोयं सर्वगंधः पुण्यो
गंधः पृथिव्यामिति स्मृतेः तथा रसा अपि विज्ञेया अपुण्यगंधरसग्रहणस्य पाप्मसंबंधनिमित्तत्वश्रवणात् तस्मात्तेनोभयं जि
(घ्रति सुरभि च दुर्गंधि

तैर्नैतत्स्यादित्यर्थः॥ सर्वशब्दात् दुर्गंधानामपि ब्रह्मणि प्राप्तौ विशिनष्टि॥ सुखकरा इति॥ सर्वशब्दसंकोचे
कारणमाह॥ पुण्य इति॥ यथा सर्वगंध इत्यत्र सुखकरा गंधा ब्रह्मसंबंधिनो दर्शितास्तथा सर्वरस इत्यत्रापि सुखकरा एव रसास्तत्संबं
धिनो ग्राह्या इत्याह॥ तथेति॥ अत्रापि सर्वशब्दसंकोचकारणमाह॥ऽपुण्येति॥ न तद्ग्रहणपरस्मिन्निति शेषः॥ तच्छब्दार्थमेवोपपादय
ति॥ पाप्मना हीति॥ एष इति घ्राणप्राणोक्तिर्भवतु पाप्मसंसर्गकृतमपुण्यगंधादिग्रहणं तथापि कथं तदीश्वरे सर्वज्ञे नास्तीत्याशंक्याह॥ न

निमित्ताभावादीश्वरस्य तत्संबंधित्वेनापुण्यगंधादिग्रहणमित्यर्थः ॥ तस्य पाप्मासंसर्गे हेतुमाह ॥ अविद्यादीति ॥ आदिपदेनास्मितारागद्वेषाभिनिवेशा गृह्यंते ॥ अभ्यात्त इति रूपं तदर्थं च दर्शयन् कर्मणि निष्ठामावर्तयति ॥ अनेनेति ॥ वाक्शब्दस्य निष्पत्तिप्रकारं दर्शयति ॥ वच्येति ॥ अत्रेति ॥ श्रुतेरीश्वरस्य वागुक्तिः ॥ उपलक्षणार्थो घ्राणादिप्रतिषेधस्येति शेषः ॥ अथेश्वरे घ्राणादिप्रसरभावात् प्रतिषेधो नोपलक्ष्यते तत्राह ॥ गंधेति ॥ आदिशब्देन कामादिरुक्तः ॥ युक्तं चान्योपलक्षणं साक्षादेवान्यत्र प्रतिषेधश्रवणादित्याह ॥ अपाणी

पाप्मसंसर्गे ईश्वरस्याविद्यादिदोषस्यानुपपत्तेः सर्वमिदं जगदभ्यात्तो ऽभिव्याप्तो ऽनेनेत्यभ्यात्तो ऽस्यर्थे स्य कर्तरि निष्ठा तथा अवाकुच्यते ऽनयेति वाग्वागेव वाकः वचेर्घञंतस्य करणे वाकः स यस्य विद्यते स वाकी न वाकी अवाकी वाक्प्रतिषेधश्चात्रोपलक्षणार्थो गंधरसादिश्रवणादीश्वरस्य प्राप्तानि घ्राणादीनि करणानि गंधादिग्रहणाय ततो वाक्प्रतिषेधेन प्रतिषिध्यंते तानि अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्ण इत्यादिमंत्रवर्णात् अनादरो ऽसंभ्रमो ऽप्राप्तप्रा

आत्मांतर्हृदये ऽणीयान्व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतंडुलाद्वैष म आत्मांतर्हृदये ज्यायान्पृथि

प्तौ हि संभ्रमः स्यादनाप्तकामस्य न त्वाप्तकामत्वान्नित्यतृप्तस्येश्वरस्य संभ्रमो ऽस्ति क्वचित् ((व्या ज्यायानंतरिक्षाज्ज्याया चिदेष यथोक्तगुणो मम आत्मांतर्हृदये हृदयपुंडरीकस्यांतर्मध्ये ऽणीयानणुतरो व्रीहेर्वा यवाद्वेत्यादि अत्यंतसूक्ष्मत्वप्रदर्शनार्थं श्यामाकाद्वा श्यामाकतंडुलाद्वेति ॥ परिच्छिन्नपरिमाणादणीयानित्युक्ते ऽणुपरिमाणत्वं प्राप्तमाशंक्यातस्तत्प्रतिषेधायारभत एष म आत्मांतर्हृदये ज्यायान्पृथिव्या इत्यादिना ॥ १ ॥

नि ॥ आदिपदेन सर्वेति वेद्यमित्यादि गृह्यते ॥ ईश्वरस्य संभ्रमाभावं प्रतिपादयति ॥ अप्राप्तप्राप्तौ हीति ॥ यथोक्तस्य परस्य प्रत्यगात्माभेदं दर्शयति ॥ एष इति ॥ व्रीह्यादिपंचकोपादानसोपयोगमाह ॥ अत्यंतेति ॥ अणीयस्त्वज्यायस्त्वव्यपदेशयोर्मिथो विरोधमाशंक्य परिहरति ॥ श्यामाकादीति ॥ पृथिव्यंतरिक्षादिवदी

ज्यायःपरिमाणाच्चेति॥पुनरुक्तेरुपयोगमाह॥मनोमयइत्यादि नेति॥यस्तैर्लक्ष्यतेसएवेश्वरःकेवलइतियावत्॥ईश्वरोध्येयो
नतुगुणोध्येयइत्युक्तेगुणानामपिध्यानकर्मत्वंदृष्टमित्याशंक्याह॥यथेति॥पुनरुक्तिफलमुपसंहरति॥तस्मादिति॥सगुणस्ये
श्वरस्यध्येयत्वमुक्त्वांतरमाह॥अतएवेति॥स्वरूपवाचकस्यात्मनःश्रुत्यनुपपत्तेर्नैतद्बलाद्द्वैतवाक्यार्थसिद्धिरित्यर्थः॥भे
दलिंगाच्चेदिहभेदोविवक्षितस्तर्हिषष्ठेपितल्लिंगदर्शनान्नाखंडवाक्यार्थसिद्धिरितिशंकते॥नन्विति॥नतत्रभेदोविवक्षितः॥ज्या

ज्यायःपरिमाणाच्चज्यायस्त्वंदर्शयन्ननंतपरिमाणत्वंदर्शयति॥मनोमयइत्यादिनाज्यायानेभ्योलोकेभ्यइत्यं
तेनग्रंथेनोक्तगुणलक्षणईश्वरोध्येयोनतुतद्गुणविशिष्टएव॥यथाराजपुरुषमानयचित्रगुंचेत्युक्तेनविशेषण
स्याप्यानयनेप्राप्तिस्तेनतद्वदिहापिप्राप्तमतस्तन्निवृत्त्यर्थंपुनःसर्वकर्मेत्यादिपुनर्वचनंतस्मान्मनोमयत्वादिगुणवि
शिष्टएवईश्वरोध्येयोऽतएवषष्ठसप्तमयोरिवतत्त्वमस्यात्मैवेदंसर्वमितिनेहस्वाराज्येऽभिषिंचत्येषमआत्मैतद्ब्रह्मैतमि

दिवोज्यायानेभ्योलोकेभ्यः॥सर्वकर्मासर्वकामःसर्वगंधःसर्वरसःसर्वमिदमभ्यात्तोऽवाक्यनादरएषमआत्मांतर्हृद

तःप्रेत्याभिसंभवितास्मीतिलिंगादत्रात्मशब्देनप्रत्यगात्मैवोच्यतेममइ ((यएतद्ब्रह्मैतमितःप्रेत्याभिसंभवितास्मीति॥
तिषष्ठ्याःसंबंधार्थप्रत्यायकत्वादेतमभिसंभवितास्मीतिचकर्मकर्तृत्वनिर्देशात्॥ननुषष्ठेप्यथसंपत्स्यतइतिसत्संपत्तेः
कालांतरितत्वंदर्शयति॥नारब्धसंस्कारशेषस्थित्यर्थपरत्वान्नकालांतरितार्थताऽन्यथातत्त्वमसीत्येतस्यार्थस्यबाध
प्रसंगात्॥यद्यप्यात्मशब्दस्यप्रत्यगर्थत्वं॥ ((रब्धसंस्कारःसुखादिर्येनकर्मणातच्छेषस्थितौतात्पर्यादितिपरिहरति॥नारब्धेति॥
सत्संपत्तौकालांतरितत्वमेवात्रविवक्षितंकिंनस्यादित्याशंक्याह॥नेति॥कालांतरभावित्वेसंपत्तेरिष्टेतत्त्वमसीतिब्रह्मभावस्यवर्तमानो
पदेशानुपपत्तिरितिहेतुमाह॥अन्यथेति॥ननुप्रकरणानुगृहीताभ्यांआत्मब्रह्मशब्दाभ्यामत्रापिब्रह्मात्मैक्यमेवविवक्षितमित्याशंक्या

लिंगानुगृहीतषष्ठीश्रुतिवशात्प्रकरणानुगृहीतेश्रुतीकथं चिन्नेतव्ये प्रकरणश्रुतिभ्यां लिंगश्रुत्योर्बलवत्त्वादात्मश्रुतेश्चान्यथोपपत्तेर
क्तत्वादिति भावः॥ सगुणब्रह्मोपासकस्य सत्क्रतुत्वधीमात्रान्नादृष्टं फलं सिध्यति किंतु देहपातकालेपि साक्षात्कारानुवृत्त्या भवितव्यमि
त्यभिप्रेत्याह॥ यथाक्रतुरूपस्येति॥ अध्यवसायानुरूपस्य सगुणस्य परमात्मनोहं प्रतिपत्तास्मीत्येवं विदो यस्याद्धा स्यान्निश्चयः प्रेत्या
हमेवं स्यामेव न तु न स्यां क्रतुफलसंबंधे संशयोस्ति स क्रत्वनुसारेणैव परमात्मभावं प्राप्नोति॥ तथा चाद्धेतिवाक्यान्मरणकालेपि सा

सर्वं खल्विदं ब्रह्मेति च प्रकृतमेष म आत्मान्तर्हृदय एतद्ब्रह्मेत्युच्यते तथाप्यं तद्ब्रह्मेमीषदपरित्यज्यैवैतमात्मानमि
तोस्माच्छरीरात्प्रेत्याभिसंभवितास्मीत्युक्तं यथाक्रतुरूपस्यात्मनः प्रतिपत्तास्मीति यस्यैवं विदः स्यादद्धा सत्यमे
वं स्यामहं प्रेत्यैवं न स्यामिति न च विचिकित्सास्तीत्येतस्मिन्नर्थे क्रतुफलसंबंधे स तथैवेश्वरभावं प्रतिपद्यते विद्वानि
त्येतदाह स्मोक्तवान्किल शांडिल्यो नाम ऋषिः द्विरभ्यास आदरार्थः॥१४॥ अस्य कुले वीरो जायत इत्युक्तं न वीरजन्म

यस्य स्यादद्धा न विचिकित्सास्तीति ह स्माह शांडिल्यः शांडिल्यः॥१४॥ अंतरिक्षोदरः

मात्रं पितुस्त्राणाय तस्मात्पुत्रमनुशिष्टं लोक्यमाहुरिति श्रुत्यंतरात् ततस्तद्दीर्घायुष्ट्वं कथं स्यादित्येवमर्थं कोशविज्ञाना
रंभोऽभ्यर्हितविज्ञानव्यासंगादनंतरमेव नोक्तमिदानीमेवारभ्यते॥ साक्षात्कारेण भवितव्यमिति प्रतिभातीत्यर्थः॥ यथोक्त
स्यार्थस्य संप्रदायिकत्वं कथयति॥ इत्येतदिति॥ आदरः क्रतुफलसंबंधविषयः॥१४॥ शांडिल्यविद्यया समनंतरग्रंथस्य सं
बंधो नास्तीत्याशंक्याव्यवहितेन संबंधं दर्शयितुमनुवदति॥ अस्येति॥ संप्रत्युत्तरग्रंथस्य तात्पर्यं वक्तुं भूमिकां करोति॥ न वीरेति॥
तत्र बृहदारण्यकश्रुतिं प्रमाणयति॥ तस्मादिति॥ पुत्रस्य लोक्यत्वादिति यावत् अनुशासनेन विषयीकृतस्य पुत्रस्य लोकप्रा
प्तिसाधनत्वादनुशासनं च वेदाध्ययनं॥ पुत्रजन्मोत्पत्त्यनंतरमेव किमित्येतद्विज्ञानं नोपदिष्टमित्याशंक्याह॥ अभ्यर्हितेति॥

गायत्र्युपाधिकब्रह्मोपासनस्य कोशेषु ज्योतिष्यारोप्य परब्रह्मोपासनमभ्यर्हितं तस्य च मनोमयत्वादिगुणकब्रह्मोपासनमनन्तरं
गतं तथा च तद्वचनेन वैयर्थ्यं स्यादतोऽनन्तरमेव कोशविज्ञानं नोक्तमिति निवृत्ते तु व्यासंगेन दृष्टिरिदानीं यथोक्तफलसिद्ध्यर्थमुच्यत इत्य
र्थः॥ कोशशब्देन हिरण्यादिनिक्षेपाधारा मञ्जूषोच्यते॥ कथं त्रैलोक्यात्मनः कोशत्वं तत्राह॥ कोशइवेति॥ अनेकधर्मसादृश्यं वि
शदयति॥ स चेति॥ तथापि कथमविनाशित्वं तत्राह॥ सहस्रेति॥ त्रैलोक्यात्मनि कोशदृष्टिस्तत्रापि भूमौ बुध्नदृष्टिरित्युक्तं कोशस्य

अंतरिक्षमुदरं अंतःसुषिरं यस्य सोऽयमंतरिक्षोदरः कोशः कोशइवानेकधर्मसादृश्यात्कोशः स च भूमिबुध्नो भूमिर्बु
ध्नो मूलं यस्य स भूमिबुध्नो न जीर्यति न विनश्यति त्रैलोक्यात्मकत्वात् सहस्रयुगकालावस्थायी हि स दिशो ह्यस्य सर्वाः
स्रक्तयः कोणा द्यौरस्योत्तरमूर्ध्वं बिलं स एष यथोक्तगुणः कोशो वसुधानो वसु धीयतेऽस्मिन्प्राणिनां कर्मफलाख्यं
अतो वसुधानः॥ तस्मिन्नन्तर्विश्वं समस्तं प्राणिकर्मफलं सह तत्साधनैरिदं यद्गृह्यते प्रत्यक्षादिप्रमाणैः श्रितमाश्रितं स्थि

कोशो भूमिबुध्नो न जीर्यति दिशो ह्यस्य स्रक्तयो द्यौरस्योत्तरं बिलꣳ स एष कोशो वसुधानस्तस्मिन्विश्वमिदꣳ

तमित्यर्थः॥ तस्य च प्राची दिक्प्राग्गतो भागो जुहूर्नाम जुह्वत्यस्यां दिशि कर्मिणः प्राङ्मुखाः सन्त इति जुहूर्नाम सह
मानानामसहन्तेऽस्यां पापकर्मफलानि यमपुर्यां प्राणिन इति सहमाना नाम दक्षिणा दिक् तथा राज्ञी नाम प्रतीची प
श्चिमा दिक् राज्ञी राज्ञा वरुणेनाधिष्ठिता सन्ध्यारागयोगाद्वा सुभूता नाम भूतिमद्भिरीश्वरकुबेरादिभिरधिष्ठितत्वात्सु
भूता नामोदीची तासां दिशां वायुर्वत्सो दिग्जत्वाद्वायोः पुरोवात

(च साऽपेक्षमविनाशित्वं ध्येयत्वेन दर्शितं सम्प्रति दिक्षु कोण
दृष्टिः कर्तव्येत्याह॥ दिशो हीति॥ दिवि कोशस्योर्ध्वं बिलत्वबुद्धिं दर्शयति॥ द्यौरिति॥ यथोक्ते कोशे वसुधानत्वदृष्टिं दर्शयति॥
यथोक्तेति॥ तदेव समर्थयते॥ तस्मिन्निति॥ कोशकोणत्वेनोक्तासु दिक्षु अवान्तरविभागमाह॥ तस्येत्यादिना॥ दिशां विशिष्टनामवत्त्वं

कस्मात्पुनरेषां मंत्राणां जप इत्यपेक्षायां पूर्वोक्तमध्यानविद्यानंतरमित्याह ॥ उपरिष्टादिति ॥ ध्यात्वोपरिष्टादिति संबंधः यथोक्तवि
ज्ञानेन जपे वा इदः ॥१४॥ इत्तमनुष्यपुरुषावावेत्यादिखंडांतरमवतारयति ॥ पुत्रायुषइति ॥ किमित्यात्मनो दीर्घजीवनं समर्थ्यते तत्रा
ह ॥ जीवन्निति ॥ यथोक्तफलहेतुभूता विद्यामुत्पादयतीत्यत आह ॥ आत्मानमिति ॥ कथं पूर्णस्यात्मनो यज्ञत्वं संपाद्यतेऽत आह ॥ पुरुष

तदवोचमथ यदवोचं भुवः प्रपद्य इति अग्न्यादीन्प्रपद्य इति तदवोचमथ यदवोचं स्वः प्रपद्य इत्यृग्वेदादीन्प्रपद्य इत्येव
तदवोचमित्युपरिष्टादीन्मंत्रान् जपेत् ततः पूर्वोक्तमजरं कोशं सदिग्वत्सं यथावद्ध्यायेत् द्विर्वचनमादरार्थं ॥१५॥ पुत्रायुषउपा
सनमुक्तं जपश्चाथेदानीमात्मनो दीर्घजीवनाय इदमुपासनं जपं चाविदधदाह ॥ जीवन्हि स्वयं पुत्रादिफलेन युज्यते नान्यथे

अमुना प्राणं प्रपद्येऽमुना ३ भूः प्रपद्येऽमुना ३ भुवः प्रपद्येऽमुना ३ स्वः प्रपद्येऽमुनाऽमुनाऽमुना स यदवोचं प्राणं प्रपद्य इति
प्राणो वा इदं ॐ सर्वं भूतं यदिदं किंचन तमेव तत्प्रापत्सि अथ यदवोचं भूः प्रपद्य इति पृथिवीं प्रपद्येंतरिक्षं प्रपद्ये दिवं प्र
पद्य इत्येव तदवोचमथ यदवोचं भुवः प्रपद्य इत्यग्निं प्रपद्ये वायुं प्रपद्य आदित्यं प्रपद्य इत्येव तदवोचमथ यदवो
चं ॐ स्वः प्रपद्य इत्यृग्वेदं प्रपद्ये यजुर्वेदं प्रपद्ये सामवेदं प्रपद्य इत्येव तदवोचं तदवोचं ॥१५॥ पुरुषो वाव यज्ञस्त

स्यत आत्मानं यज्ञं संपादयति ॥ पुरुषः पुरुषो जीवनविशिष्टः कार्यकरणसंघातो यथाप्रसिद्ध एव ॥ वावशब्दोऽवधार
णार्थः पुरुष एव यज्ञ इत्यर्थः ॥ तथाहि सामान्यैः संपादयति यज्ञत्वं ॥ कथं ॥ तस्य पुरुषस्य यानि चतुर्विंशति वर्षाणि आ
युषः तत्प्रातःसवनं पुरुषाख्यस्य यज्ञस्य ॥ केन सामान्येनेत्याह ॥ चतुर्विंशत्यक्षरा गायत्री छन्दो ऽऽइति ॥ अवधारणार्थे सम
र्थ्यते ॥ तथाहीति ॥ यज्ञावयवसादृश्यात्पुरुषे यज्ञदृष्टिः कर्त्तव्येत्युक्तं कथं सादृश्याद्यज्ञसंपादनमिति पृच्छति ॥ कथमिति ॥ तत्र षोड
शाधिकं वर्षशतं पुरुषस्यायुः फलभूतं तत्त्रेधा विभज्य चतुर्विंशतिवर्षायुषि प्रातःसवनदृष्टिः कर्त्तव्येत्याह ॥ तस्येति ॥ गायत्रीछन्दसम

॥गायत्रेति॥ विधितोऽनुष्ठीयमानस्य बाह्ययज्ञस्य प्रातःकालोपलक्षितं कर्म प्रातःसवनं तत्प्रसक्तो ऽन्नादिगायत्रच्छन्दस्कं गायत्रं प्रातः
सवनमिति श्रुतिरित्यर्थः॥ यथोक्ते पुरुषायुषि प्रातःसवने चतुर्विंशत्यक्षराणि फलितमाह॥ अतइति॥ तथापि कथं पुरुषस्य यज्ञत्वं
तदाह॥ अतइति॥ अतः शब्दस्यार्थो विधियज्ञसादृश्यादिति विधिनानुष्ठीयमानो यज्ञो विधियज्ञस्तेन सादृश्यं पुरुषस्य प्रातःसव
नसंबंधस्तस्मात्पुरुषो यज्ञ इत्यर्थः॥ यथा यथोक्ते पुरुषायुषि प्रातःसवनसंपत्तिस्तथा वक्ष्यमाणयोरपि पुरुषायुषोर्माध्यंदिनसव
नतृतीयसवनमिति ——— सवनद्वयसंपत्तिं दृष्टान्त्याह॥ तथेति॥ चतुर्विंशतिवर्षमिति पुरुषायुषि प्रातःसवनमतः संख्या

गायत्रच्छन्दस्कं हि विधियज्ञस्य प्रातःसवनं॥ अतः प्रातःसवनसंपन्नेन चतुर्विंशतिवर्षेणायुषा युक्तः पुरुषोऽतो विधि
यज्ञसादृश्याद्यज्ञः॥ तथेतरयोरप्यायुषोः सवनद्वयसंपत्तिः त्रिष्टुब्जगत्यक्षरसंख्यासामान्यतो वाच्या। किंच तद
स्य पुरुषयज्ञस्य प्रातःसवनं विधियज्ञस्येव वसवो देवा अन्वायत्ता अनुगताः सवनदेवतात्वेन स्वामिन इत्यर्थः॥ पुरुषय

चतुर्विंशतिवर्षाणि तत्प्रातःसवनं चतुर्विंशत्यक्षरा गायत्री गायत्रं प्रातःसवनं तदस्य वसवोऽन्वायत्ताः

ज्ञेऽपि विधियज्ञ इवाग्न्यादयो वसवो देवाः प्राप्ता इत्यतो विशिनष्टि प्राणा॥ ((प्राणा वाव वसव एते हीदंसर्वं वासयन्ति॥
वाव वसवो वागादयो वायवश्चैते हि यस्मादिदं पुरुषादि प्राणिजातं एते वासयंति॥

((सामान्याद्वक्ष्यमाणपुरुषायुषोः सवनद्वयसं
पत्तौ किं कारणमित्याशंक्याह॥ त्रिष्टुबिति॥ चतुश्चत्वारिंशदक्षरा त्रिष्टुप् प्रसिद्धा त्रैष्टुभं माध्यंदिनं च सवनं॥ अष्टाचत्वारिंशदक्षरा जगती
जागतं च तृतीयसवनमतः संख्यासामान्यादुत्तरयोः पुरुषायुषोः सवनद्वयसंपत्तिरुक्तेत्यर्थः॥ पुरुषस्य यज्ञत्वे विधियज्ञेन सह सादृश्यां
तरमाह॥ किंचेति॥ प्रातःसवने वसूनां देवतात्वेनान्वयात्तानेव संक्षिपति॥ सवनदेवतात्वेन स्वामिन इत्यर्थ इति॥ वसूनां वसनस्वामि
त्वमुभयत्र तुल्यमित्युक्ते प्रसिद्धान्वसून्पुरुषयज्ञेऽपि प्राप्तान्प्रत्युदस्यति॥ पुरुषयज्ञेऽपीति॥ तेषु वसुशब्दप्रवृत्तिं साधयति॥ ते हीति॥ नि

प्राणेषु हीति॥ प्राणानां वसुत्वमुपपादितमुपसंहरति॥ इत्यनद्विति॥ संप्रति पुरुषस्य यज्ञविधागाभूतमाशीर्वादमयोगं दर्शयति॥ तं चेदिति॥
अत्र सत्रत्वेनान्यत्रात्र पदं मकीभावेमं त्रजपस्य सात्रवंधित्वं तदुक्त्याह नमेवतत्रेति॥ जनाविविधवत्तेन समकं॥ तस्य यानि चतुर्विंशति

प्राणेषु हि देहे वसत्सु सर्वमिदं वसति नान्यथेत्यतो वसनाद्वासनाच्च वसवः तं चेद्यज्ञसंपादिनमेतस्मिन्प्रातःसवनसंपन्ने वयसि किंचिद्व्याध्यादि मरणशंकाकारणमुपतपेदुःखमुत्पादयेत्तदा यज्ञसंपादी पुरुष आत्मानं यज्ञं मन्यमानो ब्रूयाज्जपेदित्यर्थः॥ इमं मंत्रं हे प्राणा वसव इदं मे प्रातःसवनं मम यज्ञस्य वर्तते तन्माध्यंदिनं सवनमनुसंतनुतेति माध्यंदिनेनायुषा सं-

तं चेदेतस्मिन्वयसि किंचिदुपतपेत्स ब्रूयात्प्राणा वसव इदं मे प्रातःसवनं माध्यंदिनꣳ सवनमनुसंतनुतेति माहं प्राणानां वसूनां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो ह भवत्यथ यानि चतुश्चत्वारिꣳशद्वर्षाणि तन्माध्यंदिनꣳ सवनं चतुश्चत्वारिꣳशदक्षरा त्रिष्टुप्त्रैष्टुभं माध्यंदिनꣳ सवनं तदस्य रुद्रा अन्वायत्ताः प्राणा वाव रुद्रा एते हीदꣳ सर्वꣳ रोदयंति तं चेदेतस्मिन्वयसि किंचिदुपतपेत्स ब्रूयात्प्राणा रुद्रा इदं मे माध्यंदिनꣳ सवनं तृतीयसवनमनुसंतनुतेति माहं प्राणानाꣳ रुद्राणां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो ह भवत्यथ यान्यष्टाचत्वारिꣳशद्वर्षाणि तत्तृतीयसवनमष्टाचत्वारिꣳशदक्षरा जगती जागतं तृतीयसवनं तदस्यादित्या अन्वायत्ताः प्राणा वावादित्या

हितमेकीभूतं संततं कुरुतेत्यर्थो माहं यज्ञो युष्माकं प्राणानां वसूनां प्रातःसवनेशानां मध्ये विलोप्सीय विलुप्येय विच्छिद्येयमित्यर्थः इति शब्दो मंत्रसमाप्त्यर्थः स तेन जपेन ध्यानेन च ततस्तस्मादुपतापादुदेत्युद्गच्छति॥ उद्गम्य विमुक्तः सन्नगदो हानुपतापो भवत्येवाथ यानि चतुश्चत्वारिंशद्वर्षाणीत्यादि समानं रुदन्ति रोदयन्तीति प्राणा रुद्राः क्रूरा हि ते म

वर्षाणीत्यादिनेति शेषः प्राणेषु रुद्रशब्दप्रवृत्तौ निमित्तमाह॥ रुदंतीति॥ यदुक्तं रोदयंतीति रुद्रा इति तदुपपादयति क्रूरा हीति॥

७३

ष्वध्याप्राणान्स्वधीरुद्राख्योक्तास्तथेति यावत्तेषामादित्यशब्दप्रवृत्तौ निमित्तमाह॥ते हीति॥तं चेदित्यादिना पूर्वेण ग्रन्थेन तं चेदेतस्मिन्नि त्यादिवक्ष्यमाणग्रन्थस्य तुल्यार्थत्वान्न व्याख्यानापेक्षेत्याह॥समानमन्यदिति॥महिदासोदाहरणस्य तात्पर्यमाह॥निश्चिता हीति॥तदेतद् द्दर्शनं विद्वानाह स्मेति संबंधः॥ह वा इति॥निपातयोः किलेत्यर्थः॥उक्तस्यैवोदाहरणप्रसिद्धिविषयः हे रोग कस्मान्मां त्वमुपतपसीति संब



प्राणास्ते हीदं शब्दादिजातमाददते। त आदित्यास्तृतीयसवनमायुः षोडशोत्तरं वर्षशतं समापयन्तोऽनुसंतनुत यज्ञं समापयतेत्यर्थः। समानमन्यत्॥ निश्चिता हि विद्याफलायेत्येतद्दर्शयन्नुदाहरति॥ एतद्ध स्म वै किल तद्विद्वानाह महिदासो नामतः इतराया अपत्यमैतरेयः किं कस्मान्मम एतदुपतापं उपतपसि स त्वं हे रोग योऽहं अनेन त्वत्कृतेनोपतापेन

एते हीदं सर्वमाददते तं चेदेतस्मिन्वयसि किंचिदुपतपेत्स ब्रूयात्प्राणा आदित्या इदं मे तृतीयसवनमायुरनुसंतनुतेति। माहं प्राणानामादित्यानां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो हैव भवति॥ एतद्ध स्म वै तद्विद्वानाह महिदास ऐतरेयः स किं म एतदुपतपसि योऽहमनेन न प्रेष्यामीति स ह षोडशं वर्षशतमजीवत्प्र ह षोडशं वर्षशतं जीवति य एवं वेद

न प्रेष्यामि न मरिष्यामि अतो वृथा तव श्रम इत्यर्थः। इत्येवमाह स्मेति पूर्वेण संबंधः। स एवंनिश्चयः सन्षोडशं वर्षशत मजीवत्। अन्योऽप्येवंनिश्चयः षोडशं वर्षशतं प्रजीवति॥ य एवं यथोक्तं यज्ञसंपादनं वेद जानाति स इत्यर्थः॥१६॥ स यदशि शिषतीत्यादि यज्ञसामान्यनिर्देशः पुरुषस्य

((ध्यः कस्मादित्याक्षेपे हेतुमाह॥ योऽहमिति॥ यो यज्ञोऽहमनेनेति योजना॥ इतिश ब्दस्यान्वयमाचष्टे॥ इत्येवमिति॥ निश्चिता या विद्या या ध्यानं प्रति फलं कथयति॥ स एवमिति॥ यद्यपि महिदासस्य यथायथोक्तं तथा पीदानींतनस्य किमायातमित्याशङ्क्याह॥ अन्योऽपीति॥ प्रजीवतीति जीवनस्य प्रकर्षो रोगाद्युपतापराहित्यं प्रशब्देनोच्यते॥ एवंनिश्चय इत्युक्तं पुरुषं विशदयति॥ य एवमिति॥१६॥ ननु पूर्वेणाशीर्वादप्रयोगेनोदाहरणेनैव समनन्तरग्रन्थस्य संबंधो नोपलभ्यते तत्राह॥ सय

पूर्वेणतस्ययानिचतुर्विंशतिवर्षाणीत्यादिनासावनस्यनिर्देशेनेत्यर्थः॥ एवंजातीयकमशनादिकृतमितियावत्॥ अशिशिषादिषु
दीक्षादृष्टेर्हेतुमाह॥ दुःखेति॥ दीक्षावचनसादृश्यात्पुरुषस्ययज्ञत्वमुक्तमिदानीमुपसदुपेतत्वसादृश्यादपितस्ययज्ञत्वंविवक्षितमित्या
ह॥ अथेति॥ अशनादिषुकथमुपसद्दृष्टिस्तत्राह॥ उपसदांचेति॥ पयोव्रतत्वंपयोभक्षणयुक्तत्वंयज्ञेयान्यहान्यभोजनीयानिप्रसिद्धा
नितानिचोपसत्सुक्रियमाणान्याश्वासनानीतितासु प्रश्वासः स्वास्थ्यविशेषः अशनादिषुचसोऽस्तीतिप्रसिद्धमित्यर्थः॥ सुखनिमित्त

पूर्वेणैवसंबध्यते॥ यदशिशिषति अशितुमिच्छति॥ तथापिपासतिपातुमिच्छतियन्नरमतेइष्टाद्यप्राप्तिनिमित्तंयदे
वंजातीयकंदुःखमनुभवति॥ ता अस्यदीक्षादुःखसामान्याद्धियज्ञस्येव॥ अथयदश्नातियत्पिबतियद्रमतेरतिंचानु
भवतीष्टादिसंयोगात्तदुपसद्भिःसमानतामेत्युपसदांचपयोव्रतत्वनिमित्तंसुखमस्ति अल्पभोजनीयानिचाहान्यासन्नानीति

स यदशिशिषतियत्पिपासतियन्नरमतेताअस्यदीक्षा॥ अथयदश्नातियत्पिबतियद्रमतेतदुपसदैरेत्यथयद्ध
सतियज्जक्षतियन्मैथुनंचरतिस्तुतशस्त्रैरेवतदेत्यथयत्तपोदानमार्जवमहिंसासत्यवचनमितिताअस्यद
क्षिणास्तस्मादाहुःसोष्यत्यसोष्टेति॥

मश्वासो ऽतो ऽशनादीनामुपसदांचसामान्यं॥ अथयद्धसतियज्जक्षतिभक्षयति
यन्मैथुनंचरतिस्तुतशस्त्रैरेवतत्समानतामेतिशब्दवत्त्वसामान्यात्॥ अथयत्तपोदानमार्जवमहिंसासत्यवचनमितिताअ
स्यदक्षिणाः धर्मपुष्टिकरत्वसामान्यात् यस्माच्चयज्ञःपुरुषः तस्मात्तंजनयिष्यतिमातायदातदाहुरन्येसोष्यतीतिनस्वमातरंयदा
चप्रसूताभवतितदा ऽसोष्टपूर्णिकेतिविधियज्ञइवसोष्यतिसोमंदेवदत्तो ऽसोष्टसोमंयज्ञदत्तइत्यतः॥ त्वंक्लेशनिवृत्तिहेतुत्वंचसा
मान्यं॥ स्तुतशस्त्रवैशिष्ट्यसाम्यादपिपुरुषस्ययज्ञत्वमित्याह॥ अथयदिति॥ हासादिषुस्तुतशस्त्रदृष्टौहेतुमाह॥ शब्दवत्त्वेति॥ दक्षिणावत्त्व
साम्यादपिपुरुषस्ययज्ञत्वमवधेयमित्याह॥ अथेति॥ तपोदानादिषुदक्षिणादृष्टौहेतुमाह॥ धर्मेति॥ प्रकारान्तरेणपुरुषयज्ञत्वंसाधयति॥ य

षूञ् प्राणिप्रसवे॥ षुञ् अभिषवइति॥ धातुद्वयदर्शनात्प्रसवेकंडने च साधारणः सवनशब्दः ततः सवनशब्दवत्त्वसामान्याद्वा पुरुषे यज्ञदृष्टिः कर्तव्येत्यर्थः॥ पुरुषगतशब्दसामान्यं विशदयति॥ पुनरिति॥ यस्तु नरस्य पुरुषस्यास्य स्वशुद्धिपयज्ञस्यैव सोष्यतीत्यादिशब्दसंबंधित्वउत्पादनं भवतीति ये जना अवभृथसंबंधित्वादपि पुरुषस्य यज्ञत्वमस्तीत्याह॥ किंचेति॥ एकस्य यज्ञदृष्टिकृतासंभृतिविशिष्टपुरुषसंबंधेन विद्यास्तोत्रविद्यांगस्य जपं विधातुमुपक्रमते॥ तद्धैतदिति॥ देवकीपुत्रस्यैतद्दर्शनं श्रवणफलमाह॥ स चेति॥ किमर्थं यज्ञगुरुशिष्य

शब्दसामान्याद्वा पुरुषो यज्ञः॥ पुनरुत्पादनमेवास्य तत्पुरुषाख्यस्य यज्ञस्य यत्सोष्यत्यसोष्टेति शब्दसंबंधित्वं विधियज्ञस्येव॥ किंच तन्मरणमेवास्य पुरुषयज्ञस्यावभृथः समाप्तिसामान्यात्॥ तद्धैतद्यज्ञदर्शनं घोरो नामतः आंगिरसो गोत्रतः कृष्णाय देवकीपुत्राय शिष्यायोक्त्वोवाच तदेतत्त्रयमित्यादिव्यवहितेन संबंधः॥ स चैतद्दर्शनं श्रुत्वाऽपिपास एवान्या

पुनरुत्पादनमेवास्य तन्मरणमेवावभृथस्तद्धैतद्घोर आंगिरसः कृष्णाय देवकीपुत्रायोक्त्वोवाचापिपास एव स बभूव सोंतवेलायामेतत्त्रयं प्रतिपद्येताक्षितमस्यच्युतमसि प्राणसंशितमसीति॥ ६॥ भ्यो विद्याभ्यो बभूवेत्यनया च

विशिष्टेयं विद्या यत्कृष्णस्य देवकीपुत्रस्यान्यां विद्यां प्रति तृड्विच्छेदकरीति पुरुषयज्ञविद्यां स्तौति॥ घोर आंगिरसः कृष्णायोक्त्वेमां विद्यां किमुवाचेति तदाह॥ स एवं यथोक्तयज्ञविदंतवेलायां मरणकाल एतन्मंत्रत्रयं प्रतिपद्येत जपेदित्यर्थः॥ किं तदक्षितमक्षीणमक्षतं वासीत्येकं यजुः सामर्थ्यादादित्यस्थं प्राणं चैकीकृत्याह॥ तथाच्युतमेवाप्रच्युतं स्वरूपादप्रच्युतम

तृष्णापिपासे च्छेत्याशंकाह॥ स्तयं चेति॥ अक्षितमसीति॥ कीदृशीं देवतां प्रत्युच्यते तत्राह॥ सामर्थ्यादिति॥ निकृष्टस्य स्तुतिसंबंधायोगात्पुरुषयज्ञे सवनदेवतानां तत्र पर्यंतेष्व प्राणानाम वाधिदैविकरूपमादित्यात्मं जप्यमंत्रार्थत्वेन संबध्यत इत्यर्थः॥ द्वितीयमंत्रस्यार्थोक्तं तं वारयति॥ तथेति॥ प्रथममंत्रवदित्यर्थः॥ न च द्वयोरेकार्थत्वे सत्यन्यतरस्य वैयर्थ्यं द्वयोरपि जप्यत्वेनोपयुक्तत्वादिति द्रष्टव्यम्॥

मंत्रत्रयप्रतिपाद्यंस्माविद्रंतत्त्वम्ग्रन्थांतरेपिश्रुतिपादितमितिप्रत्यवस्थापयितुंशेषमाह॥तत्रैति॥किमितिविद्यास्तुतिपरत्वमनयोर्ऋचोर्व्याख्यायतेजपा
र्थत्वमेवकिंनस्यात्तत्राह॥नेत्यादिना॥अनयोर्जपार्थत्वेपितृतीयत्वसंख्यायाःसत्वान्नसाबाध्येतेत्याशंक्याह॥पंचेति॥अनयोर्जप्य
त्वेपंचकंप्रतिपद्येतेतिपंचसंख्यायाबाधकत्वात्त्रित्वंसाधितंस्यादित्यर्थः॥आदित्प्रत्नस्यरेतसोज्योतिःपश्यंतिवासरं॥परोयदिध्यते
दिवीतिमंत्रस्यप्रतीकग्रहणमादित्प्रत्नस्यरेतसइतितत्पदच्छेदपूर्वकंव्याचष्टे॥आदित्यादिना॥इच्छब्दस्यानर्थकइतिपूर्वेणसंबंधः
किंतत्कारणमित्यपेक्षायांसदेवसोम्येदमित्यादिश्रुतिसिद्धंब्रह्मेत्याह॥सदाख्यस्येति॥आनंदंब्रह्मणोविद्वानितिवचनात्तस्यज्योतिरि

प्राणसंशितंप्राणस्यसंशितंसम्यक्कृतंतनूकृतंचसूक्ष्मंतत्त्वमसीतितृतीयंयजुः॥तत्रैतस्मिन्नर्थेविद्यास्तुतिपरेद्वेऋचौ
मंत्रौभवतोनजपार्थत्वंप्रतिपद्येतेतित्रित्वसंख्याबाधनात्॥पंचसंख्याहितदास्यात्आत्इत्आकारस्यानुबंधःत
कारोऽनर्थकःइच्छब्दश्चप्रत्नस्यचिरंतनस्यपुराणस्येत्यर्थः॥रेतसःकारणस्यबीजभूतस्यजगतःसदाख्यस्यज्योतिः

तत्रैतेद्वेऋचौभवतआदित्प्रत्नस्यरेतसउद्वयंतमसस्परिज्योतिःपश्यंतउत्तरꣳ

प्रकाशंपश्यंति॥आशब्दउत्तरत्रानुबंधःपश्यंतीत्यनेनसंबध्यतेकिंतत्ज्योतिःपश्यंतिवासरमहरहरिवतत्सवितो
व्याप्तंब्रह्मणोज्योतिर्निवृत्तचक्षुषोब्रह्मविदः॥ब्रह्मचर्यादिनिवृत्तिसाधनेनशुद्धांतः इतिसंबंधोद्रष्टव्यः॥उत्तरत्रानुबंधःध्वस्त
तकारःसइतियावत्॥ननुब्रह्मस्वरूपभूतमेतज्ज्योतिर्नैवसर्वेपश्यंतोदृश्यंतेतत्राह॥निवृत्तचक्षुषइति॥निवृत्तानिविमुखीकृतानिवि
षयेभ्यश्चक्षूंषिकरणानियेषांतेतथाअतएवब्रह्मविदः॥कश्चिद्धीरःप्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्नितिश्रुत्यंतरं॥तत्रै
वोपायांतरंसूचयति॥ब्रह्मचर्यादीति॥स्मरणंकीर्तनंकेलिःप्रेक्षणंगुह्यभाषणं॥संकल्पोऽध्यवसायश्चक्रियानिर्वृत्तिरेवच॥एतन्मैथुनम
ष्टांगंप्रवदंतिमनीषिणः॥विपरीतंब्रह्मचर्यमेतदेवाष्टलक्षणं॥ब्रह्मचर्यआदिपदेनाहिंसास्तेयादयोगृह्यंते॥एतैर्निवृत्तिप्रधानैःसाधनैःशु

अन्वये हेतुमाह॥ज्योतिः परत्वादिति॥यत्स्वमहिमप्रतिष्ठितं दीप्यते तत्परं ज्योतिरिति संबन्धः॥दीप्यमानत्वं विवृणोति॥येनेति॥मन्त्रा-
न्तरमवतारयति॥किं चेति॥इत्यस्य विद्यास्तुत्यर्थेति यावत् किमाहेत्यपेक्षायां द्वितीयं मन्त्रमादत्ते॥उद्वयमिति॥तं व्याकरोति॥तमस इत्या-
दिना तस्यैव ज्योतिषो प्रमाणे ज्योतिर्नान्यदस्तीत्यर्थः देवत्वेन प्रत्यग्भूतत्वमाह॥स्वरिति॥तयोरेकत्वं स यश्चायमित्यादि श्रुत्यन्तरेषु सिद्धं द-
र्शयति॥आदित्यस्थमिति॥तत्पदार्थं त्वंपदार्थं चोक्त्वा तयोरैक्यमुक्तमिदानीमेकीभूतं ज्योतिर्विशिनष्टि॥यदुत्तरमिति॥एकत्वधीफलं क-

करणा आसमन्ततो ज्योतिः पश्यन्तीत्यर्थः परः परमिति लिंगव्यत्ययेन ज्योतिः परत्वाद्यदिध्यते दीप्यते दिवि द्योतनवति प-
रस्मिन्नक्षणि वर्तमानं येन ज्योतिषेद्धः सविता तपति चन्द्रमा भाति विद्युद्विद्योतते ग्रहतारागणा विभासन्ते किं चान्यो मं-
त्रोऽप्याह॥यथोक्तं ज्योतिः पश्यन्त उद्वयं तमसोऽज्ञानलक्षणात्परि परस्तादिति शेषः तमसो वाऽपनेतृ यज्ज्योतिरुत्तरमादि-
त्यस्थं परिपश्यन्तो वयमुदगन्मेति व्यवहितेन संबन्धः तज्ज्योतिः स्वः स्वमात्मीयमस्मद्धृदि स्थितमादित्यस्थं च॥त-

त्स्वः पश्यन्त उत्तरं देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तममिति ज्योतिरुत्तममिति॥७॥मनो ब्रह्मेत्युपासीतेत्यध्या

त्ममथाधिदैवं

देकं ज्योतिर्यदुत्तरमुत्कृष्टतरमूर्ध्वं तरं वा परं ज्योतिरपेक्ष्य पश्यन्त उदगन्म वयं कथमुदगन्मेत्या-
ह॥देवं द्योतनवन्तं देवत्रा देवेषु सर्वेषु सूर्यं रसानां रश्मीनां प्राणानां च जगत ईरणात्सूर्यस्तमुदगन्म गतवन्तो ज्योतिरुत्त-
मं सर्वज्योतिर्भ्य उत्कृष्टतमम् अहो प्राप्ता वयमित्यर्थः इदं तज्ज्योतिर्यदृग्भ्यां स्तुतं यद्यजुस्त्रयेण प्रकाशितं द्विरभ्यासो यज्ञ-
कल्पनापरिसमाप्त्यर्थः॥७॥मनोमय ईश्वर उक्त आकाशात्मेति च

तपतीति॥पश्यन्त इति॥फलमेव प्रश्नपूर्वकं विवृणोति॥क-
थमित्यादिना॥फलविषयं स्तुत्यन्तर्भवं दर्शयति॥अहो इति॥मन्त्राणां मन्त्रयोश्चैकवाक्यत्वमुपसंहरति॥इदं तदिति॥७॥ननु यन्नु विज्ञानेन
वक्ष्यमाणविज्ञानस्यानन्तरगतिरस्तीति कथं पौर्वापर्यमित्याशंक्यानन्तरखण्डस्य व्यवहितेन संबन्धमाह॥मनोमय इति॥इति च ईश्वर उक्त इति

तत्र ब्रह्मणो गुणयोरेकदेशत्वेन मन आकाशश्चोक्तमित्याह ॥ ब्रह्मण इति ॥ यथोक्तगुणकब्रह्मदृष्ट्यसमर्थस्य तयोरेव संपूर्णब्रह्मदृष्टिक-
थनार्थमुत्तरग्रन्थमवतारयति ॥ अथेति ॥ एवमुभयमुपदिष्टं भवतीति संबंधः तदेवोभयं विभजते ॥ अध्यात्ममिति ॥ कथं मनो दृष्टिविषय-
त्वेनाध्यात्मं मनो ब्रह्मेत्युपासनं विधित्सितं तत्राह ॥ मनसेति ॥ तथापि कथं ब्रह्मदृष्टेराकाशो विषयीभवति ॥ नहि तेनोपलभ्यते ब्रह्मेत्या-

ब्रह्मणो गुणैकदेशत्वेनाथेदानीं मन आकाशयोः समस्तब्रह्मदृष्टिविधानार्थमारंभो मनो ब्रह्मेत्यादि ॥ मनो मनुतेऽने-
नेत्यन्तःकरणं तत् ब्रह्म परमित्युपासीतेत्येतदात्मविषयं दर्शनं अध्यात्ममथाधिदैवतं देवताविषयमिदं वक्ष्याम आका-
शो ब्रह्मेत्युपासीतेत्येवमुभयमध्यात्ममधिदैवतं चोभयं ब्रह्मदृष्टिविषयमादिष्टमुपदिष्टं भवत्याकाशमनसोः सूक्ष्मत्वा-
न्मनसोपलभ्यत्वाच्च ब्रह्मणो योग्यं मनो ब्रह्मदृष्टेराकाशश्च सर्वगतत्वात्सूक्ष्मत्वादुपाधिहीनत्वाच्च तदेतन्मन आका-

माकाशो ब्रह्मेत्युभयमादिष्टं भवत्यध्यात्मं चाधिदैवतं च तदेतच्चतुष्पाद्ब्रह्म वाक्पादः प्राणः पादश्चक्षुः पादः श्रो-
त्रं पाद इत्यध्यात्ममथाधिदैवतमग्निः पादो वायुः ॥१॥ शाख्यं चतुष्पाद्ब्रह्म चत्वारः पादा अस्येति ॥ कथं चतुष्पात्त्वं म-
नसो ब्रह्मण इत्याह वाक्प्राणः चक्षुः श्रोत्रमित्येते पादाः इत्यध्यात्ममथाधिदैवतमाकाशस्य ब्रह्मणोऽग्निः पादो वा-
युरादित्यो दिश इत्येते ॥ एवमुभयमेव चतुष्पाद्ब्रह्मादिष्टं भवत्यध्यात्मं चैवाधिदैवतं च ॥ तत्र मनसो वागेव ब्रह्मणश्च-
तुर्थः पाद इतरपादत्रयापेक्षया वाचा हि पादेनेव गवादि वक्तव्यविषयं प्रति तिष्ठत्यतो मनसः पाद इव वाक् तथा प्रा-

शंक्याह ॥ आकाशश्चेति ॥ ब्रह्मदृष्टेर्योग्यमिति पूर्वेण संबंधः ॥ अध्यात्ममधिदैवतं च विहितस्योपासनस्यांगानुचिंतनं दर्शयति ॥ त-
देतदिति ॥ मनसश्चतुष्पात्त्वं प्रश्नपूर्वकमुत्पादयति ॥ कथमित्यादिना ॥ अधिदैविकस्याकाशस्य चतुष्पात्त्वं प्रकटयति ॥ अथेत्यादि-
ना ॥ मन आकाशयोरुक्तं चतुष्पात्त्वं निगमयति ॥ एवमिति ॥ आध्यात्मिकान्पादान्प्रपंचयति ॥ तत्रेति ॥ पादत्वं वाचो व्युत्पादयति ॥ वो-

देवदत्तोऽपि वाचैव पादेन वक्तव्यं विषयं प्रतिलभते तेन तस्यास्तुर्यं पादत्वमित्यर्थः ॥ प्राणस्य वाच इव पादत्वं दर्शयति ॥ तेनापीति
अथाधिदैविकान्पादान्विवृणोति ॥ अथेति ॥ यथा गोरुदरे पादा लग्ना दृश्यन्ते तथाकाशस्योदरे दूरे वाग्न्यादयो लग्ना दृश्यन्ते तस्मात्
त एते पादा इव भवन्तीत्यर्थः द्विविधपादविवरणमुपसंहरति ॥ एवमिति ॥ सम्प्रत्याध्यात्मिकपादानामाधिदैविकपादैरविशिष्टतयास

पादस्तेनापि गन्धविषयं प्रति चंक्रमति तथा चक्षुः पादः श्रोत्रं पाद इत्येवमध्यात्मं चतुष्पात्त्वं मनसो ब्रह्मणोऽथाधिदै
वतमग्निर्वाय्वादित्यो दिश आकाशस्य ब्रह्मण उदर इव गोः पादा इव लग्ना उपलभ्यन्ते तेन तस्याकाशस्याग्न्यादयः पादा
उच्यन्ते ॥ एवमुभयमध्यात्मं चैवाधिदैवतं चतुष्पादादिष्टं भवति ॥ तत्र वागेव मनसो ब्रह्मणश्चतुर्थः पादः सोऽग्निनाधिदैवतेन

पाद आदित्यः पादो दिशः पाद इत्युभयमेवादिष्टं भवत्यध्यात्मं चैवाधिदैवतं च वागेव ब्रह्मणश्चतुर्थः पादः सो
ऽग्निना ज्योतिषा भाति च तपति च ॥ भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद प्राण एव ब्रह्मणश्चतु
र्थः पादः स वायुना ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद चक्षुरेव ब्र
ह्मणश्चतुर्थः पादः स आदित्येन ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एव
वेद श्रोत्रमेव ब्रह्मणश्चतुर्थः पादः स दिग्भिर्ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मव ॥ १८ ॥
((र्चसेन य एवं वेद य एवं वे

ज्योतिषा भाति च दीप्यते तपति च संतापं चौष्ण्यं करोति ॥ अथवा तैलघृताद्याग्नेयाशनेनेद्धा
वाग्भाति च तपति च वदनायोत्साहवती स्यादित्यर्थो विद्वत्फलं भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं यथो
क्तं वेद तथा प्राण एव ब्रह्मणश्चतुर्थः पादः स वायुना गन्धग्रहणाय भाति च तपति च तथा चक्षुरादित्येन रूपग्रहणाय श्रो
त्रं दिग्भिः शब्दग्रहणाय विद्याफलं समानं सर्वत्र ((वंधोऽनुचिंतनीय इति दर्शयितुमुपक्रमते ॥ तत्रेति ॥ सोऽग्निनेत्यादेरर्थान्तरमाह

[illegible]

[illegible]

भयतः संबध्यते॥१८॥ खंडांतरस्य संगतिमाह॥आदित्य इति॥तस्येत्यादित्यो गृह्यते॥अनभिव्यक्तनामरूपत्वाभिप्रायेणासच्छब्दो गौ
णो व्याख्यातः तत्रैवकारावष्टंभेन शंकते॥नन्विति॥कथमसतः सज्जायेतेत्यसत्कारणत्वस्य षष्ठे निराकरिष्यमाणत्वात्तत्र सत्कारणं भ
वतु मतं तेन तु सावधारणादसच्छब्दादसदेव कारणं विवक्षितमित्युदितानुदितहोमवद्विकल्प इत्यर्थः॥क्रियायाः कर्तृतंत्रत्वात्तदि
च्छया तत्र विकल्पाद्वस्तु न तु सिद्धस्य न तदिच्छानुविधायित्वान्न विकल्पः संभवति॥न हि स्थाणुरेव कस्यचिदपेक्षया पुरुषो भवतीति परि

ब्रह्मसंपत्तिरुक्तं फलं य एवं वेद द्विरुक्तिर्दर्शनसमाप्त्यर्था॥१८॥ आदित्यो ब्रह्मणः पाद उक्त इति तस्मिन्सकल
ब्रह्मदृष्ट्यर्थमिदमारभ्यते॥ आदित्यो ब्रह्मेत्यादेश उपदेशस्तस्योपव्याख्यानं क्रियते तत्स्तुत्यर्थं असदव्याकृतनामरू
पमिदं जगदशेषमग्रे प्रागवस्थायामुत्पत्तेरासीन्न त्वसदेव कथमसतः सज्जायेतेत्यसत्कारणत्वस्य प्रतिषेधान्न वि

आदित्यो ब्रह्मेत्यादेशस्तस्योपव्याख्यानमसदेवेदमग्र आसीत्॥तत्सदासीत्तत्समभवत्॥

हासदेवेति विधानाद्विकल्पः स्यान्न क्रियास्विव वस्तुनि विकल्पानुपपत्तेः॥कथं तर्हीदमसदेवेति नन्ववोचामोऽव्या
कृतनामरूपत्वादसदिवासदिति॥नन्वेवशब्दोऽवधारणार्थः सत्यमेवं न तु सत्त्वाभावमवधारयति किं तर्हि नामरूप
व्याकृतविषयसच्छब्दप्रयोगो दृष्टः तच्च नामरूपव्याकरणमादित्यायत्तं प्रायशो जगतः तदभावे ह्यंधंतमइदं नप्रज्ञाय
तकिंचनेत्यतस्तत्स्तुतिपरे वाक्ये सदपीदं प्रागुत्पत्तेर्जगदसदेवेत्यादित्यं स्तौति॥ब्रह्मदृष्ट्यर्हत्वाया॥ हरति॥न क्रियास्विवेति
॥विकल्पासंभवे वाक्यस्य गतिर्वक्तव्येति पृच्छति॥कथमिति॥असच्छब्दस्य गतिरवधारणस्य वा एवकारेण तत्राद्यं प्रत्याह नन्विति॥द्वितीयं शंकते
॥नन्वेवशब्द इति॥तस्य का गतिरिति शेषः॥पूर्वकालीनसत्त्वाभिधायकासच्छब्दस्य वाक्यशेषश्रवणान्नोपक्रमे च सत्त्वाभावावधारणं विवक्षि
तं किंत्वभिव्यक्त्यभावावधारणं आदित्यस्तुत्यर्थमिति समाधत्ते॥सत्यमेवमिति॥क्व पुनरिहमादित्यस्तुतिरुपयुज्यते तत्राह॥ ॥ब्रह्मदृष्टीति॥

जगतो नामरूपव्याकरणमादित्यायत्तमिति तदुपपादयति ॥ आदित्येति ॥ तथापि कथमादित्यस्तुतिरित्याशंक्य दृष्टान्तेन दर्शयति ॥ यथेति ॥ किंचोपक्रमोपसंहारैकरूप्येणादित्ये ब्रह्मदृष्टिविधिपरमिदं वाक्यं न तु तस्य कारणत्वेनान्यथा कल्पयितुं शक्यमनन्यथासिद्धकल्पकाभावादित्याह ॥ न चेति ॥ तत्परत्वं कथमवगतमित्याशंक्योपसंहारस्योपक्रमानुसारित्वादित्याह ॥ उपसंहरिष्यतीत्याह ॥ कथं त



दित्यनिमित्तो हि लोके सदिति व्यवहारो यथाऽसदेवेदं राज्ञः कुलं सर्वगुणसंपन्ने पूर्णवर्मणि राजन्यसतीति तद्वन्न च सत्त्वमसत्त्वं वेह जगतः प्रतिपिपादयिषितमादित्यो ब्रह्मेत्यादेशपरत्वात् उपसंहरिष्यत्यन्ते आदित्यं ब्रह्मेत्युपास्त इति तत्सदासीत्तदसच्छब्दवाच्यं प्रागुत्पत्तेः स्तिमितमनिस्पन्दमसदिव सत्कार्याभिमुखमीषदुपजातप्रवृत्ति सदासीत्ततो लब्धपरिस्पन्दं तत्समभवदल्पतरनामरूपव्याकरणेनांकुरीभूतमिव बीजं ॥ ततोऽपि क्रमेण स्थूलीभवदद्भ्यांडं समवर्त्तत संवृत्तमांडमिति

तदांडं निरवर्त्तत तत्संवत्सरस्य मात्रामशयत तन्निरभिद्यत ते आंडकपाले रजतं च सुवर्णं चाभवतां तद्यद्रजतं ॥ सेयं पृथिवी यत्सुवर्णं ॥ सा द्यौर्यज्जरायु ते पर्वता यदुल्बं ॥ स मेघो नीहारो या धमनयस्ता नद्यो यद्वास्तेयमुद कं ॥

दैर्घ्यं छांदसं तदंडं संवत्सरस्य कालस्य प्रसिद्धस्य मात्रां परिमाणमभिन्नस्वरूपमेवाशयत स्थितं बभूव तत्ततः संवत्सरपरिमाणात्कालादूर्ध्वं निरभिद्यत निर्भिन्नं वयसामिवांडं तस्य निर्भिन्नस्यांडस्य कपाले द्वे रजतं च सुवर्णं चाभवतां संवृत्ते तत्तयोः कपालयोर्यद्रजतं कपालमासीत्सेयं पृथिवी पृथिव्युपलक्षितमधोऽण्डकपालमित्यर्थः यत्सुवर्णं कपा

द्वे निर्वृत्तं प्रतिजानीते ॥

स्यासच्छब्दवाच्यत्वं तदाह ॥ स्तिमितमिति ॥ सत्त्वं तर्हि कथमिति तदाह ॥ कार्येति ॥ बीजस्योच्छूनतावत्कारणस्य सिसृक्षावस्थां दर्शयति ॥ ईषदिति ॥ लब्धपरिस्पन्दं प्राप्तपरिणामं सद्भूतसूक्ष्माकारेणाभवदित्यर्थः ॥ सूक्ष्मभूतोत्पत्त्यनन्तरं स्थूलभूतोत्पत्तिमाह ॥ ततोऽपीति ॥ भूतसूक्ष्माकारप्राप्तेरनन्तरं पंचीकरणप्रक्रियया अन्योन्यावयवानुप्रवेशेन स्थूलभूतावस्थमासीदित्यर्थः ॥ स्थूलेभ्यश्च भूतेभ्यो

मेघा इति॥ अप्सु हितेभ्यो भूतेभ्य इत्यर्थः॥ अवश्यायशब्देन हिममुच्यते॥ उलूलव इत्युत्सवकालीनाः शब्दविशेषाः ईशविशेषमसि

सा द्यौरुत्तरं कपालमूर्ध्वं कपालमित्यर्थः॥ यज्जरायु गर्भपरिवेष्टनं स्थूलमंडस्य द्विशकलीभावकाले अभ्रा
सीत्ते पर्वता बभूवुः॥ यदुल्बं सूक्ष्मं गर्भपरिवेष्टनं तत्सह मेघैः समधानीहारो ऽवश्यायो बभूवेत्यर्थः॥ या गर्भस्य
जातस्य देहे धमनयः शिरास्ता नद्यो बभूवुः यत्तस्य वस्तौ भवं वास्तेयमुदकं स समुद्रः॥ अथ यत्तदजायत गर्भरूपं तस्मि
न्नंडे सोऽसावादित्यस्तमादित्यं जायमानं घोषाः शब्दाः उलूलव उरुरवो विस्तीर्णरवाः॥ उदतिष्ठन्नुत्थितवन्तः॥ ईश्व

स समुद्रोऽथ यत्तदजायत सोऽसावादित्यस्तं जायमानं घोषा उलूलवोऽनूदतिष्ठन्सर्वाणि च भूतानि सर्वे च का
मास्तस्मात्तस्योदयं प्रति प्रत्यायनं प्रति घोषा उलूलवोऽनूत्तिष्ठन्ति सर्वाणि च भूतानि सर्वे चैव कामाः॥ स य
एतमेवं विद्वानादित्यं ब्रह्मेत्युपास्तेऽभ्याशो ह यदेन ७ साधवो

रस्येवेह प्रथमपुत्रजन्मनि सर्वाणि च स्थावरजंगमानि भूतानि सर्वे च तेषां भूतानां कामाः काम्यंत इति विषयाः
स्त्रीवस्त्रान्नादयो यस्मादादित्यजन्मनिमित्ता भूतकामोत्पत्तिस्तस्मादद्यत्वेऽपि तस्यादित्यस्योदयं प्रति प्रत्यायनं प्र
त्यस्तगमनं च प्रत्यहं वा पुनः पुनरागमनं प्रत्यायनं तु अस्तमनं तन्निमित्तीकृत्येत्यर्थः॥ सर्वाणि च भूतानि सर्वे च कामा
घोषा उलूलवश्चानूत्तिष्ठंतीति॥ प्रसिद्धं ह्येतदुदयादौ सवितुः॥ स यः कश्चिदेतमेवं यथोक्तमहिमानं विद्वान्सन्नादित्यं

ह्याः॥ स्त्रीवस्त्रान्नादय उदतिष्ठन्निति पूर्वेण संबंधः॥ किमत्र प्रमाणमित्याशंक्याह॥ प्रसिद्धं हीति॥ एनदिति॥ भूतादुत्थानं अदृष्टं फलमित्युक्त्वा

॥ किंचेति॥ तद्विदो दृष्टं फलमिति संबंधः॥ क्रियाविशेषणमिति॥ एवंविदं साधवो घोषा आगच्छेयुरिति यत्क्षिप्रमप्रतिबंधेनैवेत्यर्थः॥ आदित्ये



ब्रह्मेत्युपास्ते स तज्ज्ञावं प्रतिपद्यत इत्यर्थः॥ किंच दृष्टं फलमभ्याशः क्षिप्रं तद्विद्वो यदिति क्रियाविशेषणमेनमेवंविदं सा
धवः शोभना घोषाः साधुत्वं घोषादीनां यदुपभोगे पापानुबंधाभावः॥ आ च गच्छेयुरागच्छेयुश्चोप च निम्रेडेरन्निम्रेडे

घोषा आ च गच्छेयुरुप च निम्रेडेरन्निम्रेडेरन्॥१९॥ इति छांदोग्योपनिषदि तृतीयः प्रपाठकः॥३॥

रन्न केवलमागमनमात्रं घोषाणामुपसुखयेयुश्चोपसुखं चकुर्युरित्यर्थः॥ द्विरभ्यासोऽध्यायपरिसमाप्त्यर्थः आद
रार्थश्च॥ इति श्रीमच्छंकरभगवत्पादकृतौ छांदोग्योपनिषद्विवरणे तृतीयः प्रपाठकः॥३॥



॥ब्रह्मदृष्टिरादरस्यविषयः॥
॥इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानंदपूज्यपादशिष्यभगवदानंदज्ञानकृतायां छांदोग्य भाष्यटीकायां तृतीयः प्रपाठकः

॥ इतिसटीकछांदोग्योपनिषद्भाष्यस्यतृतीयोध्यायःसमाप्तः॥

॥ ७ ॥ अथ सटीकछान्दोग्योपनिषद्भाष्यस्य चतुर्थोऽध्यायः प्रारभ्यते ॥

८८

॥श्रीगणेशाय नमः॥ आदित्यस्य सूत्रावच्छेदभेदत्वात्तदुपासनानन्तरं सूत्रोपासनमुपन्यस्यते॥ नन्वध्यात्ममधिदैवतं च वायुप्राणयोः सू-
त्रात्मभूतयोरुपासनं पूर्वाध्यायेऽपि कृतमस्मात्तत्राच कोऽत्र विशेषो येन तदुपासनं पुनरारभ्यते अत आह॥ वायुप्राणयोरिति॥ साक्षात्पाद-
कल्पनं विनेति॥ यावद्ब्रह्मत्वेन ब्रह्मस्वरूपेणेत्यर्थः॥ विद्येति॥ धर्मार्थौ यत्र न स्यातां शुश्रूषा वापि तद्विधा॥ तत्र विद्या न वक्तव्या शुभं बी-
जमिवोषरे इति स्मृतिमनुसंधाय पुष्कलं धनमादाय रैक्वो राज्ञे विद्यां प्रादात् जानश्रुतिश्च शास्त्रार्थं ज्ञात्वा पुष्कलं धनं ददावेवं श्रद्धादिसंपन्न

वायुप्राणयोर्ब्रह्मणः पाददृष्ट्याध्यासः पुरस्ताद्वर्णितः अथेदानीं तयोः साक्षाद्ब्रह्मत्वेनोपास्यत्वायोत्तरमारभ्यते॥ सुखा-
वबोधार्था आख्यायिका विद्यासंप्रदानग्रहणविधिप्रदर्शनार्था च॥ श्रद्धान्नदानानुद्धतत्वादीनां च विद्याप्राप्तिसाध-
नत्वं प्रदर्श्यते आख्यायिकया जानश्रुतिर्जनश्रुतस्यापत्यं ह इति ऐतिह्यार्थः पुत्रस्य पौत्रः पौत्रायणः स एव श्रद्धादेयः श्र-

ॐ जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य आस स ह सर्वत आवसथान्मा

द्धापुरःसरमेव ब्राह्मणादिभ्यो देयमस्येति श्रद्धादेयो बहुदायी प्रभूतं दातुं शीलमस्येति बहुदायी बहुपाक्यो बहुप-
क्तव्यमहन्यहनि गृहे यस्यासौ बहुपाक्यः भोजनार्थिभ्यो बहु यस्य गृहेऽन्नं पच्यत इत्यर्थः॥ एवंगुणसंपन्नः स जानश्रुतिः पौ-
त्रायणो विशिष्टे देशे काले च कस्मिंश्चिद्बभूव स ह सर्वतः

१ उत्तरेति॥ विद्यामादद्यीत न्यायेनापि विद्यायाः दाना ग्रहीता वास्यादि-
ति तद्दानग्रहणयोर्विधिप्रदर्शनार्था चाख्यायिकेत्यर्थः नन्वषट्शतानि गवामित्यादिदर्शनाद्धनमेव विद्याग्रहणे साधनमिह प्रतीयते
न तु श्रद्धादीन्याशंक्याह॥ श्रद्धेति॥ आदिपदेन तात्पर्यप्रणिपातादयो गृह्यंते॥ आख्यायिकयाऽनुद्धतत्वादिलक्षणयेति यावत्॥
जनश्रुतस्यापत्यं तस्य पौत्रः पौत्रायणः स च प्रकृतो जानश्रुतिरेवेत्याह॥ पुत्रस्येति॥ श्रद्धया देयं यस्येत्यत्र शंकां वारयति॥ बहुदायीति॥
बहुपाकस्य फलमाह॥ भोजनेति॥ उक्तस्य राज्ञो वर्तमानत्वाभावादसत्त्वमाशंक्याह॥ एवमिति॥ स्वसमीपमागतेभ्य एवार्थिभ्यः सर्वमन्नं ददा-

विशिष्टान्नदानफलं दर्शयितुमारभते ॥ तत्रेति ॥ वाक्यार्थं दर्शयति ॥ कथयद् इति ॥ संबोधनाभ्यासस्य विषयमाह ॥ आदरं दर्शयन्निति ॥ तदेवद्दृष्टान्तेन स्पष्टयति ॥ यथेति ॥ भल्लाक्षशब्दार्थमाह ॥ भल्लेति ॥ भल्लाक्षशब्दो मन्दाक्षविषयः सन्निकृष्टलक्षणयामंददृष्टित्वसूचकः ॥ भल्लाक्षशब्दस्य विषयांतरमाह ॥ अथवेति ॥ तस्य पृष्ठगामिनो हंसस्य महात्मानातिक्रमणीयो विजानन्तेति सम्यग्दर्शनाभि

सर्वासु दिक्षु ग्रामेषु नगरेषु चावसथानेत्यवसंतियेष्विन्त्यावसथाः तान्मापयांचक्रे कारितवानित्यर्थः ॥ सर्वत एव मे मम अन्नं तेष्वावसथेषु वसंतो भोक्ष्यंतीत्येवमभिप्रायः ॥ तत्रैवं सति राजनि तस्मिन् घर्मकाले हर्म्यतलस्थे ॥ अथ ह हंसा निशायां रात्रावतिपेतुः ऋषयो देवता वा राज्ञोऽन्नदानगुणैस्तोषिताः संतो हंसरूपा भूत्वा राज्ञो दर्शनगोचरे निपेतुः पतितवन्तः तस्मिन्काले तेषां पततां हंसानामेकः पृष्ठतः पतन्नग्रतः पतंतं हंसमभ्युवादाभ्युक्तवान् ॥ हो होयीति भो भो इति संबोध

पयांचक्रे सर्वत एव मेऽत्स्यंतीत्यथ ह हंसा निशायामतिपेतुस्तद्धैवं हंसो हंसमभ्युवाद हो होऽयि भल्लाक्ष भल्लाक्ष ॥ जानश्रुतेः पौत्रायणस्य समं दिवा ज्योतिराततं तन्मा प्रसांक्षीस्तत्त्वा मा प्रधाक्षीरिति तमु ह परः

भल्लाक्ष भल्लाक्षेत्यादरं दर्शयन्यथा पश्य पश्याश्चर्यमितिवद्भल्लाक्षेति मंददृष्टित्वं सूचयन्नाहाथवा सम्यग्ब्रह्मदर्शनाभिमानवत्त्वात्तस्यासकृदुपालब्धस्तेन पीड्यमानोऽमर्षितयात्तत्सूचयति भल्लाक्षेति ॥ जानश्रुतेः पौत्रायणस्य समं तुल्यं दिवा द्युलोकेन ज्योतिः प्रभास्वरमन्नदानादिजनितप्रभावजमाततं व्याप्तं द्युलोकस्पृगित्यर्थः दिवाह्नावा समं ज्योतिरित्येतत्तन्मा प्रसांक्षीः प्रसंजनं सक्तिं तेन ज्योतिषा संबंधं माकार्षीरित्यर्थः ॥

॥ मानशालित्वात्तेनाग्रगामी हंसो जानश्रुतिमतिचिक्रमिषुरमर्षतया पीड्यमानः सन्नत्वं धर्मं जानासि ज्ञानाभिमानं तु वहसीत्युपालब्धस्तत्र भल्लाक्षेत्युपालंभस्वरूपं सूचयतीत्यर्थः ॥ पृष्ठगामी हंसो निंदापूर्वकमग्रगामिनं हंसं संबोध्य किं सूचितवानित्यपेक्षायामाह ॥ जानश्रुतेरिति ॥ ॥

छां·भा·
२

माप्रधाक्षीरिति पाठे कथं माप्रधाक्षीदित्युच्यते तत्राह ॥ पुरुषव्यत्ययेनेति ॥ मध्यमपुरुषं प्रथमपुरुषं कृत्वा व्याख्यानमित्यर्थः ॥ सं त
मेनं प्राणिमात्रं राजानमधिकृत्य सबहुमानमेतद्वचनमात्थेति कुत्सयन्नीतिसंबंधः नन्वेवं धर्म्ये दृष्टान्तमाह ॥ रैक्वमिवेति ॥ युगं वहतीति
युग्या बलीवर्दा अश्वा वा सन्तीति युग्वा शकटी तया सह वर्तत इति सयुग्वा रैक्वः वकारो मत्वर्थीयः रैक्वाख्यानमाहात्म्ययुक्तमधिकृत्य यथा
प्रशंसावचनं तथा कर्मिणमेव राजानमधिकृत्य कथमेवमात्थेत्यर्थः ॥ उक्तं वाक्यार्थं संकलयति ॥ अननुरूपमिति ॥ अस्मिन्वराके

तत्संजनने न तज्ज्योतिस्त्वां मा प्रधाक्षीर्मा दहत्वित्यर्थः पुरुषव्यत्ययेन मा प्रधाक्षीदिति तमेवमुक्तवन्तं परः पृष्ठत
ोऽग्रगामी प्रत्युवाचारे इति निकृष्टोऽयं राजा वराकस्तं कमु एनं सन्तं केन माहात्म्येन युक्तं सन्तमिति कुत्सयत्येनमेवं सबहुमान
मेतद्वचनमात्थ रैक्वमिव सयुग्वानं सह युग्वया गन्त्र्या वर्तत इति सयुग्वा रैक्वः तमिवात्थैनमननुरूपमस्मिन्नयु

प्रत्युवाच कम्वर एनमेतत्सन्त ँ सयुग्वानमिव रैक्वमात्थेति योऽनु कथ ँ सयुग्वा रैक्व इति यथाकृ
ताऽयविजितायाधरेऽयाः (( कमीदृशं वृत्तं रैक्वमिवेत्यभिप्रायः ॥ इतर आह योऽनु कथं त्वयोच्यते सयुग्वा रैक्वः इ
त्युक्तवन्तं भल्लाक्ष आह शृणु यथासौ रैक्वः यथा लोके कृतायः कृतो नामाऽयो द्यूतसमये प्रसिद्धश्चतुरंकः स यदा जयति
द्यूते प्रवृत्तानां तस्मै विजितायं तदर्थमितरे त्रिद्व्येकांका अधरेयास्त्रेता (( राजनि धर्ममात्रनिष्ठे नेदमनुरूपं वचनं रैक्वे पुनर्वि
ज्ञानवति यथोक्तं वचो युक्तमेवेतीतरः पृष्ठगामी हंसोऽयः सयुग्वा रैक्वस्त्वयोच्यते स कथं नु स्यादित्यन्वयः ॥ स रैक्वो येन प्रकारेणास्या
त्तं प्रकारं शृण्विति प्रतिज्ञाय प्रकारं प्रदिदर्शयिषया दृष्टान्तमाह ॥ यथेति ॥ द्यूतस्य समयः संकेतस्तदनुष्ठानकालोऽयेन द्यूतविषयात
स्यानेगतिमोक्षस्य कश्चिद्भागोऽयशब्दवाच्यस्तस्य चतुरंको भागः चत्वारोऽङ्का श्चिन्हान्यस्मिन्निति निष्पत्तेः स कृतनामव्यवहृतेन यदा द्यू
ते प्रवृत्तानां मध्ये कोपि जयति तदा तस्मै कृतनाम्ने विजितायाधरेयाः संयन्तीति संबंधः ॥ तदर्थं व्याचष्टे ॥ तदर्थमिति ॥ अधरेयान्व्याकरो

अ·
४

राम
२

अयस्य यस्मिन्नङ्गे त्रयोंकाः स त्रेतानामायो भवति ॥ यत्र तु द्वावंकौ स द्वापरनामको यत्रैकांकः स कलिनामद्यूतविभागः ॥ तादर्थ्येन तदंकानामंतर्भावमुक्तं व्यक्तीकरोति ॥ चतुरंक इति ॥ तदंतर्भवंति तस्मिन्कृते त्रेतादयस्तेंतर्भवंतीति यावत् महासंख्यायामवांतरसंख्यान्तर्भावः प्रसिद्ध एवेत्यर्थः ॥ दृष्टान्तमनूद्य दार्ष्टांतिकमाह ॥ यथेति ॥ रैक्वमभिव्याप्य सर्वं समेतीत्यस्यार्थं संक्षिपति ॥ अंतर्भवतीति ॥ रैक्वे सर्वान्तर्भावं प्रश्नपूर्वकं प्रकटयति ॥ किं तदित्यादिना तद्धर्मस्य महत्त्वादन्येषां च धर्मजातस्याल्पत्वात्तस्य तस्मिन्नन्तर्भावः संभवती

द्वापरकलिनामानः संयंति संगच्छंत्यंतर्भवंति ॥ चतुरंके कृताये त्रिद्व्येकांकानां विद्यमानत्वादंतर्भवंतीत्यर्थः ॥ यथायं दृष्टांत एवमेनं रैक्वं कृतायस्थानीयं त्रेताद्यायस्थानीयं सर्वं तदभिसमैति अंतर्भवति रैक्वे ॥ किं तद्यत्किंच लोके सर्वाः प्रजाः साधु शोभनं धर्मजातं कुर्वंति तत्सर्वं रैक्वस्य धर्मेंतर्भवति ॥ तस्य च फले सर्वप्राणिधर्मफलमंतर्भवतीत्यर्थः ॥ त

संयंत्येवमेनꣳ सर्वं तदभिसमैति यत्किंच प्रजाः साधु कुर्वंति ॥ यस्तद्वेद यत्स वेद स मयैतदुक्त इति तदुह

ध्याकश्चिद्यस्तद्वेद्यं वेद किं तद्यद्वेद्यं स रैक्वो वेद तद्वेद्यमन्योपि यो वेद तमपि सर्वप्राणिधर्मजातं त जानश्रुतिः त्फलं च रैक्वमिवाभिसमैतीत्यनुवर्तते ॥ स एवंभूतो रैक्वोपि स मया विद्वानेतदुक्त एवमुक्तो रैक्ववत्स एव कृतायस्थानीयो भवतीत्यभिप्रायः ॥ तदु ह तदेतदीदृशं हंसवाक्यमात्मनः कुत्सारूपमन्यस्य विदुषो रैक्वादेः प्रशंसारूपमुपशुश्राव श्रुतवान्हर्म्यतलस्थो राजा जानश्रुतिः पौत्रायणः तच्च हंसवाक्यं स्मरन्नेव पौनःपुन्येन रात्रिशेषमतिवाहयामास ततः स वन्दिभी राजा स्तुतियुक्ताभिर्वाग्भिः प्रतिबोध्यमान उवाच क्षत्तारं संजिहान इत्यर्थः ॥ किंच सर्वेषां प्राणिनां

धर्मफलमल्पीयस्त्वान्महतो रैक्वस्य धर्मफलेंतर्भवतीत्याह ॥ तस्य चेति ॥ न केवलं रैक्वस्यैतन्माहात्म्यं किंत्वन्यस्यापि ज्ञानवतोस्तीति जानश्रुतेरनुग्रहार्थमाह ॥ तथेति ॥ प्रतिपन्नहंसवचनस्तदनंतरो राजा रात्रिशेषमतिवाह्य शयनं जहदात्मनः समीपस्थं स्तुतिकर्तारं स

वाक्यमुक्तवान् तस्याभिप्रायमाह ॥ स एवेति ॥ कथमिवशब्दो द्वितीये पदेनेनत्राह ॥ नदेति ॥ अवधारणस्यापि नोपयोगोस्तीति चेत्तत्राह ॥



एव शयनं निद्रां वा परित्यजन्नेव वदेऽङ्ग वत्सारे ह सयुग्वानमिव रैक्वमात्थ किं मां स एव स्तुत्यर्हो नाहमित्यभिप्रायः ॥ अथवा सयुग्वानं रैक्वमात्थ गत्वास्मन्नु द्दिरस्मान्तु इवशब्दोऽवधारणार्थोऽनर्थको वा वाच्यः स च क्षत्ता समनु वाचैवे क्तानयनकामो राज्ञोऽभिप्रायज्ञो यो नु कथं सयुग्वा रैक्व इति राज्ञैवं चोक्त आनेतुं चिह्नं ज्ञातुमिच्छन् यो नु कथं सयुग्वा रैक्व इत्यवोचत् तच्च श्रुत्वा स च वचनमवोचत् ॥ तस्य स्मरन्नाह हंसानां तां गाथामेवागत्वान्विष्य रैक्वं नाविदं नयज्ञा

पौत्रायण उपशुश्राव स ह संजिहान एव क्षत्तारमुवाचाङ्गारे ह सयुग्वानमिव रैक्वमात्थेति यो नु कथं सयुग्वा रैक्व इति यथा कृतायविजितायाधरेयाः संयन्त्येवमेनं सर्वं तदभिसमैति यत्किंच प्रजाः साधु कुर्वन्ति यस्तद्वेद यत्स वेद स मयैतदुक्त इति ॥ स ह क्षत्तान्विष्य नाविदमिति प्रत्येयाय तं होवाच यत्रारे ब्राह्मणस्यान्वेषणा तदेनमर्छेति ॥ सोऽधस्ताच्छकटस्य पामानं कषमाणमुपोपविवेश तं हाभ्युवाद त्वं नु भगवः सयुग्वा रैक्व इत्यहं ह्यरा ३ इति ह प्रतिजज्ञे स ह क्षत्ताविदमिति प्रत्येयाय ॥ १ ॥

नाविदमिति प्रत्येयाय प्रत्यागतवान् तं होवाच क्षत्तारमेवं यत्र ब्राह्मणस्य ब्रह्मविदः एकान्तेऽरण्ये नदीपुलिनादौ विविक्ते देशेऽन्वेषणानुमार्गणं भवति ॥ तत्र एनमर्छ गच्छ तत्र मार्गणं कुर्वित्यर्थः इत्युक्तः क्षत्तान्विष्य तं विजने देशेऽधस्ताच्छकटस्य गन्त्र्याः पामानं कषमाणं कण्डूयमानं दृष्ट्वाऽयं नूनं सयुग्वा रैक्व इति समीपे उपोपविवेश विनयेनोपविष्टवान् तं च रैक्वं हाभ्युवाद उक्तवान् त्वमसि हे भगवो भगवन् सयुग्वा रैक्व इत्येवं पृष्टोऽहमस्मि हि अरे इति ह अनादरेणैव प्रतिजज्ञेऽभ्युपगतवान् ॥ स तं विज्ञायाविदं विज्ञा

अनर्थको वेति ॥ प्रश्नवाक्यं व्याचष्टे ॥ राज्ञेति ॥ यो नु कथमित्यादि पूर्ववद्व्याख्येयं ॥ तस्येति कर्मणि षष्ठी ॥ यथाहि गार्हस्थ्यं चिकीर्षेनेतदर्थं

गार्हस्थ्याभिप्रायं धनार्थित्वं चेति शेषः॥१॥ स्तुतिवचने श्रुते सतीति सप्तम्यर्थः॥ धनार्थितां त्वबुद्ध्वेति पूर्वेण संबंधः॥ उहशब्दस्य पूर्ववद्
त्रापि एवकारोऽर्थः॥ अत्रापि विनिग्रहार्थत्वं संभवे किमित्यानर्थक्यमित्याशंक्य तमेवेत्येवकारादेव विनिग्रहसिद्धिरित्याह॥ एवशब्दस्येति॥
गार्हस्थ्यार्थिनस्तव कर्मानुष्ठानार्थमिदं धनं तिष्ठतामिति चेन्नेत्याह॥ नममेति॥ शूद्रशब्देन जानश्रुतेः संबोधनमननुचितमिति चोदयति॥ न

ततत्र गार्हस्थ्यं प्रत्यभिप्रायं बुद्ध्वा धनार्थितां च उह एव जानश्रुतिः पौत्रायणः षट्शतानि गवां निष्कं कण्ठहारं अश्वतरी
रथं अश्वतरीभ्यां युक्तं रथं तदादाय धनं गृहीत्वा प्रतिचक्रमे रैक्वं प्रति गतवान् तं च गत्वाऽभ्युवाद हाभ्युक्तवान्॥ हे रैक्व षट्
शतानि इमानि गवां तुभ्यं मयाऽऽनीतानि अयं च निष्कोऽश्वतरीरथश्चायमेतद्धनमादत्स्व भगवोऽनुशाधि च मे मां यां च दे
वतां त्वमुपास्से तां देवतोपदेशेन मामनुशाधीत्यर्थः॥ तमेवमुक्तवन्तं राजानं प्रत्युवाच परो रैक्वः अह इत्ययं निपातो वि

तदु ह जानश्रुतिः पौत्रायणः षट्शतानि गवां निष्कमश्वतरीरथं तदादाय प्रतिचक्रमे तꣳ हाभ्युवाद रैक्वेमा
नि षट्शतानि गवामयं निष्कोऽयमश्वतरीरथोऽनु म एतां भगवो देवताꣳ शाधि यां देवतामुपास्स इति तमु ह परः प्र

निग्रहार्थीयोऽन्यत्रेह त्वनर्थकः॥ एवशब्दस्य पृथक्प्रयोगाद्धारेत्वा हारेण युक्ता इत्वा गच्छतीति हारेत्वा गो ''त्युवाचाह॥
भिः सह तवैवास्तु तवैव तिष्ठतु न मम पर्याप्तेन कर्मार्थमनेन न प्रयोजनमित्यभिप्रायः हे शूद्र इति ननु राजासौ क्षत्तृसंबंधा
त्स ह क्षत्तारमुवाचेति ह्युक्तं विद्याग्रहणाय च ब्राह्मणसमीपोपगमाच्छूद्रस्य चानधिकारात्कथमिदमननुरूपं रैक्वेणो
च्यते हे शूद्रेति तत्राहुराचार्याः हंसवचः श्रवणाच्छुगेनमाविवेश तेनासौ ''स्त्विति॥ तस्याः शूद्रत्वे हेतुत्वं तरमाह॥ विद्याग्रहणायेति
॥ तस्य श्रुतिद्वारा विद्याधिकारो नास्तीत्यपि शूद्राधिकरणे निर्द्धारितमित्याशयेनाह॥ शूद्रस्य चेति॥ जानश्रुतेः सति क्षत्रियत्वे शूद्रसंबोध
नमयोग्यमित्युपसंहरति॥ कथमिति॥ न जातिशूद्रो जानश्रुतिः किंतु क्षत्रियोऽस्मिन् गौणः शूद्रशब्द इत्येकीयमतोपन्यासेन परिहरति

शुचा हेतुना रैक्वमाद्रवतीति शूद्रः शुचा वा तं रैक्वमाद्रवतीति तेनेति निरुक्तं तत्र शूद्रपदमित्यर्थः ॥ तथापि किमिति शूद्रपदेन रा
जानमृषिः संबोधयतीत्याशंक्याह ॥ ऋषिरिति ॥ इत्याहेत्युक्तमक्षरद्वयसमाख्याविनिःशब्दः ॥ प्रकारांतरेण जानश्रुतेः शूद्रत्वं गौणमुत्पाद
यति ॥ शूद्रवदेति ॥ न च शुश्रूषया तेन शूद्र इति शेषः मुख्यं शूद्रत्वमत्र संबंधेनाावर्तयति ॥ नत्विति ॥ क्षत्रियजानश्रुतौ शूद्रशब्दप्रवृत्तौ

शुचा श्रुत्वा वा रैक्वस्य महिमानं वाद्रवतीति ऋषिरात्मनः परोक्षज्ञतां दर्शयन् शूद्रेत्याहेति शूद्रवद्वा धनेनैनं विद्याग्र
हणायाजगाम न शुश्रूषया न तु जात्यैव शूद्र इति ॥ अपरे पुनराहुरल्पं धनमाहृतमिति रुषैवैनमुक्तवान् शूद्र इति लिंगं च
बह्वाहरणे उपादानं धनस्येति तदु ह ऋषेः मतं ज्ञात्वा पुनर्जानश्रुतिः पौत्रायणो गवां सहस्रमधिकं जायां च ऋषेरभिमतां दुहि
तरमात्मनस्तदादाय प्रतिचक्रमे क्रांतवान् रैक्वेदं गवां सहस्रमयं निष्कोऽयमश्वतरीरथ इयं जाया यार्थममदुहितानीताऽयं च

हारेत्वा शूद्र तवैव सह गोभिरस्त्विति ॥ तदु ह पुनरेव जानश्रुतिः पौत्रायणः सहस्रं गवां निष्कमश्वतरीरथं
दुहितरं तदादाय प्रतिचक्रमे तं हाभ्युवाद रैक्वेदं सहस्रं गवामयं निष्कोऽयमश्वतरीरथ इयं जाया
ऽयं ग्रामो यस्मिन्नास्सेऽन्वेव मा भगवः शाधीति तस्या ह मुखमुपोद्गृह्णन्नुवाचाजहारेमाः ऽऽग्रामो यस्मिन्नास्सेति

शुक्तिः स च त्वदर्थं मया कल्पितस्तदेतत्सर्वमादायानुशाध्येव मां हे भगव इत्युक्तस्तस्या जायार्थमानीताया राज्ञो दु
हितुर्ह एवमुखं द्वारं विद्याया दानतीर्थमुपोद्गृह्णन् जानन्नित्यर्थः ॥ ब्रह्मचारी धनदायी मेधावी श्रोत्रियः प्रियः ॥ विद्य
या वापि विद्यां यः प्राह तीर्थानि षण्मम तानि विद्याया वचनं विद्वायते ऽऽनिमित्तांतरमाह ॥ अपरे पुनरिति ॥ तत्र गमकं दर्शयति ॥
लिंगं चेति ॥ यदृषेर्मतमधिकधनार्थित्वमिति यावत् ॥ अधिकं षट्शतेभ्यः सकाशादिति शेषः विद्यादाने तस्या द्वारत्वं तदातुश्चवरज्ञान
दानतीर्थतां जानन्नुवाचेति संबंधः ॥ धनदातुर्विद्यादानतीर्थत्वे प्रमाणमाह ॥ ब्रह्मचारीति ॥ तस्या द्वारतां विद्यादानेन तदातुस्तीर्थतां च

एवंजानन्निति॥ किमुक्तमित्यपेक्षायामाह॥ आजहारेति॥ तत्रैव धर्म्यं दृष्टांतमाह॥ पूर्ववदिति॥ अल्पधनहरणानिच्छायां कारणापेक्षया
शूद्रेति संबोधनवदित्यर्थः॥ रैक्वेण ग्रामादिकं गृहीत्वा विद्या जानश्रुतये दत्तेत्यस्मान्प्रतिश्रुतिर्ज्ञापयति॥ तेहेत इति॥ महावृषेषु महापु
ण्येषु चिति यावत्॥ २॥ कथं विद्यामुक्तवानित्याशंक्याधिदैवतं तदुक्तिप्रकारं दर्शयति॥ वायुरित्यादिना॥ प्राणो वाव संवर्ग इति वक्ष्यमाणे
नापुनरुक्ततायै वायुं व्याचष्टे वायुर्बाह्य इति॥ संवर्जनादित्यस्य व्याख्या॥ संग्रहणादिति॥ संग्रहणपदं समर्थयते॥ वक्ष्यमाणा इति॥ कि

होवंजानन्नुपोद्गृह्णन्नुवाचोक्तवानाजहार आहृतवान्भवान्यदिमा गावः यच्चान्यद्धनं तत्तिष्ठत्विति वाक्यशेषः॥ शू
द्रेति पूर्वोक्तानुकृतिमात्रं न तु कारणान्तरापेक्षया पूर्ववदनेनैव मुखेन विद्याग्रहणतीर्थेनालापयिष्यथा आलापयसी
ति मां भाषयसीत्यर्थः॥ ते हैते ग्रामा रैक्वपर्णा नाम विख्याता महावृषेषु देशेषु यत्र येषु ग्रामेषूवासोषितवान्रैक्वस्तानसौ
ग्रामानदादस्मै रैक्वाय राजा तस्मै राज्ञे धनं दत्तवते ह किलोवाच विद्यां रैक्वः॥ ४॥ वायुर्वाव संवर्गो वायुर्बाह्यो वावेत्यव

शूद्रानेनैव मुखेनालापयिष्यथा इति ते हैते रैक्वपर्णा नाम महावृषेषु यत्रास्मा उवास तस्मै होवाच॥ ५॥
वायुर्वाव संवर्गो यदा वा अग्निरुद्वायति वायुमेवाप्येति यदा सूर्योऽस्तमेति वायुमेवाप्येति यदा चन्द्रोऽस्तमेति वा
युमेवाप्येति॥ १॥

धारणार्थः संवर्गः संवर्जनात्संग्रहणात्संग्रसनाद्वा संवर्गो वक्ष्यमाणा अग्न्याद्या देवता आत्मभाव
मापादयतीत्यतः संवर्गः संवर्जनाख्यो गुणो ध्येयो वायुवत्कृतायांतर्भावदृष्टांतात्कथं संवर्गत्वं वायोरित्याह यदा यस्मि
न्काले वा अग्निरुद्वायत्युद्वासनं प्राप्नोति उपशाम्यति तदासावग्निर्वायुमेवाप्येति वायुस्वाभाव्यमपिगच्छति॥ तथा य
दा सूर्योऽस्तमेति वायुमेवाप्येति यदा चन्द्रोऽस्तमेति वायुमेवाप्येति॥ १॥ मिति संवर्गत्वं वायोरुपरि दृश्यतेऽनेन तत्र दृष्टांतश्रुतिं प्रमाणय
ति॥ कृतायेति॥ संग्रसनादित्युक्तं पक्षमाकांक्षापूर्वकमुत्पादयति॥ कथमित्यादिना॥ सूर्याचन्द्रमसोर्वायावपिगमनमाक्षिपति॥

नन्विति॥आप्रलयात्तयोरधिकारपदेस्थितत्वांगीकारात्स्वरूपावस्थितत्वंद्रष्टव्यं॥सूर्यादेःस्वरूपावस्थानेपिवायावप्ययःसंभवती
तिसमाधत्ते॥नैषइति॥अस्तमनेपीतिसूर्यादेरदर्शनप्राप्तेर्वाय्वधीनत्वंव्युत्पादयति॥वायुनाहीति॥सूर्यग्रहणंचंद्रमसोप्युपलक्ष
णं॥गौणस्तर्हिवायावप्ययःसूर्यादेरित्याशंक्यपक्षांतरमाह॥अथवेति॥संगतिसमयेहिसंहरतिवेत्यर्थः॥कथंप्राणस्यसंवर्गत्वमित्याशं

ननुकथंसूर्याचंद्रमसोःस्वरूपावस्थितयोर्वायावपिगमनंनैषदोषोस्तमनेऽदर्शनप्राप्तेर्वायुनिमित्तत्वात्॥वायुनाह्य
स्तंनीयतेसूर्यचलनस्यवायुकार्यत्वादथवाप्रलयेसूर्याचंद्रमसोःस्वरूपभ्रंशेतेजोरूपयोर्वायावेवापिगमनंस्या
त्तथायदापउच्छोषमाप्नुवंतितदावायुमेवापियंतिवायुर्हियस्मादेवएतानग्न्यादीन्महाबलान्संवृंक्तेऽतोवा
युःसंवर्गगुणउपास्यइत्यर्थः॥इत्यधिदैवतंदेवतासुसंवर्गदर्शनमुक्तं॥अथानंतरमध्यात्ममात्मनिसंवर्गदर्शनमिदमु

यदापउच्छुष्यंतिवायुमेवापियंतिवायुर्ह्येवैतान्सर्वान्संवृङ्क्तइत्यधिदैवतमथाध्यात्मंप्राणोवाव
संवर्गःसयदास्वपितिप्राणमेववागप्येतिप्राणंचक्षुःप्राणंश्रोत्रंप्राणंमनःप्राणोह्येवैतान्सर्वान्संवृ
ङ्क्तइतितौवाएतौद्वौसंवर्गौवायुरेवदेवेषुप्राणःप्राणेषु॥अथहशौनकंचकापेयमभिप्रतारिणंचकाक्षसेनिं

च्यते॥प्राणोमुख्योवावसंवर्गःसपुरुषोयदायस्मिन्कालेस्वपितिप्राणमेववागप्येतिवायुमिवाग्निःप्राणंचक्षुःप्रा
णंश्रोत्रंप्राणंमनःप्राणोहियस्मादेवैतान्वागादीन्सर्वान्संवृंक्तइतितौवाएतौद्वौसंवर्गौसंवर्जनगुणौवायुरेवदेवेषु
संवर्गःप्राणःप्राणेषुवागादिषुमुख्योथानयोःस्तुत्यर्थमियमाख्यायिकारभ्यतेहेत्यैतिह्यार्थः॥शौनकंचशुनकस्या
पत्यंशौनकंकापेयंकपिगोत्रंअभिप्रतारिणंचनामतःकक्षसेनस्यापत्यंकाक्षसेनिंभोजनायोपविष्टौपरिविष्यमाणौ

क्याह॥पुरुषइति॥तस्मात्संवर्गइत्यध्यात्ममितिशेषः॥वायुप्राणावधिदैवताध्यात्मभेदेनसंवर्गगुणावुक्तावुपसंहरति॥ताविति॥

ब्रह्मविच्छौंडो ब्रह्मविदां मध्ये शूरमात्मानं मन्यमान इति यावत् बुध्वा लिंगविशेषेणेति शेषः ॥ तं जिज्ञासमानो विस्पष्टमेव व्यनक्ति
॥ किमिति ॥ चतुर इति ॥ द्वितीयाबहुवचनदर्शनान्महात्मन इति तादृशं गेवेत्याह ॥ द्वितीयेति ॥ यद्वा महात्मन इत्यस्य पंचम्यादौ चतुर
इत्यस्य च समीचीनप्रयोगदर्शनादिह तथामाभूदिति मत्वाह ॥ महात्मन इति ॥ द्वितीयान्तात् अनाहि जगारेति संबंधः ॥ कशब्दः प्रजा
पति विषयो व्याख्यातः ॥ संप्रति पक्षान्तरमाह ॥ कः स इति ॥ यस्तान् जगार स कः स्यादिति प्रश्नमेके वदन्तीत्यर्थः ॥ अतारं माया मा

ब्रह्मचारी ब्रह्मविच्छौंडो बिभिक्षे भिक्षितवान् ॥ ब्रह्मचारिणो ब्रह्मविन्मानितां बुध्वा तं विजिज्ञासमानौ तस्मा उ ह भि
क्षां न ददतुः —— न ददतुर्वनौ ह ॥ किमयं वक्ष्यतीति स होवाच ब्रह्मचारी महात्मनश्चतुर इति द्वितीयाबहुवचनं देवए
कोऽग्न्यादीन्वायुर्वागादीन्प्राणः कः स प्रजापतिर्जगार ग्रसितवान् ॥ कः सो जगारेति प्रश्नमेके भुवनस्य भवंत्यस्मिन्भूतानि
इति भुवनं भूरादिः सर्वो लोकस्तस्य गोपाः गोपायिता रक्षिता गोप्तेत्यर्थः ॥ तं कं प्रजापतिं कापेय नाभिपश्यन्ति न जानन्ति

परिविष्यमाणौ ब्रह्मचारी बिभिक्षे तस्मा उ ह न ददतुः ॥ स होवाच महात्मनश्चतुरो देव एकः कः स जगार भुव
नस्य गोपास्तं कापेय नाभिपश्यन्ति मर्त्या अभिप्रतारिन्बहुधा वसन्तं यस्मै वा एतदन्नं तस्मा एतन्न दत्तमिति

मर्त्या मरणधर्माणोऽविवेकिनो वा हे अभिप्रतारिन्बहुधाऽध्यात्माधिदैवताधिभूतप्रकारैर्वसन्तं यस्मै वा एतदहन्यहन्य
न्नमदनायाह्रियते संस्क्रियते च तस्मै प्रजापतय एतदन्नं न दत्तमिति इत्थं ब्रह्मचारिणो वचनं शौनकः कापेयः प्रतिमन्वा
नो मनसालोचयन् ब्रह्मचारिणं प्रत्येयाय आजगाम गत्वा चाह यं त्वं मन्यसे नाभिपश्यन्ति मर्त्या इति तं वयं पश्यामः कथमात्मानं स

त्मानं चैकत्वेन पश्यन् ब्रह्मचारी मह्यं भिक्षां यन्न ददतुर्भवन्तौ तत्तस्मै देवायैव न ददतुरित्यद्भुतत्वमेव तयोर्दर्शयन्नाह ॥ यस्मा इति ॥ दर्शनमेव
प्रश्नद्वारा विशदयति ॥ कथमित्यादिना ॥ अधिदैवतमग्न्यादीनां वायुरूपेण जनितेति संबंधः ॥ तस्य जने प्राग्भि कारणत्वाद्दर्शयति ॥

छां॰ भा॰
टी॰

आत्मनीति॥ अग्न्यादीन्प्रलयकाले देवः स्वात्मनि वायुरूपेण ग्रसित्वा पुनः सृष्ट्यवस्थायामुत्पादयितेति योजना॥ अध्यात्मं वागादी
न्पिस्वापावस्थायां स्वात्मनि प्राणरूपेण संहृत्य पुनः प्रबोधावस्थायामुत्पादयिता देवः प्राणरूपेणेत्याह॥ अध्यात्मं चेति॥ देवानाम
ग्न्यादीनां प्रजानां वागादीनां च जनितेत्युक्तं संप्रति व्याख्यान्तरमाह॥ अथवेति॥ अभग्नदंष्ट्रः सर्वैर्महद्भिरपि न काचन ग्लानिर्भवतीत्यर्थः॥
प्रजापतेर्महिम्नोऽतिप्रमाणत्वं प्रकटयति॥ यस्मादिति॥ इति शब्दोऽस्य परस्ताद्यच्छब्दस्य संबंधः तदर्थश्च यस्मादित्युक्तः तस्मात्प्रजापतेर्म
हिमानमतिप्रमाणमाहुरिति पूर्वेण संबंधः वयमित्यादिभागं पदच्छेदपूर्वकमादाय व्याचष्टे वयमित्यादिना॥ क्रियापदेन वयमित्यस्य सं

किंच देवानामग्न्यादीनामात्मनि संहृत्य ग्रसित्वा पुनर्जनिता उत्पादयिता वायुरूपेणाधिदैवतमग्न्यादीनां॥ अध्यात्मं
च प्राणरूपेण वागादीनां प्रजानां च जनिता॥ अथवा आत्मा देवानामग्निवागादीनां जनिता प्रजानां स्थावरजंगमानां
हिरण्यदंष्ट्रोऽमृतदंष्ट्रोऽभग्नदंष्ट्र इति यावद्बभसो भक्षणशीलोऽनसूरिः सूरिर्मेधावी न सूरिरसूरिस्तत्प्रतिषेधोऽन

तदु ह शौनकः कापेयः प्रतिमन्वानः प्रत्येयायात्मा देवानां जनिता प्रजानाᳪ हिरण्यदᳪष्ट्रो बभसोऽनसूरिर्म॰ ॥हान्तमस्य

सूरिः सूरिरेवेत्यर्थः॥ महान्तमतिप्रमाणमप्रमेयमस्य प्रजापतेर्महिमानं विभूतिमाहुः ब्रह्मविदो
यस्मात्स्वयमन्यैरनद्यमानोऽभक्ष्यमाणो यदनन्नमग्निवागादिदेवतारूपमत्ति भक्षयतीति वै इति निरर्थकः॥ वयं हे
ब्रह्मचारिन् आ इदमेवं यथोक्तलक्षणं ब्रह्म वयं आ उपास्महे वयमिति व्यवहितेन संबंधोऽन्ये न वयमिदमुपास्महे ऽन्ये
॥न हि परमेव ब्रह्मोपास्महे ॥

हिमानमाहुरनद्यमानो
यदनन्नमत्ति

बंधमुक्तमुपपादयति॥ वयमिति॥ ब्रह्मचारिन्निदं वयमासमंतादुपास्महे ब्रह्मेत्युक्त्वाकारां
तरेण पदच्छेदपूर्वकं व्याख्यानांतरमाह॥ अन्येनेति॥ शौनकस्याभिप्रतारिणश्च ज्ञानातिशयं दर्शयित्वा पतिश्च ब्रह्मचारी चेत्यादि स्मृ
तिमनुसृत्याह॥ दत्तेति॥ आख्यायिकाद्वारा प्रकृतायां संवर्गविद्यायां आत्मा देवानामित्यादिगुणजातमुपदिश्य गुणांतरमुपदेष्टुमनंतरवा

तेवा इति ॥ तद्याचष्टे ॥ येग्रस्यंत इति ॥ ते एते वागादिभ्यः सकाशादन्ये पंचेति संबंधः अधिदैवतं अग्न्यादीन् वायुसहितान् पंचोक्तान् ते
नैव प्रकारेणाध्यात्ममपि तेभ्यः सकाशादन्ये प्राणसहिता वागादयः पंच संतीत्याह ॥ तथेति ॥ अवांतरसंख्याविनिवेशमुक्त्वा तत्रैव म
हासंख्यानिवेशं दर्शयति ॥ ते सर्वे इति ॥ दश संख्यासंबंधात् ते पांसंख्यायंते कृतनायोपलक्षितं कृतमित्युच्यते ॥ तथा दशसंख्यावत्त
स्य वक्तव्यत्वादि निरूपणं ॥ यदुक्तमग्न्यादयो वागादयश्च दश संतस्तत्कृतं भवंतीति तदुपपादयति ॥ चतुरंकेत्यादिना एकस्तावदायो

भिक्षामित्यवोचत यस्मात्तस्मै उ ह ददुः ते हि भिक्षां ते वै ये ग्रस्यंते अग्न्यादयो यश्च तेषां ग्रसिता वायुः पंचान्ये वागादिभ्य
स्तथान्ये तेभ्यः पंचाध्यात्मं वागादयः प्राणश्च ते सर्वे दश भवंति संख्यया दश संतस्तत्कृतं भवति ॥ चतुरंक एकोऽय एवं
चत्वारस्त्र्यंकाय एवं त्रयो द्व्यंकाय एवं द्वावन्यो वेकाकाय एवमेकोऽन्य इति एवं दश संतस्तत्कृतं भवति यत एवं तस्मा

महिमानमाहुरनद्यमानो यदनन्नमत्तीति वै वयं ब्रह्मचारिन्नेदमुपास्महे दत्तास्मै भिक्षामिति तस्मा उ ह ददुः

सर्वासु दिक्षु दशस्वप्यन्नमग्न्याद्या वागाद्याश्च दशसंख्यासामान्यादन्न ॥ ते वा एते पंचान्ये पंचान्ये दश संतस्तत्कृतं ॥
मेव दश कृतं ॥ द्यूते चतुरंकोऽदश्यते तद्वदग्न्यादयो वागादयश्च ग्रस्यमानाश्चत्वारो भवंति ॥ यथा च द्यूते त्रेता नाम कोऽयश्च त्र्यंको ग्र
स्यते तथाग्न्यादयो वागादयश्च त्रयः कैकन्यूनास्त्रयस्तथा च तत्र द्वापरनामायो द्व्यंको जायते तद्वद्वागादिष्वग्न्यादिषु द्वौ द्वौ वर्जयित्वा द्वौ द्वौ भ
वतः ॥ तथा च तत्र कलिसंज्ञो यो भवत्येकांकोऽय अग्न्यादीनां ग्रसिता वायुर्वागादीनां ग्रसिता प्राणश्चैकस्तेभ्यो ग्रस्यमानेभ्योऽन्य इति एवं
ग्रसितृत्वेन ग्रस्यमानत्वेन च दश संतस्ते पूर्वोक्तं कृतं भवंतीत्यर्थः ॥ द्यूतस्य सर्वोत्तमत्वप्रसिद्ध्या दशसंख्यावतां देवानां कृतत्वसंपाद
नेनात्तृत्वसंपादितं ॥ इदानीं दशसंख्यावत्वेनैव विराट्त्वसंपादनेन तेषामन्नत्वं संपादयति ॥ यत इति ॥ अग्न्यादिषु वागादिषु च मिलिते
षु दशसंख्यावत्त्वेऽपि कथमनेनान्नत्वं तथा च कथं संख्यासामान्येन तेषामन्नसंख्यासामान्यसंपादनमित्याशंक्याह ॥ दशास्विति ॥ ॥

छां·भा·
७

विराट् दशसंख्यावती प्रसिद्धा सा चान्नमिति श्रूयते ॥ तथा च यथोक्तेष्वग्न्यादिषु वागादिषु च समुदितेषु संख्यासामान्याद्विराट्त्वं संपा-
द्यान्नत्वं संपाद्यान्नत्वसंपादनं सुशकमित्याह ॥ अत इति ॥ तेषु कृतत्वेनान्नादत्वं संपादितमुपसंहरति ॥ तत एवेति ॥ द्यूतस्याय चतुष्टय-
विशिष्टत्वेन कृतत्वेन कृतोपलक्षितेन तत्र दशसंख्यायाः सत्त्वात्तत एव संख्यासामान्यादग्न्यादयश्च कृतं भवति ततश्च तेषामन्नत्वमित्युक्त-
मित्यर्थः ॥ संप्रति कृते चाग्न्यादिषु विराट्त्वमन्नत्वमन्नादत्वमिति त्रयमुपसंहरति ॥ सैषेति ॥ विराजो विधेयत्वात्तस्याश्च स्त्रीलिंगतया सैषे-
ति विधेयलिंगभाजनं तत एते प्रकृता देवा विराडित्यवगन्तव्या सा च दशदेवतात्मिका दशसंख्यावती भवत्यन्नमिति देवतानामन्नत्वसिद्धिरन्ना-
दीत्यस्य विराजा संबंधादन्नादिनीति व्याख्यानं ततश्च देवतात्मिका विराट् कृतेनान्नादिनीति तदात्मकानामप्यग्न्यादीनामप्यन्नत्वसिद्धिरित्य

विराड्विराडन्नमिति हि श्रुतिरतोऽन्नमेव दशसंख्यत्वात्तत एव दश कृतं कृतेऽन्तर्भावाच्चतुरङ्कत्वेनेत्यवोचाम सैषा विराड्द-
शसंख्या सत्यन्नं चान्नादिनी च कृतत्वेन कृते हि दशसंख्यान्तर्भूतातोऽन्नमन्नादिनी च सा तथा विद्वान् दशदेवतात्मभूतः

तस्मात्सर्वासु दिक्ष्वन्नमेव दश कृतं सैषा विराडन्नादी तयेदं ७

सन्विराट्त्वेन दशसंख्ययान्नं कृतसंख्यया चान्नादी तयान्नान्नादि ((र्थः ॥ विराट्त्वेनान्नत्वं कृतत्वेनान्नादत्वं चेति संपत्तिद्वयम-
ग्न्यादौ दर्शितमुपसंहरति ॥ कृते हीति ॥ कृतोपलक्षिते द्यूते दशसंख्यान्तर्भूता प्रसिद्धा सा चाग्न्यादौ दर्शिता तया च संख्यासामान्याद्द्यू-
तगतमन्नत्वमग्न्यादिषु संपाद्यते तेनेदं दशकमन्नादीत्युच्यते ॥ विराट् वेदे दशसंख्यावतीत्युक्तं सा चान्नं विराडन्नमित्युक्तत्वात्ततश्च
विराट्संपत्त्या भवति प्रकृतं दशकमन्नमित्यर्थः ॥ सगुणसंवर्गमुक्त्वा तत्फलवक्तु विद्वत्स्वरूपं संगिरते ॥ तथेति ॥ यथाग्न्यादीनां विरा-
ट्त्वेनान्नत्वं कृतत्वेन चान्नादत्वं तथा वायुमग्न्याद्यात्मकं प्राणं च वागाद्यात्मकमेकीकृत्यात्मत्वेन विद्वान् दशदेवतास्वरूपभूतः स-
न् दशसंख्यया विराट्त्वेनान्नं कृतशब्दितयुगं तद्गतदशसंख्यावच्छिन्नतया कृतत्वेनान्नादी भवतीत्यर्थः ॥ फलोक्त्युपयोगित्वेनार्थान्त-

अ·
४

राम
७

कृतोपलक्षितदृतस्य संख्यावच्छिन्नत्वेनावस्थितया न्नत्वे नान्नादित्वेन चावस्थितया सर्वमिदं जगद्दशसु दिक्षु संस्थि
तं दृष्टमुपलब्धं भवति ॥ नहि देवतादशकं हित्वा जगन्नाम किंचिदस्ति तथा च दृष्टदेवतादशकेदृष्टमेव सर्वं जगद्भवेदित्यर्थः ॥ भूमिका
मेवं कृत्वा विद्याफलं दर्शयति ॥ एवंविदइति ॥ वायुप्राणमत्तारमात्मत्वेन पश्यतः कृतसंख्यावच्छिन्नतयावस्थितस्य दशदेवताभूतस्य सर्वं
जगद्दृष्टं भवति ॥ दृष्टदेवतातिरिक्तस्य जगतो भावादित्यर्थः ॥ यो यथोक्तदर्शी प्राणो भूत्वा सर्वत्रान्नादश्च भवतीति फलान्तरं ॥ अपूर्वेण संबंध

न्येदं सर्वं जगद्दशदिक्संस्थं दृष्टं कृतसंख्याभूतस्योपलब्धम् एवंविदोस्य सर्वं कृतसंख्याभूतस्य दशदिक्संबद्धं दृष्टमुपलब्धं
भवति किंचान्नादश्च भवति य एवं यथोक्तदर्शी हिरभ्यास उपासनासमाप्त्यर्थः ॥ ३ ॥ सर्वं वा गायत्र्यादि चान्नान्नादत्वसं
स्तुतं जगदेकीकृत्य षोडशधा प्रविभज्य तस्मिन्ब्रह्मदृष्टिर्विधातव्येत्यारभ्यते ॥ श्रद्धातपसोर्ब्रह्मोपासनांगत्वप्रदर्शनाय

सर्वं दृष्टं ५ सर्वमस्येदं दृष्टं भवत्यन्नादो भवति य एवं वेद य एवं वेद ॥ ३ ॥ सत्यकामो ह जाबालो जबालां मात ''रमा

ख्यायिका सत्यकामो ह नामतो ह शब्द ऐतिह्यार्थः ॥ जबालाया अपत्यं जाबालो जबालां स्वां मातरं आमंत्रयां
चक्रे आमंत्रितवान् ॥ ब्रह्मचर्यं स्वाध्यायग्रहणाय हे भवति विवत्स्याम्याचार्यकुले किंगोत्रोहं किमस्य मम गोत्रं सोहं किं
गोत्रो न्वहमस्मीत्येवं पृष्टा जबाला सा हैनं पुत्रमुवाच नाहमेतत्तव गोत्रं वेद हे तात यद्गोत्रस्त्वमसि कस्मात्तन्न वेत्सीत्युक्ता आ''ह ॥ बह्वहं चरं

दर्शयन्नुत्तरस्य तात्पर्यमाह ॥ सर्वमिति ॥ एकीकृत्य कारणरूपेणैकत्वमादायेत्यर्थः ॥ तर्हि तस्मिन्ब्रह्मदृष्टिरे
व विधीयतां किमित्याख्यायिका प्रणीयते तत्राह ॥ श्रद्धातपसोरिति ॥ ब्रह्मचर्यवासस्यादृष्टफलं दर्शयति ॥ स्वाध्यायेति ॥ आचार्यो
हि माणवकमुपनयन् विज्ञातकुलगोत्रमेव तमन्वानः पृच्छति किंगोत्रोहमिति ॥ अतिथ्यभ्यागताद्यधिकृत्य परिचर्यजातं बहु चरं
ती भर्तृगेहे यतोहं स्थिता तेन परिचरन्ती सती परिचारणचित्ततया गोत्रादिनाम्पृष्टं तथा च तत्स्मरणे मनो मम नासीदिति ॥ १ ॥ १ ॥

गोत्रादिप्रश्नाभावे हेत्वंतरमाह ॥ यौवनेति ॥ यद्यपि तस्यामवस्थायां लज्जया गोत्रादि नाप्राक्षीस्तथापि कालांतरे किमिति पितरं न पृष्टवती
त्याशंक्याह ॥ तदैवेति ॥ तथापि किमित्यन्यमभिज्ञं नाप्राक्षीरित्याशंक्याह ॥ अत इति ॥ प्रथमं लज्जया पितरं प्रति न प्रश्नः पुनश्च तस्योपरत
त्वात्पश्चात्तु दुःखबाहुल्यादन्यं प्रति प्रश्न इति स्थिते प्रश्नाभावफलमाह ॥ साहमिति ॥ किं तर्हि तव ज्ञानमस्तीत्यत आह ॥ जबालेति ॥ एवं

भ्यागतादि चरंत्यहं परिचारिणी परिचरंतीति परिचरणचित्ततया गोत्रादिस्मरणे मम मनो नाभूत् ॥ यौवने च तत्का
ले त्वामलभे लब्धवत्यस्मि तदैव ते पितोपरतोऽतः नाथा साहमेतन्न वेद यद्गोत्रस्त्वमसि जबाला तु नामाहमस्मि सत्यका
मो नाम त्वमसि स त्वं सत्यकाम एवाहं जाबालोऽस्मीत्याचार्याय ब्रुवीथा यदाचार्येण पृष्ट इत्यभिप्रायः ॥ स ह सत्यकामो हा

मंत्रयांचक्रे ब्रह्मचर्यं भवति विवत्स्यामि किंगोत्रो न्वहमस्मीति सा हैनमुवाच नाहमेतद्वेद तात यद्गोत्रस्त्वमसि
बह्वहं चरंती परिचारिणी यौवने त्वामलभे साहमेतन्न वेद यद्गोत्रस्त्वमसि जबाला तु नामाहमस्मि सत्यकामो
नाम त्वमसि स सत्यकाम एव जाबालो ब्रुवीथा इति स ह हारिद्रुमतं गौतममेत्योवाच ब्रह्मचर्यं भगवति वत्स्याम्युपे
यां भगवंतमिति तं होवाच किंगोत्रो नु सोम्यासीति स होवाच नाहमेतद्वेद भो यद्गोत्रोऽहमस्म्यपृच्छं मातरं सा
मा प्रत्यब्रवीद्बह्वहं चरंती परिचारिणी यौवने त्वामलभे साहमेतन्न वेद यद्गोत्रस्त्वमसि जबाला तु नामाहमस्मि

रिद्रुमतं हरिद्रुमतोऽपत्यं हारिद्रुमतं गौतमं गोत्रत एत्य गत्वोवाच ब्रह्मचर्यं भगवति पूजावति त्वयि वत्स्याम्यत उपेया
मुपगच्छेयं शिष्यतया भगवंतमित्युक्तवंतं तं होवाच गौतमः किंगोत्रो नु सोम्यासीति

(( स्थिते किमाचार्यं प्रति मया वक्तव्यमित्या
शंक्याह ॥ सत्यमिति ॥ नापृष्टः कस्यचिद्ब्रूयादिति न्यायं सूचयति ॥ यदीति ॥ मातृवचनश्रवणानंतरं किं कृतवानित्यपेक्षायामाह ॥ स हे
ति ॥ आचार्यसमीपे ब्रह्मचर्यवासः शिष्यभावादृते न सिध्यतीत्यभिमन्वानो यतः ॥ अत इति ॥ किमनया काकदंतपरीक्षया भवतोऽन्वह

सत्यकामं श्रद्धादिसंपन्नमेनमथ तस्यामवस्थायामृषभोऽनुग्रहायाऽभ्युवादेति संबंधः॥ ऋषभस्य स्वरूपमाह॥ वायुदेवतेति॥ अरण्ये तत्र तत्र गाश्चारयतः श्रद्धापूर्वकं तपश्चरतो वायुदेवता कथं तुष्टेत्याशंक्याह॥ दिक्संबंधिनीति॥ वाक्यांतरं च मदीयं श्रूयतामित्याह॥ किंचेति॥ वायुदेवता दिक्संबंधिनीत्युक्तत्वाद्दिग्गोचरमेव दर्शनमुवाचेत्याह॥ प्राचीति॥ ब्रह्मणः पादस्येति॥ अधिकरणे षष्ठ्यो एकपादेव

वायुदेवता दिक्संबंधिनी तुष्टा सत्यृषभमनुप्रविश्यर्षभापन्नानुग्रहायायं हेनमृषभोऽभ्युवाद॥ अभ्युक्तवान् सत्यकामा३ इति संबोध्य तमसौ सत्यकामो भगव इति ह प्रतिशुश्राव प्रतिवचनं ददौ प्राप्ताः सोम्य सहस्रं स्मः पूर्णा तव प्रतिज्ञाऽतः प्रापय नोऽस्मानाचार्यकुलं किंचाहं ब्रह्मणः परस्य ते तुभ्यं पादं ब्रवाणि कथयानीत्युक्तः प्रत्युवाच॥ ब्रवीतु कथयतु मे भगवानित्युक्त ऋषभः सत्यकामाय होवाच प्राचीदिक्कला ब्रह्मणः पादस्य चतुर्थो भागः तथा प्रतीचीदिक्कलात

सोम्य सहस्रꣳ स्मः प्रापय न आचार्यकुलं ब्रह्मणश्च ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै होवाच॥ प्राचीदिक्कला प्रतीचीदिक्कला दक्षिणा दिक्कलोदीची दिक्कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणः प्रकाशवान्नाम॥ स य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते प्रकाशवानस्मिँल्लोके भवति प्रकाशवतो ह

था दक्षिणा दिक्कलोदीची दिक्कलैष वै सोम्य ब्रह्मणः पादश्चतुष्कलश्चतस्रः कला अवयवा यस्य सोऽयं च ॥लोकान् तुष्कलः पादो ब्रह्मणः प्रकाशवान्नाम प्रकाशवानित्येवं नामाभिधानं यस्य तथोत्तरेऽपि पादास्त्रयश्चतुष्कला ब्रह्मणः स यः कश्चिदेवं यथोक्तमेनं ब्रह्मणश्चतुष्कलं पादं विद्वान्प्रकाशवानित्यनेन गुणेन विशिष्टमुपास्ते॥ तस्येदं फलं प्रकाशवानस्मिँल्लोके भवति प्रख्यातो भवतीत्यर्थः॥ तथाऽदृष्टं फलं प्रकाशवतो ह लोकान्देवादिसंबंधिनो मृतः सन् जयति प्रा

प्नोतीति विभ्रमं व्युदस्यति॥ तथेति॥ प्रथमपादोपासकस्य दृष्टमदृष्टं च फलं आह॥ स य इत्यादिना कस्येदं फलमित्युक्ते पूर्वोक्तमेवोपा

॥विज्ञातेति॥ मातरं पृष्ट्वा विज्ञायागम्यतामित्याशंक्याह॥ तं होवाचेत्यादिना ब्राह्मणस्यवा अनृतं विना कथमार्जवसंयुक्तं वचनमित्याशंक्याह॥
॥ऋजवो हीति॥ क्षत्रियादीनामपि केषांचिदार्जवमस्तीत्याशंक्याह॥ नेतरद्विति॥ ऋजुवचनत्वेन ब्राह्मणत्वं प्रतिजानीते॥ यस्मादिति॥

विज्ञातकुलगोत्रः शिष्य उपनेतव्य इति पृष्टः प्रत्याह सत्यकामः स होवाच नाहमेतद्वेद भो यद्गोत्रोऽहमस्मि किं तु पृष्ट-
वानस्मि मातरं सा मया पृष्टा मां प्रत्यब्रवीन्माता बह्वहं चरन्तीत्यादि पूर्ववत्तस्या अहं वचः स्मरामि सोऽहं सत्यकामो जाबा-
लोऽस्मि भो इति तं होवाच गौतमो नैतद्वचोऽब्राह्मणो विशेषेण वक्तुमर्हत्यार्जवार्थसंयुक्तमृजवो हि ब्राह्मणा नेतरे स्वभाव-
तो यस्मान्न सत्याद्ब्राह्मणजातिधर्माद् अगाः नापेतवानस्यतो ब्राह्मणं त्वामुपनेष्येऽतः संस्कारार्थं होमाय समिधं सोम्याहर

सत्यकामो नाम त्वमसीति सोऽहं सत्यकामो जाबालोऽस्मि भो इति तं होवाच नैतदब्राह्मणो विवक्तुमर्हति स-
मिधं सोम्याहरोप त्वा नेष्ये न सत्यादगा इति तमुपनीय कृशानामबलानां चतुःशता गा निराकृत्योवाचेमाः सो-
म्यानुसंव्रजेति ता अभिप्रस्थापयन्नुवाच नासहस्रेणावर्तेयेति स ह वर्षगणं प्रोवास ता यदा सहस्रं संपेदुः॥
५॥ अथ हैनमृषभोऽभ्युवाद सत्यकाम३ इति भगव इति ह प्रतिशुश्राव प्राप्ताः ॥ इत्युक्त्वा तमुपनीय कृशानामब-
लानां गोयूथान्निराकृत्यापकृष्य चतुःशता चत्वारि शतानि गवामुवाचेमाः गाः इमाः सोम्यानुसंव्रज अनुगच्छेत्युक्तः ता अ-
रण्यं प्रत्यभिप्रस्थापयन्नुवाच नासहस्रेणापूर्णेन सहस्रेण नावर्तेय पुनर्न प्रत्यागच्छेयमिति स एवमुक्त्वा गा अरण्यं तृणोदकबहुलं
द्वन्द्वरहितं प्रवेश्य स ह वर्षगणं दीर्घं प्रोवास प्रोषितवान्॥ ताः सम्यग्गावो रक्षिता यदा यस्मिन्काले सहस्रं संपेदुः संपन्ना बभूवुः॥ ४

उपनीय प्रस्थापयन्नेति शेषः तस्यानुग्रहार्थं शुश्रूषामादिष्टवानित्याह॥ कृशानामिति॥ आचार्येण नियोगस्य शिष्येण सफलीकर्तव्यत्वमित्याशये-
नाह॥ इत्युक्त इति॥ संपन्ना बभूवुस्तदा एनमृषभोऽभ्युक्तवानिति संबन्धः॥ ४॥ कथमृषभः सत्यकामं प्रति वक्तुमलं न हि लोके बलीवर्दः स मनुष्य-

॥ टी॥ अथ त्रिशं पादत्रयं कथं श्रूयमिति शुश्रूषमाणं सत्यकामं प्रत्याह॥ सोऽग्निरिति॥ अविदुषो विद्याभिमाननिमित्तकर्मत्यागो न युक्त
इति मत्वाह॥ सत्यकाम इति॥ अभिसायं बभूवुः॥ सायंकाले प्राप्ता इति यावत्॥ तस्य ब्रह्मचर्यमव्याहतमिति सूचयति॥ तत्रेति॥ उपा

चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते॥ ५॥ सोऽग्निष्टे पादं वक्तेत्युपरराम ऋषभः सत्यकामो ह श्वोभूते परे
द्युर्नैत्यकं नित्यकर्म कृत्वा गा अभिप्रस्थापयांचकाराचार्यकुलं प्रति ताः शनैश्चरन्त्य आचार्यकुलाभिमुख्यः प्रस्थि
ता यत्र यस्मिन्काले देशेऽभिसायं निशायामभिसंबभूवुः एकत्राभिमुख्यः संभूतास्तत्राग्निमुपसमाधाय गा उपरुध्य स
मिधमाधाय पश्चादग्नेः प्राङुपोपविवेश॥ ऋषभवचो ध्यायंस्तमग्निरभ्युवाद सत्यकाम इति संबोध्य तमसौ सत्य

जयति य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते॥ ५॥ अग्निष्टे पादं वक्तेति स ह श्वोभूते
गा अभिप्रस्थापयांचकार ता यत्राभिसायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय प
श्चादग्नेः प्राङुपोपविवेश तमग्निरभ्युवाद सत्यकाम३ इति भगव इति ह प्रतिशुश्राव ब्रह्मणः सोम्य ते पादं
ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै होवाच पृथिवी कलान्तरिक्षं कला द्यौः कला समुद्रः कलैष वै सोम्य
चतुष्कलः पादो ब्रह्मणोऽनन्तवान्नाम स य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मणोऽनन्तवानित्युपास्ते नन्त

कामो भगव इति ह प्रतिशुश्राव प्रतिवचनं ददौ ब्रह्मणः सोम्य ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै होवाच पृथि
वी कलान्तरिक्षं कला द्यौः कला समुद्रः कलेत्यात्मगोचरमेव दर्शनमग्निरब्रवीत्॥ एष वै सोम्य चतुष्कलः पादो ब्रह्मणोऽनं

पविवेशेत्यत्रोपशब्दाभ्यां गवामग्नेश्च सामीप्यं निवेशनमस्योच्यते॥ अर्थिने विद्या वक्तव्येति सूचयति॥ ऋषभेति॥ आत्मगोचरमग्नेश्चास्य
विद्यमानं दृश्यमित्यर्थः॥ यथा पृथिव्यादिरूपेणाग्नेरवस्थानादग्निविषयमित्यर्थः यथोक्तपादे गुणविशेषं निर्दिशति॥ एष वा इति॥ द्वितीयपादोप

॥ यथोक्तं चतुष्कलमिति ॥ यावत्तथैवोपास्यगुणानुरोधेनेत्यर्थः ॥ तद्गुणस्तेन गुणेनानन्तवान विच्छिन्नसंतानो भवतीत्यर्थः ॥ अनन्तवतो
लोकानक्षय्यानित्यर्थः ॥ ६ ॥ अवशिष्टपादद्वयकथनं तत्त्वमिति जिज्ञासमानं प्रत्याह ॥ सोऽग्निरिति ॥ पक्षिविशेषत्वं हंसशब्दस्य व्यावर्तयति ॥
आदित्य इति ॥ कथमत्र हंसशब्दस्य प्रवृत्तिरित्याशङ्क्याह ॥ शौक्ल्यादिति ॥ आदित्योऽपि स्वविषयमेव दर्शनमुक्तवानित्याह ॥ अग्निरिति ॥ त

कश्चिद्यथोक्तं पादमनन्तत्वेन गुणेनोपास्ते स तथैव तद्गुणो भवत्यस्मिंल्लोके मृतश्चानन्तवतो ह लोकान्स जयति य एतमे
वमित्यादि पूर्ववत् ॥ ६ ॥ सोऽग्निर्हंसस्ते पादं वक्तेत्युक्त्वोपरराम हंस आदित्यः शौक्ल्यात्पतनसामान्याच्च स हंसो भूत्वा

भवत्यनन्तवतो ह लोकाञ्जयति य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मणोऽनन्तवानित्युपास्ते ॥ ६ ॥ हंसस्ते
पादं वक्तेति स ह श्वोभूते गा अभिप्रस्थापयांचकार ता यत्राभि सायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य
समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश ॥ तं हंस उपनिपत्याभ्युवाद सत्यकाम३ इति भगव इति ह प्रति
शुश्राव ब्रह्मणः सोम्य ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै होवाचाग्निः कला सूर्यः कला चन्द्रः कला विद्यु
त्कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणो ज्योतिष्मान्नाम ॥ स य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मणो ज्योतिष्मा
नित्युपास्ते ज्योतिष्मानस्मिंल्लोके भवति ज्योतिष्मतो ह लोकाञ्जयति य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मणो ॥

दि समानमग्निः कला सूर्यः कला चन्द्रः कला विद्युत्कला एष वै सोम्येति ज्योतिर्विषयमेव च ʻʻज्योतिष्मानित्युपास्ते
दर्शनं प्रोवाचातो हंसस्यादित्यत्वं प्रतीयते ॥ विद्वत्फलं ज्योतिष्मान्दीप्तियुक्तोऽस्मिंल्लोके भवति चन्द्रादित्यानां ज्योतिष्म
न्त एव मृत्वा लोकाञ्जयति समानमुत्तरं ॥ ७ ॥    ॥    ॥    ʻʻतीयपादेऽपि गुणविशेषमुपदिशति ॥ एष वा इति ॥ यतो
हंसो ज्योतिर्विषयमेव दर्शनमुक्तवानत एव तस्यादित्यत्वं प्रतिभातीत्यादित्यत्वे हंसस्य गमकान्तरमाह ॥ ज्योतिर्विषयमेवेति ॥ ७ ॥ ७ ॥

य एतमेवं विद्वानित्याद्युत्तरमवशिष्टं पादान्तरं तर्हि कथं ज्ञायतामित्याशंक्याह॥ हंसोपीति॥ मद्गुशब्दस्य वाच्यमर्थमन्वाचष्टे॥ मद्गुरिति॥ तस्य
कथं सत्यकामं प्रत्युपदेष्टृत्वमत आह॥ स चेति॥ तं मद्गुरुपनिपत्येत्यत्र मद्गुशब्दार्थं पूर्वोक्तमेव स्मारयति॥ मद्गुः प्राण इति॥ प्राणः कलेत्यादि स
आयतनवानित्येवमिति यथोक्तगुणं समर्थयते॥ आयतनमित्यादिना॥ तद्यस्मिन्पादे वर्तते सोयमायतनवान्नाम पाद इति द्रष्टव्यमिति योज॰

हंसोपि मद्गुष्टे पादं वक्तेत्युपरराम मद्गुरुदकचरः पक्षी स चाप्संबंधात्प्राणः स ह श्वोभूत इत्यादि पूर्ववत् स च मद्गुः प्राणः स्व
विषयमेव दर्शनमुवाच प्राणः कलेत्याद्यायतनवानित्येवं नामायतनं नाम मनः सर्वकरणोपहृतानां भोगानां तद्यस्मिन्पादे
विद्यत इति आयतनवान्नाम पादः तं पादं तथैवोपास्ते यः स आयतनवानाश्रयवानस्मिन्लोके भवति॥ तथायतनवत एव सा

मद्गुष्टे पादं वक्तेति स ह श्वोभूते गा अभिप्रस्थापयांचकार ता यत्राभिसायं बभूवुस्तत्राग्निमुपसमाधाय गा उप
रुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश तं मद्गुरुपनिपत्याभ्युवाद सत्यकामा३ इति भगव इति ह प्रतिशु
श्राव ब्रह्मणः सोम्य ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै होवाच प्राणः कला चक्षुः कला श्रोत्रं कला मनः क
लैष वै सोम्य चतुष्कलः पादो ब्रह्मण आयतनवान्नाम स य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मण आयतनवानि
त्युपास्त आयतनवानस्मिँल्लोके भवत्यायतनवतो ह लोकाञ्जयति य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मण आ

वकाशान्लोकान्मृतो जयति य एतमेवमित्यादि पूर्ववत्॥ ८॥ स एवं ब्रह्मवित्सन्प्राप ह प्राप्तवानाचार्यकुलं ((आयतनवा
तमाचार्योभ्युवाद सत्यकामा३ इति भगव इति ह प्रतिशुश्राव ब्रह्मविदिव वै सोम्य भासि प्रसन्नेन्द्रियः प्रहसितवदनश्च नि-

नादिविधं विद्याफलमभिधत्ते॥ तं पादमिति॥ तथैवायतनत्वगुणाक्रान्तत्वेनैवेत्यर्थः॥ ८॥ ((श्चिन्तः कृतार्थो ब्रह्मविद्भवत्येत
९० ब्रह्मविदिव भासीत्युक्ते कीदृशो ब्रह्मविदित्यपेक्षायामाह॥ प्रसन्नेन्द्रिय इति॥ सत्यकामस्यापि तल्लक्षणवत्त्वमतः शब्दार्थः॥ ९॥

मां त्वदाचार्यमवज्ञाय मच्छिष्यं त्वां कोऽन्यो मनुष्यो मच्छापाद्भीतः शिष्यत्वेनादायानुशासनं कृतवान् यदनुशासनात्ते ब्रह्मविद्याजा
तेति साक्षेपं पप्रच्छेति ॥ कस्त्वामिति ॥ मनुष्येभ्यः सकाशादन्ये मामनुशिष्टवन्त इति सामान्यप्रतिज्ञां विभजते ॥ देवता इति ॥ देवतानामे
वोपदेष्टृत्वं व्यतिरेकद्वारा विशदयति ॥ कोऽन्य इति ॥ प्रतिज्ञां निगमयति ॥ अत इति ॥ मया तर्हीदानीं न किंचिदस्ति तव कर्तव्यमित्याश

आहाचार्यो ब्रह्मविदिव भासीति को न्विति वितर्कयन्नुवाच कस्त्वा मनुशशासेति स चाह सत्यकामोऽन्ये मनुष्येभ्यः ॥ देव
ता मामनुशिष्टवन्त्यः कोऽन्यो भवच्छिष्यं मां मनुष्यः सन्ननुशासितुमर्हतीत्यभिप्रायः ॥ अतोऽन्ये मनुष्येभ्य इति ह प्रति
जज्ञे प्रतिज्ञातवान् भगवांस्त्वेव मे कामे ममेच्छायां ब्रूयात् किमन्यैः कृतेन नाहं तद्गणयामीत्यभिप्रायः किंच श्रुतं हि यस्मान्मम

वाच सत्यकामा ३ इति भगवन्निति ह प्रतिशुश्राव ब्रह्मविदिव वै सोम्य भासि को नु त्वानुशशासेत्यन्ये मनुष्येभ्य
इति ह प्रतिजज्ञे भगवांꣳस्त्वेव मे कामे ब्रूयाच्छ्रुतꣳ ह्येव मे भगवद्दृशेभ्य आचार्याद्धैव विद्या विदिता साधिष्ठं
((प्रापदिति तस्मै हैतदेवोवाचात्र ह न किंचन वीयायेति वीयायेति ॥ ९ ॥

विद्यत एवास्मिन्नर्थे भगवद्दृशेभ्यो भगवत्समेभ्य ऋ
षिभ्य आचार्याद्धैव विद्या विदिता साधिष्ठं साधुतमत्वं प्रापदिति प्राप्नोतीत्यतो भगवानेव ब्रूयादित्युक्त आचार्योऽब्रवीत्त
स्मै तामेव दैवतैरुक्तां विद्याम् अत्र ह न किंचन षोडशकलविद्यायाः किंचिदेकदेशमात्रमपि न वीयाय न विगतमित्यर्थः ॥ द्वि

((भ्यासो विद्या
कां वारयति ॥ भगवानिति ॥ इतश्च भगवानेव ब्रवीतु मे विद्यामित्याह किंचेति ॥ तदेव कारणं दर्शयति ॥ श्रुतमिति ॥ अस्मि
न्नर्थे आचार्याद्धैव विद्या श्रोतव्येत्येवंलक्षणं श्रुतमेव विशदयति ॥ आचार्यादिति ॥ विदिता प्राप्तेति यावत् ॥ आचार्याधीना चेदेव फलव
तीत्यतः शब्दार्थः ॥ विद्या न स्माचार्येणोक्तमिति शङ्कामेवकारेण वारयति ॥ देवैराचार्येण च सत्यकामायोक्तां विद्यामस्मान्प्रति स्मृतिज्ञा
पयति ॥ अत्रेति ॥ न विगतं किंतु पूर्णैव विद्या वाय्वादिभिराचार्येण चोपदिष्टेति शेषः तत्रापि षोडशचतुष्पात्त्वध्यानं समुच्चितमेकमेव वि

परिशेषयमेकैकपादोपासनस्य कृतार्थत्वाद्धेतुत्वादित्याचार्योपदेशस्यैव सार्थकत्वमिति द्रष्टव्यम् ॥ ९ ॥ समस्तपंचब्रह्मोपासनमुक्त्वा का
र्यब्रह्मोपासनसमुच्चितं कारणब्रह्मोपासनं वक्तुं खंडान्तरमवतारयति ॥ पुनरिति ॥ न केवलं ब्रह्मविद्याशेषत्वादित्यर्थः ॥ पूर्ववदिति ॥ यथा
पूर्वस्मिन् खंडे श्रद्धातपसोर्ब्रह्मोपासनांगत्वप्रदर्शनायाख्यायिकान्युक्ता तद्वदित्यर्थः ॥ तस्य हेति ॥ भगवदुपासितां शुश्रूषां विदधानो ब्रह्म

पुनर्ब्रह्मविद्यां प्रकारान्तरेण वक्ष्यामीत्यारभते गतिं च तद्विदोऽग्निविद्यां च आख्यायिका पूर्ववच्छ्रद्धातपसोर्ब्रह्मविद्या
साधनत्वप्रदर्शनार्था उपकोसलो ह वै नामतः कमलस्यापत्यं कामलायनः सत्यकामे जाबाले ब्रह्मचर्यमुवास तस्य हेति
ह्यर्थः ॥ तस्याचार्यस्य द्वादश वर्षाण्यग्नीन् परिचचार अग्नीनां परिचरणं कृतवान् स ह स्माचार्योऽन्यान्ब्रह्मचारिणः स्वाध्यायं

उपकोसलो ह वै कामलायनः सत्यकामे जाबाले ब्रह्मचर्यमुवास तस्य ह द्वादश वर्षाण्यग्नीन्परिचचार स ह
स्मान्यानन्तेवासिनः समावर्तयꣳस्तꣳ ह स्मैव न समावर्तयति ॥ १ ॥ तं जायोवाच तप्तो ब्रह्मचारी कुशलमग्नीन्प
रिचचारीन्मा त्वाग्नयः परिप्रवोचन्प्रब्रूह्यस्मा इति तस्मै हाप्रोच्यैव प्रवासांचक्रे स ह व्याधिनानशितुं दध्रे तं ह
माचार्यजायोवाच ब्रह्मचारिन्नशान किं नु नाश्नासीति [illegible]

ग्राहयित्वा समावर्तयंस्तमेवोपकोसलमेकं न समा
वर्तयति स्म ह तमाचार्यजायोवाच तप्तो ब्रह्मचारी कुशलं सम्यगग्नीन्परिचचारीत् परिचरितवान् भगवांश्चाग्निषु भक्तं
न समावर्तयत्येतस्मद्भक्तं न समावर्तयतीति ज्ञात्वा त्वामग्नयो मा परिप्रवोचन् गर्हां तव माकुर्युरतः प्रब्रूह्यस्मै विद्यामि
च्छामुपकोसलायेति ॥ तस्मा एवं ॥ [illegible] कृतवानित्यर्थः ॥ विवक्षितशुश्रूषाकरणमेव विशदयति ॥ कुशलमिति ॥ किमि

ति ॥ भवत्या मां ब्रूहीदमिदानीमुच्यते तन्निमित्तोऽस्य चान्वदनुरागो युक्तिमानित्याशंक्य भगवतेति स्नेहादित्याह ॥ भगवानिति ॥ अग्नीन्परि
चरमाणब्रह्मचारिणोऽसमावर्तनमतः शब्दार्थः गर्हापरिहारो द्वितीयेनातः शब्देन परामृश्यते ॥ आचार्यशुश्रूषापरं शिष्यं रक्षेतवानु

आचार्योऽभिप्रायमजानतः शिष्यस्य दुःखप्राप्तिं दर्शयति ॥ स हेति ॥ अतिगमनं वस्तुस्वरूपमतीत्य विषयेषु प्रवेश इति यावत् ॥ नानात्यया इति
कामानां विशेषणं ॥ कथं तेन व्याधयो विशेष्यन्ते तत्राह ॥ कर्तव्येति ॥ कामा एव व्याधय इत्यर्थः ॥ आचार्यप्रवासानन्तरं जाया याब्रह्मचारिण्यनुग्र-
हाणस्य चानशनाद्यवसायानन्तरमित्यथशब्दार्थः ॥ हन्तेति ॥ यदाचार्यो मद्भक्तं ब्रह्मचारिणमुपेक्ष्य देशान्तरं गतस्तर्हीति यावत् अथ पु-

जाययोक्तोऽपि ह अप्रोच्यैव तु न्यो न किंचित्प्रवासांचक्रे प्रवसितवान् स होपकोसलो व्याधिना मानसेन दुःखेनानशितुमनश-
नं कर्तुं दध्रे धृतवान्मनस्तं तूष्णीमग्न्यगारेऽवस्थितमाचार्यजायोवाच हे ब्रह्मचारिन्नशान भुंक्ष्व किं नु कस्मात्कारणान्नाश्ना-
सीति स होवाच बहवोऽनेकेऽस्मिन्पुरुषेऽकृतार्थे प्राकृते कामा इच्छाः कर्तव्यं प्रति नानात्ययाः नानात्ययोऽतिगमनं येषां व्याधीनां कर्तव्यचिं-
तानां ते नानात्यया व्याधयः कर्तव्यताप्राप्तिनिमित्तानि चित्तदुःखानीत्यर्थः तैः प्रतिपूर्णोऽस्म्यतो नाशिष्यामीत्युक्त्वा तूष्णींभूते

स होवाच बहव इमेऽस्मिन्पुरुषे कामा नानात्यया व्याधिभिः प्रतिपूर्णोऽस्मि नाशिष्यामीत्यथ हाग्नयः समूदिरे तप्तो
ब्रह्मचारी कुशलं नः पर्यचारीद्धन्तास्मै प्रब्रवामेति तस्मै होचुः प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति स होवाच विजानाम्यहं
यत्प्राणो ब्रह्म कं च तु खं च न विजानामीति

॥ ब्रह्मचारिण्यथ हाग्नयः शुश्रूषयावर्जिताः कारुण्याविष्टाः सन्तस्त्रयो-
ऽपि समूदिरे संभूयोक्तवन्तः हन्तेदानीमस्मै ब्रह्मचारिणे मद्भक्ताय दुःखिताय तपस्विने श्रद्दधानाय सर्वेऽनुशास्मोऽनुप्रब्र-
वाम ब्रह्मविद्यामित्येवं संप्रधार्य तस्मै होचुरुक्तवन्तः प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति स होवाच ब्रह्मचारी विजानाम्यहं यद्भव-
द्भिरुक्तं प्रसिद्धपदार्थकत्वात्प्राणो ब्रह्मेति यस्मिन्सति

॥ नरेत्याचार्यो ब्रह्मविद्यामस्मै विवक्षितां वक्ष्यति किं त्वग्नय इत्याशंक्याह ॥
दुःखितायेति ॥ ब्रह्मविद्यासाधनसंपत्तिमस्य दर्शयति ॥ तपस्विन इति ॥ प्राणो ब्रह्मेति भवद्भिरुक्तं तदहं विजानामीति संबन्धः तत्र हेतु-
माह ॥ प्रसिद्धेति ॥ प्राणपदस्य प्रसिद्धार्थत्वमेव समर्थयते ॥ यस्मिन्निति ॥ एवंभूतः प्राण इति शेषः प्राणशब्दस्य प्रसिद्धत्वेऽपि कुतो ब्रह्मत्वं त-

अतइति॥ कार्यकारणसंघातेनदृष्टेःग्रहणादित्यतःशब्दार्थः॥ स्वकीयज्ञानसमुच्चयार्थश्चकारः विजानाम्यहमित्युक्तमुपसंहरति॥ तेनेति॥ स्वेनाज्ञातंब्रह्मचारीदर्शयति॥ कंचेति॥ तस्याज्ञानमाक्षिपति॥ नन्विति॥ प्राणशब्दस्यवायुविशेषविषयत्वेनप्रसिद्धार्थत्ववदित्यपेरर्थः॥ ब्रह्मचारिणोभिप्रायंदर्शयन्नुत्तरमाह॥ नूनमिति॥ ननुविरुद्धार्थत्वादग्नीनांवाक्यंभवत्वप्रमाणमितिआशंक्याह॥ कथंचेति॥ विरुद्धा

जीवनंयदुपगमेचनभवतीतितस्मिन्वायुविशेषेलोकेरूढोतोयुक्तंब्रह्मत्वंतस्यतेनप्रसिद्धपदार्थकत्वाद्विजाना म्यहंयत्प्राणोब्रह्मेतिकंचतुखंचनविजानामीतिननुकंखशब्दयोरपिसुखाकाशविषयत्वेनप्रसिद्धपदार्थकत्वमे वकस्माद्ब्रह्मचारिणः ज्ञानंनूनंसुखस्यकंशब्दवाच्यस्यक्षणप्रध्वंसितत्वात्॥ खंशब्दवाच्यस्यचाकाशस्याचेतनस्यक थंब्रह्मत्वमितिमन्यते॥ कथंचभवतांवाक्यमप्रमाणंस्यादित्येनोनविजानामीत्याह॥ त मेवमुक्तवंतंब्रह्मचारिणंतेहाग्न

तेहोचुर्यद्वावकंतदेवखंयदेवखंतदेवकमिति॥

यऊचुर्यद्वावयदेववयंकमवोचामतदेवखमाकाशमित्येवंखेनविशेष्यमाणंकंविषयेंद्रियसंयोगजात्सुखान्नि वर्तितंस्यान्नीलेनेवविशेष्यमाणमुत्पलंरक्तादिभ्यः यदेवखमाकाशमवोचामतदेवचकंसुखमितिजानीहि एवंचसु खेनविशेष्यमाणंखंभौतिकाद्चेतनात्खान्निवर्तितंस्यान्नीलोत्पलवदेवसुखमाकाशस्यनेतरल्लौकिकमाकाश चसुखाश्रयंनेतरत् भौतिकमित्यर्थः नन्वाकाशंचेत्सुखेनविशेषयितुमिष्ट॥ थत्वप्रतीतेराप्तवाक्यस्यचाप्रामाण्यायोगा।

द्युक्तंब्रह्मचारिणोः ज्ञानमितिनिगमयति॥ अतइति॥ खस्यविशेषणत्वंकस्यचविशेष्यत्वमित्यंगीकारेफलंकथयति॥ इत्येवमिति कस्यविशेषणत्वंखस्यविशेष्यत्वमित्येवमपिविशेषणविशेष्यत्वमवगंतव्यमित्याह॥ यदेवेति॥ यथोक्तविशेषणविशेष्यभावेफल माह॥ एवंचेति॥ यद्वावेत्यादिवाक्यार्थमुक्तमेवप्रतिपत्तिसौकर्यार्थंसंक्षिपति॥ सुखमिति॥ इतरेतरविशेषणविशेष्यत्वमाक्षिपति

श्री·भा
९२

अन्यतरदेवेत्यत्र यदेव खमित्येतदुच्यते ॥ यद्वावकं तदेव खं इत्यत्र यद्वावकमितीतरविशेषणमतिरिक्तमधिकमकिंचित्करमिति योजना ॥ यदि तु यदेव खं तदेव कमिति खेन कं विशिष्यते तदा यदेव खमित्येतदेव विशेषणमस्तु ॥ यद्वावकमिति पूर्वविशेषणमकिंचित्करमित्याह ॥ यदेवेति ॥ वाशब्दोतिरिक्तमित्येतदनुकरणार्थः विशेषणयोरर्थवत्त्वश्रुत्यांके सिद्धांतीत्यारयति ॥ नन्विति ॥ तथा च सुखस्य लौकिकसुखाद्यावृत्त्यर्थं यदेव खमिति विशेषणमाकाशस्य चलौकिकाकाशाद्यावृत्त्यर्थं यद्वावकमिति विशेषणमर्थवदिति शेषः ॥ अन्यतरविशेषणवशादपि यथोक्तव्यावृत्तिसिद्धेर् किंचित्करं विशेषणद्वयमिति शंकते ॥ सुखेनेति ॥ यदा सुखेनाकाशं विशिष्यते तदा भूताकाशादाकाशव्यावर्तितं भवति सुखस्य तद्विशेषणत्वायोगात् सुखमपि लौकिकसुखाद्व्यवच्छिद्यते लौकिकसुखस्याकाशविशेषणत्वानुपपत्तेः ततः सुखेनाकाशस्या

मरत्वन्यतरदेव विशेषणं यद्वावकं तदेव खमित्यतिरिक्तमितरद्यदेव खं तदेव कमिति पूर्वं विशेषणं वा ननु सुखाकाशयोरुभयोरपि लौकिकसुखाकाशाभ्यां व्यावृत्तिरिष्टत्वे चाम सुखेनाकाशे विशेषिते स्याद्वृत्तिरुभयार्थं प्राप्तैवेति चेत्सत्यमेव किंतु सुखेन विशेषितस्यैवाकाशस्य ध्येयत्वं विहितं न त्वाकाशगुणस्य विशेषणस्य सुखस्य ध्येयत्वं विहितं स्याद्विशेषणोपादानस्य विशेष्यनियंतृत्वेनैवोपक्षयात् ततः खेन सुखमपि विशेष्यते ध्येयत्वाय कुतश्चैतन्निश्चीयते कंशब्दस्यापि ब्रह्मशब्दसंबंधात्कं ब्रह्मेति ॥ यदि हि सुख

आकाशेन सुखस्य वा विशेषितत्वसामर्थ्यात् प्राप्तेव सुखाकाशयोर्लौकिकसुखाकाशाभ्यां व्यावृत्तिरित्यन्यतरदेव विशेषणमर्थवदित्यर्थः ॥ किमन्यतरस्यैव विशेषणत्वाद्व्यावर्तकत्वमित्यापाद्यते किंवा तस्यैवार्थवत्त्वमिति तत्राद्यमंगीकरोति ॥ सत्यमेवमिति ॥ द्वितीयं दूषयति नन्वित्यादिना ॥ विशिष्टस्यैव ध्येयत्वे विशेषणस्यापि ध्येयत्वं सिध्यतीति चेन्नैवं दंडोपेयानन्याहेत्तिवत् विशेषणस्यान्यथासिद्धत्वादित्याह ॥ विशेषणेति ॥ द्वयोरपि विशेषणयोरर्थवत्त्वं निगमयति ॥ अत इति ॥ विधांतरेण ध्येयत्वासंभवादित्यतः शब्दार्थः खमिवसुखेनेत्यपरर्थः ॥ इत्थं सुखाकाशयोरितरेतरविशेषणविशेष्यत्वमेषितव्यमित्याह ॥ कुतश्चेति ॥ कुतः शब्दार्थं स्पष्टयति ॥ कंशब्दस्येति ॥ खं ब्रह्मेति खंशब्दस्य ब्रह्मशब्दसंबंधवदित्यपरर्थः ॥ गुणगुणिनोरुभयोरपि ध्येयत्वसिध्यर्थमितरेतरविशेषणविशेष्यत्वं ॥ कंशब्दस्य खंशब्दस्य

अ ४
राम
९३

उक्तरीत्या द्वयोरपि ध्येयत्वमतः शब्दार्थः ॥ ब्रह्मचारिणो मे हो नामान्योन्यविशेषणविशेष्यत्वाग्रहणादाकाशस्यैव गुणिनो ध्येयत्वं न तु सुखस्य
गुणस्येति विभ्रमः ॥ प्राणं चेत्यादिवाक्यं नाम्नीनानब्रह्मचारिणस्तथा च कथमुपास्त्यापिकामिदं निर्वहतीत्याशंक्याह ॥ तदेतदिति ॥ आकाशस्य
प्राणसंबंधकत्वकयाविषयत्वपेक्षायामाह ॥ आश्रयत्वेनेति ॥ कार्यब्रह्मोपासनसमुच्चितं कारणब्रह्मोपासन सुपसं-
हर्तुं"मितिशब्दः ॥ १० ॥ प्रधानविद्यासु पदिश्यांगविद्याविधानायोपक्रमते ॥ संभूयेति ॥ अनंतरं प्रधानविद्योपदेशादिति शेषः ॥ अग्निविद्यां वक्तुमा

गुणविशिष्टस्य खस्य ध्येयत्वं विवक्षितं स्यात्कं खं ब्रह्मेति ब्रुवतामग्नयः प्रथमं न चैवमुक्तवंतः किं तर्हि कं ब्रह्म खं ब्रह्मेत्यतो
ब्रह्मचारिणो मोहापनयाय कं खं शब्दयोरितरेतरविशेषणविशेष्यत्वनिर्देशो युक्त एव यद्वाव कमित्यादिः ॥ तदेतदग्निभि
रुक्तं वाक्यार्थमस्मद्बोधाय श्रुतिराह प्राणं च हास्मै ब्रह्मचारिणे तस्याकाशस्तदाकाशः प्राणस्य संबंध्याश्रयत्वेन हार्द आ
काश इत्यर्थः ॥ सुखगुणवत्त्वनिर्देशात्तं चाकाशं सुखगुणविशिष्टं ब्रह्म तत्स्थं च प्राणं ब्रह्मसंपर्कादेव ब्रह्मेत्युभयं प्राणं

प्राणं च हास्मै तदाकाशं चोचुः ॥ १० ॥ अथ हैनं गार्हपत्योऽनुशशास पृथिव्यग्निरन्नमादित्य इति य एष आदित्ये

चाकाशं च समुच्चित्य ब्रह्मणी ऊचुरग्नय इति ॥ १० ॥ संभूयाग्नयो ब्रह्मचारिणे ब्रह्मोक्तवंतो यथानंतरं प्रत्येकं स्वस्वविषयां विद्यां
वक्तुमारेभिरे ॥ तत्रादावेनं ब्रह्मचारिणं गार्हपत्योऽग्निरनुशशास पृथिव्यग्निरन्नमादित्य इति ममैताश्चतस्रस्तनवस्तत्र य एष आ
दित्ये एष पुरुषो दृश्यते सोऽहमस्मि गार्हपत्योऽग्निर्यश्च गार्हपत्योऽग्निः स एवाहमादित्ये पुरुषोऽस्मीति पुनः परावृत्त्या स एवाह

रक्ष्याणां अग्नीनां मध्ये प्रथममिति श्रुतावथशब्दार्थः पृथिव्यादिचतुष्टयमनूद्याग्न्यादित्ययोर्वा तु "मस्मीति वचनं पृथिव्यन्नयोरवि
रभेदं दर्शयति ॥ तत्रेति ॥ एवमग्न्यादित्ययोस्तादात्म्य मितिशब्दार्थः ॥ य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मीत्येतावतैव तयोस्तादात्म्यसिद्धेः
स एवाहमस्मीति पुनरुक्तिरनर्थिकेत्याशंक्याह ॥ पुनरिति ॥ भोज्यत्वलक्षणं स्वभावो यथोस्तयोर्गार्हपत्येन संबंधः तथा गार्हपत्यादित्ययोर्न संबं

किंतु तादात्म्यलक्षण एवेत्यत्र हेतुमाह ॥ नन्विति ॥ पृथिव्यादावपि तादात्म्यं किं न स्यादित्याशंक्याह ॥ पृथिवीति ॥ आभ्यामन्यादित्याभ्यामिति
यावत् स एवाहमस्मीति परावृत्त्य पुनर्वचनं यथोक्तार्थविशेषणार्थमिति भावः ॥ उक्तायां विद्यायां गार्हपत्यविषयायां द्विविधं फलं दर्शयति ॥
स यः कश्चिदित्यादिना ॥ कस्यैतत्फलमित्यपेक्षायामुक्तमेव संक्षिपति ॥ य एतमेवमिति ॥ १२ ॥ गार्हपत्योपदेशानंतर्यमथशब्दार्थः ॥ अबादिचतु

संबंधो न गार्हपत्यादित्ययोस्त्वत्तृत्वपक्तृत्वप्रकाशनधर्मा अविशिष्टा इत्यत एकत्वमेवानयोरत्यंतं पृथिव्यन्नयोस्तु भोज्य
त्वेनाभ्यां संबंधः स यः कश्चिदेवं यथोक्तं गार्हपत्यमग्निमन्नान्नादत्वेन चतुर्धा प्रविभक्तमुपास्ते सोऽपहते विनाशयति पाप
कृत्यां पापं कर्म लोकी लोकवांश्चास्मदीयेन लोकेनाग्नेयेन तद्वांश्च भवति यथा वयमिह च लोके सर्वं वर्षशतं आयुरेति प्राप्नो
ति ज्योगुज्ज्वलं जीवति नाप्रख्यात इत्येतत् न चास्यावराश्चैतपुरुषाश्चास्य विदुषः संततिजा इत्यर्थः क्षीयंते संतत्युच्छेदो न

पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकी भवति सर्वमायुरे
ति ज्योग्जीवति नास्यावरपुरुषाः क्षीयंत उप वयं तं भुंजामोऽस्मिंश्च लोकेऽमुष्मिंश्च य एतमेवं विद्वानुपास्ते ॥ २ ॥
अथ हैनमन्वाहार्यपचनोऽनु

१ भवतीत्यर्थः किं च तं वयमुपभुंजामः पालयामोऽस्मिंश्च लोके जीवंतममुष्मिंश्च परलोके
य एतमेवं विद्वानुपास्ते यथोक्तं तस्यैतत्फलमित्यर्थः ॥ २ ॥ अथ हैनमन्वाहार्यपचनोऽनुशशास दक्षिणाग्निरापो दिशो नक्ष
त्राणि चन्द्रमा इत्येता मम चतस्रस्तनवश्चतुर्धाऽहमन्वाहार्यपचन आत्मानं प्रविभज्यावस्थितस्तत्र य एष चन्द्रमसि पुरुषो दृ
१ श्यते सोऽहमस्मि स एवाहमस्मीति पू

ष्टयमनूद्य दक्षिणाग्नौ चन्द्रे च विशेषं दर्शयति ॥ तस्मिन्निति ॥ अन्वाहार्यपचनचन्द्रमसोस्तादात्म्येनापन्नेन न
नक्षत्राणां चताभ्यां भोज्यत्वेन संबंधदृष्टिं वक्तुं पुनर्वचनमित्याह ॥ स एवेति ॥ कथं पुनरन्वाहार्यपचनचन्द्रमसोस्तादात्म्यं तत्राह ॥ अन्नसंबंधादिति
॥ प्रसिद्धं हि दर्शपूर्णमासयोरन्वाहार्यपचने हविःश्रपणं तेन चन्द्रप्राप्त्यं भवतीत्यादौ चन्द्रमसि प्रसिद्धोऽन्नसंबंधः तस्मात्तयोस्तादात्म्यमित्यर्थः ॥ तयोरेक

तत्रैव हेत्वंतरमाह ॥ दक्षिणेति ॥ अन्वाहार्यपचनो हि दक्षिणाग्निरुच्यते चंद्रमाश्च दक्षिणेन पथा प्राप्यमाणो दक्षिणस्यां दिशि भवतीति
गम्यते ॥ उत्तरदिगधिष्ठातुरपि तत्संबंधानिवारणान्नेयुक्तं तयोरैक्यमित्यर्थः ॥ अपां नक्षत्राणां च चंद्रवदन्वाहार्यपचनेन तादात्म्यमाशंक्या
ह ॥ अपामिति ॥ पूर्ववत्पृथिव्यन्नयोस्तयोर्गार्हपत्यादित्याभ्याम् अन्नत्वेन संबंधवदिति यावत् ॥ संबंधोन्वाहार्यपचनचंद्रमोभ्यामिति शेषः ॥ कथं
नक्षत्राणामन्नत्वं तत्राह ॥ नक्षत्राणामिति ॥ कथं पुनरपामन्नत्वं तदाह ॥ अपामिति ॥ दक्षिणाग्नेर्दक्षिणाग्निं प्रतीति यावत् ॥ पृथिव्या गार्हपत्या

सामान्याच्चान्वाहार्यपचनचंद्रमसोरेकत्वं दक्षिणादिक्संबंधाच्चापां नक्षत्राणां च पूर्ववदन्नत्वेनैव संबंधो नक्षत्राणां चंद्र
मसो भोग्यत्वप्रसिद्धेः अपामन्नोत्पादकत्वादन्नत्वं दक्षिणाग्नेः पृथिवीवद्गार्हपत्यस्य समानमन्यत् ॥ २ ॥ अथ हैनमाहवा-

शशासापो दिशो नक्षत्राणि चंद्रमा इति य एष चंद्रमसि पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति स य एतमेवं
विद्वानुपास्तेऽपहते पापकृत्यां लोकी भवति सर्वमायुरेति ज्योग्जीवति नास्यावरपुरुषाः क्षीयन्त उप वयं तं भुंजा
मोऽस्मिंश्च लोकेऽमुष्मिंश्च य एतमेवं विद्वानुपास्ते ॥ २ ॥ अथ हैनमाहवनीयोऽनुशशास प्राण आकाशो द्यौ-

नीयोऽनुशशास प्राण आकाशो द्यौर्विद्युदिति ममाप्येताश्चतस्रस्तनवो य एष विद्युति पुरुषो दृश्यते सो ॥ विद्युदिति
हमस्मीत्यादि पूर्ववत्सामान्याद्दिवाकाशयोरस्याश्रयत्वाद्विद्युदाहवनीययोर्भोग्यत्वेनैव संबंधः ॥ १ ॥ ६ ॥ १ ॥

ग्निं प्रत्यन्नत्ववदित्युदाहरणार्थः ॥ स य एतमेवं विद्वानित्यादी त्युक्तं ॥ २ ॥ गार्हपत्यस्य दक्षिणाग्नेश्चोपासनानंतर्यमथशब्दार्थः ॥ तत्रावांतर
भेदं दर्शयति ॥ य एष इति ॥ सोहमस्मीत्याद्यन्यत्समानमिति संबंधः ॥ यथा पूर्वं ज्योतिष्ट्वविशेषाद्गार्हपत्यादित्ययोरन्वाहार्यपचनचंद्रमसोश्च
साम्यमुक्तं तथा ज्योतिष्ट्वसामान्याद्विद्युदाहवनीययोस्तादात्म्यमेष्टव्यमित्याह ॥ पूर्ववदिति ॥ कथं तर्हि ताभ्यां दिवाकाशयोः संबंधस्तत्राह ॥ दिवा
काशयोस्त्विति ॥ आहवनीयस्य फलत्वाद्दिवो विषयत्वं तत्र होमादिद्वारा निष्पन्नापूर्वस्य द्युलोकपालत्वाभ्युपगमाद्विद्युतस्त्वाकाशाश्रयत्वम

सिद्धमानौ विद्युदाहवनीययोर्भोग्यत्वेन दिवाकाशयोः

94

संबंधइत्यर्थः स य एतमेवमित्याद्यन्यद्व्याख्यातं॥१॥ अग्नीनां मिथो विसंवादं व्यावर्णयति। ते पुनरिति॥ तथाप्यात्मविद्याश्रोतव्येत्याशंक्या
ह॥ आत्मविद्येति॥ कथमाचार्योपदेशमन्तरेण भगवदुपदेशवशादेवमेविद्याफलवती आचार्याद्धैव विद्या विदिता साधिष्ठमित्यादिहि प्रागुक्त

समानमन्यत्॥१॥ ते पुनः संभूयोचुर्हे उपकोसल एषा सोम्य ते तवास्मद्विद्याग्निविद्येत्यर्थः॥ आत्मविद्या पूर्वोक्ता प्राणो
ब्रह्म कं ब्रह्म खं ब्रह्मेति च आचार्यस्तु ते गतिं वक्ता विद्याफलप्राप्तय इत्युक्त्वोपरेमुरग्नयः आजगाम हास्याचार्यः कालेन तं
च शिष्यमाचार्योऽभ्युवादोपकोसलाइति भगव इति ह प्रतिशुश्राव ब्रह्मविद इव सोम्य ते मुखं प्रसन्नं भाति को नु शशास।

य एष विद्युति पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकी भवति
सर्वमायुरेति ज्योग्जीवति नास्यावरपुरुषाः क्षीयन्त उप वयं तं भुञ्जामोऽस्मिंश्च लोकेऽमुष्मिंश्च य एतमेवं वि
द्वानुपास्ते॥१॥ ते होचुरुपकोसलैषा सोम्य तेऽस्मद्विद्यात्मविद्या चाचार्यस्तु ते गतिं वक्तेत्याजगाम हास्याचार्य
स्तमाचार्योऽभ्युवादोपकोसला३ इति भगव इति ह प्रतिशुश्राव ब्रह्मविद इव सोम्य ते मुखं भाति को नु त्वानुश
शासेति को नु मानुशिष्याद्भो इतीहापेव निह्नुत॥ इमे नूनमीदृशा अन्यादृशा इतीहाग्नीनभ्यूदे किं नु सोम्य कि

त्युक्तः सन्नाह॥ को नु मानुशिष्यादनुशासनं कुर्याद्भो भगवंस्त्वयि प्रोषित इतीहापेव निह्नुतेऽपनिह्नुत इवेति व्यवहितेन
संबंधः॥ न चापनिह्नुते न च यथावदग्निभिरुक्तं ब्रवीतीत्यभिप्रायः कथम् इमे अग्नयो मया परिचरिता उक्तवन्तो नूनं यतः
त्वां दृष्ट्वा वेपमाना इवेदृशा दृश्यन्ते पूर्वमन्यादृशाः सन्त इतीहाग्नीनभ्यूदेऽभ्युक्तवानग्नीन् काक्वा दर्शयन्॥ किं नु सोम्य

मत आह॥ आचार्यस्त्विति॥ अपनिह्नुत इवेत्यत्रेवशब्दस्तात्पर्यं दर्शयति॥ न चेति॥ उक्तमभिप्रायमाकांक्षापूर्वकं विवृणोति॥ कथमित्यादि
ना॥ काक्वा स्वरभंगेन भीतः सन्नुक्तवानस्फुटमिति यावत्॥ भीतिं शिष्यस्यापनयन्नाचार्यो ब्रूते॥ किं नु सोम्येति॥ आचार्यवाक्यस्थमिति शब्द

इत्येवमिति॥ एषः सन्निति पूर्वेण संबंधः॥ यस्मादग्निभिरुक्तमाचार्याय प्रतीकद्वारा शिष्यो निवेदितवान् तस्मादाचार्यः प्राप्तः सावकाशमित्या
ह॥ यत इति॥ कं ब्रह्म खं ब्रह्मेत्यादिना ब्रह्मापि तैरुक्तमित्याशंक्याह॥ नब्रह्मेति॥ कथं तर्हि साकल्येन ब्रह्म ज्ञातव्यमित्याशंक्याह॥ अहं त्विति
॥ ब्रह्मज्ञाने किं स्यादित्याशंक्याह॥ शृण्विति॥ १५॥ कथमुपसन्नायाचार्यो ब्रह्मचारिणे ब्रह्मविद्यामुक्तवानित्यत आह॥ य एष इति॥ अक्षिण्या
नेन तदुपलक्षितो द्रष्टा य एष पुरुषो दृश्यत इति संबंधः॥ नासौ सर्वेषां छायात्मातिरिक्तो दृष्टिगोचरतामाचरतीत्याशंक्याधिकारिणो विशिन।

इत्येवमिदमुक्तवन्त इत्येवं ह प्रतिजज्ञे प्रतिज्ञातवान् प्रतीकमात्रं किंचिन्न सर्वं यथोक्तमग्निभिरुक्तमवोचन् यत आहाचा
र्यो लोकान्वाव पृथिव्यादीन्हे सोम्य किल ते वोऽवोचन्न ब्रह्म साकल्येनाहं तु ते तुभ्यं तद्ब्रह्म यदिच्छसि त्वं श्रोतुं वक्ष्यामि शृणु त
स्य मयोच्यमानस्य ब्रह्मणो ज्ञानमाहात्म्यं यथा पुष्करपलाशे पद्मपत्र आपो न श्लिष्यन्त एवं यथा वक्ष्यामि ब्रह्मैवंविदि पा।

वोचन्निति हमिति ह प्रतिजज्ञे लोकान्वाव किल सोम्य तेऽवोचन्नहं तु ते तद्वक्ष्यामि यथा पुष्करपलाश आपो न
श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यत इति ब्रवीतु मे भगवानिति तस्मै होवाच॥ १४॥ य एषोऽक्षिणि पुरुषो दृ

पं कर्म न श्लिष्यते न संबध्यत इत्येवमुक्तवत्याचार्ये आहोपकोसलो ब्रवीतु मे भगवानिति तस्मै होवाचाचार्यः॥ दृश्यत
॥ १५॥ य एषोऽक्षिणि पुरुषो दृश्यते निवृत्तचक्षुर्भिर्ब्रह्मचर्यादिसाधनसंपन्नैः शान्तैर्विवेकिभिर्दृष्टेर्द्रष्टा चक्षुषश्चक्षुरित्यादिश्रु
त्यन्तरात् नन्वग्निभिरुक्तं विनष्टं यत आचार्यस्तु ते गतिं वक्तेति गतिमात्रस्य वक्तेत्यवोचन् ॥ दृ॥ निवृत्तेति॥ निवृत्तानि विषयेभ्यो

विमुखानि चक्षुरादीनि बाह्यानि करणानि येषां तैरिति यावत् बाह्यकरणानां स्ववशत्वाधीनं विशेषणान्तरमाधत्ते॥ ब्रह्मचर्यादीति॥ मनसो विषयपार
वश्यराहित्यं विशेषणान्तरमाह॥ शान्तैरिति॥ तेषां निवृत्तचक्षुष्ट्वे हेतुमाह॥ विवेकिभिरिति॥ पुरुषोऽक्षिणि दृष्टेत्यत्र बृहदारण्यकश्रुतिं प्रमाणयति
॥ चक्षुष इति॥ आचार्येणापूर्वविद्योपदेशादग्नीनां मुक्तिर्मिथ्या माभूदिति शंकते॥ नन्विति॥ अग्निवचनस्य गतिमन्तरमाह॥ ९ ॥ ८ ॥ ९ ॥

॥भविष्यदिति॥ नाग्नीनामुक्तिर्मृषा नापि तेषां भविष्यद्विषयाऽज्ञानमिति दूषयति॥ नैष दोष इति॥ यत्तु खगुणमाकाशमुपास्यमग्निभिरु-
पदिष्टं तस्यैव कारणब्रह्मणो ह्येषऽस्याक्षिणि दृश्यत इत्यनुवादो गतिव्याख्यानायाचार्येणैव क्रियते तन्नास्ति दोषद्वयमित्यर्थः॥ अक्षिणि
दृश्यत इति प्रयोगादाचार्येण च्छायात्मा विवक्षित इत्याशंक्याह॥ एष इति॥ इतश्च नायं पुरुषः च्छायात्मेत्यनन्तरवाक्यमवतार्य व्याकरोति



भविष्यद्विषयाऽपरिज्ञानं चाग्नीनां नैष दोषः॥ सुखाकाशस्यैवाक्षिणि दृश्यत इति द्रष्टुरनुवादात्॥ एष आत्मा प्राणिना-
मिति होवाचैवमुक्तवानेतद्यद्वेवात्मतत्त्वमवोचामेतदमृतममरणधर्म्यविनाश्यत एवाभयं यस्य हि विनाशाशंका तस्य भ-
योपपत्तिस्तदभावादभयमत एवैतद्ब्रह्म बृहदनन्तं किं चास्य ब्रह्मणोऽक्षिपुरुषस्य माहात्म्यं तत्तत्र पुरुषस्य स्थानेऽक्षिणि यद्य-
पि सर्पिर्वोदकं वा सिंचन्ति वर्त्मनी एव गच्छति॥ पक्ष्मावेव गच्छति न चक्षुषा संबध्यते पद्मपत्रेणेवोदकं स्थानस्याप्येतन्मा-

एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति तद्यद्यप्यस्मिन्सर्पिर्वोदकं वा सिंचति वर्त्मनी एव गच्छत्येतꣳ सं-
यद्वाम इत्याचक्षत एतꣳ हि सर्वाणि वामान्यभिसंयन्ति सर्वाण्येनं वामान्यभिसंयन्ति य एवं वेद एष उ एव वामनीरेष
हि सर्वाणि वामानि नयति सर्वाणि वामानि नयति य एवं वेद (( हात्म्यं किं पुनः स्थानिनोऽक्षिपुरुषस्य निरंजनत्वं वक्त-
व्यमित्यभिप्रायः॥ एतं यथोक्तं पुरुषं संयद्वाम इत्याचक्षते कस्माद्यस्मादेनं सर्वाणि वामानि वननीयानि संभजनीयानि
शोभनानि अभिसंयन्त्यभिसंगच्छन्तीत्यतः संयद्वामस्तथैवं (( एतदित्यादिना॥ इति शब्दो यथोक्तगुणैरुपास्यः पुरुषो न च्छा-
यात्मा भवितुमर्हतीत्यर्थः॥ असंगत्वाच्च नायं छायात्मेत्याह॥ किं चेति॥ माहात्म्यं स्थानद्वारेणोच्यत इति शेषः किमेतावता पुरुषस्यायात-
मित्याह॥ स्थानस्यापीति॥ तस्यैवोपास्यत्वार्थं गुणान्तरं दर्शयति॥ एतमिति॥ पुरुषस्य संयद्वामत्वं ब्रह्मविदुक्तमसिद्धमपि नान्वर्थमन्तरेण व्य-
क्तीभवतीति शंक्यते॥ कस्मादिति॥ अवयवार्थोपन्यासेन परिहरति॥ यस्मादिति॥ गुणोपास्ति ‾ फलमाह॥ तथेति॥ उपास्यगुणानुसारेण

एवंविदं संयद्वामगुणविशिष्टः पुरुषोस्मीति वेदितारमित्येतद्गुणांतरमुपास्यत्वाय दर्शयति॥ एष इति॥ तद्व्युत्पादयति॥ एष इति॥ गुणांतरं
ध्यानायोक्तं व्युत्पादयति॥ एष इत्यादिना॥ आदित्यादिरूपेणास्यैव दीप्यमानत्वे श्रुत्यंतरमनुकूलयति॥ तस्येति॥ गुणोपास्तिफलमाह॥ य
एवमिति॥ गतिं वक्तुं पूर्वोक्तविद्यायामधिकगुणानिवाचार्योन्ववादीदिदानीं तामेव गतिमवतारयति॥ अथेति॥ तां वक्तुं पातनिकां करोति॥ यद्य
दीति॥ करणाकरणाभ्यां विदुषो न वृद्धिर्नापि हानिरित्यत्र श्रुत्यंतरं प्रमाणयति॥ न कर्मणेति॥ अथ यदु चैवेत्यादिवाक्यस्य तात्पर्यं दर्शयति॥ इ

विदमेनं सर्वाणि वामान्यभिसंयंति य एवं वेदैष उ एव वामनीर्यस्मादेष हि सर्वाणि वामानि पुण्यकर्मफलानि पुण्यानु
रूपं प्राणिभ्यो नयति प्रापयति वहति चात्मधर्मत्वेन विदुषः फलं सर्वाणि वामानि नयति य एवं वेद एष उ एव भामनीरेष हि
यस्मात्सर्वेषु लोकेष्वादित्यचंद्राग्न्यादिरूपैर्भाति दीप्यते॥ तस्य भासा सर्वमिदं विभातीति श्रुतेरतो भामानि नयतीति भा
मनीर्य एवं वेदासावपि सर्वेषु लोकेषु भाति अथेदानीं यथोक्तब्रह्मविदो गतिरुच्यते यद्यदि उ च एवास्मिन्नेवंविदि शव्यं श

षउ एव भामनीरेष हि सर्वेषु लोकेषु भाति सर्वेषु लोकेषु भाति य एवं वेदाथ यदु चैवास्मिञ्छव्यं कुर्वंति॥ ९ ॥

वकर्म मृते कुर्वंति यदि च न कुर्वंति ऋत्विजः सर्वथाप्येवंवित्तेन शवकर्मणा अकृतेनापि प्रतिबद्धो न ब्रह्म प्राप्नोतीति न च कृ
तेन शवकर्मणास्य कश्चनाभ्यधिको लोकः न कर्मणा वर्द्धते नो कनीयानिति श्रुत्यंतराच्छवकर्मण्यनादरं दर्शयन्विद्यां स्तौ
ति न पुनः शवकर्मैवंविदो न कर्तव्यमिति॥ अक्रियमाणेपि शवकर्मणि कर्मणां फलारंभे प्रतिबंधः कश्चिदनुमीयते अन्य
त्र पत इह विद्याफलारंभकाले शवकर्म स्याद्वा न वेति विद्यावतः प्रतिबंधेन फलारंभं दर्शयति ॥वकर्मणीति॥ तात्पर्यांतरं दर्शयति

॥ न पुनरिति॥ यदि विदुषोपि शवकर्म कर्तव्यं कस्तर्हि तस्य विशेषस्तत्राह॥ अक्रियमाणेपीति॥ अन्यत्रेत्यविद्यावानुच्यते॥ इहेति॥ प्रस्तुतवाक्य
स्थविद्यावतोक्तिः॥ इति शवकर्मण्यनादरपूर्वकमिति शेषः॥ शवकर्मभावाभावयोरप्रतिबंधः फलं सिध्यति॥ अविद्यावतस्तु शवकर्माणि च फल
कं

तेऽर्चिषमेवेत्यत्र तच्छब्दार्थं व्याचष्टे॥ येऽसुखाकाशमिति॥ सत्यलोकस्थमिति॥ देशावच्छेदेन किमिति व्याख्यायते मुख्यमेव ब्रह्म ब्रह्मशब्दावलंबनं किं नेष्यते तत्राह॥ गन्तृगन्तव्येति॥ एतेभ्यो हेतुभ्यः सत्यलोकस्थं ब्रह्म न मुख्यमिति संबंधः॥ मुख्यब्रह्मप्राप्तावपि यथोक्तव्यपदेशा भविष्यन्तीत्याशंक्याह॥ सन्मात्रेति॥ तदनुपपत्तेर्न तावद्गम्यं ब्रह्म ब्रह्मशब्दमिति शेषः॥ अनुपपत्तिमेव स्फारयति॥ ब्रह्मैवेति॥ तत्रेति॥ मुख्यमासिद्ध।

येऽसुखाकाशमस्मिन्स्थं संयद्वामो वामनी भामनीत्येवंगुणमुपासते प्राणसहितानामग्निविद्यां चैतेषामन्त्यकर्म भवतु मा वा भूत्सर्वथापि तेऽर्चिषमेवाभिसंभवन्त्यर्चिरभिमानिनीं देवतामभिसंभवन्तीत्यर्थः॥ अर्चिषोऽर्चिर्देवताया अहरहरभिमानिनीं देवतामह्न आपूर्यमाणपक्षं शुक्लपक्षदेवतामापूर्यमाणपक्षाद्यान्षण्मासानुदङ्ङुत्तरां दिशमेति सविता तान्मासानुत्तरायणदेवतां तेभ्यो मासेभ्यः संवत्सरं संवत्सरदेवतां ततः संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं

यदि च नार्चिषमेवाभिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षडुदङ्ङेति मासाꣳस्तान्मासेभ्यः संवत्सरꣳ संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः॥

((तत्तत्रस्थान्पुरुषः कश्चिद्ब्रह्मलोकादेत्य अमानवो मानव्यां सृष्टौ भवो मानवो न मानवोऽमानवः पुरुष एतान्ब्रह्म सत्यलोकस्थं गमयति गन्तृगन्तव्यगमयितृत्वव्यपदेशेभ्यः सन्मात्रब्रह्मप्राप्तौ तदनुपपत्तेर्ब्रह्मैव सन्ब्रह्माप्येतीति हि तत्र वक्तुं न्याय्यं॥ सर्वभेदनिरासेन सन्मात्रप्रतिपत्तिं वक्ष्यति॥ न चादृष्टो मार्गो गमनायोपतिष्ठते॥

((गन्तेति॥ कस्यचिदपि सन्मात्रब्रह्मप्राप्तिरत्र नास्तीत्याशंक्याह॥ सर्वभेदेति॥ वक्ष्यति षष्ठेऽध्याय इति शेषः॥ जीवस्य सन्मात्रं ब्रह्म पारमार्थिकं रूपं चेदुपासकस्यापि न गतिः कुचिता तस्यापि ब्रह्मातिरिक्तस्वरूपाभावादित्याशंक्याह॥ न चेति॥ एकत्वलक्षणो मार्गो न दृष्टश्चेद्गमनाय नोपतिष्ठते॥ नहि ज्ञाननिष्ठस्यात्मैकत्वं गमनं वा रमितुं पारयत्यज्ञानप्रतिबंधात्तस्य गमने भ्रांतिसंभवादित्यर्थः॥ यद्वा॥ एकत्वलक्षणो मार्गो नावगतो न गमनाय मोक्षायोपस्थितो भवतीत्यर्थः तत्र प्रमाणमाह॥ ८॥

॥स एनमिति॥ स परमात्मा प्रत्यक्त्वेनाज्ञातः सन्नेनमधिकारिणं मुक्तिप्रदानेनन पालयतीत्यर्थः॥ प्रकृतां गतिमुपसंहरति॥ एष इति॥ गति-
फलं निगमयति॥ एतेनेति॥ इममिति विशेषणादनावृत्तिरस्मिन् कल्पे कल्पान्तरेषु आवृत्तिरिति सूच्यते॥ आवर्त्तशब्दं व्याकरोति॥ आवर्त्तन्त इ-
ति॥ सफलाया यथोक्तेन गति पूर्वकेन फलेन सहिताया इति यावत्॥ कार्यब्रह्मोपासनसमुच्चिता कारणब्रह्मोपासना यथोक्ता न विद्या सहि-
ताऽविद्यात्र विवक्षिता तस्या इत्यर्थः॥ १५॥ पूर्वोत्तरग्रन्थयोरसंगतिमाशंक्य प्रासंगिकीं संगतिमाह॥ रहस्यप्रकरण इति॥ रहस्यमुपास-

स एनमविदितो न भुनक्तीति श्रुत्यन्तरादेष देवपथो देवैरर्चिरादिभिर्गमयितृत्वेनाधिकृतैरुपलक्षितः पंथा देवपथ
उच्यते॥ ब्रह्म गन्तव्यं तेन चोपलक्षित इति ब्रह्मपथ एतेन प्रतिपद्यमानाः गच्छन्तो ब्रह्म इमं मानवं मनुसंबंधिनं मनोः सृष्टि-
लक्षणमावर्त्तं नावर्त्तन्ते॥ आवर्त्तन्ते अस्मिन् जननमरणप्रबंधचक्रारूढा घटीयन्त्रवत् पुनः पुनरित्यावर्त्तस्तं न प्रतिपद्यन्ते

स एतान्ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्त्तं नावर्त्तन्ते नावर्त्तन्ते॥ १५॥ एष
॥ ह वै यज्ञो योऽयं पवते

नावर्त्तन्त इति द्विरुक्तिः सफलाया विद्यायाः परिसमाप्तिप्रदर्शनार्था॥ १५॥ रहस्यप्रकरणे प्रसंगा-
दारण्यकत्वसामान्याच्च यज्ञे क्षत उत्पन्ने व्याहृतयः प्रायश्चित्तार्था विधातव्याः तदभिज्ञस्य च ऋत्विजो ब्रह्मणो मौनमित्यत इदमा-

नं तस्य करणे विदुषां फलप्राप्तये मार्गोपदेशप्रसंगेन पद्धस्य समाप्तिगमनायानन्तरग्रन्थेन मार्गोपदेशादस्ति संगतिरित्यर्थः॥ किंच पूर्वोत्तरग्रन्थ-
योरारण्यकत्वेन समानत्वादियं संगतिरस्तीत्याह॥ आरण्यकत्वेति॥ किंचाग्निविषया विद्या प्रकृता यज्ञे च सिद्धेग्निसंबंधे यदि किमपि क्षतमुत्पद्येत तदा
प्रायश्चित्तार्था व्याहृतयो विधातव्या इत्यनन्तरग्रन्थप्रवृत्तिरिति संगत्यन्तरमाह॥ यज्ञ इति॥ प्रकृतायामुपासनायां मौनमंगीक्रियते वा न वा पारे विक्षि-
प्तचित्ततया ध्यानानुष्ठानासिद्धेः ऋत्विग्विशेषस्य च प्रायश्चित्ताभिज्ञस्य मौनमत्र विधीयते तेनास्ति मिथः संगतिरित्याह॥ तदभिज्ञस्येति॥ यज्ञस्य दे-
वतोद्देशेन द्रव्यत्यागात्मकत्वात्क्रियायाश्च क्षणभंगिन्यागतिमत्त्वायोगान्मार्गोपदेशासंभवात्कथमाद्यासंगतिरित्याशंक्य गतिमत्त्वं संपादयितुं यज्ञस्य वा-

॥एष ह्वित्यादिना॥ यज्ञो वा ब्रह्मयो वा ब्रह्मात्मक इति श्रोतीं प्रसिद्धिं सूत्रमेव प्रकटयति॥ वायुप्रतिष्ठ इति॥ श्रुती रुदाहरति॥ स्वाहेति॥ स्वाहा
कारस्तुल्यार्थे वायो धीयते क्षिप्यत इति वातेधा यज्ञः श्रुत्यन्तरमाह॥ अयमिति॥ आदिशब्देन वातो ह्यन्नः प्रयुज्यतामिति श्रुतिर्गृह्यते॥ आदिश
तश्रुतीनामर्थं संगृह्णाति॥ वात इति॥ यो यज्ञः क्रियासमवायी तत्समुदायात्मकः स वायुरेव द्वयोश्चलनात्मकत्वाविशेषात्तस्माद्वायुप्रति
ष्ठः॥ तदात्मको यज्ञ इत्यर्थः॥ वायुप्रतिष्ठो यज्ञ इत्यत्र श्रुत्यन्तरमाह॥ वात एवेति॥ पवनस्य श्रुत्यापि वायुयज्ञयोरेकत्वमाह॥ एष ह यन्निति॥
विनापि वायुं शुद्धिः सिध्यतीत्याशंक्याह॥ न हीति॥ अचलतो विहितक्रियामननुतिष्ठत इति यावत् शुद्धिर्नाम दोषनिरासः स च निषिद्धप्र

एष ह वै एष वायुर्योऽयं पवते यज्ञो ह वा इति प्रसिद्धार्थावद्योतकौ निपातौ वायुप्रतिष्ठो हि यज्ञः प्रसिद्धः श्रुतिषु॥ स्वाहा वा
तेधा॥ अयं वै यज्ञो योऽयं पवत इत्यादिश्रुतिभ्यो वात एव हि चलनात्मकत्वात्क्रियासमवायी वात एव यज्ञस्यारंभको वातः प्र
तिष्ठितश्च श्रवणादेष ह यन्गच्छन् चलन्निदं सर्वं जगत्पुनाति पावयति शोधयतीति न ह्यचलतः शुद्धिरस्ति दोषनिरसनं च च

एष ह यन्निदँ सर्वं पुनाति यदेष यन्निदँ सर्वं पुनाति तस्मादेष एव यज्ञस्तस्य मनश्च वाक्च वर्तनी तयोर।

लतो हि दृष्टं न स्थिरस्य यद्यस्माच्च यन्नेष इदं सर्वं पुनाति तस्मादेष एव यज्ञो यत्पुनातीति तस्यास्यैवं वि ॥न्यतरां
शिष्टस्य यज्ञस्य वाक्च मन्त्रोच्चारणे व्यापृता मनश्च यथाभूतार्थज्ञाने व्यापृतं ते एते वाङ्मनसे वर्तनी मार्गौ याभ्यां यज्ञस्ताय
मानः प्रवर्तते वर्तनी प्राणा

॥त्यक्तुं प्रकर्षेण त्यक्तुं यतमानस्य सिध्यति॥ न तु निषिद्धक्रियात्यागोदासीनस्य दोषनिरासात्मिका शु
द्धिः संभवति चलनं च वायुस्तस्माद्वायुरेव चलनद्वारा सर्वं जगत्पुनातीत्याह॥ दोषेति॥ वायोरस्तु पावनत्वं प्रकृते किमायातमित्याशंक्याह
॥यद्यस्मादिति॥ वाय्वात्मना गतिविशिष्टस्य यज्ञस्य मार्गद्वयमुपदिशति॥ तस्येति॥ एवं विशिष्टस्य पावनस्य वायोरूपस्येति यावत् यज्ञस्यो
क्तमार्गद्वयवैशिष्ट्ये सोपस्कारमेतदेव वाक्यमुदाहरति॥ प्राणेति॥ प्राणापानाभ्यामुच्छ्वासनिश्वासाभ्यां परिचलने विद्यते यस्यास्तस्या वाच

संपाद्यते मनसा हि ध्यायन् वाचाभिव्याहरन् पूर्वापरीभावेन यज्ञं संपादयतीत्यर्थः ॥ यज्ञस्य मार्गद्वयविशिष्टत्वमुपसंहरति ॥ अनइति ॥ तयो रन्योन्यमुपकार्योपकारभावं दर्शयति ॥ तयोरिति ॥ वाचा सम्यक्प्रयुक्तयेति शेषः संस्कृतायां च वाग्वर्तन्यां तत्रैव यज्ञो निष्पन्नो भवतीत्याह ॥ वा चैवेति ॥ किं तर्हि मनोवर्तन्या संस्क्रियत इत्याशंक्याह ॥ तत्रेति ॥ यज्ञस्य द्वाभ्यां मार्गाभ्यां नीयमानत्वे पूर्वोक्तरीत्या स्थिते सतीति यावन्मनोवर्त न्याः संस्काराभावेऽप्यन्यवायं दर्शयति ॥ अथेत्यादिना मनोवर्तनी ब्रह्मणा वाग्वर्तनी च होतृप्रभृतिभिः संस्कार्येति व्यवस्थान्तरमित्यर्थः ॥

पानपरिचक्षतेऽन्वाहि वाचश्चित्तस्योत्तरोत्तरक्रमो यद्यज्ञ इति हि श्रुतं तत अन्तरं अतो वाङ्मनसाभ्यां यज्ञो वर्तत इति वाङ्म नसे वर्तनी उच्येते यज्ञस्य तयोर्वर्तन्योरन्यतरां वर्तनीं मनसा विवेकज्ञानवता संस्करोति ब्रह्मर्त्विग्वाचा वा वर्तन्या होताध्वर्यु रुद्गातेत्येते त्रयोऽप्यृत्विजोऽन्यतरां वाग्लक्षणां वर्तनीं वाचैव संस्कुर्वन्ति तत्रैवं सति वाङ्मनसे वर्तनी संस्कार्ये यज्ञः स ब्रह्मा

मनसा संस्करोति ब्रह्मा वाचा होताध्वर्युरुद्गातान्यतरां स यत्रोपाकृते प्रातरनुवाके पुरा परिधानीयाया ब्रह्मा व्यववदत्यन्यतरामेव वर्तनीं संस्करोति हीयतेऽन्यतरा ॥ स यथैकपाद्व्रजन्रथो वैकेन चक्रेण वर्तमा

यत्र यस्मिन्काले उपाकृते प्रारब्धे प्रातरनुवाके शस्त्रे पुरा पूर्वं परिधानीयाया ऋचो ब्रह्मैतस्मिन्नन्तरे काले व्यवव दति मौनं परित्यजति यदि तदान्यतरामेव वाग्वर्तनीं संस्करोति ब्रह्मणा संस्क्रियमाणा मनोवर्तनी हीयते विनश्यति छिद्री भवति अन्यतरा स यज्ञो वाग्वर्तन्यैवान्यतरया वर्तितुमशक्नुवन्रिष्यति ॥ कथमिवेत्याह स यथैकपात्पुरुषो व्रजन्नाध्वानं रिष्यति रथो वैकेन चक्रेण वर्तमानो गच्छन्रि

स ब्रह्मेत्यन्वयं सूचयति ॥ ब्रह्मेति ॥ पुनरुक्तिस्तस्य क्रियापदेन संबंधद्योतनार्था ॥ एतस्मिन्नन्तरे काले प्रातरनुवाकशस्त्रमारभ्य तत्परिसमाप्तेरन्तरावस्थायामित्यर्थः ॥ वाचो होत्रादिभिः संस्कार्यत्वमस्तु मनसस्तु ब्रह्मसंस्का र्यत्वं माभूदेतावता यज्ञे किमायातमित्याशंक्याह ॥ स यज्ञ इति ॥ यज्ञभ्रंशमेवाकांक्षाद्वारा उत्पादयति ॥ कथमित्यादिना शेषपयज्ञस्य

यज्ञमार्गो हीति॥ वाग्वर्तनीसंस्काराभावे पि तुल्ये दोषे मौनगुणं दर्शयति॥ अथ पुनरिति॥ तथैव सम्यगनुष्ठातारस्त्विति यावत् तथा स-

एवमस्य यजमानस्य कुब्रह्मणो यज्ञो रिष्यति विनश्यति यज्ञं रिष्यन्तं यजमानोऽनुरिष्यति यज्ञप्राणो हि यजमानोऽतो युक्तो यज्ञरेषे रेषणं तस्य स तं यज्ञमिष्ट्वा तादृशं पापीयान्पापतरो भवत्यथ पुनर्यत्र ब्रह्मा विद्वान्मौनं परिगृह्य वाग्विसर्गमकुर्वन्नास्ते यावत्परिधानीयाया न व्यववदति तथैव सर्वे ऋत्विजः उभे एव वर्तनी संस्कुर्वन्ति न हीयतेऽन्यतरापि किमिवेत्याह पूर्वोक्तविपरीतौ दृष्टान्तौ एवमस्य यजमानस्य यज्ञः स्ववर्तनीभ्यां वर्तमानः प्रतितिष्ठति स्वेनात्मनाऽविनश्यन्वर्तते।

रिष्यन्त्येवमस्य यज्ञो रिष्यति यज्ञꣳ रिष्यन्तं यजमानोऽनुरिष्यति स इष्ट्वा पापीयान्भवत्यथ यत्रोपाकृते प्रातरनुवाके न पुरा परिधानीयाया ब्रह्मा व्यववदत्युभे एव वर्तनी सꣳस्कुर्वन्ति न हीयतेऽन्यतरा स यथोभयपाद्व्रजन्रथो वोभाभ्यां चक्राभ्यां वर्तमानः प्रतितिष्ठत्येवमस्य यज्ञः प्रतितिष्ठति यज्ञं प्रतितिष्ठन्तं यजमानोऽनुप्रतितिष्ठति स इष्ट्वा श्रेयान्भवति॥ १६॥ प्रजापतिर्लोकानभ्यतपत्तेषां तप्यमानानाꣳ रसान्प्रावृहद् ॥ तदूत्यर्थः॥ यज्ञं प्रतितिष्ठन्तं यज-

मानोऽनुप्रतितिष्ठत्येवं मौनविज्ञानविद्ब्रह्मोपेतं यज्ञमिष्ट्वा श्रेयान्भवति श्रेष्ठो भवतीत्यर्थः॥ १६॥ अत्र ब्रह्मणो मौनं विहितं अथ तद्रेषणे ब्रह्मत्वकर्मणि चाथान्यस्मिंश्च होत्रादिकर्मरेषे व्याहृतिहोमः प्रायश्चित्तमिति तदर्थं व्याहृतयो विधातव्या इत्याह॥ प्रजापतिर्लोकानभ्यतपल्लोकानुद्दिश्य तत्र सारं जिघृक्षया ध्यानलक्षणं तपश्चचार तप्यमानानां लोकानां रसान्साररूपान्प्रावृहदुद्धृतवान्जगृहे इत्यर्थः॥ कान् अग्निं रसं पृथिव्याः वायुमन्तरिक्षादादित्यं दिवः पुनरप्येवमेवाग्न्याद्याख्यस्त्रो

तिब्रह्मा चान्ये चर्त्विजो द्वे वर्तन्यौ संस्कुर्वन्त्येवेत्याह तथैवेति॥ वर्तनीद्वयसंस्कारे किं स्यादित्यपेक्षायामाह॥ एवमिति॥ ६॥ नित्यानुष्ठानमु-
क्त्वा नैमित्तिकप्रायश्चित्तविधानार्थमुपक्रमते॥ अत्रेति॥ तद्रेषब्रह्मणो मौनभ्रंशे सतीति यावत् रसान्विशेषतो ज्ञातुं पृच्छति॥ कानिति॥ एवं

तदेव विवृणोति॥भूरिति॥व्याहृति मित्यादिना प्रथमोतः शब्दो यतइत्यस्मिन्नर्थे यद्यक्त इति ऋक् शब्दस्तस्मिन्नुक्त प्रायश्चित्त मेवाकांक्षा पूर्वकं विवृणोति॥कथमित्यादिना क्रियाविशेषणमितियज्ञस्य क्षतं संदधातीतियत्तदृचामेव रसेन संदधातीत्यर्थः॥ओजसा संदधातीति

तपन्तो पि सारं रसं त्रयीं विद्यां जग्राह तां पुनरभ्यतपत्त्रयीं विद्यां तस्यास्तप्यमानाया रसं भूरिति व्याहृतिमृग्भ्यो जग्रा हभुवइति व्याहृतिं यजुर्भ्यः स्वरिति व्याहृतिं सामभ्यो त एव लोकदेववेदरसा महाव्याहृतयो यत एतस्तत्र यज्ञे यद्यदि ऋ। क्तः ऋक्संबंधादृग्भ्य इति रिष्येद्यज्ञः क्षतं प्राप्नुयात् भूः स्वाहेति गार्हपत्ये जुहुयात्सा तत्र प्रायश्चित्तिः कथमृचामे।

ग्निं पृथिव्या वायुमंतरिक्षादादित्यं दिवः स एता स्तिस्रो देवता अभ्यतपत्तासां तप्यमानानां रसान्प्रा वृहदग्नेरृचो वायोर्यजूंषि सामान्यादित्यात्स एतां त्रयीं विद्यामभ्यतपत्तस्यास्तप्यमानाया रसा न्प्रावृहद्भूरित्यृग्भ्यो भुवइति यजुर्भ्यः स्वरिति सामभ्यस्तद्यदृक्तो रिष्येत् भूः स्वाहेति गार्हपत्ये जुहु। यादृचामेव तद्रसेनर्चां वीर्येणर्चा यज्ञस्य विरिष्टं संदधात्यथ यदि यजुष्टो रिष्येद्भुवः स्वाहेति दक्षि णाग्नौ जुहुयाद्यजुषामेव तद्रसेन यजुषां वीर्येण यजुषां यज्ञस्य विरिष्टं संदधात्यथ यदि सामतो रि

ष्येदिति क्रियाविशेषणं रसेनर्चां वीर्येणौजसा ऋचां यज्ञस्य ऋक्संबंधिनो यज्ञस्य विरिष्टं विच्छिन्नं क्षतरूपमात्म नं संदधाति संधत्तेऽथ यदि यजुष्टो यजुर्निमित्तं रिष्येद्भुवः स्वाहेति दक्षिणाग्नौ जुहुयात्तथा सामनिमित्ते रिष्येत्स्वः स्वा हेत्याहवनीये जुहुयात्तथा पूर्ववद्यज्ञं संदधाति ब्रह्म निमित्ते तु रेषे त्रिष्वग्निषु तिसृभिर्व्याहृतिभिर्जुहुयात्॥ १॥ १॥

संबंधः तथा च सति यथोक्तसाधने सतीत्यर्थः॥यथा पूर्वस्मिन्प्रायश्चित्ते यज्ञस्य क्षतमिव रसेन होता संदधाति॥तथा द्वितीयतृतीय प्रायश्चित्तयोरपि यजुषां साम्नां च रसेनाध्वर्युरुद्गाता च तत्क्षतं संधत्त इत्याह॥पूर्ववदिति॥होत्राद्यपराधाधीनयज्ञक्षतेप्रायश्चित्तमु

अथ यथोक्तप्रायश्चित्ते लिङ्गं दर्शयति ॥ त्रय्या हीति ॥ ब्रह्मणस्त्रयीसारत्वे प्रमाणमाह ॥ अथ केनेति ॥ साधारणकार्यस्य साधारणसामग्रीज-
न्यत्वनियमाद्देहत्रयसाधारणे ब्रह्मत्वे वेदत्रयसाधारणमेव प्रायश्चित्तं वाच्यं दृष्ट्येको न्यायो दर्शितः ॥ संप्रत्यत्र सैव वेदवाचकत्वप्रसिद्धे
ब्रह्मणः सर्ववेदार्थाभिज्ञस्य ज्ञानमाहात्म्येनैव दोषनिरासान्नान्यत्प्रायश्चित्तं विधेयमिति न्यायान्तरमाह ॥ न्यायान्तरं चेति ॥ वस्तुस्वभाववाच-
कत्वे वैचित्र्यादुत्पन्नस्यापि क्षतस्य केनचित्संधानं भवतीत्यत्र दृष्टान्तानाह ॥ तद्यथेत्यादिना ॥ किं तत्र साधनमिति तद्दर्शयति ॥ क्षारेणेति ॥

त्रय्या हि विद्यायाः सर्वेषां च केन ब्रह्मत्वमित्यनयैव त्रय्या विद्ययेति श्रुतेर्न्यायान्तरं चामृग्यं ब्रह्मत्वनिमित्ते रेषे तद्यथा।
लवणेन सुवर्णं संदध्यात्क्षारेण टङ्कणादिना खरेण मृदुत्वकरं हि तत्सुवर्णेन रजतमशक्यसंधानं संदध्याद्रजतेन तथा त्र-
पु त्रपुणा सीसं सीसेन लोहं लोहेन दारु दारु चर्मणा चर्मबन्धनेनैवमेषां लोकानामासां देवतानामस्यास्त्रय्या विद्याया

स्वाहेत्याहवनीये जुहुयात्साम्नामेव तद्रसेन साम्नां वीर्येण साम्नां यज्ञस्य विरिष्टꣳ संदधाति तद्यथा लव-
णेन सुवर्णꣳ संदध्यात्सुवर्णेन रजतꣳ रजतेन त्रपु त्रपुणा सीसꣳ सीसेन लोहं लोहेन दारु दारु चर्मणैवमे-
षां लोकानामासां देवतानामस्यास्त्रय्या विद्याया वीर्येण यज्ञस्य विरिष्टꣳ संदधाति भेषजकृतो ह वा एष यज्ञो यत्रै-
वंविद्ब्रह्मा भवति ॥ ८ ॥

वीर्येण रसाख्येनौजसा यज्ञस्य विरिष्टं संदधाति भेषजकृतो ह वा एष यज्ञो रोगार्त इव पुमांश्चिकित्सके-
न सुशिक्षितेनैष यज्ञो भवति कोऽसौ यत्र यस्मिन्यज्ञ एवंविद्यथोक्तव्याहृतिहोमप्रायश्चित्तविद्ब्रह्मर्त्विग्भवति स यज्ञ इत्य-

खरे सुवर्णे वह्निसंयुक्ते द्रवीभूते क्षारप्रक्षेपेण टङ्कणादिना मृदुकरणं मिथोऽवयवसंयोजनं संधानं प्रसिद्धमित्यर्थः ॥ रजतं सुवर्णेन स्वर-
सेन तावदशक्यं संधानं तथापि वह्निसंयोगपूर्वकं पूर्ववदेव तत्रापि प्रसिद्धं संधानमित्याह ॥ सुवर्णेनेति ॥ रजतेनेत्यादावपि यथोक्तं द्रष्टव्यं
॥ संदधाति ॥ ब्रह्मेति शेषः ॥ भेषजेनेव कृतः संस्कृत इति यावत् तदेव स्फुटयति ॥ रोगार्त इति ॥ भवति संस्कृत इति शेषः ॥

इतश्चैवंविदाब्रह्मणाभवितव्यमित्याह॥किंचेति॥गाथाशब्दोगायत्र्यादिछंदोव्यतिरिक्तछंदोविषयः॥यतोयतःप्रदेशात्कर्मावर्त्तनंतदु
क्तंविवृणोति॥ऋत्विजामिति॥यत्रयत्रप्रदेशेयज्ञस्यक्षतिरध्वर्युप्रभृतीनामभवत्तत्रतत्रयज्ञस्यक्षतरूपंप्रायश्चित्तेनसंदधानोब्रह्माक।

किंचैषहवाउदक्प्रवणःउदङ्निम्नोदक्षिणोच्छ्रयोयज्ञोभवतिउत्तरमार्गप्रतिपत्तिहेतुरित्यर्थःयत्रैवंविद्ब्रह्माभवत्ये।
वंविदंहवैब्रह्माणमृत्विजंप्रत्येषानुगाथाब्रह्मणःस्तुतिपरायतोयतःआवर्त्ततेकर्मप्रदेशादृत्विजांयज्ञःक्षतीभवंस्तत्त
द्यज्ञस्यक्षतरूपंप्रतिसंदधत्प्रायश्चित्तेनगच्छतिपरिपालयतीत्येतन्मानवोब्रह्मामौनाचरणान्मननाद्वाज्ञानवत्वात्ततो

षहवाउदक्प्रवणोयज्ञोयत्रैवंविद्ब्रह्माभवत्येवंविदꣳहवाएषाब्रह्माणमनुगाथायतोयतआवर्त्ततेतत्त।
द्गच्छतिमानवोब्रह्मैवैकऋत्विक्कुरूनश्वाभिरक्षत्येवंविद्धवैब्रह्मायज्ञंयजमानꣳसर्वाꣳश्चर्त्विजोभि।
रक्षतितस्मादेवंविदमेवब्रह्माणंकुर्वीतनानेवंविदंनानेवंविदं॥१०॥इतिछांदोग्योपनिषदिचतुर्थःप्रपाठ
कः॥४॥

ब्रह्मैवैकऋत्विक्कुरून्कर्तॄन्योद्धॄनारूढानश्वावडवायथाभिरक्षत्येवंविद्धवैब्रह्मायज्ञंयजमानंस
र्वांश्चर्त्विजोभिरक्षतितत्कृतदोषापनयनाद्यतएवंविशिष्टोब्रह्माविद्वांस्तस्मादेवंविदमेवयथोक्तव्याहृत्यादिवि
दंब्रह्माणंकुर्वीतनानेवंविदंकदाचनेतिद्विरभ्यासोऽध्यायपरिसमाप्त्यर्थः॥ ॥इतिश्रीगोविन्दभगवत्पूज्यपादशिष्य
शंकरभगवत्पादकृतौछांदोग्योपनिषद्विवरणेचतुर्थःप्रपाठकःसमाप्तः॥

तत्परिपालयतीतिसंबंधः॥ऋत्विग्ब्रह्मणिमा
नवशब्दप्रवृत्तौनिमित्तद्वयमाह॥मौनेति॥ज्ञानातिशयःतच्छब्दार्थःकर्तॄनभिरक्षतीतिसंबंधःउक्तमर्थंदृष्टांतेनप्रकटयति॥योद्धॄनित्यादि
नामकरणार्थमुपसंहरति॥एवमिति॥ ॥इतिश्रीभगवदानंदज्ञानकृतायांछांदोग्यभाष्यटीकायांचतुर्थोध्यायः॥ ६ ॥ ४ ॥ ६ ॥

॥इतिसटीकछांदोग्योपनिषद्भाष्यस्यचतुर्थोध्यायः समाप्तः॥ ४

छां॰भा॰ १

॥श्रीगणेशाय नमः॥ वृत्तमनूद्य वर्तिष्यमाणस्याध्यायस्य संगतिं संगिरते॥ सगुणेति॥ विद्यान्तरं पञ्चाग्निविद्यातिरिक्ता सगुणविद्या तच्छीलि
नां तन्निष्ठानामिति यावत् तामेव गतिमर्चिरादिलक्षणामित्यर्थः॥ ततो गति इत्यादि तृतीया च विद्याकर्मरहितानामिति शेषः॥ अथ क्रमेण मुक्तिसं
भवादुत्तरा गतिरुच्यतां किमिति दक्षिणा तृतीया च संसारगतिरिति निकृष्टा व्यपदिश्यते तत्राह॥ कष्टतरेति॥ सगुणब्रह्मविद्यावतामर्चिराद्या
गतिमुक्त्वा समुच्चितानामसमुच्चितानां कर्मणां संसारगतिप्रभेदरूपफलत्वक्रमस्य समारंभ इत्यर्थः॥ कर्मविधिश्च धनसंपत्तौ सत्यां भवति तत्संपत्ति
श्च ब्राह्मणस्य श्रेष्ठत्वे सत्येव संभवतीति श्रैष्ठ्यसिद्धये प्राणोपासनं सर्वेणानुकर्तव्यमित्यनन्तरग्रन्थसंगतिं वदन्नस्य संगतिं करोति॥ प्राणः श्रेष्ठ इत्यादि

सगुणब्रह्मविद्याया उत्तरा गतिरुक्ताऽथेदानीं पञ्चमेऽध्याये पञ्चाग्निविदो गृहस्थस्योर्ध्वरेतसां च श्रद्धालूनां विद्यान्तरशीलि
नां तामेव गतिमनूद्याऽन्या दक्षिणादिक्संबन्धिनी केवलकर्मिणां धूमादिलक्षणा पुनरावृत्तिरूपा तृतीया च ततः कष्टतरा संसार
गतिर्वैराग्यहेतोर्वक्तव्येत्यारभ्यते प्राणः श्रेष्ठो वागादिभ्यः प्राणो वाव संवर्गः प्राणो ब्रह्म प्राण आकाश इत्यादि बहुशोऽतीते ग्रन्थे च

हरिः ॐ यो ह वै ज्येष्ठं च श्रेष्ठं च वेद ज्येष्ठश्च ह वै श्रेष्ठश्च भवति प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च

प्राणग्रहणं कृतं स कथं श्रेष्ठो वागादिषु सर्वैः संहत्यकारित्वाविशेषात्कथं च तस्योपासनमिति तस्य श्रेष्ठत्वादिगुणविधि-
त्सयेदमनन्तरमारभ्यते यो ह वै कश्चिज्ज्येष्ठं च प्रथमं वयसा श्रेष्ठं च गुणै

११ ना॥ प्राणो ब्रह्मेत्यादिवाक्यमादिशब्दार्थः उदाहृतानुदाहृत
श्रुत्यंतरसमुच्चयार्थश्चकारः॥ प्राणस्य वागादिभ्यः श्रैष्ठ्यमुक्तमाक्षिपति॥ स कथमिति॥ सर्वैर्वागादिभिः संहत्य प्राणस्य कार्यकरत्वे सति प
न्नेऽसत्येव कथं तेषु श्रेष्ठो विधीयते तेषामन्यतमस्यैव श्रैष्ठ्यं किं न स्यादित्यर्थः॥ तस्यैवोपास्यतया श्रैष्ठ्यमाशंक्य वागादीनामन्यतमस्योपास्यत्वमपा
स्य प्राणस्यैवोपास्यत्वं महत्त्वाभावादित्याक्षेपान्तरमाह॥ कथं चेति॥ प्राणस्य श्रेष्ठत्वं ज्येष्ठत्वमित्यादिगुणविधानार्थमेव तावत्प्रथममारभ्यते
॥ यो ह वै ज्येष्ठं चेत्याद्यचोद्यं परिहरति॥ प्रथममिति॥ प्राणस्यैवोपासनं न वागादीनामित्येतदनन्तरमारभ्यते अथ ह प्राण उच्चिक्रमिषन्नित्यादि

अ॰ ५

राम १

कोसौज्येष्ठगुणोवेदितव्यइत्यतआह॥फलेनेतिकुतोवागादिभ्योज्येष्ठ्यंप्राणस्यप्रतीतंसर्वैर्हिवागादयःसप्राणाःसहैवगर्भस्थेस्ववृत्तिभागिनो
भवंतितत्राह॥गर्भस्थेहीति॥तत्रगर्भेविवृद्धिदर्शनंप्रमाणयति॥यश्चेति॥कदातर्हिवागादीनांवृत्तिलाभस्तत्राह॥चक्षुरादीति॥प्राणस्यज्येष्ठ्यंप्र
तिपादितंनिगमयति॥इतिप्राणइति॥गुणद्वयमुपास्यत्वायदर्शितंनिगमयति॥अतइति॥तदर्थत्वेनैवगुणांतरंदर्शयति॥योहवाइति॥वसुमत्त

रभ्यधिकंवेदसज्येष्ठश्चहवैश्रेष्ठश्चभवति॥फलेनपुरुषंप्रलोभ्याभिमुखीकृत्याहप्राणोवावज्येष्ठश्चवयसावागादिभ्योग
र्भस्थेपिपुरुषेप्राणस्यवृत्तिर्वागादिभ्यःपूर्वंलब्धात्मिकाभवति॥यथागर्भोविवर्धतेचक्षुरादिस्थानावयवनिष्पत्तौसत्यांप
श्चाद्वागादीनांवृत्तिलाभइतिप्राणोज्येष्ठोवयसाभवति॥श्रेष्ठत्वंतुप्रतिपादयिष्यतिसुहयइत्यादिनिदर्शनेनातःप्राणएवज्ये
ष्ठश्चश्रेष्ठश्चास्मिन्कार्यकरणसंघाते॥योहवैवसिष्ठंवस्तृतममाच्छादयितृतमंवसुमत्तमंवायोवेदसतथैववसिष्ठोहभव

योहवैवसिष्ठंवेदवसिष्ठोहस्वानांभवतिवाग्वाववसिष्ठोयोहवैप्रतिष्ठांवेदप्रतिहतिष्ठत्यस्मिंश्चलोकेऽमु
ष्मिंश्चचक्षुर्वावप्रतिष्ठायोहवैसंपदंवेदसंहास्मैकामाःपद्यंतेदैवाश्चमानुषाश्चश्रोत्रंवावसंपद्योहवाआयतनं

तिस्वानांज्ञातीनांकस्तर्हिवसिष्ठइत्याहवाग्वाववसिष्ठोवाग्मिनोहिपुरुषावसंतिअभिभवंत्यन्यान्वसुमत्तमाश्चातोहवा
गवसिष्ठोयोहवैप्रतिष्ठांवेदसचास्मिन्लोकेमुष्मिंश्चपरेप्रतितिष्ठतिहतर्हिकाप्रतिष्ठेत्याहचक्षुर्वावप्रतिष्ठाचक्षुषाहिपश्य
न्समेचदुर्गेचप्रतितिष्ठतियस्मादतःप्रतिष्ठाचक्षुर्योहवैसंपदंवेदतस्माअस्मैदैवाश्चमानुषाश्चकामाःसंपद्यंतेहतर्हिका
संपदित्याहश्रोत्रंवावसंपद्यस्मा ॥मेधनवत्वादन्येषांनिवासकारणमित्यर्थः॥तथैवेत्युपासनानुसारेणेतियावत्वसिष्ठोहभवतीतिवा
सयितावेत्यर्थः॥वाचोवसिष्ठत्वंसमर्थयते॥वाग्मिनोहीति॥वसुमत्तमाश्चतेनान्यान्निवासयंतीतिशेषः॥गुणांतरमाध्यानायोपदिशति॥योहेति॥
प्रतिष्ठात्वंचक्षुषोविशदयति॥चक्षुषाहीति॥गुणांतरमाह॥योहवाइति॥दैवाःकामाःस्वर्गादयोवामानुषाःपश्वादयःश्रोत्रस्यसंपत्त्वंसाधयति॥य

छां·भा· २ ॥ इत्येवं यस्मात्तस्मादिति योजना॥ संप्रति गुणांतरमाह॥ यो हेति॥ कथं पुनरायतनत्वं मनसः सिद्धमित्यत आह॥ इन्द्रियोपहृतानामिति॥ यथोक्ता गुणा मुख्यप्राणगामिनो न प्रत्येकं वागादिषु भवंतीति वक्तुमाख्यायिकां प्रणयति॥ अथेति॥ कंचिद्विराजं कश्यपादीनामन्यतमं वेत्यर्थः॥ शरी- ॥ अ· ५

श्रोत्रेण वेदा गृह्यंते तदर्थविज्ञानं च ततः कर्माणि क्रियन्ते ततः कामसंपदित्येवं कामसंपद्धेतुत्वात् श्रोत्रं वाव संपद्यो ह वा आयतनं वेदायतनं ह स्वानां भवति आश्रयो भवतीत्यर्थः॥ किं तदायतनमित्याह मनो ह वा आयतनं इन्द्रियोपहृतानां विषयाणां भोक्त्रर्थानां प्रत्ययरूपाणां मन आयतनमाश्रयोऽतो मनो ह वा आयतनमित्युक्तं॥ अथ ह प्राणा एवं यथोक्तगुणाः संतोऽहंश्रेयसि अहंश्रेयानस्म्यहंश्रेयानस्मीत्येतस्मिन्प्रयोजने व्यूदिरे नाना विरुद्धं चोदिरे उक्तवंतस्ते ह ते हैवं विवदमाना आत्मनः श्रेष्ठत्वविज्ञानाय प्रजापतिं पितरं जनयितारं कंचिदेत्योचुरुक्तवंतो हे भगवन्को नोऽस्माकं मध्ये श्रेष्ठोऽभ्यधिको गुणैरित्ये-

वेदायतनꣳ ह स्वानां भवति मनो ह वा आयतनम॥ अथ ह प्राणा अहꣳश्रेयसि व्यूदिरेऽहꣳश्रेयानस्म्यहꣳश्रे-
यानस्मीति॥ ते ह प्राणाः प्रजापतिं पितरमेत्योचुर्भगवन्को नः श्रेष्ठ इति तान्होवाच यस्मिन्व उत्क्रान्ते शरीरं पापिष्ठतर-
मिव दृश्येत स वः श्रेष्ठ इति॥ सा ह वागुच्चक्राम सा संवत्सरं प्रोष्य पर्येत्योवाच कथमशकतर्ते मज्जीवितुमिति यथा

वं पृष्टवतस्तान्पितोवाच ह यस्मिन्वो युष्माकं मध्ये उत्क्रान्ते शरीरमिदं पापिष्ठमिवातिशयेन जीवतोऽपि समुत्क्रान्तप्राणं ततो-
ऽपि पापिष्ठतरमेवातिशयेन दृश्येत कुणपमस्पृश्यमशुचि दृश्येत स वो युष्माकं श्रेष्ठ इत्यवोचत्काक्वा तद्दुःखं परिजिहीर्षु-
स्तथोक्तेषु पित्रा प्राणेषु सा ह वागुच्चक्रामोत्क्रान्तवती सा चोत्क्रम्य संवत्सरमात्रं प्रोष्य स्वव्यापारान्निवृत्ता सती पुनः पर्येत्ये-
तरान्प्राणानुवाच कथं केन प्रकारेणाशकत शक्तवंतो यूयं मदृते मां

रस्य पापिष्ठत्वं पापकार्यप्रधानत्वं इवशब्दोऽवधारणार्थः॥ उक्तमेवार्थं संक्षिप्याह॥ कुणपमिति॥ त्यक्तप्राणं शवरूपमिति यावत् ननु प्रजापतिः सर्वज्ञो मुख्यमेव प्राणं किमिति श्रेष्ठं नाभिवदतीत्यत्राह॥

राम २

वागादीनां दुःखं तत्परिहर्तुमिच्छन्प्रजापतिः स्वरभंगोपायविशेषेणाश्रेष्ठमुक्तवानुत्क्रमितेत्यर्थः॥ अन्यदित्यस्य विषयमाह॥ चक्षुरिति॥ बा
लानामपि बहिरंतरिंद्रियव्यापारविशेषात्कथममनस्त्वमिति विशेषणमत आह॥ अरूढेति॥ परीक्षितेषु श्रेष्ठतारहितेषु निरूप्य निश्चितेऽस्मिन्निति याव
त्॥ पदनशीलाः पादाः तेषां संहतिः पड्वीशस्तस्याः शंकवो नियामकाः शंकवो वर्णविकारस्त्वार्दसः॥ नान्यथात्मानं स्थापयितुं युगपदुत्पाटयेदेवेति॥ ह

विनाजीवितुं धारयितुमात्मानमिति॥ तिष्ठेत्युपैव यथा कलादित्यादि॥ कलामूकाः यथा लोके अवदंतो वाचा जीवंति॥ कथं प्रा
णंतः प्राणेन पश्यंतश्चक्षुषा शृण्वंतः श्रोत्रेण ध्यायंतो मनसा सर्वकरणचेष्टां कुर्वंत इत्यर्थः॥ एवं वयमजीविष्मेत्यर्थः॥
आत्मनोऽश्रेष्ठतां प्राणेषु ज्ञात्वा प्रविवेशाह वाक् पुनः स्वव्यापारे प्रवृत्ता बभूवेत्यर्थः॥ समानमन्यत्॥ चक्षुर्होच्चक्राम श्रो
त्रं होच्चक्राम मनो होच्चक्रामेत्यादि यथा बाला अमनसोऽप्ररूढमनस इत्यर्थः॥ एवं परीक्षितेषु वागादिषु ध्यानंतरं ह समुत्स्य:

कला अवदंतः प्राणंतः प्राणेन पश्यंतश्चक्षुषा शृण्वंतः श्रोत्रेण ध्यायंतो मनसैवमिति प्रविवेश ह वाक्॥ च
क्षुर्होच्चक्राम तत्संवत्सरं प्रोष्य पर्येत्योवाच कथमशकत मदृते जीवितुमिति यथांधा अपश्यंतः प्राणंतः प्रा
णेन वदंतो वाचा शृण्वंतः श्रोत्रेण ध्यायंतो मनसैवमिति प्रविवेश ह चक्षुः॥ श्रोत्रं होच्चक्राम तत्संवत्सरं प्रोष्य

प्राण उत्क्रमिष्यन्नुत्क्रांतुमिच्छन्किमकरोदित्युच्यते॥ यथा लोके सुहयः शोभनोऽश्वः॥ पड्वीशशंकून्पादबंधनकी
लान्परीक्षणायारूढेन कशयाहतः सन्संखिदेत्समुत्खनेत्समुत्पाटयेदेवमितरान्वागादीन्प्राणान्समखिदत्समुद्
नवान्॥ ते प्राणाः संचालिताः सन्तः स्वस्थाने स्थातुमसहमाना अभिसमेत्य मुख्यं प्राणं तमूचुः॥ हे भगवन् हे अधि
भवनः स्वामी यस्मात्त्वमस्माकं श्रेष्ठोऽसि मा चास्माद्देहादुत्क्रमीरिति॥ अथ हैनं वागादयः ((स्थानमुत्काराद्रीति कमाह॥

एवमिति॥ मयि श्रेष्ठत्वधीर्युष्माकमस्तीति कथं ज्ञातुं शक्यमित्याशंक्याह॥ अथेति॥ वचनं प्रश्नपूर्वकं प्रकटयति॥

छां·भा· ३

कथमित्यादिना॥ क्रियाविशेषणत्वमेव विशदयति॥ यद्वसिष्ठत्वेति॥ वसिष्ठत्वेन गुणेनाहं गुणवानस्मीति यत्तत्त्वमेवेति योजना॥ अनंत
रवाक्यमादाय व्याचष्टे त्वमित्यादिना॥ तद्वसिष्ठ इति समस्तं पदमिति गृहीत्वा व्याख्याय पक्षांतरमाह॥ अथवेति॥ यच्छब्दवदित्यपरार्थः॥
अहं वसिष्ठत्वगुणोऽस्मीति यत्तत्त्वमेव वसिष्ठत्वगुणोऽसीति कथमिदानीमुच्यते अन्यथा हि पूर्वमभिधानं तवासीदित्याशंक्याह॥ त्वत्कृत इति॥

प्राणस्य श्रेष्ठत्वं कार्येणापादयन्नाह बलिमिव हरन्तो राज्ञो विशः कथं वाक्यादयो वाचयदहं वसिष्ठोऽस्मि यदिति क्रिया
विशेषणं यद्वसिष्ठत्वगुणास्मीत्यर्थः॥ त्वं तद्वसिष्ठस्तेन वसिष्ठत्वगुणेन त्वं तद्वसिष्ठोऽसि त्वत्कृतस्त्वमित्यर्थः॥ अथवा त
च्छब्दोऽपि क्रियाविशेषण एव त्वं त्वत्कृतस्त्वदीयोऽसौ वसिष्ठगुणोऽज्ञानान्ममेति मयाभिमत इत्येतत्तथा नेतरेष्वप्ययोज्यं चक्षुः

पर्येत्योवाच कथमशकतर्ते मज्जीवितुमिति यथा बधिरा अशृण्वन्तः प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षु
षा ध्यायन्तो मनसैवमिति प्रविवेश ह श्रोत्रं मनो होच्चक्राम तत्संवत्सरं प्रोष्य पर्येत्योवाच कथमशकतर्ते म
ज्जीवितुमिति यथा बाला अमनसः प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेणैवमिति प्रविवेश
ह मनोऽथ ह प्राण उच्चिक्रमिषन्स यथा सुहयः पड्वीशशङ्कून्संखिदेदेवमितरान्प्राणान्समखिदत्तं हाभि
समेत्योचुर्भगवन्नेधि त्वं नः श्रेष्ठोऽसि मोत्क्रमीरित्यथ हैनं वागुवाच यदहं वसिष्ठोऽस्मि त्वं तद्वसिष्ठोऽसीत्य

श्रोत्रमनः सुप्तते रिदं वचो युक्तमिदं वागादिभिर्मुख्यं प्राणं प्रत्यभिहितं यस्मान्न वै लोके वाचो न चक्षूंषि न श्रोत्राणि
न मनांसीति वागादीनि करणान्याचक्षते लौकिका आगमज्ञा वा किं तर्हि प्राणा इत्येवाचक्षते कथयन्ति॥ ॥ ॥

वाचि दर्शितं न्यायं चक्षुरादावतिदिशति॥ तथेति॥ वागादिवचनादुक्त्या यमाणाधीनता वागादेः श्रुतिरेव कथयतीत्युत्तरग्रन्थं न वै वाच इत्यादे
स्तात्पर्यमाह॥ श्रुतेरिति॥ तदेव वचसोपस्कारं आकरोति॥ युक्तमित्यादिना॥ यदि सर्वाण्येव करणानि वाकृतंत्राणि स्युस्तर्हि वाच इत्येवतानि ब्रूयुः

अ· ५

रम ३

वदेयुर्नैवैवं वदन्ति प्राणादूतित्ता निकथ्यन्ते तस्मात्प्राणपारतन्त्र्यं करणानां सिद्धमित्यर्थः॥ वागादिभिरुक्तं तद्वसिष्ठोऽसीत्यादि प्राणस्यैव यथोक्तगुणवत्त्वोऽपत्त्वं प्रकरणार्थः॥ साक्षादुपसंहाराद्दर्शनादुपसंजिहीर्षतीत्युक्तं॥ आख्यायिकायां यथाश्रुतमर्थमाक्षिपति॥ नन्विति॥ यथा पुरुषाश्चेतनावन्तो विवदमाना अस्पर्धन्ते तथा वागादयोऽचेतनाः स्वकीयश्रेष्ठत्वसिद्ध्यर्थं विप्रतिपन्ना मिथः स्पर्धन्त इति न वयुक्तं अचेतनेषु स्पर्धादेरदर्शनादित्यर्थः॥ किंच वाग्व्यतिरिक्तानामन्योन्यं वचनमेवानुचितं वचनस्य वाग्व्यापारत्वादित्याह॥ नहीति॥ किंच वागादीनां देहात्

यस्मात्प्राणो ह्येवैतानि सर्वाणि वागादीनि करणजातानि भवन्त्यतो मुख्यं प्राणं प्रत्यनुरूपमेव वागादिभिरुक्तमिति प्रकरणार्थमुपसंजिहीर्षति॥ ननु कथमिदं युक्तं चेतनावन्तद्वत्पुरुषा अहं श्रेष्ठतायै विवदन्तोऽन्योन्यं स्पर्धेयुरिति॥ नहि चक्षुरादीनां वाचं मत्याख्याय प्रत्येकं वदनं संभवति॥ तथापगमो देहात्पुनः प्रवेशो ब्रह्मगमनं प्राणस्तुतिर्वोपपद्यते तत्राग्न्यादिचेतनावद्देवता

यो हैनं चक्षुरुवाच यदहं प्रतिष्ठास्मि त्वं तत्प्रतिष्ठासीत्यथ हैनं श्रोत्रमुवाच यदहं संपदस्मि त्वं तत्संपदसीत्यथ हैनं मन उवाच यदहमायतनमस्मि त्वं तदायतनमसीति न वै वाचो न चक्षूंषि न श्रोत्राणि न मनांसीत्याचक्षते प्राणा इत्येवाचक्षते प्राणो ह्येवैतानि सर्वाणि भवति॥ १५॥ अधिष्ठितत्वाद्वागादीनां चेतनावत्त्वं तावत्सिद्धमागमतः॥ नार्किकसमयविरोध इति चेद्देहे एकस्मिन्ननेकचेतनावत्त्वेनेश्वरस्य निमित्तकारणत्वाभ्युपगमात्॥ सर्पणाद्ययुक्तमचेतनत्वादि

त्याह॥ तथेति॥ वाशब्दो नहीत्यस्यानुकर्षणार्थः अग्न्यादयश्चेतनावन्तो देवतास्ताभिरधिष्ठितत्वात्तादात्म्याभिप्रायेण वागादीनां चेतनावत्त्वसंभवाद्वदनादिव्यवहारः संभवतीत्यग्निर्वाग्भूत्वा मुखं प्राविशदित्यादिश्रुतिमत्र सूत्रेणोत्तरमाह॥ तत्रेति॥ एकस्मिन्देहे अनेकचेतनावतां प्रसङ्गाविरुद्धानेकाभिप्रायानुविधायित्वेन देहस्योन्मथनप्रसंगादक्रियत्वप्रसंगाद्वा नानेकचेतनाधिष्ठितत्वमेकस्य देहस्य संभवतीति शंकते॥ तार्किकेति॥ किमेकशरीरमनेकचेतनाधिष्ठितं न भवति किं वा तैर्निर्णीतकर्तृभोक्त्रधिष्ठितमिति विकल्प्याद्यं दूषयति॥ नेति॥ १॥ १॥

104

अस्तिहिपरमतेशरीरस्यजीवाधिष्ठितस्यैवेश्वराधिष्ठितत्वंतथाचैकशरीरमनेकचेतनाधिष्ठितंनभवतीतिनास्तिसेश्वरवादिनांपक्षे।
त्यर्थः॥संग्रहवाक्यंविवृणोति॥तावदिति॥अचेतनानांचेतनाधिष्ठितानामेवप्रवृत्तिरित्यत्रदृष्टान्तमाह॥रथादिवदिति॥द्वितीयंप्रत्याह
॥नचेति॥कार्यकरणानामधिष्ठातृदेवतानांतर्हितत्कार्यकरणानांकिमधिष्ठातृदेवतान्तरमितिपृच्छति॥किन्तर्हीति॥देवताकार्यकरणा
नामधिष्ठातृदेवतान्तरमिष्टंचेदनवस्थास्यादितिमन्वानंप्रत्याह॥कार्यकरणवतीनामिति॥शाकल्यब्राह्मणमनुसरन्नाह॥प्राणेति॥नत्र-
भूयस्योदेवताःकथंतासांप्राणलक्षणैकदेवताप्रभेदत्वमतआह॥अध्यात्माधिभूताधिदैवानांभेदकोटिभिर्विकल्पोयासामितिविग्रहः॥

येतावदीश्वरमभ्युपगच्छन्तितार्किकास्तेमनआदिकार्यकरणानामाध्यात्मिकानांबाह्यानांचपृथिव्यादीनामीश्वराधि-
ष्ठितानामेवनियमेनप्रवृत्तिमिच्छन्तिरथादिवत्नचास्माभिरन्याश्चेतनावत्योदेवताअध्यात्मेभ्योऽभ्युपगम्यन्ते॥
किन्तर्हिकार्यकरणवतीनांहितासांप्राणैकदेवताभेदानामध्यात्माधिभूताधिदैवभेदकोटिविकल्पानामध्यक्षतामात्रेण।
नियन्तेश्वरोऽभ्युपगम्यते॥सह्यकरणःपाणिपादोजवनोगृहीतापश्यत्यचक्षुःसशृणोत्यकर्णइत्यादिमन्त्रवर्णात्॥हिरण्य-
गर्भंपश्यतजायमानंहिरण्यगर्भंजनयामासपूर्वमित्यादिचश्वेताश्वतरीयाःपठन्ति॥भोक्ताकर्मफलसंबन्धीदेहवद्विलक्ष-
णोजीववदितिवक्ष्यामः॥वागादीनांचेहसंवादःकल्पितो (( नियन्तृत्वप्रयुक्तव्यापारवत्त्वंवारयितुंविशिनष्टि॥अध्यक्षतामात्रेणे-
ति॥अथेश्वरस्यापिनियन्तृत्वात्कार्यकरणवत्त्वंदेवतानामिवस्यादितिचेन्नेत्याह॥सहीति॥अकरणत्वमकार्यत्वस्याप्युपलक्षणंतत्रश्रुतिं
प्रमाणयति॥अपाणीति॥आदिपदेननतस्यकार्यंकरणंचविद्यतइत्यादिमन्त्रवर्णोगृहीतः॥सूत्रात्माहिरण्यगर्भःसाचैकासमष्टिरूपा
देवतान्तरवस्थाभेदानांदेवतानामीश्वरोनियन्तेत्युक्तं॥तत्रप्रमाणमाह॥हिरण्यगर्भमिति॥आदिशब्देनहिरण्यगर्भःसमवर्ततेत्यादिर्गृ-
ह्यते॥देवतानामीश्वरस्यचास्मिन्देहेभोक्तृत्वाभावेकस्यभोक्तृत्वमित्यतआह॥भोक्तेति॥नहिविलक्षणोदेवतेश्वराभ्यांव्यावृत्तइतिभाव-
त्॥वागादिशब्दवाच्याश्चेतनावत्योदेवताइतिस्वीकृत्याख्यायिकायाःस्वार्थनिरूपणमुक्तमिदानींतस्यतात्पर्यमाह॥वागादीनांचेति॥

अ·

विदुष इति।। यथोक्ताकृत्स्नानां दृष्टान्तेन स्पष्टयति।। यथेत्यादिना तेनोक्ता इत्युक्तमेव व्यनक्ति।। एकैकश्येनेति।। विदुष इत्यादिनोक्तं प्रयोजनं प्रकटयति।। कथं नामेति।। विद्वान् प्राणश्रेष्ठतां नाम प्रतिपद्येतेति संबन्धः।। प्रतिपत्तिप्रकारं संक्षिपति।। वागादीनामिति।। फलवती कस्मेति शेषः।। इदमर्थे श्रुतिमनुग्राहकत्वेन दर्शयति।। तथा चेति।। १।। वागादीनां स्वामी श्रेष्ठ्यादिगुणः प्राणोऽस्मीति विद्यादिति प्रधानविद्यासु।

विदुषोऽन्वयव्यतिरेकाभ्यां प्राणश्रेष्ठतानिर्द्धारणार्थेयं यथा लोके पुरुषा अन्योन्यमात्मनः श्रेष्ठतायै विवदमानाः कंचिद्गुणविशेषाभिज्ञं पृच्छन्ति को नः श्रेष्ठो गुणैरिति तेनोक्ता एकैकश्येनेदं कार्यं साधयितुमुद्यच्छत येनेदं कार्यं साध्यते स वः श्रेष्ठ इत्युक्तास्तथैवोद्यच्छन्त आत्मनोऽन्यस्य वा श्रेष्ठतां निर्द्धारयन्ति।। तथेमं संव्यवहारं वागादिषु कल्पितवती श्रुतिः।। कथं नाम विद्वान्वागादीनामेकैकस्याभावेऽपि जीवनं दृष्टं न तु प्राणस्येति प्राणश्रेष्ठतां प्रतिपद्येत इति।। तथा च श्रुतिः कौषीत

स होवाच किं मेऽन्नं भविष्यतीति यत्किंचिदिदमाश्वभ्य आशकुनिभ्य इति

कानां जीवति वागपेतो मूकान्हि पश्यामो जीवति चक्षुरपेतोऽन्धान्हि पश्यामो जीवति श्रोत्रापेतो बधिरान्हि पश्यामो जीवति मनोऽपेतो बालान्हि पश्यामो जीवति बाहुच्छिन्नो जीवत्यूरुच्छिन्न इत्याद्या।। १।। स होवाच मुख्यः प्राणः किं मेऽन्नं भविष्यतीति।। मुख्यं प्राणं प्रष्टारमिव कल्पयित्वा वागादीन्प्रतिवक्तॄनिव कल्पयन्ती श्रुतिराह यदिदं लोकेऽन्नजातं प्रसिद्धमाश्वभ्यः श्वभिः सहाशकुनिभ्यः सह शकुनिभिः सर्वप्राणिनां यदन्नं तत्तवान्नं होचुर्वागादय इति प्राणस्य सर्वमन्नं प्राणोऽत्ता सर्व। १ स्यान्नस्येत्येवं प्रति

पदिश्यत दर्शनांगभूतान्नवासोदृष्टिविधानार्थं प्रक्रमे प्रथममन्नदृष्टिं विधातुं प्रसंगं प्रकुरुते।। स होवाचेति।। मुख्यस्य प्राणस्य प्रष्टृत्वं वागादीनां प्रतिवक्तृत्वं काल्पनिकमित्याह।। मुख्यमिति।। यदिदमित्युक्तमेव चेयात्सदं वाक्यार्थे कल्पनार्थं यदन्नमित्यत्रानूद्यते।। तद्वा एतदित्यादिनोत्तरवाक्यस्य पूर्ववाक्यादर्थभेदाभावमाशंक्याह।। प्राणस्येति।। प्राणशब्दं विहायाऽनःशब्दप्रयोगे तात्पर्यं।

सर्वप्रकारेति॥ अनचेष्टायामिति धातुजस्यानशब्दस्योपादानं सर्वप्रकारचेष्टायाः प्राणस्य व्याप्तिगुणप्रदर्शनार्थं तथा न्वयः कोपि दृह्रति
शोषयति प्लावयति वा स सर्वोपि प्राण एवेति युक्तं प्राणस्यानइतिनामेत्यर्थः॥ प्रत्यक्षं पूर्वोक्तधातुजन्मनामेति यावत् उक्तमेवार्थं समर्थयु
ति॥ प्रादीति॥ अनशब्दस्येति शेषः॥ न प्राणस्य सर्वचेष्टाभिरित्येवकारार्थः॥ तथा च प्राणादिशब्दोपादाने विशेषणाभिरेवेति स्थिते सती
त्यर्थः॥ अनइति॥ प्रत्यक्षमिदं नाम सर्वान्नानामत्तुर्नामग्रहणमिति संबंधः॥ तदेव व्याचष्टे॥ सर्वान्नानामिति॥ ततश्च प्राणशब्दस्य प्राणवि

स्व्यापिकारूपाद्व्यावृत्य स्वेन श्रुतिरूपेणाहनतेह्वै एतद्यत्किंचिल्लोके प्राणिभिरन्नमद्यते अनस्य प्राणस्य तदन्नं प्राणेनैव तद
द्यत इत्यर्थः॥ सर्वप्रकारचेष्टाव्याप्तिगुणप्रदर्शनार्थमन इति प्राणस्य प्रत्यक्षं नाम प्राद्युपसर्गपूर्वत्वे हि विशेषगतिरेवस्या
त्तथा च सर्वान्नानामत्तुर्नामग्रहणमिति नैतिद्रं प्रत्यक्षं नाम अन इति सर्वान्नानामत्तुः साक्षादभिधानं न हवै एवंविदियथोक्तप्रा

होचुस्तद्वा एतदनस्यान्नमनो ह वै नाम प्रत्यक्षं न ह वा एवंविदि किंचनानन्नं भवतीति स होवाच किं मे वासो

णविदि प्राणोहमस्मि सर्वभूतस्थः॥ सर्वान्नानामत्तेति तस्मिन्नेवंविदि ह वै किंचन किंचिदपि प्राणिभिरा द्युसर्वैरनन्नम
नाद्यं न भवति सर्वमेवं विद्यन्नं भवतीत्यर्थः प्राणभूतत्वाद्विदुषः प्राणाद्वा एष उदेति प्राणेस्तमेतीत्युपक्रम्य एवं विदाहवा
उदेति सूर्य एवं विद्यस्तमेतीति श्रुत्यन्तरात्स होवाच पुनः प्राणः पूर्ववदेव कल्पनया किं मे वासो भविष्यतीत्याप इति होचुर्वागा
दयो यस्मात्प्राणस्य वास आपस्तस्माद्वा एतदशिष्यन्तो भोक्ष्यमाणा भुक्तवन्तश्च ब्राह्मणा विद्वांस एतत्कुर्वन्ति ॥ इदं सर्वमन्नं चेत्तद्वि

दुषो भक्ष्याभक्ष्यविभागासिद्धेस्तद्विषयं शास्त्रं विरुध्येतेत्याशंक्याध्यात्मिकरूपं हित्वाधिदैविकेन रूपेण तस्य सर्वान्नत्वे विभागशास्त्रस्या
ध्यात्मिकपरिच्छेदविषयत्वेनाविरुद्धमित्याह॥ प्राणभूतत्वादिति॥ प्राणभूतो विद्वानित्यत्र श्रुत्यन्तरं संवादयति॥ प्राणादिति॥ प्राणवियोगत्वे
नान्नदृष्टिरूपदिष्टा संप्रति तदंगत्वेन वासोदृष्टिं प्रस्तौति॥ स होवाचेति॥ अत्रापि प्राणस्य प्रष्टृत्वं वागादीनां प्रतिवक्तृत्वं च कल्पितमेवेत्याह

वासोदृष्टिफलमाचष्टे॥ लंभुक इति॥ अनग्नो ह भवतीत्यस्य पौनरुक्त्यमाशंक्यार्थविशेषमाह॥ वास इति॥ आचमनांतरं प्राणविदो वि॥धीयते एवंविदशिष्यन्नाचामेदिति श्रुतेरित्याशंक्याह॥ भोक्ष्यमाणस्येति॥ आदिपदेन प्रश्नप्रतिवचनेगृह्येते॥ सर्वप्राणिभोग्यमन्नेतस्यान्न॥मिति दृष्टिवदाचमनीयास्वप्सु तस्य विधीयते वासोदृष्टिरित्युक्तव्यतिरेकद्वारा विवृणोति॥ यदीति॥ तादर्थ्येनानग्नतार्थत्वेनेति यावदशपू

किं अद्भिर्वासःस्थानीयाभिः पुरस्ताद्भोजनात्प्रथममुपरिष्टाच्च भोजनादूर्ध्वं च परिदधति परिधानं कुर्वंति मुख्यस्य प्राणस्य लंभुको लंभनशीलो वासो ह भवति वाससां लब्धैव भवतीत्यर्थः॥ अनग्नो भवति॥ वाससो लंभुकत्वेनार्थसिद्धैवानग्नतेत्यनग्नो ह भवतीत्युत्तरीयवान्भवतीत्येतत्॥ भोक्ष्यमाणस्य भुक्तवतश्च यदाचमनं शुद्ध्यर्थं विज्ञातं तस्मिन्प्राणस्य वास इति दर्शनमात्रमिह विधीयते अद्भिः परिदधातीति नाचमनांतरं॥ यथा लोकिकैः प्राणिभिरद्यमानमन्नं प्राणस्येति॥

भविष्यतीत्याप इति होचुस्तस्माद्वा एतदशिष्यंतः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति लंभुको ह वासो भवत्यनग्नो ह भवति॥

दर्शनमात्रं तद्वत्किं मेऽन्नं किं मे वास इत्यादि प्रश्नप्रतिवचनयोस्तुल्यत्वात्॥ यद्याचमनमपूर्वं तादर्थ्येन क्रियेत तदा कृम्यादान्नमपि प्राणस्येति भक्ष्यत्वेन विहितं स्यात्तुल्ययोर्विज्ञानार्थयोः प्रश्नप्रतिवचनयोः प्रकरणस्य विज्ञानार्थत्वादर्धजरतीयोऽन्याय्यो न युक्तः कल्पयितुं॥ यत्तु प्रसिद्धमाचमनं प्रायत्यार्थं प्राणस्यानग्नतार्थं च न भवतीत्युच्यते न तत्तथा वयमाचमनमुभयार्थं ब्रूमः॥ किं तर्हि प्रायत्यार्थाचमने प्राणस्यानग्नतादृष्टिरेव विधीयते सर्वान्नभक्षणस्य प्रमाणस्य विरुद्धत्वादिति तु अ

पूर्वमाचमनमविरोधाद्विधीयतामित्याशंक्याह॥ तुल्ययोरिति॥ एकस्याचमनस्योभयार्थत्वमनग्नतार्थत्वं चवक्रमशक्यं विरोधादित्याशंक्याह॥ यत्त्विति॥ विरोधो यथा स्यात्तथेति यावत्तर्हि कीदृगाचमनं विवक्षितमित्याह॥ किं तर्हीति॥ प्रयतस्य भावः प्रायत्यं तदर्थं यदाचमनं क्रिया तत्साधनभूतास्वप्सु वासःसंकल्पनं क्रियांतरमत्र विधित्सितमित्याह॥ प्रायत्येति क्रियाभेदफलितमाह॥ ० ॥ २ ॥ ० ॥

तत्रेति॥ अन्यार्थो वासस्तु अन्यार्थत्वविधाने प्रमाणविरोधाद्विधियोगेन वासोऽर्थमाचमनानन्तरमेव विधेयं तत्र चानग्नतार्थत्वचिंतनमु-
चितमिति शङ्कार्थः॥ वासोऽर्थापूर्वाचमनविधाने तत्रानग्नतार्थत्वदृष्टिविधाने च वाक्यभेदः प्रसंगात्प्रसिद्धाचमनसाधनभूतास्त्वप्सु
वासोदृष्टिपरमेव वाक्यमित्युत्तरमाह॥ नेत्यादिना॥ वासोऽर्थत्वे अन्यार्थत्वं दृष्ट्यर्थत्वं द्वयोक्ते प्रमाणस्यैकैकस्य वाक्यस्याप्रमाणत्व

मनसाधनभूता आपः प्राणस्य वास इति दर्शनं चोद्यत इति ब्रूमः॥ तत्राचमनस्योभयार्थत्वप्रसंगदोषचोदनानु-
पपन्ना वासोऽर्थ एवाचमने तद्दर्शनं स्यादिति चेन्न वासोज्ञानार्थवाक्ये वासोऽर्थापूर्वाचमनविधाने तत्रानग्नतार्थत्व-
दृष्टिविधाने च वाक्यभेदः आचमनार्थत्वमन्यार्थत्वं चेति प्रमाणाभावात्॥ तदेतत्प्राणदर्शनं स्तूयते॥ कथं तद्धैतत्प्राण-
दर्शनं सत्यकामो जाबालो गोश्रुतये नाम्ना वैयाघ्रपद्याय व्याघ्रपदोऽपत्यं वैयाघ्रपद्यः॥ तस्मै गोश्रुत्याख्यायोक्त्वोवाच।

तद्धैतत्सत्यकामो जाबालो गोश्रुतये वैयाघ्रपद्यायोक्त्वोवाच यद्यप्येतच्छुष्काय स्थाणवे ब्रूयाज्जायेरन्ने

न्यदपि वक्ष्यमाणं वचः किं तदुवाचेत्याह॥ यद्यपि शुष्काय स्थाणवे एतद्दर्शनं ब्रूयात्॥ प्राणविज्जा ((वास्मिञ्छाखाः
येरन्नुत्पद्येरन्नेवास्मिन्स्थाणौ शाखाः प्ररोहेयुश्च पलाशानि पत्राणि किमु जीवते पुरुषाय ब्रूयादिति॥ यथोक्तप्रा-
णदर्शनविदः इदं मन्थाख्यं कर्मारभ्यते॥ अथानन्तरं यदि महन्महत्त्वं जिगमिषेद्गन्तुमिच्छेन्महत्त्वं प्राप्तुं यदि कामयेदि-
त्यर्थः तस्येदं कर्म विधीयते॥ महत्त्वे हि सति ((प्रसंगादिति यावत् तद्धैतदित्यादिवाक्यं न विधानार्थं नापि फलवचनं तथा च व्यर्थमि-
त्याशंक्याह॥ तद्धैतदिति॥ स्तुतिमेव प्रश्नपूर्वकं विवृणोति॥ कथमिति॥ जीवते पुरुषाय प्राणविद्यावते एतद्दर्शनं ब्रूयादस्मिन्महाफलं भवती-
ति किमु वक्तव्यमिति॥ प्राजनागोदोहनवदृष्टिकृताधिकारमिदं कर्म प्राणविदोऽस्मिन्नधिकारोऽस्तीत्याह॥ यथोक्तेति॥ अनन्तरं प्राणविद्यानि-
ष्पत्तेरिति शेषः॥ वाक्यशेषं पूरयति॥ तस्येति॥ महत्त्वद्वारा विषयोपभोगकामुकस्य कर्मविधाविशास्त्रैश्रेयनादिशास्त्रवदनर्थफलमेवेत्य

तस्येति ॥ प्रकृतमंथारम्भकर्मोक्तिः बालादीन्यादिशब्दो द्व्यादि संग्रहार्थः ॥ दैक्ष्यं दीक्षायां भवं मौन्याभ्यंजनादि सर्वमेवायमनुतिष्ठति प्रकृ-
तिधर्मो हि विकृतावनुवर्तते प्रकृतिवद्विकृतिः कर्तव्येति न्यायात् तन्त्रैवं कर्मणः स्वविविकृतिरतो यथोक्तधर्मवत्त्वमेवात्र विवक्षितमित्यर्थः ॥ दी-
क्षितेत्यनेन विवक्षितं धर्मांतरमाह ॥ उपसद इति ॥ उपसदो नामेष्टयः प्रवर्ग्याहस्तु प्रसिद्धाः तासु व्रतं पयोमात्रभक्षणं तदुपेतो भूत्वा मंथा-

श्रीरूपनमंते श्रीमतो महार्थे मासंधनं ॥ ततः कर्मानुष्ठानं ॥ ततश्च देवयानं पितृयाणं वा पंथानं प्रतिपत्स्यते तद्द्वत्येन तत्प्रयोजन-
मुरीकृत्य महत्त्वप्रेप्सा इदं कर्म न विषयोपभोगकामस्य ॥ तस्यायं कालादिविधिरुच्यते ॥ अमावास्यायां दीक्षित्वा दीक्षि-
तव्रतभूमिशयनादि नियमं तपोरूपं सत्यवचनं ब्रह्मचर्यमित्यादि धर्मवान्भूत्वेत्यर्थः ॥ न पुनर्दैक्ष्यमेव कर्मजातं सर्वमुपाद-

प्ररोहेयुः पलाशानीत्यथ यदि महज्जिगमिषेद् ऽमावास्यायां दीक्षित्वा पौर्णमास्यां रात्रौ सर्वौषधस्य मंथं दधिम-
धुनोरुपमथ्य ज्येष्ठाय श्रेष्ठाय स्वाहेत्यग्नावाज्यस्य हुत्वा मंथे संपातमवनयेद् वसिष्ठाय स्वाहेत्यग्नावाज्यस्य हुत्वा
मंथे संपातमवनयेत् प्रतिष्ठायै स्वाहेत्यग्नावाज्यस्य हुत्वा मंथे संपातमवनयेत् संपदे स्वाहेत्यग्नावाज्यस्य हुत्वा ।

नेः तद्धि कारणत्वान्मंथाख्यस्य कर्मणः उपसद्व्रतीति श्रुत्यन्तरात् पयोमात्रभक्षणे च शुद्धिकारणं तप उपादेयं पौर्णमास्यां रा-
त्रौ कर्मारंभे सर्वौषधस्य ग्राम्याऽऽरण्यानामोषधीनां यावच्छक्त्यल्पमल्पमुपादाय तद्धि तु व्रीहित्वाममेव पिष्टं दधिमधुनो-
रौदुंबरे कंसाकारे चमसाकारे वा पात्रे श्रुत्यन्तरान्निक्षिप्योपमथ्याग्नेः स्थापयित्वा ज्येष्ठाय श्रेष्ठाय स्वाहेत्यग्नावावसथ्येऽआ
संपात्य जुहोतीति वाजसनेयके समानप्रकरणे श्रवणादिति यावत् पिष्टं कृत्वा न त्वाममपक्वमेव दधिमधुनोः संबंधं पात्रे प्रक्षिप्येति संबंधः
॥ औदुंबरत्वे नियमः पात्रस्याकारे तु विकल्पः कथमश्रुतं पात्रमत्र विकल्प्यते तत्राह ॥ श्रुत्यन्तरादिति ॥ औदुंबरे कंसे चमसे वेति वाजसनेयश्र-
वणात् सर्वशाखाप्रत्ययन्यायेनापेक्षितं पात्रमत्र गृहीतमित्यर्थः आवसथ्यसंबंधी लौकिकोग्निरावसथ्यो विवक्षितो यस्मिन्नौपासनाख्यक

आवापस्थानमाहुतिप्रक्षेपप्रदेशो गृह्योक्तः॥ वसिष्ठाय स्वाहेत्यादिवाक्यं पूर्ववाक्येन तुल्यार्थमित्याह॥ समानमिति॥ तुल्यत्वमेव स्पष्ट-
यति॥ वसिष्ठायेति॥ स्वाहेति मंत्रमनुच्चार्य हुत्वेति संबंधः तथैव प्रथमहोमानंतरमित्यर्थः॥ आहुत्यानंतर्यमथशब्दार्थः॥ भवतु प्राण-
स्येदं नाम मंथस्य तु कथं मंत्रार्थत्वमित्याशंक्याह॥ अन्नं नहीति॥ प्रतिज्ञातेऽर्थे प्रश्नपूर्वकं हेतुमाह॥ कुत इति॥ अतस्त्वामो नामासीति पूर्वेण।

हुत्वा स्रुवे संलग्नं मंथे संपातमवनयेत्संस्रवमधः पातयेत्समानमन्यत्॥ वसिष्ठाय प्रतिष्ठायै संपदे आयतनाय स्वाहेति॥
प्रत्येकं तथैव संपातमवनीय हुत्वाथ प्रतिसृप्याग्नेरीषदपसृत्यांजलौ मंथमाधाय जपतीमं मंत्रं॥ अमो नामास्यमा हि ते
अम इति प्राणस्य नाम॥ अन्नेन हि प्राणः प्राणितीति देहे हुत्यतो मंथद्रव्यं प्राणस्यान्नत्वात्प्राणत्वेन स्तूयतेऽमो नामासीति। कु-
तो यतोऽमा सह हि यस्मात्ते तव प्राणभूतस्य सर्वं समस्तं जगदिदमतोऽमो नामासीत्यर्थः॥ स हि प्राणभूतो मंथो ज्येष्ठः श्रेष्ठश्चात

मंथे संपातमवनयेदायतनाय स्वाहेत्यग्नावाज्यस्य हुत्वा मंथे संपातमवनयेदथ प्रतिसृप्यांजलौ मंथमाधाय ज-
पत्यमो नामास्यमा हि ते सर्वमिदं स हि ज्येष्ठः श्रेष्ठो राजाधिपतिः स मा ज्यैष्ठ्यं श्रैष्ठ्यं राज्यमाधिपत्यं गमयत्व-
हमेवेदं सर्वमसानीति॥ अथ खल्वेतयर्चा पच्छ आचामति तत्सवितुर्वृणीमह इत्याचामति वयं देवस्य भोजनमित्याचा-
(मति श्रेष्ठं

एव च राजा दीप्तिमानधिपतिश्चाधिष्ठाय पालयिता सर्वस्य स मा मामपि मंथः प्राणो ज्यैष्ठ्यादिगुणपूगमा-
त्मनो गमयत्वहमेवेदं सर्वं जगदसानि भवानि प्राणवदितिशब्दो मंत्रसमाप्त्यर्थोऽथानंतरं खल्वेतयर्चा वक्ष्यमाणया पच्छः पा-
दशः आचामति भक्षयति॥ मंत्रस्यैकैकेन पादेनैकैकं ग्रासं भक्षयति॥ तद्भोजनं सवितुः सर्वस्य प्रसवितुः प्राणमादित्यं चैकीकृ-

संबंधः हेतुं व्याचष्टे॥ यस्मादिति॥ अनंतरं जपकर्मणः सकाशादिति शेषः॥ न देवस्य पश्यतीति॥ मंत्रस्येति॥ मंत्रस्यैकैकपादेन मंथस्यैकैकं ग्रा-
सं भक्षयतीति योजना॥ भोजनं मंथरूपमिति संबंधः तत्कथं सवितुः स्यात्प्राणस्य हि मंथद्रव्यमन्नमित्युक्तं तत्राह॥ प्राणमिति॥ उच्यते सवि-

प्राणादित्ययोरेकत्वे फलितं वाक्यार्थमाह ॥ आदित्यस्येति ॥ मंथरूपं तद्भोजनमिति पूर्वेण संबंधः प्राणेनाविषयं भोजनमेव विशिनष्टि ॥ येनेति
तस्यैव विशेषणांतरं श्रेष्ठमित्यादि स्थितिकारणत्वमुत्पादनकत्वं पक्षांतरमाह ॥ अतिशयेनेति ॥ जगद्धातासौ फलदानेन धाता तुः । शैघ्र्यंकि
मिति भोजने कथ्यमाने ध्यानमुच्यते तत्राह ॥ विशिष्टेति ॥ शुद्धधीत्वं ध्यानकारणमुक्तं प्रकृतकर्मवशं प्राप्तिमहत्त्वहेतुत्वादपि ध्यानमनुष्ठे

आदित्यस्य वृणीमहे प्रार्थयेमहि मंथरूपं येनान्नेन सावित्रेण भोजनेनोपभुक्तेन वयं सवितृस्वरूपापन्ना भवेमेत्यभिप्रा
यो देवस्य सवितुरिति पूर्वेण संबंधः श्रेष्ठं प्रशस्यतमं सर्वान्नेभ्यः सर्वधातमं सर्वस्य जगतो धारयितृतमं ॥ अतिशयेन विधातृ
तममिति वा सर्वथा भोजनविशेषणं तुरं त्वरं तूर्णं शीघ्रमित्येतत् भगस्य देवस्य सवितुः स्वरूपमिति शेषः धीमहि विशिष्टभो
जनेन संस्कृताः शुद्धात्मानः संत इत्यभिप्रायः अथवा भगस्य श्रियः कारणं महत्त्वं प्राप्तुं कर्म कृतवंतो वयं तद्धीमहि चिंतयेमहि

सर्वधातममित्याचामति ॥ तुरं भगस्य धीमहीति सर्वं पिबति निर्णिज्य कंसं चमसं वा पश्चादग्नेः संविशति चर्मणि वा
स्थंडिले वा वाचंयमोऽप्रसाहः स यदि स्त्रियं पश्येत्समृद्धं कर्मेति विद्यात्तदेष श्लोकः यदा कर्मसु काम्येषु स्त्रियं स्व
प्नेषु पश्यति समृद्धिं तत्र जानीयात्तस्मिन्स्वप्ननिदर्शने तस्मिन्स्वप्ननिदर्शने ॥ २ ॥ सर्वं च मंथलेपं पिबति निर्णिज्य ।
प्रक्षाल्य कंसं कंसाकारं चमसं चमसाकारं वौदुंबरं पात्रं पीत्वाचम्य पश्चादग्नेः प्राक्शिराः संविशति चर्मणि वाऽजिने
स्थंडिले केवलायां वा भूमौ वाचंयमो वाग्यतः सन्नित्यर्थः अप्रसाहोऽप्रसह्यते नाभिभूयते स्त्र्याद्यनिष्टस्वप्नदर्शनेन य
थातथा संयत

यमित्याह ॥ अथवेति ॥ सावित्रं रूपमुक्तं नियमेनोदुंबरं वैकल्पिताकारे विशेषः पात्रं प्रक्षाल्य पिबतीति संबंधः मंथ
लेपं पात्रं प्रक्षाल्य पीत्वाचमनपूर्वकमग्नेः पश्चिमभागे कृष्णाजिनव्यवहिता या केवला यां वा भूमौ प्राक्शिरा भूत्वा शयीतेत्याह ॥ पी
त्वेति ॥ शयानस्य कर्तव्यं दर्शयति ॥ वाचंयम इति ॥ तस्य स्वप्ने कथं विदुत्तमस्त्रीदर्शने शुभागमः सूच्यते तत्राह ॥ ॥ ॥ ॥

सएवंभूतइति ॥ २ ॥ प्राणविद्यानंतरं गकर्मचेत्युभयमुक्तमिदानीमग्निविद्यामारब्धुकामस्तावदाख्यायिकातात्पर्यमाह ॥ ब्रह्मादीति ॥
तासांचवक्तव्यत्वेहेतुमाह ॥ वैराग्यहेतोरिति ॥ राजाकुमारेति ॥ संबोधयन्नभिमानंश्वेतकेतोरपनिनीषति ॥ यथेत्यस्यार्थमाह ॥ येनेति ॥ वि



सएवंभूतोयदिस्त्रियंपश्येत्स्वप्नेषुतदाविद्यात्समृद्धंममेदंकर्मेति ॥ तदेतस्मिन्नर्थेएषश्लोकोमंत्रोपिभवतियदाकर्मसु
काम्येषुकामार्थेषुस्त्रियंस्वप्नेषुस्वप्नदर्शनेषुस्वप्नकालेषुवापश्यतिसमृद्धिंतत्रजानीयात्कर्मणांफलनिष्पत्तिर्भविष्यतीति
जानीयादित्यर्थः ॥ तस्मिन्स्त्र्यादिप्रशस्तस्वप्नदर्शनेसतीत्यभिप्रायः द्विरुक्तिःकर्मसमाप्त्यर्था ॥ २ ॥ ब्रह्मादिस्तंबपर्यंताः
संसारगतयोवक्तव्याःवैराग्यहेतोर्मुमुक्षूणामित्यतआख्यायिकारभ्यते ॥ श्वेतकेतुर्नामतोहइत्यैतिह्यार्थः अरुणस्यापत्य
मारुणिःतस्यापत्यमारुणेयःपंचालानांजनपदानांसमितिंसभामेयायाजगामसआगतवान्हप्रवाहणोनामतोजीवलस्याप

श्वेतकेतुर्हारुणेयःपंचालाना ७ समितिमेयायत ७ हप्रवाहणोजैवलिरुवाचकुमारानुत्वाशिषत्पितेत्यनुहिभ
गवइतिवेत्थयदितोधिप्रजाःप्रयंतीतिनभगवइतिवेत्थयथापुनरावर्तंता ३ इतिनभगवइतिवेत्थपथोर्देवयानस्य

त्यंजैवलिरुवाचोक्तवान्हेकुमारानुत्वात्वामशिषदन्वशिषत्पितेतिकिमनुशिष्टस्त्वंपित्रेत्यर्थः ॥ इत्युक्तःसआहानुश
नुशिष्टोस्मिभगवइतिसूचयन्नाह ॥ तंहोवाचयद्यनुशिष्टोसिवेत्थयदितोस्माल्लोकादूर्ध्वंयत्प्रजाःप्रयंतियद्गच्छं
तितत्किंजानीषइत्यर्थः ॥ नभगवइत्याहेतरोनजानेहंतद्यत्पृच्छसि ॥ एवंतर्हिवेत्थजानीषेयथायेनक्रमेणपुनराव
र्तंताइतिनभगवइतिप्रत्याह ॥ वेत्थपथोर्मार्गयोःसहप्रयाणयोर्देवयानस्यपितृयाणस्यचव्यावर्तनाव्यावर्तनमितरेतर
वियोगस्थानंसहगच्छतामित्यर्थः ॥ नभगवइतिप्रत्याह ॥ वेत्थयथासौलोकःपितृसंबंधी

इहविदुषोःतुल्यमार्गयोःसतो
र्द्वौमार्गौतयोर्मध्येदेवयानस्येत्यादिनोक्तंवाक्यार्थंसंक्षिपति ॥ इतरेतरेति ॥ विदुषांचकर्मिणांचमार्गद्वयमधिकृत्यसहप्र

तत्किंवेत्थेत्यर्थः।पितृसंबंधिनंलोकंव्याकरोति॥यंप्राप्येति॥आहुतिनिर्वृत्तादृत्यस्यव्याख्यान माहुति साधानाश्चेतिअपूर्वरूपाणामपां।
भूतांतरसमुच्चयार्थश्चकारः॥अथवापयोघृतादिरूपेणाहुतिंसाधयंतीतिचाहुत्यापुनरपूर्वात्मनानिष्पन्नाइत्यर्थः॥क्रमेणेति॥श्रद्धासोम।
वृष्ट्यन्नरेतसांहवनद्वारेणेतियावत् षष्ठाहुति भूतानामन्त्येष्टिविधानेनशरीराहुतिद्वारासूक्ष्मतांगतानामित्यर्थः॥त्वत्पृष्टार्थजातानिरिक्त।

यंप्राप्यपुनरावर्त्तंतेबहुभिःप्रयद्भिरपियेनकारणेननसंपूर्यतइतिनभगवइतिप्रत्याह॥वेत्थयथायेनक्रमेणपंच।
म्यांपंचसंख्याकायामाहुतौहुतायामाहुतिनिर्वृत्ताः॥आहुतिसाधनाश्चापःपुरुषवचसःपुरुषइत्येवंवचोभिधानंया
सांहूयमानानांक्रमेणषष्ठाहुतिभूतानांताःपुरुषवचसःपुरुषशब्दवाच्याभवंतिपुरुषाख्यांलभंतइत्यर्थः॥इत्युक्तोनैवभ
गवइत्याह॥नैवाहमत्रकिंचनजानामीत्यर्थोथैवमज्ञःसन्किमनुकस्मात्त्वमनुशिष्टोस्मीत्यवोचथाउक्तवानसि॥यो।

पितृयाणस्य च व्यावर्त्तना ३ इतिनभगवइतिवेत्थयथासौलोकोनसंपूर्यता ३ इतिनभगवइतिवेत्थयथापंच
म्यामाहुतावापःपुरुषवचसोभवंतीतिनैवभगवइत्यथनुकिमनुशिष्टोवोचथायोहीमानिनविद्यात्कथंसो
नुशिष्टोब्रुवीतेतिसहायस्तःपितुरर्द्धमेयायतंहोवाचाननुशिष्यवावकिलमाभगवानब्रवीदनुत्वाशिषमिति

हीमानिमयापृष्टान्यर्थजातानिनविद्यान्नजानीयात्कथंसविद्वत्स्वनुशिष्टोस्मीतिब्रुवीतइत्येवंसश्वेतकेतूराज्ञाऽयस्त।
आयासितःसन्पितुरर्द्धस्थानमेयायगतवांस्तंचपितरमुवाचाऽननुशिष्यानुशासनमकृत्वैवमामांकिलभगवान्समाव
र्त्तनकालेब्रवीदुक्तवाननुत्वाशिषंअन्वशिषंत्वामितियतःपंचपंचसंख्याकान्प्रश्नान्राजन्यबंधुराजन्याःबंधवोस्येति
राजन्यबंधुःस्वयंदुर्वृत्तइत्यर्थः॥अप्राक्षीत्पृष्टवांस्तेषांप्रश्नानांनैकंचनैकमपि ((विषयमनुशासनेममास्तीत्यनुशिष्टोस्मीत्युक्त।
मित्याशंक्याह॥योहीति॥अननुशिष्यत्वामन्वशिषमितिकथमुक्तवानस्मीत्याशंक्याह॥यतइति॥नैकंचनेत्युक्तमेवनअपदंनाशकमिति

संबंधं दर्शयितुं उक्तरूपात्तमतो मां भवानिनवमिथ्यावादिना सिद्धेति शेषः॥ पितास्वकीयमिथ्यावादित्वशंकां परिहरति॥ स होवाचेति॥ यथा मा
त्वमित्यादिवाक्यं पूरयित्वा व्याख्यायानेनरवाक्यमाकांक्षापूर्वकमुत्थापयति॥ कथमित्यादिना॥ तत्राचष्टे॥ यथेति॥ अज्ञानाविशेषः म-
च्छब्दार्थः॥ अन्यथाभावो ज्ञानेपि विषयेनवानुक्तिरिति यावत्त्वदीयमज्ञानं कुतो हेतोर्मे पाज्ञातव्यमित्याशंकामुद्भाव्यानंतरवाक्येनोत्तरमाह

नाश्रावकं न शक्तवानहं विवक्तुं विशेषेणार्थतो निर्णेतुमित्यर्थः॥ स होवाच पिता यथा मा मां वत्स त्वं तदागममात्रेणान्यथा
ऽवद उक्तवानसि नेषां नैकंचनाशकं विवक्तुमिति॥ तथा मां जानीहि त्वदीयाज्ञानेन लिंगेन मम तद्विषयमज्ञानं जानीही
त्यर्थः॥ कथं॥ यथाहमेषां प्रश्नानां मध्ये कंचनैकमपि न वेदेति॥ यथा त्वमेतान्न जानीषे तथाहमप्येतान्न जाने इत्यर्थः॥ अतो मे
य्यन्यथाभावो न कर्तव्यः॥ कुत एतदेवं यतो यद्यहमिमान्प्रश्नानवेदिष्यं विदितवानस्मि कथं ते तुभ्यं प्रियाय पुत्राय समावर्त

पंच मा राजन्यबंधुः प्रश्नानप्राक्षीत्तेषां नैकंचनाशकं विवक्तुमिति॥ स होवाच यथा मा त्वं तदैतानवदो यथाहमे
षां नैकंचन वेद यद्यहमिमानवेदिष्यं कथं ते नावक्ष्यमिति स ह गौतमो राज्ञोऽर्द्धमेयाय तस्मै ह प्राप्तायार्हांचकार स ह
प्रातः सभाग उदेयाय तं होवाच मानुषस्य भगवन्गौतम वित्तस्य वरं वृणीथा इति स होवाच तवैव राजन्मानुषं वित्तं

नवकाले पुरा नावक्ष्यं नोक्तवानस्मीत्युक्त्वा स ह गौतमः गोत्रतो राज्ञो जैवलेरर्द्धं स्थानमेयाय गतवान् तस्मै ह गौतमाय प्राप्ता-
यार्हां पूजां चकार कृतवान्॥ स च गौतमः कृतातिथ्यः उषित्वा परेद्युः प्रातःकाले सभागे सभां गते राजन्युदेयाय भजनं भा-
गः पूजा सेवा सह भागेन वर्त्तमानो वा सभागः पूज्यमानोऽन्यैः स्वयं गौतममुदेयाय राजानमुक्तवान्॥ तं होवाच गौतमं

॥ कुत इत्यादिना॥ अतस्तव पात्रभूतस्यानुपदेशात् मदीयमज्ञानं ज्ञातव्यमिति शेषः॥ अर्हणां योग्यां पूजामित्यर्थः॥ सभागपदं ससभ्यं
नं राजविषयं॥ मन्ये मां तु गौतमविषयमिति भेदः॥ गौतममागतं योग्यसंमार्थिनं बुध्वा राजा प्रसन्नः सन्नुक्तवानित्याह॥ तं होवाचेति॥ ६॥

तर्हि कृतकृत्यस्य तव किमित्यागमनमित्याशंक्याह ॥ यामेवेति ॥ कृच्छ्रीभावमभिनयति ॥ कथमिति ॥ गौतमस्य वचनेन राज्ञो दुःखभावकारणं तर्हि प्रत्याख्यायतामित्याशंक्याह ॥ स हेति किमिति ॥ तर्हि चिरं वसेत्युक्तवानित्यत आह ॥ न्यायेनेति ॥ संवत्सरं वसेति यावदुक्तम्या विद्येति शेषः ॥ कथं राज्ञो ब्राह्मणं प्रत्याज्ञां कुर्वतो न प्रत्यवायः स्यादित्याशंक्याह ॥ यत्पूर्वमिति ॥ प्रत्याख्यानादिविषयं हेतुवचनं ॥ न केवलं विद्या

राजा मानुषस्य भगवन्गौतम मनुष्यसंबंधिनो वित्तस्य ग्रामादेर्वरं वरणीयं कामं वृणीथाः प्रार्थयेथाः स होवाच गौतमस्तवैव तिष्ठतु राजन्मानुषं वित्तम् ॥ यामेव कुमारस्य मम पुत्रस्यांते समीपे वाचं पंचप्रश्नलक्षणामभाषथा उक्तवानसि । तामेव वाचं मम मह्यं ब्रूहि कथय इत्युक्तो गौतमेन राजा स ह कृच्छ्री दुःखी बभूव ॥ कथं त्विदमिति स ह कृच्छ्रीभूतोऽप्रत्याख्येयं ब्राह्मणं मन्वानो न्यायेन विद्या वक्तव्येति मत्वा तं ह गौतमं चिरं दीर्घकालं वसेत्येवमाज्ञापयांचकार आज्ञप्तवान् ॥ यत्पू

यामेव कुमारस्यांते वाचमभाषथास्तामेव मे ब्रूहीति स ह कृच्छ्री बभूव तꣳ ह चिरं वसेत्याज्ञापयांचकार तꣳ होवाच यथा मा त्वं गौतमावदो यथेयं न प्राक्त्वत्तः पुरा विद्या ब्राह्मणान्गच्छति तस्मादु सर्वेषु लोकेषु क्षत्रस्यैव प्रशासनमभूदिति तस्मै होवाच ॥ ७ ॥

र्वं प्रत्याख्यातवान्राजा विद्यां यच्च पश्चाच्चिरं वसेति आज्ञप्तवांस्तन्निमित्तं ब्राह्मणं समापयति हेतुवचनोक्त्या तं होवाच राजा सर्वविद्यो ब्राह्मणोऽपि सन्यथा येन प्रकारेण मा मां हे गौतम आवदः त्वं तामेव विद्यालक्षणां वाचं मे ब्रूहीति तत्राहं किं शिष्य इत्यर्थः तत्रास्ति वक्तव्यम् अज्ञानात्तेन त्वं जानीहि यथा येन प्रकारेण इयं विद्या प्राक् त्वत्तः त्वत्तो न ब्राह्मणान्गच्छति न गतवती न च ब्राह्मणा अनया विद्यया अनुशासितवंतः तथैतत्प्रसिद्धं लोकेऽपि तस्मादु पुरा पूर्वं सर्वेषु लोकेषु क्षत्रस्यैव क्षत्रजातेरेवानया विद्यया प्रशासनं प्रशास्तृत्वं शिष्याणामभूद्बभूव ॥ ॥ वक्षादेवश्रेष्ठं किं तु जातितोऽपीत्यपेरर्थः तर्हि ब्रूहि तां वाचमित्याशंक्याह ॥ तस्मेति ॥ विद्याप्रवचने प्रस्तुते सति तिपावत ॥ यथेत्यस्यापेक्षितं पूरयति ॥ त

ब्राह्मणानामनया विद्यया प्रशास्तृत्वस्य प्रागभावादितियावत्॥ इतिशब्दोपात्तमर्थं कथयति॥ क्षत्रियेति॥ उक्तमन्वाख्यानादिकारणमतः-
शब्दार्थः॥ ७॥ ननु यथाप्रश्नमेव प्रतिवचनमुचितं॥ पंचमं तु प्रश्नं प्राथम्येन प्रतिवदता क्रमो निराकृतस्तत्र किं कारणमत आह॥ पंचम्यामि-
ति॥ अर्थक्रममनुसृत्य पाठक्रमो भिद्यत इत्यर्थः॥ ननु वाजसनेयकेऽग्निहोत्रप्रकरणेऽग्निहोत्राहुत्यपूर्वपरिणामे जगदित्युक्तं तदिहापि
विवक्ष्यत इति चेत्किमनेन पिष्टपेषणन्यायेनेत्याशंक्यार्थभेदं वक्तुमग्निहोत्रप्रकरणस्थितमर्थमनुवदति॥ अग्निहोत्राहुत्योरिति॥ उ-
क्तप्रकारमेव प्रदर्शयन् प्रथमं याज्ञवल्क्यस्य जनकं प्रति षट्प्रश्नानुत्थापयति॥ तं प्रतीति॥ कार्यारंभस्तच्छब्दार्थः॥ अग्निहोत्राहुत्यपू-
र्वपरिणामो जगदिष्यते तत्राग्निहोत्रे सायंप्रातश्च हुतयोराहुत्योरस्माल्लोकादुत्क्रान्तिरुत्क्रान्तयोः परलोकं प्रति गतिर्गतयोस्तत्र प्रतिष्ठा

क्षत्रियपरंपरयैवेयं विद्यैतावन्तं कालमागता तथाप्यहमेतां तुभ्यं वक्ष्यामि॥ त्वत्संप्रदानादूर्ध्वं ब्राह्मणान्गमिष्यत्यतो म-
या यदुक्तं तत्क्षन्तुमर्हसीत्युक्त्वा तस्मै होवाच विद्यां राजा॥ ७॥ पंचम्यामाहुतावापः इत्ययं प्रश्नः प्राथम्येनापाक्रियते तदपा-
करणमन्वितरेषामपाकरणमनुकूलं भवेदित्यग्निहोत्राहुत्योः कार्यारम्भो यः स उक्तो वाजसनेयके। तं प्रति प्रश्ना उक्ता उत्क्रा-
न्तिराहुत्योर्गतिः प्रतिष्ठा तृप्तिः पुनरावृत्तिर्लोकं प्रत्युत्थायीति॥ तेषां चापाकरणमुक्तं तत्रैव॥ ते वा एते आहुती हुते उत्क्रा-
मतः ते अन्तरिक्षमाविशतः ते अन्तरिक्षमेवाहवनीयं कुर्वाते वायुं समिधं मरीचीरेव शुक्रामाहुतिं ते अन्तरिक्षं तर्पयतः॥ १

प्रतिष्ठितयोः स्वाश्रये संपाद्यमानात्तृप्तिस्तृप्तिमापाद्यावस्थितयोः पुनरिमं लोकं प्रत्यावृत्तिरावृत्तयोराश्रयः पुमान्कथममुं लोकं प्र-
त्युत्थानशीलो भवतीति कार्यारंभमधिकृत्य षट्प्रश्नाः प्रवृत्ता इत्यर्थः॥ तत्रैव वाजसनेयके याज्ञवल्क्यं प्रति जनकस्य प्रतिवचनं दर्श-
यति॥ तेषां चेति॥ अपूर्वरूपे स्वल्पाहुती यजमानमुत्क्रामन्तं परिवेष्ट्योत्क्रामतस्ते च धूमादिना यजमानेनान्तरिक्षमाविशति तदाश्रित-
त्वात्तदाविशतः॥ ते पुनरन्तरिक्षस्य यजमानानुकूलतया स्थिते॥ स्वयमन्तरिक्षाधिकरणे तदाहवनीयमिव कुर्वाते॥ आहुत्यधिकर-
णस्याहवनीयत्वात्तत्र वायुं समिधमिव कुरुतो वायुनान्तरिक्षस्य समिध्यमानत्वाच्छुक्लामाहुतिमिव मरीचिरेवाधत्ते॥ १ ॥ १ ॥

मरीचीनामंतरिक्षेव्यासत्वात्तेचांतरिक्षस्थेन त्विषं यजमानं फलोन्मुखमादधाते ॥ ते पुनरंतरिक्षाद्दुत्क्रामति यजमाने सहोत्क्रामतो यजमानेन द्युलोकमाविशति सहाविशन्तस्तमाविश्य तमेवाहवनीयं कुर्वाते ॥ आदित्यसमिधमित्याद्यंतरिक्षवद्वेदितव्यं ॥ यथावाहु । तीपूर्वमंतरिक्षं तर्पयतइत्युक्तं तथैव द्युलोकस्थयजमाने फलदानेन सुखिनमातन्वाते ॥ तेमारभ्य स्वयेनतोद्युलोकाद्यजमाने पृथिवी माविशन्त्य भूतेसह वर्त्तेते ॥ पृथिवींचाविश्यव्रीह्यादिनास्वाश्रयंश्लेषयित्वा रेतस्सिंचपुरुषमाश्रय द्वारेणाविशतः पुरुषाच्चरेतोद्वारा द्वितीयां प्रकृतिमाविश्यगर्भीभूतस्वाश्रयं कर्मानुष्ठानयोग्यं देहभागिनमापादयतस्ततोसौ पारलोकिकं कर्मानुष्ठायांते लोकमत्यु । त्थानशीलोभवतीति सर्वजनकेनोक्तमित्यर्थः ॥ तथापि कथमर्थभेदसिद्धिरित्याशंक्योक्तमेवसंक्षिप्याह ॥ तत्रेति ॥ वाजसनेयकेसम्य

तेततउत्क्रामतइत्याद्येवमेवपूर्ववत्तद्दिवं तर्पयतस्तेततआवर्त्तेतेइमामाविश्य तर्पयित्वापुरुषमाविशतस्ततस्त्रिय माविश्यलोकंप्रत्युत्थायीभवतीतितत्राग्निहोत्राहुत्योः कार्यारंभमात्रमेवंप्रकारं भवतीत्युक्तं ॥ इह तु तं कार्यारंभमग्निहो त्रापूर्वपरिणामलक्षणं पंचधाप्रविभज्याग्नित्वेनोपासनमुत्तरमार्गप्रतिपत्तिसाधनं विधित्सन्नाहासौ वावलोकोग्निरि त्यादिइहसायंप्रातरग्निहोत्राहुतीहुते पयआदिसाधने श्रद्धापुरःसरे आहवनीयाग्निसमिद्धूमार्चिरंगारविस्फुलिंगभा वितेकर्त्रादिकारकभाविते चांतरिक्षं क्रमेणोत्क्रम्य द्युलोकं प्रविशंत्यौ सूक्ष्मभूते अप्समवायित्वादप्शब्दवाच्ये श्रद्धाहे तुत्वाच्च श्रद्धाशब्दवाच्ये तयोरधिकरणोग्निः अन्यच्च तत्संबद्धं समिदादि

((र्थः ॥ प्रकृतश्रुतेरर्थविशेषं दर्शयति ॥ इह त्विति ॥ पं चधाद्युपर्जन्यपृथिवीपुरुषयोषित्प्रकारैरिति यावत्पंचाग्निसंबंधमवतार्यप्रथमपर्यायस्यतात्पर्यमाह ॥ इहेति ॥ अयंसमुदायार्थः ॥ आ हुत्योरप्समवायित्वसिध्यर्थं विशिनष्टि ॥ पयआदीति ॥ तयोः श्रद्धात्वसिध्यर्थंश्रद्धापुरःसरेइत्युक्तं ॥ तयोरधिकरणोग्निरित्यादि कल्पनो पयोगित्वेन विशेषणांतरमादत्ते ॥ आहवनीयेति ॥ तयोः स्वातंत्र्यंपरिहरति ॥ कर्त्रादीति ॥ अधिकरणशब्दोभावप्रधानो धर्मिपरः कल्पनि कोद्युलोकाख्योग्निस्तत्संबंधमिति तच्छब्दोग्निविषयः ॥ अन्यच्चेत्युक्तंस्पष्टयति ॥ समिदादीति ॥ आदिशब्दो धूमार्चिरंगारादिविषयः ॥

111

पर्यायतात्पर्यमुक्त्वा अक्षराणि व्याकरोति॥ असावित्यादिना॥ इहेत्येतल्लोकनिर्देशः पूर्वेण संबध्यते तदुत्थानादित्यत्रतच्छब्देनादित्यो गृहीतः॥ अध्यात्माधिदैवविभागेन देवान्विशदयति॥ यजमानेति॥ प्रत्ययविशेषत्वेन श्रद्धाया होम्यत्वानुपपत्तिरित्याशंक्य श्रद्धां व्याकरोति॥ अग्निहोत्रेति॥ किंच प्रश्नप्रतिवचनयोरेकार्थत्वात्प्रश्ने चापां होम्यतया श्रुतत्वात्प्रतिवचनेऽपि ताः श्रद्धाशब्दिता होम्यतया विवक्षिता इ

निर्दिश्यते यथा चासावग्न्यादिभावना ऽग्न्युत्थो ऽपि तथैव निर्दिश्यते॥ असौ वाव द्युलोकोऽग्निर्हे गौतम यथाग्निहोत्राधिकरणं आहवनीय इह तस्याग्नेर्द्युलोकाख्यस्यादित्य एव समित् तेन हीद्धोऽसौ लोको दीप्यते ऽतः समिंधनात्समिदादित्यो रश्मयो धूमस्तदुत्थानात्समिधो हि धूम उत्तिष्ठति अहरर्चिः प्रकाशसामान्यादादित्यकार्यत्वाच्च चंद्रमा अंगारा अह्नः प्रशमेऽभिव्यक्तेरर्चिषो हि प्रशमेंगारा अभिव्यज्यंते॥ नक्षत्राणि विस्फुलिंगाश्चंद्रमसोऽवयवा इव विप्रकीर्णत्वसामान्यात्तस्मिन्नेतस्मिन्यथोक्तलक्ष

असौ वाव लोको गौतमाग्निस्तस्यादित्य एव समिद्रश्मयो धूमोऽहरर्चिश्चंद्रमा अंगारा नक्षत्राणि विस्फुलिंगास्तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा संभवति॥ १॥ (१) णेग्नौ देवा यजमानप्राणा अग्न्यादिरूपाः।

अधिदैवतं श्रद्धां अग्निहोत्राहुतिपरिणामावस्थारूपाः सूक्ष्माः आपः श्रद्धाभाविताः श्रद्धा उच्यंते॥ पंचम्यामाहुतावापः पुरुषवचसो भवंतीत्यपां होम्यतया प्रश्ने श्रुतत्वाच्छ्रद्धा वा आपः श्रद्धामेवारभ्य प्रणीय प्रचरंतीति च विज्ञायते॥ तां श्रद्धामब्रूपां जुह्वति तस्या आहुतेः सोमो राजा अपां श्रद्धाशब्दवाच्यानां द्युलोकाग्नौ हुतानां परिणामः सोमो राजा संभवति॥ यथा ऋग्वेदादिपुष्परसा ऋगादिमधुकरोपनीतास्त आदित्ये यश आदिकार्यं रोहितादिरूपलक्षणमारंभत इत्युक्तं॥ त्याह॥ पंचम्यामिति॥ अप्सु

श्रद्धाशब्दस्य रूढव्यवहारप्रयोगाभावान्नैवमित्याशंक्याह॥ श्रद्धेति॥ कथमापः श्रद्धाशब्देन प्रसिद्धवदुच्यंते तत्राह॥ श्रद्धामिति॥ श्रद्धापूर्वकं होमसिद्धिर्यपयःसोमाज्यादिसाधनं संपाद्य जुहोति इति तैत्तिरीयकाः पठंति तथा चाप्सु श्रद्धाशब्दः संभवतीत्यर्थः॥ उक्तमर्थं दृष्टांतेन

चान्द्रं कार्यं चन्द्रसमीपस्थं तस्य देहं शरीरमित्यर्थः॥ तथापि यजमानानां कथं फलित्वमत आह॥ यजमानाश्चेति॥ आहुतीत छन्दवाच्ये॥ प्रा-
धान्यमयस्यार्थः तदेव स्पष्टयति॥ आहुति भावनाभाविता इति॥ तत्संस्कृतास्तदनुसारिणस्तदाश्रया इत्यर्थः॥ तद्भावितत्वफलमाह॥ आ-
हुतिरूपेणेति॥ तेनाकृष्टत्वं वशीकृतत्वं आहुतिभाविताद् इत्युक्तं स्पष्टयति॥ श्रद्धेति॥ तत्पूर्वकं पयः सोमादि साध्यं यत्कर्म तदाश्रया इत्यर्थः॥
सोमभूतास्तत्समीपस्थं शरीरमाप्यातस्वरूपा इत्यर्थः कथं सोमसारूप्यं धर्मिणां फलतीत्याशंक्याह॥ तदेवमिति॥ यजमानानां सोमभावो

तथेमा अग्निहोत्राहुतिसमवायिन्यः सूक्ष्माः श्रद्धाशब्दवाच्या आपो द्युलोकमनुप्रविश्य चान्द्रं कार्यमारभन्ते फलरूपमग्नि-
होत्राहुत्यो यजमाना अत्र तत्कर्तार आहुतिमयाः आहुतिभावनाभाविताः॥ आहुतिरूपेण कर्मणाकृष्टाः श्रद्धाप्समवायिनो द्यु-
लोकमनुविश्य सोमभूता भवन्ति॥ तदर्थं हि तैरग्निहोत्रं हुतमत्र त्वाहुतिपरिणाम एव पञ्चाग्निसंबन्धक्रमेण प्राधान्येन वि-

पर्जन्यो वाव गौतमाग्निस्तस्य वायुरेव समिदभ्रं धूमो विद्युदर्चिरशनिरङ्गारा ह्रादनयो विस्फुलिङ्गास्तस्मिन्नेत ।

वक्षित उपासनार्थं न यजमानानां गतिस्तां त्वविदुषां धूमादिक्रमेणोत्तरत्र वक्ष्यति विदुषां चोत्तरां वि- ।(स्मिन्नग्नौ देवाः
द्यां कृता॥ ४॥ द्वितीयहोमपर्यायमाह॥ पर्जन्यो वाव पर्जन्य एव गौतमाग्निः पर्जन्यो नाम वृष्ट्युपकरणाभिमानी देवताविशेष-
स्तस्य वायुरेव समिद्वायुना हि पर्जन्योऽग्निः समिध्यते पुरोवातादिप्राबल्ये वृष्टिदर्शनादभ्रं धूमो धूमकार्यत्वाद्धूमवच्चलक्ष्यमा-
णत्वाद्विद्युदर्चिः प्रकाशसामान्यादशनिरङ्गाराः काठिन्याद्विद्युत्संबन्धाद्वा ह्रादनयो विस्फुलिङ्गा ह्रादनयो गर्जितशब्दाः मेघा- (नां विप्रकीर्ण

गतिमन्तरेण सिध्यति॥ तथा च वक्तव्या गतिरित्याशंक्याह॥ अत्रेति॥ आहवनीयाग्निः सप्तम्यर्थः सा तर्हि कुत्रोच्यते तेन हित-
द्युक्तिमन्तरेण यथोक्तं फलं सिध्यतीत्यत आह॥ तां त्विति॥ ४॥ द्वितीयहोमसंबन्धी द्वितीयः पर्यायस्तस्यार्थं निज्ञातुं तमेव पर्यायमादत्ते श्रुतिरि-
त्यर्थः॥ पुरोवातादीत्यादिशब्देन वर्षहेतुर्वायुभेदो गृह्यते उक्तं चाभ्राणां धूमकार्यत्वं पौराणिकैः यच्च धूमोद्भवं त्वभ्रं द्विजानां च हितं सदा॥ ५॥

112

दावाग्निधूमसंभूतमन्नं वनहितं स्मृतं ॥ मृतधूमोद्भवं त्वन्नमशुभाय भविष्यति ॥ अभिचाराग्निधूमोत्थं भूतनाशाय वै द्विजा इति ॥ अध्यात्मं य-
जमानस्य प्राणादीन्द्रादयस्तु अधिदैवं देवा इत्याह ॥ पूर्ववदिति ॥ सोमं राजानमित्यादि व्याचष्टे ॥ श्र-

तस्मिन्नेतस्मिन्नग्नौ देवाः पूर्ववत् ॥ सोमं राजानं जुह्वति तस्या आहुतेर्वर्षं संभवति ॥ श्रद्धाख्या आपः सोमाकारपरिणता द्वितीय-
पर्याये पर्जन्याग्निं प्राप्य वृष्टित्वेन परिणमंते ॥ ५ ॥ पृथिवी वाव गौतमाग्निरित्यादि पूर्ववत्तस्याः पृथिव्याख्यस्याग्नेः संवत्सर
एव समित् संवत्सरेण हि कालेन समिद्धा पृथिवी व्रीह्यादिनिष्पत्तये भवत्याकाशो धूमः पृथिव्या इवोत्थित आकाशो दृश्यते यथा-
ग्नेर्धूमो रात्रिरर्चिः पृथिव्या ह्यप्रकाशात्मिकाया अनुरूपा रात्रिस्तमोरूपत्वादग्नेरिवानुरूपमर्चिर्दिशोऽङ्गारा उपशांतत्वसा-

सोमं राजानं जुह्वति तस्या आहुतेर्वर्षं संभवति ॥ ५ ॥ पृथिवी वाव गौतमाग्निस्तस्याः संवत्सर एव समिदाका-
शो धूमो रात्रिरर्चिर्दिशोऽङ्गारा अवान्तरदिशो विस्फुलिंगास्तस्मिन्नेतस्मिन्नग्नौ देवा वर्षं जुह्वति तस्या आहुतेरन्नं
संभवति ॥ ६ ॥ पुरुषो वाव गौतमाग्निस्तस्य वागेव समित्प्राणो धूमो जिह्वार्चिश्चक्षुरङ्गाराः श्रोत्रं विस्फुलिंगास्त-
स्मिन्नेतस्मिन्नग्नौ देवा अन्नं जुह्वति तस्या आहुते रेतः संभवति ॥ ७ ॥ साम्यादवान्तरदिशो विस्फुलिंगाः क्षुद्रत्वसामा-

न्यात्तस्मिन्नित्यादि समानं तस्या आहुतेरन्नं व्रीहियवादि संभवति ॥ ६ ॥ पुरुषो वाव गौतमाग्निस्तस्य वागेव समिद्वाचा
हि मुखेन समिध्यते पुरुषो न मूकः प्राणो धूमो धूम इव मुखान्निर्गमनाज्जिह्वार्चिर्लोहितत्वाच्चक्षुरङ्गारा भासाश्रय-
त्वात् ॥ श्रोत्रं विस्फुलिंगा विप्रकीर्णत्वसामान्यात्समानमन्यत् ॥ अन्नं जुह्वति व्रीह्यादिसंस्कृतं ॥ तस्या आहुते रेतः संभवति
॥ ७ ॥ योषा वाव गौतमाग्निस्तस्या उपस्थ एव समित्तेन हि सा पुत्राद्युत्पादनाय समिध्यते ॥ यदुपमंत्रयते स धूमः स्त्रीसंभ-
वादुपमंत्रणस्य योनिरर्चिर्लोहितत्वाद्यदन्तः करोति तेऽङ्गारा अग्निसंबंधा ह्रास्यादिति ॥ ५।६।७ ॥ तस्या आहुतेर्गर्भः संभव

एवमिति ॥ यथोक्तरीत्या श्रद्धादीनां रेतोन्तानां यानि द्युलोकादिषु योषिदन्तेष्वग्निषु हवनानि तेषामेकैकस्मिन्पर्याये यः क्रमो व्याख्यातस्तेनेति ।
यावत्कथं पुनरपां गर्भीभवन्ति भूतान्तराणामपि तुल्यो गर्भीभावस्तस्य पाञ्चभौतिकत्वादत आह ॥ तत्रेति ॥ भूतानां मध्ये किमित्यपां प्राधान्यवि-
वक्षयैव निर्देशस्तासामेव केवलानां कार्यारम्भकत्वविवक्षा किं न स्यात्तत्राह ॥ न त्विति ॥ भूतान्तरैः सहकृतानां केवलानामपामारम्भकत्वे यद्दार-
ढ्यं कार्यं न तद्भोगायतनस्य जलबुद्बुदवदस्थैर्यं च चलत्वादित्यर्थः ॥ केवलानामपामनुपपत्तिमुक्तमिदानीं तद्दर्शनास्तीत्यत आह ॥ न चेति ॥ इति ।

ह्यभिनन्दाः सुखलवा विस्फुलिङ्गाः क्षुद्रत्वात्तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुतेर्गर्भः संभवतीति ॥ एवं श्र-
द्धासोमवृष्ट्यन्नरेतोहवनपर्यायक्रमेणाप एव गर्भीभूतास्तास्तत्रापामाहुतिसमवायित्वात्प्राधान्यविवक्षा आपः पञ्चम्या-
माहुतौ पुरुषवचसो भवन्तीति न त्वाप एव केवलाः सोमादिकार्यमारभन्ते ॥ न चापोऽत्रिवृत्कृताः सन्तीति त्रिवृत्कृतत्वेऽपि विशे-

योषा वाव गौतमाग्निस्तस्या उपस्थ एव समिद्यदुपमन्त्रयते स धूमो योनिरर्चिर्यदन्तः करोति तेऽङ्गारा अभिनं-
दा विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुतेर्गर्भः संभवति ॥ ८ ॥

षसंज्ञालाभो हेतुः पृथिवी
यमिमा आपो यमग्निरित्यन्यतमबाहुल्यनिमित्तस्तस्मात्समुदितान्येव भूतान्यबाहुल्यात्कर्मसमवायीनि सोमादि-
कार्यारम्भकाण्यापस्तूच्यन्ते ॥ दृश्यते च द्रवबाहुल्यं सोमवृष्ट्यन्नरेतोदेहेषु बहु द्रवं च शरीरं यद्यपि पार्थिवं तत्र पञ्चम्यामा-
हुतौ हुतायां रेतो

शब्दस्तासां त्रिवृतं त्रिवृतमेकैकामकरोदिति श्रुतेरिति हेत्वर्थः ॥ सर्वस्य त्रिवृत्कृतत्वे कथं दृष्टो विशेषव्यपदेशो युज्येतेत्या-
शङ्क्याह ॥ त्रिवृत्कृतत्वेऽपीति ॥ अपां प्राधान्यविवक्षया प्रश्नप्रतिवचनयोरप्शब्द इत्युक्तमुपसंहरति ॥ तस्मादिति ॥ केवलानामपामसत्त्वादिति ।
यावत्कथमारम्भकेषु भूतेष्वपां बाहुल्यमवगतमित्याशङ्क्य कार्यदर्शनादधिगतमित्याह ॥ दृश्यते चेति ॥ सोमादीनामबाहुल्येऽपि कथं पार्थिवशरीर-
स्य तद्बाहुल्यमित्याशङ्क्याह ॥ बहु द्रवं चेति ॥ पञ्चमप्रश्ननिर्णयमुपसंहर्तुं पातनिकां करोति ॥ तत्रेति ॥ योषाग्नावितियावद्गर्भीभूताः पुरुषवचसो भवं-

उक्तार्थे वाक्यं योजयति ॥ इतीति ॥ अपां गर्भीभावोक्तिमात्रेण पुरुषवचस्त्वस्यानिर्णीतत्वादुत्तरग्रंथेनेत्याशंक्य तस्य तात्पर्यमाह ॥ यत्विति ॥ आहुत्योः संबंधीति शेषः ॥ प्रासंगिकं गर्भीभावोक्तिप्रसंगादागतमित्यर्थः ॥ दिहेति प्रक्रान्तस्त्र्युक्तिः ॥ प्रासंगिकीं संगतिमुक्त्वा साक्षादेव पूर्वोत्तरग्रंथयोरस्ति संगतिरिति तात्पर्यांतरमाह ॥ इह चेति ॥ प्रजानामूर्ध्वगमनमुत्तरत्र निरूपयिष्यते तेनादर्शनेन तासामुत्पत्तिरादावुच्यत इत्यर्थः ॥ द्विधा संगतिमुक्त्वा वाक्याक्षराणि योजयति ॥ स गर्भ इति ॥ सोमवृष्ट्यन्नरेतांस्यपेक्ष्य पंचमत्वविशेषणं गर्भाख्यस्य परिणामस्य द्रष्टव्यं ॥ अपां

इति त्वेवं तु पंचम्यामाहुतौ आपः पुरुषवचसो भवंतीति व्याख्यात एकः प्रश्नो यत्तु द्युलोकादिमां प्रत्यावृत्तयोराहुत्योः पृथिवीं पुरुषं स्त्रियं क्रमेण प्रविश्य लोकं प्रत्युत्थायी भवतीति वाजसनेयके उक्तं प्रासंगिकमिहोच्यते ॥ इह च प्रथमप्रश्न उक्तो वेत्थ यदितो ऽधि प्रजाः प्रयंतीति तस्य चायमुपक्रमः ॥ स गर्भोऽपां पंचमः परिणामविशेष आहुतिकर्मसमवायिनीनां श्रद्धाशब्दवाच्यानां ॥

इति तु पंचम्यामाहुतावापः पुरुषवचसो भवंतीति स उल्बावृतो गर्भो दश वा मासानंतः शयित्वा यावद्वाथ जायते ॥

वाच्यानां ॥ उल्बावृत उल्बेन जरायुणावृतो वेष्टितो दश वा नव वा मासानंतर्मातुः कुक्षौ शयित्वा ॥ यावता कालेन न्यूनेनातिरिक्तेन वा यावदनंतरं जायते ॥ उल्बावृत इत्यादि वैराग्यहेतोरिदमुच्यते ॥ कष्टं हि मातुः कुक्षौ मूत्रपुरीषवातपित्तश्लेष्मादिपूर्णे तदनुलिप्तस्य गर्भस्योल्बाशुचिपटावृतस्य लोहितरेतोऽशुचिबीजस्य मातुरशितपीतरसानुप्रवेशेन विवर्द्धमानस्य निरुद्ध

प्रकृतत्वद्योतनार्थमाहुतीत्यादिविशेषणद्वयं अथवा पूर्वोक्तकालान्न्यूनाधिकेन वा कालेन यावताऽजंतुः समग्रांगो जायते तावता कालेन कुक्षौ शयित्वेति संबंधः ॥ अनंतरं योनितो निर्गमनकारणीभूतकर्माभिव्यक्तेरिति शेषः ॥ उल्बावृतत्वं कुक्षौ चिरं शयनं योनितो निःसरणमित्येतद्दशावम ति प्रसिद्धं किमिति श्रुत्या व्यपदिश्यते तत्राह ॥ उल्बावृतेदृत्यादीति ॥ वैराग्यार्थत्वमस्य स्फुटयति ॥ कष्टं हीति ॥ श्लेष्मादीत्यादिशब्देनासृक्पूयस्नायुमज्जादीनि गृह्यंते ॥ तदनुलिप्तस्येति तच्छब्दो मूत्रपुरीषादिविषयः शक्तिर्बुद्धिसामर्थ्यं बलं देहसामर्थ्यं वीर्यमिंद्रियसामर्थ्यं तेजः शरीरगतकांतिः

प्रज्ञा चेतना जीवनधर्मः चेष्टा प्राणधर्मः ते निरुद्धा यस्य तस्येति विग्रहः ॥ मातुरुदरे शयानस्य कष्टत्वेऽपि तदुदराद्योनिद्वारा निःसरणं सुखकरमि
ति चेन्नेत्याह ॥ तत इति ॥ तदुद्धाह कान्वप्रकारमेवाभिनयति ॥ मुहूर्तमपीति ॥ यन्मातुरन्तः शयनं मुहूर्तमपि दुःसहं तत्कथं दीर्घकालमशयितुं शक्यं
॥ कथं च दश वा नव वा मासानन्तः शयित्वा पुनर्योनिद्वाराद्दुष्करं निःसरणं दुःसहं स्यादिति वैराग्यं ग्राहयति श्रुतिरित्यर्थः ॥ जातस्य पुनरनर्थो ना
स्तीत्याशङ्क्याह ॥ एवमिति ॥ यावदायुषमित्येतद्व्याचष्टे ॥ पुनरिति ॥ घटीयन्त्रवदूर्ध्वगमनार्थं वा निषिद्धकर्मयोनः पुन्येनाचरन्यावत्कर्मणा जनित

प्रज्ञाचेष्टस्य शयनं ततो योनिद्वारेण पीड्यमानस्य कष्टतरा निःसृतिर्जन्मेति वैराग्यं ग्राहयति ॥ मुहूर्तमप्यसह्यं दश वा मासानति
दीर्घकालमन्तः शयित्वेति यावत्स एवं जातो यावदायुषं पुनर्घटीयन्त्रवद्गमनागमनाय कर्म कुर्वन्कुलालचक्रवद्वा तिर्यग्भ्रमणा
य यावत्कर्मणोपात्तमायुस्तावज्जीवति ॥ तमेवं क्षीणायुषं प्रेतं मृतं दिष्टं कर्मणा निर्दिष्टं परलोकं प्रति यदि चेज्जीवन्वैदिके कर्मणि
विज्ञाने वाधिकृतस्तमेनं मृतमितोऽस्माद्ग्रामादग्नयेऽग्न्यर्थं ऋत्विजो हरन्ति पुत्रा वाऽन्त्यकर्मणे यत एव इत आगतः अग्नेः सका

स जातो यावदायुषं जीवति तं प्रेतं दिष्टमितोऽग्नय एव हरन्ति यत एवेतो यतः संभूतो भवति ॥ १ ॥

शात्क्रुद्धाद्याहुतिक्रमेण यतस्त्र्य पंचभ्योऽग्निभ्यः संभूत उत्पन्नो भवति ॥ तस्मादेवाग्नये हरंति ॥ स्वामेव योनिमग्निमापादयंती
त्यर्थः ॥ १ ॥ वेत्थ यदितोऽधि प्रजाः प्रयंतीत्ययं प्रश्नः प्रत्युपस्थितोऽपाकर्तव्यस्तया तत्र लोकं प्रत्युत्थितानामधिकृतानां गृहमेधि
नां यदित्यमेवं यथोक्तं पंचा

मायुस्तावदस्मिन्देहे जीवति ततो म्रियते तथा च जातस्य मृत्युध्रौव्यान्नास्ति सम्यग्ज्ञानं विना स्वस्ति प्राप्तिरित्य
र्थः ॥ अस्तु तर्हि मृतस्य कानकृत्यतेत्याशंक्याह ॥ तमेवमिति ॥ सर्वस्य तर्हि मृतस्य परलोकित्वं स्यादिति चेन्नेत्याह ॥ यदीति ॥ तदा परलोकं प्रति
कर्मणा निर्दिष्टमिति पूर्वेण संबंधः ॥ युक्तं च तन्मृतस्याग्न्यर्थं नयनमित्याह ॥ यत इति ॥ १ ॥ स उल्बावृत इत्यादिनोक्तमनुवदति ॥ वेत्थेति ॥ प्रत्यु
पस्थितः प्रजोत्पत्ति प्रदर्शनेन प्रसंगत इति यावत् तद्वदस्य विदुरित्येतद्व्याचष्टे ॥ ननु चेत्यादिना ॥ सप्तम्यर्थमेव स्फोरयति ॥ लोकमिति ॥ निर्द्धारणा

॥ द्युलोकादीति ॥ तेर्चिषमभिसंभवंतीत्युत्तरत्र संबंधः ॥ साधारण्ये किं विशेषे संकोचो हेतुं विना न सिध्यतीति शंकते ॥ कथमिति ॥ पारिशेष्यं संकोचकमिति परिहरति ॥ गृहस्थानामिति ॥ षष्ठी निर्धारणे ऽतश्च केवलकर्मिणो गृहस्थान् विदुरिति ग्रहणमर्हतीति शेषः ॥ परिव्राजका वानप्रस्थाश्च गृह्यंतामिति चेन्नेत्याह ॥ ये चेति ॥ केषां तर्हि ग्रहणमत आह ॥ पारिशेष्यादिति ॥ गृहस्थ एव हेत्वंतरमाह ॥ अग्निहोत्रेति ॥ तदाहुत्य पूर्वेपरिणामात्मकं जगदृत्तपंचधाप्रविभज्याग्नित्वेन दर्शनमुत्तरमार्गमासिसाधनं चोद्यते ऽतो विद्यायास्तत्संबंधाद्गृहस्थानामपि तत्संबंधस्य प्राप्तत्वात्तेषामेव ग्रहणमुचितमित्यर्थः ॥ पारिशेष्यमाक्षिपति ॥ नन्विति ॥ ग्रामे सपत्नीको वासो न च ब्रह्मचारिणां पत्नीसंबंधः तच्च ग्रामश्रुत्या ब्रह्मचारि-

द्युलोकाद्यग्निभ्यो वयं क्रमेण जाता अग्निस्वरूपाः पंचाग्न्यात्मान इत्येवं विदुर्जानीयुः कथमवगम्यते इत्थं विदुरिति गृहस्था एवोच्यंते नान्य इति ॥ गृहस्थानां ये त्वनित्थंविदुः केवलेष्टापूर्तदत्तपरास्ते धूमादिना चंद्रं गच्छंतीति वक्ष्यति ॥ ये चारण्योपलक्षिता वैखानसाः परिव्राजकाश्च श्रद्धातप इत्युपासते तेषां चेत्थंविद्भिः सहार्चिरादिना गमनं वक्ष्यति ॥ पारिशे-

तद्य इत्थं विदु ॥ १ ॥

ष्यादग्निहोत्राहुतिसंबंधाच्च गृहस्था एव गृह्यंत इत्थं विदुरिति ॥ ननु ब्रह्मचारिणोऽप्यगृहीता ग्रामश्रुत्यारण्यश्रुत्या चानुपलक्षितास्तेषु विद्यमानेषु कथं पारिशेष्यसिद्धिः नैष दोषः पुराणस्मृतिप्रामाण्यादूर्ध्वरेतसां नैष्ठिकब्रह्मचारिणामुत्तरेणार्यम्णः पंथाः प्रसिद्धोऽतस्तेऽप्यरण्यवासिभिः सह गमिष्यंति ॥

णोऽगृहीता गुरुकुलवासित्वाच्च ॥ नारण्यश्रुत्योपलक्षितास्तत्र तेषामिह ग्रहणसंभवान्न पारिशेष्यमित्यर्थः ॥ किं नैष्ठिकब्रह्मचारिणोऽत्रेत्थंविदुरिति गृह्येरन् किं वोपकुर्वाणा इति विकल्प्याद्यं दूषयति ॥ नैष दोष इति ॥ अष्टाशीतिसहस्राणि यतीनामूर्ध्वरेतसां स्मृतं स्थानं तु यत्तेषां तदेव गुरुवासिनामित्यादिपुराणस्मृतेः श्रुतिमूलत्वेन प्रामाण्यान्नैष्ठिकब्रह्मचारिणामूर्ध्वरेतसामादित्यसंबंधेनोत्तरायणेनोपलक्षितैरेव यानादेवो मार्गो यावज्जीवप्रसिद्धस्तस्मात्तेषामरण्यवासिभिः सहारंवडितंब्रह्मचर्येणैवा

द्वितीयमत्याह॥ उपकुर्वाणकास्त्विति॥ ते हि स्वाध्यायग्रहणार्थाः तस्मिन्गृहीते स्वेच्छावशादाश्रमांतरं गृह्णंतस्तत्फलेनैव फलवंतो भवंतीति नगृ
हस्थादिभ्यो विभज्येत्थंविदुरिति निर्देशमर्हंतीत्यर्थः॥ किं नैष्ठिकानां ब्रह्मचारिणामुत्तरमार्गप्राप्तिसंभवादनर्थकमित्थंवित्त्वं प्राप्तमिति श्रुतिवि
रोधाद्द्वितीये तु पारिशेष्यासिद्धिस्तादवस्थ्यमिति शंकार्थः॥ किमित्थंवित्त्वं नैष्ठिकान्प्रत्यनर्थकमित्युच्यते किं वा सर्वान्नेवमतीति विकल्प्याद्यमंगी
कृत्य द्वितीयं दूषयति॥ न गृहस्थानिति॥ तान्प्रत्यर्थवत्त्वमेवेत्थंवित्त्वस्य विभज्य समर्थयते॥ ये गृहस्था इति॥ स्वभावतस्तदनुष्ठितेष्टापूर्त्तवला
दित्यर्थः॥ तेषामेव गृहस्थानां मध्ये ये केचिदुक्तेन प्रकारेणेत्थं पंचाग्निदर्शनं विदुरग्निभ्योऽन्यद्वा सगुणं ब्रह्म विदुस्ते देवयानेनोत्तरपथा गच्छंतीति
संबंधः न केवलं गृहस्थानां पंचाग्निवित्त्वमेव किंतु सगुणब्रह्मवित्त्वमपि तेषामस्तीति प्रमाणमाह॥ अथेति॥ अनैष्ठिकरणाकरणयोरविशेषे

उपकुर्वाणकास्तु स्वाध्यायग्रहणार्था इति न विशेषनिर्देशार्हाः॥ ननूर्ध्वरेतस्त्वं चेदुत्तरमार्गप्रतिपत्तिकारणं पुराणस्मृतिप्रा
माण्यादिष्यते इत्थंवित्त्वमनर्थकं प्राप्तं न गृहस्थान्प्रत्यर्थवत्त्वात् ये गृहस्था अपि नेत्थं विदुस्तेषां स्वभावतो दक्षिणो धूमादिः
पंथाः प्रसिद्धस्तेषां य इत्थं विदुः सगुणं वान्यद्ब्रह्म विदुरथ यदु चैवास्मिञ्छव्यं कुर्वंति यदि च नार्चिषमेवेति लिंगादुत्तरेण तेग
च्छंतीति ननूर्ध्वरेतसां गृहस्थानां च समाने आश्रमित्वे ऊर्ध्वरेतसामेवोत्तरेण पथा गमने न गृहस्थानामिति नयुक्तमग्निहो
त्रादिवैदिककर्मबाहुल्ये च सति॥ नैष दोषः पूता हि ते शत्रुमित्रसंयोगवियोगनिमित्तं हि तेषां रागद्वेषौ न स्तो धर्माधर्मौ
हिंसानुग्रहनिमित्तौ हिंसानृतमायाऽब्रह्मचर्यादि च

॥ णब्रह्मविदामर्चिरादिगतिश्रवणाद्गृहस्थानामपि ब्रह्मवित्त्वमि
तिगम्यते परिव्राजकादिष्वेतेष्वसंभवेन विद्यास्तुतेरपि दुर्वचनत्वादित्यर्थः॥ विहितत्वाविशेषादाश्रमाणां तुल्यत्वमाश्रित्य शंकते॥ नन्वि
ति॥ साम्यमुक्त्वा गृहस्थेषु विशेषं दर्शयति॥ अग्निहोत्रादीति॥ वैदिकानि कर्माणि भूयांसि संति तेषां च बाहुल्ये सत्यविदुषामूर्ध्वरेतसामेव
देवयानेन पथा गमनं न गृहस्थानामित्ययुक्तं साधानभूयस्त्वे फलभूयस्त्वन्यायविरोधादित्यर्थः॥ आश्रमित्वाविशेषेऽपि धर्मविशेषाद्विशु
द्धितारतम्यसंभवान्नैकरूप्यमिति परिहरति॥ नैष इति॥ कथं गृहस्थानामग्निहोत्रादिभूयोधर्मवतां विद्याहीनानामपूतत्वं तत्राह॥ श

पदेन परिग्रहीत्वादि गृह्यते॥ अशुद्धिबाहुल्यकारणमतःशब्दार्थः॥ तुल्यमूर्ध्वरेतसामप्यशुद्धिहेतुबाहुल्यादपूतत्वमित्याशंक्याह॥ हिंसेति॥ ऊर्ध्वे
रेतसां पूतत्वे सिद्धे फलितमाह॥ तेषामिति॥ ऊर्ध्वरेतसां देवयाने पथ्यनुप्रवेशे प्रमाणमाह॥ तथा चेति॥ पौराणिका आहुरिति संबंधः॥ आश्रमधर्ममा
त्रमार्गद्वारेणामृतत्वमूर्ध्वरेतसामुक्तमाक्षिपति॥ इत्थंविदामिति॥ तेषां विद्यानर्थक्यमिष्टमेवेत्याशंक्याह॥ तथा चेति॥ स परमात्मा स्वयमद्वा॥
तःसन्नेनमधिकारिणमपवर्गप्रदानेन पालयतीति च वाक्यं विद्यामंतरेणामृतत्वं ब्रुवतो विरुद्धमित्यर्थः॥ ऊर्ध्वरेतसाममृतत्वस्यापेक्षिकत्वान्न
विद्यानर्थक्यमेवेति परिहरति॥ नाभूतेति॥ आपेक्षिकममृतत्वमित्यत्र प्रमाणमाह॥ तत्रैवेति॥ यत्र प्रजाः कामयमाना भुक्तिभाजो भवंतीत्युक्तं न॥

बह्वशुद्धिकारणमपरिहार्यं तेषामतोऽपूता अपूतत्वान्नोत्तरेण पथा गमनं हिंसानृतमायाब्रह्मचर्यादिपरिहारात्त्वशुद्धात्मा
नो ह्यतरे शत्रुमित्ररागद्वेषादिपरिहाराच्च विरजसस्तेषामयुक्त उत्तरः पन्थाः तथा च पौराणिकाः येऽप्रजामीषिरे धीरास्ते श्मशा।
नानि भेजिरे येऽप्रजां नेषिरे धीरास्तेऽमृतत्वं हि भेजिरे इत्याहुः॥ इत्थंविदां गृहस्थानामरण्यनिवासिनां च समानमार्गत्वेऽमृ
तत्वफले च सत्यरण्यनिवासिनां विद्यानर्थक्यं प्राप्तं॥ तथा च श्रुतिविरोधः॥ न तत्र दक्षिणा यंति नाविद्वांसस्तपस्विन इति
स एनमविदितो न भुनक्तीति च विरुद्धं॥ न आभूतसंप्लवस्थानस्यामृतत्वेन विवक्षितत्वात्तत्रैवोक्तं पौराणिकैः॥ आभूतसं
प्लवं स्थानममृतत्वं हि भाष्यत इति॥ यच्चात्यंतिकममृतत्वं तदपेक्ष्य न तत्र दक्षिणा यंति स एनमविदितो न भुनक्तीत्या।
द्याः श्रुतयस्ततो न विरोधः॥ न च पुनरावर्तंत इमं मानवमावर्त्तं नावर्त्तंत इत्यादिश्रुतिविरोध इति चेन्न इमं मानवमिति वि
शेषणात्तेषामिह न पुनरावृत्तिरस्तीति च॥ यदि ह्येकांतेनैव नावर्त्तेरन्निमं (१ अत्रैव तत्सन्निधाविति यावत्कथं तर्हि यथोक्तश्रुतिविरोधसमा।

धिरित्याशंक्याह॥ यच्चेति॥ आदिशब्दस्तमेवं विद्वानमृत इह भवतीत्यादिश्रुतिसंग्रहार्थः॥ आपेक्षिकामृतत्वे श्रुतिविरोधो न शक्यते परिहर्तुमिति
शंकते॥ न चेति॥ आदिशब्दस्तेषामिह न पुनरावृत्तिरित्यादिवाक्यसंग्रहार्थः॥ इममिहेति विशेषणावष्टंभेन निराचष्टे नेत्यादिना॥ तदेव व्यतिरेकमु
खेन विशदयति॥ यदीति॥ सर्वकल्पेष्वश्रुतेरेतादृशत्वादिममिहेति पदद्वयसामान्येन सर्वकल्पविषये विशेषणानर्थक्यं दुर्वारमित्युत्तरमाह॥ २॥

॥नानावृत्तीति॥ विध्यंतरेण विशेषणार्थसंभवे फलितमाह॥ अत इति॥ यस्मिन्कल्पे ब्रह्मलोकप्राप्तिस्तस्मात्कल्पांतरमन्यत्रेत्युक्तं॥ ऊर्ध्वरे
तसामाश्रमधर्ममात्रनिष्ठानाममृतत्वमापेक्षिकमुपक्षिप्तं संप्रति तेषामेव साक्षात्कृतब्रह्मतत्त्वानामात्यंतिकममृतत्वं गतिनिरपेक्षं सिध्यती
त्याह॥ नचेति॥ तेषां गत्यादिनिरपेक्षमात्यंतिकममृतत्वं भवतीत्यत्र प्रमाणमाह॥ ब्रह्मैवेति॥ नतस्य प्राणा उत्क्रामन्तीति॥ माध्यंदिनश्रुतिमा
नुसृत्य नतस्मेत्यादि काण्वश्रुतिरपि नेतव्येति शंक्यते॥ तस्मादिति॥ वाक्यशेषविरोधान्नैवमिति दूषयति॥ नात्रेति॥ श्रुत्यंतरालोचनायामपि नस्व
रूप्या कल्पनेत्याह॥ सर्वे प्राणा इति॥ प्राणैः सह जीवस्येति शेषः॥ संसारदशायां प्राणैः सह विज्ञानात्मनो गमनेऽपि मोक्षे नास्ति प्राणानां जीवेन स

मानवमिहेति च विशेषणमनर्थकं स्यादिममिहेत्याकृतिमात्रमुच्यत इति चेन्न। अनावृत्तिशब्देनैव नित्यानावृत्त्यर्थ
स्य प्रतीतत्वादाकृतिकल्पनानर्थिका। तदिममिहेति च विशेषणार्थवत्त्वायान्यत्रावृत्तिः कल्पनीया। न च सदेकमेवाद्वि
तीयमित्येवं प्रत्ययवतां मूर्धन्यया नाड्यार्चिरादिमार्गेण गमनं। ब्रह्मैव सन्ब्रह्माप्येति तस्मात्तत्सर्वमभवन्न तस्य प्रा
णा उत्क्रामन्त्यत्रैव समवनीयन्त इत्यादिश्रुतिभ्यस्तस्माज्जीवादुच्चिक्रमिषोः प्राणा नोत्क्रामन्ति सहैव गच्छन्तीत्य
र्थः कल्प्यत इति चेन्न। अत्रैव समवनीयन्त इति विशेषणानर्थक्यात्। सर्वे प्राणा अनूत्क्रामन्तीति च प्राणैर्गमनस्य प्राप्तत्वादु
त्क्रामन्तीत्यनाशंकैवैषा। यदापि मोक्षस्य संसारगतिवैलक्षण्यात्प्राणानां जीवेन सहागमनमाशंक्य न तस्मान्नोत्क्रा
मन्तीत्युच्यते तदाप्यत्रैव समवनीयन्त इति विशेषणमनर्थकं स्यान्न च प्राणैर्वियुक्तस्य गतिरुपपद्यते जीवत्वं वा॥ सर्वे

हगमनमित्याशंकायां न तस्मादित्यादिवाक्यमित्याशंक्याह॥ यदापीति॥ भवतु प्राणानामत्रैव समवलयस्तथापि जीवस्य गमनापत्त
ममृतत्वमित्याशंक्याह॥ नचेति॥ कस्मिन्वहमुत्क्रांत उत्क्रांतो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति स प्राणमसृजतेति।
श्रुतेरिति शेषः॥ किंच प्राणैर्वियुक्तस्य चिदात्मनो जीवत्वं नोपपद्यते प्राणोपाधिकस्यैव तस्य जीवशब्दवाच्यत्वादित्याह॥ जीवत्वं वे
ति॥ उक्तमर्थं समर्थयते॥ सर्वगतत्वादिति॥ चिदात्मा हि कल्पनायामधिष्ठाने सति हितो निर्भागः सर्वस्यात्मा तस्मात्स्वैर्विसृप्तलिंगावच्छेदेन जीवत्व

मनत्वात्सदात्मनो

त्वाभेदसंपादनं तस्य प्राणसंबंधमात्रमेवेति वैदिकानां प्रसिद्धं॥

116

छां॰ भा॰ ९६ तस्याश्च प्राणवियोगे चिदात्मनो जीवत्वं गतिर्वा न शक्या कल्पयितुं ॥ तस्मात्पूर्णत्वादिप्रतिपादकश्रुतीनां प्रमाणत्वादित्यर्थः सदात्मनः सर्वगत- अ॰ ५
स्य जीवाख्यभेदकरणं न प्राणोपाधिकृतं किंतु स्वत एव तस्यांशो जीवस्तथा चाग्निविस्फुलिंगवत्तस्य गत्युपपत्तेरित्याशंक्याह ॥ नेत्विति ॥ निष्क-
लं निष्क्रियं शांतमित्यादिश्रुतेरिति शेषः प्रकरणार्थमुपसंहरति ॥ तस्मादिति ॥ निर्गुणब्रह्मविदामात्यंतिकामृतत्वस्य गमनादिनिरपेक्षत्वादि-
तियावत्सगुणब्रह्मोपासकस्य सापेक्षममृतत्वमित्यत्र विशेषणश्रुतिमनुकूलयति ॥ तदपराजितेति ॥ आदिपदेन तदश्वत्थः सोमसवन इत्या

निरवयवत्वात्प्राणसंबंधमात्रमेव ह्यग्निविस्फुलिंगवज्जीवत्वभेदकारणमित्यतस्तद्वियोगे जीवत्वं गतिर्वा न शक्या परिक-
ल्पयितुं श्रुतयश्चेत्प्रमाणं ॥ न च सतोऽणुरवयवः स्फुटितो जीवाख्यः संस्फुरंश्छिद्रीकुर्वन्गच्छतीति शक्यं कल्पयितुं ॥ तस्मात्ते-
योर्ध्वमायन्नमृतत्वमेतीति सगुणब्रह्मोपासकस्य प्राणैः सह नाड्या गमनं सापेक्षमेव चामृतत्वं न साक्षान्मोक्ष इति ग-
म्यते ॥ तदपराजिता पूस्तदैरं मदीयं सर इत्याद्युक्तानेषामेवैष ब्रह्मलोक इति विशेषणात् ॥ अतः पंचाग्निविदो गृहस्था ये च

ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसंभवंत्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षा

मेऽरण्यं वानप्रस्थाः परिव्राजकाश्च सह नैष्ठिकब्रह्मचारिभिः श्रद्धातप इत्येवमाद्युपासते श्रद्धधानास्तप ((श्चान्
स्विनश्चेत्यर्थः ॥ उपासनशब्दस्तात्पर्यार्थः ॥ इष्टापूर्ते दत्तमित्युपासत इति यद्वत् ॥ श्रुत्यंतरात्ये च सत्यं ब्रह्म हिरण्यगर्भाः

दिगृह्यते तेषामेव ब्रह्मविदामेषु पूर्वोक्तविशेषगुणो ब्रह्मणः सत्याख्यस्य लोको नान्येषामकृतात्मनामिति विशेषदर्शनादमृतत्वं तेषां ॥
तल्लोकनिवासिभिः समं सापेक्षमेवेति निर्धारितमित्यर्थः ॥ ऊर्ध्वरेतसामाश्रममात्रनिष्ठानामपि ब्रह्मलोको लभ्यते गृहस्थानां पुनर्विदुषामे-
वेत्युपपाद्य प्रकृतश्रुतिव्याख्यानमनुवर्तयति ॥ अत इति ॥ पूर्वोक्तपारिशेष्यादिवशादितियावत् ॥ परिव्राजकाश्चेत्यमुख्यसंन्यासिनस्त्रि-
दंडिनो गृह्यंते ॥ मुख्यसंन्यासिनां ब्रह्मसंस्थोऽमृतत्वमेतीति पृथक्कृतत्वाच्छ्रद्धां सत्यमित्युपासत इति श्रुत्यंतरं पंचाग्निविदो गृहस्थाः स्वाश्र-

राम ९६

सत्यंब्रह्मोपासकाश्चोभये सर्वशब्देनोच्यन्ते ॥ चतुर्थे यद्युपकोसलविद्यायां गतिव्याख्यानमतिवृत्तं तेन समानमर्चिषोऽहरित्यादिवाक्यव्याख्या-
नं च ॥ तथा च तन्न पृथक्कर्त्तव्यमित्याह ॥ समानमिति ॥ उत्तरमार्गव्याख्यानमुपसंहरति ॥ एष इति ॥ देवयानेन पथा बहिरण्डाद्व्यवस्थितं
ब्रह्म गन्तव्यमित्येके तान्नेत्याह ॥ नाण्डादिति ॥ तत्र हेतुमाह ॥ यदन्तरेति ॥ पितरं द्युलोकं मातरं च पृथिवीमध्ये ये द्वे सृती अशृणवं ताभ्यामिदं
विश्वं कर्मज्ञानाधिकृतं गच्छतीति ॥ न चाण्डाद्बहिर्लिङ्गगतिद्वयमित्यर्थः ॥ वेत्थ यदितोऽधि प्रजाः प्रयन्तीत्यस्य प्रश्नस्य प्रतिवचनं देवयानोपदेशेन व्या-

सर्वेऽर्चिषमर्चिरभिमानिनीं देवतामभिसंभवन्ति प्रतिपद्यन्ते ॥ समानमन्यच्चतुर्थे गतिव्याख्यानेनैष देवयानः पन्था व्या-
ख्यातः सत्यलोकावसानो नाण्डाद्बहिः यदन्तरा पितरं मातरं चेति मन्त्रवर्णात् ॥ अथेत्यर्थान्तरप्रस्तावनार्थो य इमे गृहस्था ग्रामे ग्राम
इति गृहस्थानामसाधारणं विशेषणमरण्यवासिभ्यो व्यावृत्त्यर्थं ॥ यथा वानप्रस्थपरिव्राजकानामरण्यं विशेषणं गृहस्थेभ्यो

षडुदङ्ङेति मासांस्तान्मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमा-
नवः स एनान्ब्रह्म गमयत्येष देवयानः पन्था इत्यथ य इमे ग्राम इष्टापूर्ते दत्तमि ॥२॥

व्यावृत्त्यर्थं तद्वदिष्टापूर्ते इष्ट-
मग्निहोत्रादि वैदिकं कर्म पूर्तं वापीकूपतडागारामादिकरणं दत्तं च बहिर्वेदि यथाशक्त्यर्हेभ्यो द्रव्यसंविभागो दत्तं ॥ इत्येवं
विधं परिचरणपरित्राणाद्युपासते ॥ इतिशब्दस्य

ख्यातं संप्रति पितृयाणोपदेशेनापि ग्रामनिवासित्वाविशेषादित्याशङ्क्याह ॥ ग्रा-
म इतीति ॥ सपत्नीको हि वासो ग्राम इत्युच्यते ॥ न च सपत्नीकत्वमूर्ध्वरेतसां युक्तं ॥ तथा च गृहस्थानामेव ग्रामविशेषणमसाधारणं ॥ न च तद-
नर्थकमूर्ध्वरेतोभ्यस्तेषां व्यावृत्त्यर्थत्वादित्यर्थः ॥ तदेव दृष्टान्तेन स्पष्टयति ॥ यथेति ॥ वेदं तर्भावव्यासेधार्थं बहिर्वेदीति विशेषणमादौ ॥ दत्त-
मिति ॥ प्रतीकोपादानं पुनर्व्याख्यानस्यानुवादत्वादपुनरुक्तिः ॥ इतिशब्दार्थमाह ॥ इत्येवंविधमिति ॥ परिचरणं गुर्वादिशुश्रूषा परित्राणं
रक्षणमादिपदं नित्यस्वाध्यायादिसंग्रहार्थं उपासते तात्पर्येणानुतिष्ठन्तीति यावत्कथ्यमिति शब्दस्य यथोक्तार्थत्वमिति हस्तोपाध्यायः कथयती

देवयानाधिकृतेभ्यः सकाशात् पितृयाणाधिकृतेषु विशेषान्तरमाह ॥ नैतदिति ॥ अप्राप्तप्रतिषेधोऽयमिति शङ्कते ॥ कुत इति ॥ प्राप्तिं दर्शयन्नु-
त्तरमाह ॥ अस्ति हीति ॥ पूर्ववद्यथा पूर्वं देवयानेन पथावयवेभ्योऽवयविनः संवत्सरस्य प्राप्तिस्तथेति यावत् ॥ अन्नशब्दस्य यथाश्रुतमर्थं गृही-
त्वा प्रकारदर्शनार्थत्वान्नेदं दर्शनं नवर्जितत्वाद्धूमं धूमाभिमानिनीं देवतामभिसरणेन संभवन्ति प्रतिपद्यन्ते तया निर्वाहिता धूमाद्रा-
त्रिं रात्रिदेवतां रात्रेरपरपक्षदेवतामेवं कृष्णपक्षाभिमानिनीमपरपक्षाद्यान्षण्मासान्दक्षिणा दिगेति सविता तान्मासान्द-
क्षिणायनषण्मासाभिमानिनीर्देवताः प्रतिपद्यन्त इत्यर्थः संघचारिण्यो हि षण्मासदेवता इति मासानिति बहुवचनप्रयोगात्ता-
सु नैते कर्मिणः प्रकृताः संवत्सरं संवत्सराभिमानिनीं देवतामभिप्राप्नुवन्ति ॥ कुतः पुनः संवत्सरप्राप्तिप्रसंगो यतः प्रतिषिध्य-
त इति ॥ अस्ति हि प्रसंगः संवत्सरस्यैकस्यावयवभूते दक्षिणायने तत्राचिरादिमार्गप्रवृत्तानामुदगयनमासेभ्योऽवयविनः

त्युपासते ते धूममभिसंभवन्ति धूमाद्रात्रिं रात्रेरपरपक्षमपरपक्षाद्यान्षड्दक्षिणैति मासांस्तान्नैते संवत्सर-
मभिप्राप्नुवन्ति मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष सोमो राजा तद्देवानामन्नं तं देवा भक्षय।

संवत्सरस्य प्राप्तिरुक्ता अत इहापि तदवयवभूतानां दक्षिणायनमासानां प्राप्तिश्रुत्वात्तदवयविनः संवत्सरस्यापि ॥ ति ॥
पूर्ववत्प्राप्तिरापन्नेत्यतस्तत्प्राप्तिः प्रतिषिध्यते नैते संवत्सरमभिप्राप्नुवन्तीति ॥ मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशा-
च्चन्द्रमसं कोऽसौ यस्तैः प्राप्यते चन्द्रमा य एष दृश्यते तत्रिक्षसा सोमो राजा ब्राह्मणानां तद्देवानां तच्चन्द्रमसमन्नं देवा इन्द्रादयो भक्ष-
यन्त्यतस्ते धूमादिना गत्वा चन्द्रभूताः कर्मिणो देवैर्भक्ष्यन्ते ॥ नन्वनर्थायेष्टादिकरणं यदन्नभूता देवैर्भक्ष्यन्त इत्येष दोषः ॥ अन्नमि-
त्युपकरणमात्रस्य विवक्षितत्वान्न हि ते केवलोपक्षेपेण देवैर्भक्ष्यन्ते किं तर्ह्युपकरणमात्रं देवानां भवन्तीति स्त्रीपशुभृत्यादिवद्दृष्टव्या-
ख्या चोदयति ॥ नन्विति ॥ औपचारिकमर्थं गृहीत्वा परिहरति ॥ नेष इति ॥ तद्प्रयोगमन्तरेण कथमुपकरणविषयोऽन्नशब्दो व्याख्यायत इत्यत्राह ॥

भवतु कर्मिणां देवान्प्रत्युपकरणत्वं तथापि स्वयमुपभोगाभावादनर्थकमिष्टादिकरणमित्याशंक्याह ॥ न चेति ॥ अन्योपभोग्यानामपि स्वयंभोगसत्त्वं तस्मादित्युच्यते ॥ तथापि तेषां मृतानामशरीरिणां कथमुपभोगः संभवतीत्याशंक्याह ॥ शरीरं चेति ॥ कथमपां चंद्रलोके देहारंभकत्वं तदाह ॥ तदुक्तमिति ॥ अथापां सोमत्वमेवात्र प्रतीयते न तु कर्मिदेहारंभकत्वमित्याशंक्याह ॥ ता आप इति ॥ कर्मसमवायिनीनामपां कर्मापूर्वं द्वारा यजमानदेहमतिष्ठानां कथं द्युलोकप्रवेशादि संभवतीत्याशंक्याह ॥ अपां चेति ॥ मासि राब्धस्य शरीरस्य भोगायतनत्वं दर्शयति ॥ तदारब्धेनेति ॥ तदे

उपकरणेषु स्त्रियोऽन्नं पशवोऽन्नं विशोऽन्नं राज्ञामित्यादि न चैतेषां स्त्र्यादीनां पुरुषोपभोग्यत्वेऽप्युपभोगो नास्ति तस्मात्कर्मिणो देवानामुपभोग्या अपि संतः सुखिनो देवैः क्रीडंति शरीरं चैतेषां सुखोपभोगयोग्यं चंद्रमंडल आप्यमारभ्यते ॥ तदुक्तं पुरस्तात् श्रद्धाशब्दा आपो द्युलोकाग्नौ हुताः सोमो राजा संभवतीति ता आपः कर्मसमवायिन्य इतरैश्च भूतैरनुगता द्युलोकं प्राप्य चंद्रत्वमापन्नाः शरीराद्यारंभिका इष्टाद्युपासकानां भवंत्यपां च शरीरे हुतावस्थायामग्निना दह्यमाने शरीरे तदुत्था आपो धूमेन सह

तस्मिन्यावत्संपातमुषित्वाथैतमेवाध्वानं पुनर्निवर्त्तंते ॥

होर्ध्वं यजमानमावेष्ट्य चंद्रमंडलं प्राप्य कुशमृत्तिकास्थानीया बाह्यशरीरारंभिका भवंति ॥ तदारब्धेन च शरीरेणेष्टादिफलमुपभुंजाना आसते ॥ यावत्तदुपभोगनिमित्तस्य कर्मणः क्षयः संपतति येनेति संपातः कर्मणः क्षयो यावत्संपातं यावत्कर्मणः क्षय इत्यर्थः ॥ तावत्तस्मिन् चंद्रमंडले उषित्वाथानंतरमेतमेव वक्ष्यमाणमध्वानं मार्गं पुनर्निवर्तंते पुनर्निवर्त्तंत इति प्रयोगात्पूर्वमपि असकृच्चंद्रमंडलं गता निवृत्ताश्चासन्निति गम्यते ॥ तस्मादिह लोके इष्टादिकर्मोपचित्य चंद्रं गच्छंति तत्क्षये चाव((वर्त्तंते क्षणमात्रमपि

वानामन्नमित्यादि व्याख्याय तस्मिन्नित्यादि व्याचष्टे ॥ यावदिति ॥ चंद्रलोकस्तत्र वासार्थः यावत्संपातमुषित्वेति सूचितं कथमन्यथा व्याख्यायते तत्राह ॥ संपततीति ॥ पुनःशब्दप्रयोगस्य तात्पर्यमाह ॥ पुनरिति ॥ अथेत्यादिवाक्यार्थमुपसंहरति ॥ तस्मा

तच्छब्दपरामृष्टं हेतुं स्पष्टयति ॥ स्थितेति ॥ यथा दीपस्य स्नेहक्षये स्थितिनिमित्ताभावादस्थितिस्तथा चन्द्रलोके स्थितिनिमित्तस्ये—
ष्टादेर्भोगेन क्षयात्तत्रास्थित्यसंभवादावृत्तिरेवेत्यर्थः ॥ तस्मिन्यावत्संपातमुषित्वेत्यत्र विचारयति ॥ किंतत्रेति ॥ तस्य चन्द्रमण्डलप्रापक
स्यातिरिक्तस्य च सर्वस्य कर्मणः क्षये सतीति ॥ यावत्सावशेषो भुक्तात्कर्मणः सकाशादतिरिक्तेन केनचित्कर्मणा सहितः सन्नित्यर्थः ॥
पक्षद्वयेऽपि फलं पृच्छति ॥ किंतत इति ॥ तत्राद्यं पक्षं पूर्वपक्षित्वेन प्रतिचिक्षिप्सुस्तत्फलमाह ॥ यदीति ॥ तत्रैव दूषणांतरमाह ॥ तिष्ठ
त्विति ॥ चन्द्रमण्डलस्य सम्यगर्थः ॥ ततश्चन्द्रमण्डलादिहैतद्विहेत्येतल्लोकोक्तिः ॥ आदिपदं शुभाशुभकर्मानुसारिसर्वप्रापारसंग्रहार्थं ॥
न केवलं सर्वकर्मक्षयपक्षे श्रुतिरेव विरुध्यते किंतु स्मृतिश्चेत्याह ॥ तत इति ॥ चन्द्रलोके भोक्तव्यस्य कर्मणः भोगेन क्षयादूर्ध्वं शेषेणानुप

स्थितिनिमित्तकर्मक्षयात्स्नेहक्षयादिव प्रदीपस्य ॥ किंतत्र येन कर्मणा चन्द्रमण्डलमारूढस्तस्य सर्वस्य क्षये तस्मादव
रोहणं ॥ किंवा सावशेष इति ॥ किंततः ॥ यदि सर्वस्यैव क्षयः कर्मणश्चन्द्रमण्डलस्थस्यैव मोक्षः प्राप्नोतीति ॥ तिष्ठतु तावत्त
त्रैव मोक्षः स्यान्नवेति तत आगतस्येह शरीरोपभोगादि न संभवति ततः शेषेणेत्यादिस्मृतिविरोधश्च स्यात् ॥ नन्विष्टापू
र्तदत्तव्यतिरेकेणापि मनुष्यलोके शरीरोपभोगनिमित्तानि कर्माण्यनेकानि संभवंति न चैतेषां चन्द्रमण्डल उपभोगोऽतो
ऽक्षीणानि तानि ॥ यन्निमित्तं चन्द्रमण्डलमारूढस्तान्येव क्षीणानीत्यविरोधः शेषशब्दश्च सर्वेषां कर्मत्वसामान्याद्विरुद्धः

भुक्तेन कर्मणा जन्म प्रतिपद्यत इत्याद्यास्मृतिः सर्वकर्मक्षयपक्षे विरुध्यत इत्यर्थः ॥ सर्वकर्मक्षयपक्षे पूर्वपक्षिणाऽन्यथावादिना
प्रतिक्षिप्ते सावशेषपक्षमुत्तरवादी प्रतिपद्यते ॥ नन्विति ॥ तान्यपि चन्द्रमण्डले भुक्तान्येवेति नावशेषोऽस्तीत्याशंक्याह ॥ नचेति ॥ न हि सर्वकर्मवशा-
च्चन्द्रमण्डलप्राप्तिरिति भावः ॥ तर्हि चन्द्रमण्डले कर्मफलोपभोगाभावात्तत्तदारोहेणेत्याशंक्याह ॥ यन्निमित्तमिति ॥ अविरोधश्चन्द्रमण्डले भोगस्य
शेषकर्मसद्भावस्य चेति शेषः ॥ यत्तु ततः शेषेणेत्यादिस्मृतिविरोध इति तत्राह ॥ शेषशब्दश्चेति ॥ निःशेषेष्वपि भुक्तेषु कर्मसु अभुक्तकर्मसु शेष
शब्दो न विरुध्यते ॥ अभुक्तानां कर्मणां कर्मत्वस्य तुल्यत्वान्नात्र सावशेषपक्षे स्मृतिविरोधोऽस्तीत्यर्थः ॥ यच्चन्द्रमण्डलस्थस्यैव मोक्षः स्यादिति त

शेषकर्मसंज्ञा वा देवेति यावदित्यवकर्मशेषसिद्धिरित्याह ॥ विरुद्धेति ॥ आरंभकत्वसंभवादेकजात्युपभोग्यकर्मक्षयेपि कर्मशेषः संभवतीति शेषः ॥ अथैकस्मिन् जन्मनि सर्वाणि क्षीयंते कर्माण्यस्यैकभविकत्वादित्याशंक्याह ॥ नचेति ॥ एकभविकन्यायस्यापरिष्टान्निराकरिष्यमाण त्वादित्यर्थः इतश्च शेषकर्मसिद्धिरित्याह ॥ ब्रह्महत्यादेश्चेति ॥ श्वसूकरखरोष्ट्राणामित्यादिस्मरणं ॥ घृतभांडस्नेहशेषवद्भुक्तस्यैव कर्मणः शेषात्पुनरावृत्तिर्भविष्यतीत्यत आह ॥ स्थावरादीति ॥ शेषकर्मसिद्धौ हेत्वंतरमाह ॥ गर्भसंभूतानामिति ॥ कर्मशेषसद्भावमुपसंहरति ॥ तस्मादिति ॥ एकस्यापि कर्मणोऽनेकजन्महेतुत्वं न स्ववचनार्थः ॥ मतांतरमुत्थापयति ॥ यत्विति ॥ यावत्प्रवृत्तफलं कर्म न क्षीयते तावत्प्रवर्तिमतिबंधादन्यानि कर्माणि स्वफलं नारभंते मरणकाले तु प्रतिबंधकाभावात्सर्वकर्माश्रयसंघातोपमर्देन तेषामुत्तरशरीरारंभकत्वमविरुद्धमित्य

च तत्रैव मोक्षः स्यादिति दोषाभावो विरुद्धानेकयोन्युपभोगफलानां च कर्मणामेकैकस्य जंतोरारंभकत्वसंभवान्नचैकस्मिन् जन्मनि सर्वकर्मक्षयः उपपद्यते ॥ ब्रह्महत्यादेश्चैकैकस्य कर्मणोऽनेकजन्मारंभकत्वस्मरणात् ॥ स्थावरादिप्राप्तानां चात्यंतमूढानामुत्कर्षहेतोः कर्मण आरंभकत्वासंभवाद्गर्भसंभूतानां च स्रंसमानानां कर्मासंभवे संसारानुपपत्तिस्त स्मान्नैकस्मिन् जन्मनि सर्वेषां कर्मणामुपभोगो यत्तु केचिदुच्यते सर्वकर्माश्रयोपमर्देन प्रायेण कर्मणां जन्मारंभकत्वं तत्र कानिचित्कर्माण्यनारंभकत्वेनैव तिष्ठंति कानिचिज्जन्मारभंत इति नोपपद्यते ॥ मरणस्य सर्वकर्माभिव्यंजकत्वात्स्वगोचराभिव्यंजकप्रदीपवदिति तदसत्सर्वस्य सर्वात्मकत्वाभ्युपगमान्नहि सर्वस्य

अर्थः ॥ तथापि कथं शेषकर्मसद्भावासिद्धिरित्यत आह ॥ तत्रेति ॥ अनारब्धकर्मणां सर्वेषामुत्तरशरीरारंभकत्वे सतीति यावत्प्रायणकाले यानि कर्माण्यभिव्यक्तानि तान्येवोत्तरशरीरारंभकाणि इतरेषां तु न शरीरारंभकत्वमिति दूषयति ॥ तदसदिति ॥ मधुब्राह्मणोक्तेन न्यायेन सर्वस्य सर्वात्मकत्वांगीकाराद्देहस्यापि तथात्वात्तु सर्वात्मनोपमर्दोपपत्तिरित्यर्थः ॥ उक्तमर्थमुपपाद्यापि तु सामान्यन्यायमाह ॥ नहीति ॥ सर्वं सर्वस्य कारणं कार्यं चेति न्यायेन सर्वस्य सर्वात्मकत्वे स्थितेपि तिकस्य चित्कचित्सर्वात्मनोपमर्दः तथाभिव्यक्तिर्वा नोपपद्यते ॥ प्रतीयमानोपमर्दस्तु देशविशेषादिकृतत्वादित्यर्थः ॥ उक्तन्यायं प्रकृते यो

छां·भा· ॥ तथेति ॥ इतश्च कर्मशेषः संभवतीति क्रमवत्तायां दृष्टांतमाह ॥ यथा चेति ॥ पूर्वक्रमेणानुभूतानि यानि मनुष्यादीनि जन्मानि तैरभि- अ· ५
१९ संस्कृताः संपादिताः विरुद्धा या भूयस्यो वासनास्ता जातिविशेषप्रापकेण कर्मणास्मिन्नारभ्यमाणे न निरुध्यंत इत्यर्थः ॥ दार्ष्टांतिकमाह
॥ तथेति ॥ दृष्टांतं विवृणोति ॥ यदि हीति ॥ व्यवहितवासनोच्छेदेपि नाव्यवहितदेशाच्छिन्नत्वेन तथा चानंतरजन्मान्त्या वासना सामान्यान्-
मर्कटशिशोर्यथोक्तकौशलमविरुद्धमित्याशंक्याह ॥ न चेति ॥ किंच पूर्वप्रज्ञा चेत्यविशेषेण पूर्वजन्मार्जितवासनाजीवमनुगच्छती-

सर्वात्मकत्वे देशकालनिमित्तावरुद्धत्वात्सर्वात्मनोपमर्दः कस्यचित्क्वचिदभिव्यक्तिर्वा सर्वात्मनोपपद्यते ॥
तथा कर्मणामपि साश्रयाणामुपमर्दो भवेद्यस्माच्च पूर्वानुभूतमनुष्यमयूरमर्कटादिजन्माभिसंस्कृता विरुद्धा-
नेकवासनां मर्कटत्वप्रापकेन कर्मणा मर्कटजन्मारभमाणेन नोपमृद्यते ॥ तथा कर्माण्यप्यन्यजन्मप्राप्तिनिमित्ता-
नि नोपमृद्यंत इति युक्तं ॥ यदि हि सर्वाः पूर्वजन्मानुभववासना उपमृद्येरन्मर्कटादिजन्मनिमित्तेन कर्मणा मर्कटज-
न्मन्यारब्धे मर्कटस्य जातमात्रस्य मातुः शाखायाः शाखांतरगमने मातुरुदरसंलग्नत्वादिकौशलं न प्राप्नोतीह ज-
न्मन्यनभ्यस्तत्वान्न चातीतानंतरजन्मनि मर्कटत्वमेवासीत्तस्येति शक्यं वक्तुं तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा
चेति श्रुतेस्तस्माद्वासनावन्नाशेषकर्मोपमर्द इति शेषकर्मसंभवः यत एवं तस्माच्छेषेणोपभुक्तात्कर्मणः संसार उपप-
द्यत इति न कश्चिद्विरोधः ॥ कोसावध्वा यं प्रति निवर्तन इत्युच्यते ॥ यथेतं यथागतं निवर्तंते ॥ ननु मासेभ्यः पितृलोकं पि-
तृलोकादाकाशमाकाशाच्चंद्रमसमिति गमनक्रम उक्तो न तथा निवृत्तिः किं तर्ह्याकाशाद्वायुमित्याद्याक थं यथेतमित्यु-

ति श्रवणाद्व्यवहितपूर्वजन्मवासनैव तमन्वेतीति न शक्यं विशेषतो वक्तुमित्याह ॥ तं विद्येति ॥ दृष्टांतमुपपाद्य दार्ष्टांतिकं निगमय-
ति ॥ तस्मादिति ॥ शेषकर्मसद्भावफलितमाह ॥ यत इति ॥ उपयुक्तात्कर्मणः शेषेणेति संबंधः ॥ कश्चिदिति ॥ श्रौतो वा स्मार्तो वा यौक्तिको
वा लौकिको वा इत्यर्थः ॥ एतमेवाध्वानमिति प्रकृतमध्वानं प्रश्नपूर्वकं विशदयति ॥ कोसावित्यादिना ॥ यथेतमित्युक्तमाक्षिपति ॥ नन्वि-

॥नैषदोषइति॥द्वितीयंप्रत्याह॥नचेति॥अत्रेति निवृत्तिकृत्ता॥अनेवंविधमपीति॥यथागतिक्रमोदर्शितोनतथानिवृत्तिर्नियता किंतुवि धांतरेणापिसंभवतीत्यर्थः निवृत्तेः क्रमनियमाभावेकीदृशोनियमोविवक्षितइत्याशंक्याह॥पुनरिति॥केनाभिप्रायेणतर्हियथेतमित्युक्त मतआह॥अतइति॥गतिक्रमवन्निवृत्तिक्रमेनियमाभावोऽतःशब्दार्थः॥उक्तंचयथेतमनेवंचेतिनिवृत्तिनियमेफलितमाह॥अतइति॥पर मात्मानंव्यावर्तयितुं भौतिकमित्युक्तं॥कथंपूर्वसिद्धाकाशतादात्म्यापत्तिरवरोहतांसिध्यतीत्याशंक्यतत्साम्यगमनमेवतद्भावापत्तिरित्युप

नैषदोषः॥आकाशप्राप्तेस्तुल्यत्वात्पृथिवीप्राप्तेश्च॥नचात्रयथेतमेवेतिनियमोऽनेवंविधमपिनिवर्तन्ते॥पुनर्निवर्तन्तइ॰ तितुनियमो तदुपलक्षणार्थमेतद्यथेतमित्यतोभौतिकमाकाशंतावत्प्रतिपद्यन्ते॥यास्तेषांचन्द्रमण्डलेशरीरारंभकाआपआ संस्तास्तेषांतत्रोपभोगनिमित्तानांकर्मणांक्षयेविलीयन्ते॥घृतसंस्थानमिवाग्निसंयोगेतावितीनाअंतरिक्षस्थाआकाशभू॰

यथेतमाकाशमाकाशाद्वायुंवायुर्भूत्वाधूमोभवतिधूमोभूत्वाऽभ्रंभवत्यभ्रंभूत्वामेघोभवतिमेघोभूत्वा

ताइवसूक्ष्माभवंति॥ताअंतरिक्षाद्वायुर्भवंतिवायुप्रतिष्ठावायुभूताइतश्चामुतश्चोह्यमानाःताभिः ((प्रवर्षति॥ः सहक्षीणकर्मावायुभूतोभवति॥वायुर्भूत्वाताभिःसहैवधूमोभवति॥धूमोभूत्वाऽभ्रमब्भरणमात्ररूपोभवत्यभ्रंभूत्वा ततःसेचनसमर्थोमेघोभवति॥मेघोभूत्वानिम्नोन्नतप्रदेशेष्वथप्रवर्षतिवर्षधारारूपेणपतत्यर्थः॥तइहव्री हियवाओषधिवनस्पतयस्तिलमाषाइत्येवंप्रकाराजायन्तेक्षीणकर्माणाअनेकत्वाद्बहुवचननिर्देशो ((वर्षतेस्वाभाव्याप॰

त्तिरितिन्यायादित्याह॥यास्तेषामिति॥घृतस्यसंस्थानंकाठिन्यंतास्वाकाशभूतासुतत्परिवेष्टिताःकर्मिणोऽप्यवरोहंतस्तद्वत्ताइवभवंतीत्य र्थः॥आकाशाद्वायुमित्यस्यार्थंसाधयति॥ताअंतरिक्षादिति॥उन्नतेषुसमुद्रादिव्यतिरिक्तेषुप्रदेशेषुक्षितियावत्॥तइत्यनुशयिनोनिर्दिश्यं ते॥इहेति॥पृथिवीकथ्यतेकथमस्मिन्वाक्येबहुवचनेनानुशयिनांबहुत्वंनिर्दिश्यतेइत्यर्थः॥कथंतर्हिमेघोभूत्वाप्रवर्षतीत्यादावेकवच

टी·भा·
२०

मेघादिष्विति। ये पूर्वे मेघादयो नभोन्तास्ते मध्ये कमभिमानिदेवतानामेकरूपत्वात्तदुपश्लिष्टानामनुशयिनामप्येकवचनेन निर्देशोपपत्तिरित्यर्थः। अतो वै खल्वित्यादिवाक्यं व्याचष्टे। यस्मादिति। अनुशयिनां दुःशकं निःसरणमित्युक्तं प्रपञ्चयति। यत इत्यादिना। मकरादिभिर्भक्षितानामनुशयिनां तेभ्यस्तत्समानजातीयत्वेन समुद्भवो भविष्यतीति चेन्नेत्याह। तेऽपीति। मकरादयोऽपि जलचारिभिरन्यैर्भक्ष्यन्ते तथा च समुद्रे पतितानामनुशयिनां तत्रैव लयः स्यादित्यर्थः। नन्वेवमनुशयिनः समुद्रे लीनाः न ततः पुनरूर्ध्वं गन्तुं शक्यं तेन तथा च का

मेघादिषु पूर्वेष्वेकरूपत्वादेकवचननिर्देशः। यस्माद्गिरितटदुर्गनदीसमुद्रारण्यमरुदेशसन्निवेशाः सहस्रशो वर्षधाराभिः पतितानामतस्तस्माद्वै खलु दुर्निष्प्रपतरं दुर्निष्क्रमणं दुर्निःसरणम्। यतो गिरितटादुदकस्रोतसोह्यमाना नदीः प्राप्नुवन्ति ततः समुद्रं ततो मकरादिभिर्भक्ष्यन्ते तेऽप्यन्येन तत्रैव च मकरेण समुद्रे विलीनाः समुद्राम्भोभिर्जलधरैराकृष्टाः पुनर्वर्षधाराभिर्मरुदेशे शिलातटेऽगम्ये पतितास्तिष्ठन्ति कदाचिद्व्यालमृगादिपीता भक्षिताश्चान्यैस्तेऽप्यन्यैरित्येवंप्र

त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्तेऽतो वै खलु दुर्निष्प्रपतरं॥

काराः परिवर्तेरन्। कदाचिदभक्ष्यस्थावरेषु जातास्तत्रैव शुष्येरन् भक्ष्येष्वपि स्थावरेषु जातानां रेतःसिग्देहसंबन्धो दुर्लभ एव बहुत्वात्स्थावराणामित्यतो दुर्निष्क्रमणत्वम्। अथवाऽतोऽस्माद्व्रीहियवादेः ((विनाशः स्यादित्याशङ्क्याह। जलध

रैरिति। समुद्राम्भोभिरिति तृतीया सप्तम्यर्थे। न हि सर्पव्याघ्रोपभुक्तानामनुशयिनां तत्समानजातीयदेहभोगः स्यादिति चेन्नेत्याह। भक्षिताश्चेति। ये हि सर्पादयो भक्ष्यन्ते तेभ्यस्तत्समानजातीयत्वेनानुशयिनां समुद्भवः स्यादिति चेन्नेत्याह। तेऽपीति। तथापि यथोक्तरीत्या परिवर्तनातिरेकेण रेतःसिग्भ्यो गमपि यदा कदाचित्संपद्येरन्निति चेन्नेत्याह। कदाचिदिति। तथापि भक्ष्येषु जातानां रेतःसिग्योगः सुलभः स्यादिति चेन्नेत्याह। भक्ष्येष्वपीति। दुर्निष्प्रपतरशब्दो यतःशब्देन पूर्वेण संबध्यते। पूर्वमतःशब्दो हेतुपरतया व्याख्यातः संप्रतिव्रीह्या

दुर्निष्प्रपततरमिति तकारसहितपाठे सति विवक्षितमर्थमाह ॥ व्रीहियवादीति ॥ तत्र हेतुमाह ॥ यस्मादिति ॥ ते हि तेषामंतराले विशीर्णा
नां देहभागित्वाभावादनुशयिवैयर्थ्यमित्याशंक्याह ॥ कदाचिदिति ॥ काकतालीययावदित्यायादृच्छिकन्यायेनेति यावत् ॥ अनुशया
ख्यस्य कर्मणो भाविदेहारंभार्थत्वात्सुखप्रश्नपूर्वकं विवृणोति ॥ कथमित्यादिना ॥ अनुशयिनो रेतःसिग्भावे हेतुमाह ॥ रेत
स इति ॥ तस्य रेतःसिगाकृत्यात्तद्देशेन भावितत्वात्संस्कृतत्वात्तदंगसंभूतत्वात्तद्रूपेण गर्भाशयमनुप्रविष्टोऽनुशयी रेतःसिगाकृतिर्भ

भावाद्दुर्निष्प्रपततरं दुर्निर्गमनतरं दुर्निष्प्रपतरमिति तकार एको लुप्तो द्रष्टव्यः ॥ व्रीहियवादिभावो दुर्निष्प्रपततर
स्तस्मादपि दुर्निष्प्रपततराद्रेतःसिग्देहसंबंधो दुर्निष्प्रपततर इत्यर्थः यस्मादूर्ध्वरेतोभिर्बालैः पुंस्त्वरहितैः स्थवि
रैर्वा भक्षिता अंतराले शीर्यंते अनेकत्वाच्चान्नानां ॥ कदाचित्काकतालीयवद्रेतःसिग्भिर्भक्ष्यंते यदा तदा रेतः
सिग्भावं गतानां कर्मणो वृत्तिलाभः कथं यो यो ह्यन्नमत्ति अनुशयिभिः संश्लिष्टं रेतःसिग्यश्च रेतः सिंचत्यृतुकाले यो

यो यो ह्यन्नमत्ति यो रेतः सिंचति तद्भूय एव भवति ॥

षिति तद्भूय एव तदाकृतिरेव भवति रेतोरूपेण योषितो गर्भाशयं प्रविष्टोऽनुशयी रेतसो रेतःसिगाकृतिभावितत्वात्
सर्वेभ्योंगेभ्यस्तेजः संभूतमिति श्रुत्यंतरात् रेतःसिगाकृतिरेव भवतीत्यर्थः ॥ तथा हि पुरुषात्पुरुषो जायते गोर्गवाकृति
रेव न जात्यंतराकृतिस्तस्मात् युक्तं तद्भूय एव भवतीति ॥ येत्वन्येतु

(( वतीत्यर्थः रेतसो रेतःसिगंगसमुत्थत्वे प्रमाणमैतरेयकश्रुतिरित्याह ॥
सर्वेभ्य इति ॥ रेतोरूपेण गर्भाशयं प्रविष्टस्य रेतःसिगाकारत्वं युक्तं निगमयति ॥ अत इति ॥ अनुशयिनो रेतःसिगाकारत्वे लौकिकानुभवमनु
कूलयति ॥ तथेति ॥ चन्द्रस्थलस्खलितानामवरोहतां व्रीह्यादिदेहसंश्लिष्टानां द्राघीयसा कालेन देहांतरलाभश्चेत्तर्हि व्रीह्यादिदेहाभि
मानिनामपि दुःशकं निष्क्रमणं व्रीह्यादिदेहसंबंधाविशेषादित्यत आह ॥ यत्त्विति ॥ ६ ॥ ७ ॥ ६ ॥ ७ ॥ ६ ॥ ७ ॥

व्रीह्यादिदेहसंबन्धाविशेषेऽकृतस्य देहभाजां ततो निःसरणमशक्यं न भवतीत्याशंक्य विशेषमाह ॥ कस्मादित्यादिना ॥ शरीरजैः कर्म
दोषैर्याति स्थावरतां नर इत्यादि स्मृतिस्मृत्योर्येषां कर्मनिमित्तं स्थावरजन्म तेषां कर्मक्षय एवावधिरवरोहतां तु कर्मासंकीर्तनाद्दृष्टप्य-
मित्यर्थः ॥ यथा जलूका तृणात्तृणान्तरं दीर्घभूता संक्रमते न तथानुशयिनो व्रीह्यादिदेहभाजोऽपि तत्त्यागेन देहान्तरं गच्छन्तस्तोऽहपयवि-
ज्ञानवन्त एव न गच्छन्तीत्यत्र बृहदारण्यकश्रुतिं प्रमाणयति ॥ सविज्ञान इति ॥ अथोपसंहृतकरणानां विज्ञाने कारणासंभवात्कथं सवि-
ज्ञानत्वमत आह ॥ यद्यपीति ॥ स्वकारणाभावेऽप्यदृष्टमेवैकं वासनात्मकज्ञानोत्पत्तौ निमित्तमिति तेन सविज्ञाना एव गच्छन्ति देहान्तरमि-
त्यत्र हेतुमाह ॥ श्रुतिप्रामाण्यादिति ॥ श्रुतिरत्र बृहदारण्यकश्रुतिः ॥ यथा सविज्ञानानामेव व्रीह्यादिदेहान्तरगमनं न तथा ह्यग्निनामवि-

पृथिव्यप्रश्नष्टदूमेऽडल्मनाकहेतोहेवपापकर्मभिर्घोरैर्व्रीह्यवादिभावं प्रतिपद्यन्ते पुनर्मनुष्यादिभावं तेषां नानुशयिनामिवदु-
र्निष्प्रपतरं कस्मात्कर्मणा हि ते व्रीह्यवादिदेहमुपानाद्विति तदुपभोगनिमित्तस्य क्षये व्रीह्यादिस्तंबदेहविनाशे यथाकर्माजि-
तं देहान्तरं जलूकावत्संक्रमन्ते सविज्ञाना भवन्ति सविज्ञानमेवान्ववक्रामतीति श्रुत्यन्तरात्। यद्यपि संहृतकरणाः संतो
देहान्तरं गच्छन्ति तथापि स्वप्नवद्देहान्तरप्राप्तिनिमित्तकर्मोद्भावितवासनाज्ञानेन सविज्ञाना एव देहान्तरं गच्छन्ति ॥ श्रुतिप्रा-
माण्यात्तथात्वाविरोहादिना चगमनं स्वप्नवदुद्भूतविज्ञानेनस्य अवतिकर्मनिमित्तत्वात्क्रमनस्य न तथानुशयिनां व्रीह्यादि-
भावेन जातानां सविज्ञानमेवचेतः सिद्ध्योऽपि देहसंबंध उपपद्यते न हि व्रीह्यादिलवनकंडनपेषणादौ च सविज्ञानानां

राहित्याकर्मिणां धूमादिना चगमनं स्वप्नवदुद्भूतवासनात्मकविज्ञानेन सविज्ञानानामेवेत्याह ॥ तद्वदिति ॥ तेषां सविज्ञानत्वे हेतुमाह ॥ लब्ध-
वृत्तीति ॥ अनुशयिनामपि न हि व्रीह्यादिषु संश्लिष्टानां रेतःसिगादिदेहसंबंधः सविज्ञानानामिवेति चेन्नेत्याह ॥ न तद्वदिति ॥ अनुपपन्नो हे-
तुमाह ॥ नहीति ॥ व्रीह्यादिसंश्लिष्टानामनुशयिनां सविज्ञानत्वेन लवनेनादौ तज्जीववत्तेषामपि प्रसंगात्तेन रेतःसिग्देहसंबंधः सिध्ये-
दित्यर्थः ॥ व्रीह्यादिषु देहान्तरं गच्छत्सु विज्ञानत्वोपलंभादनुशयिष्वपि देहान्तरप्राप्तौ विशेषात्तुल्यं सविज्ञानत्वमिति शङ्कते ॥ ० ॥

॥नन्विति॥ तृणात्तृणान्तरं प्रति जलूकागमनवदवरोहतामपि देहान्तरं प्रतिगमनस्य तुल्यत्वाद्व्रीह्यादिवद्भुक्तास्सविज्ञाना इति योजना॥ भु-
क्तेः तेषां सविज्ञानत्वे का हानिरित्यत आह॥ तथा च सतीति॥ इष्टादिकारिणामन्तराले नरकानुभवे॥ तथा च सति तदनुष्ठानस्यानर्थार्थ-
विहितत्वे श्रेयःसाधनविषयं कर्मकाण्डं विरुध्येतेत्याह॥ स्थितेश्चेति॥ यथा तु बुद्धिपूर्वकं वृक्षमारोहतां सविज्ञानत्वेऽपि तस्माद्बुद्धिपूर्वं पत-
नात्सविज्ञानत्वं विज्ञायते तथा चन्द्रमण्डलमारोहतां सविज्ञानत्वेऽपि ततोऽवरोहतां नैव तदस्त्युद्भूतकर्माभावादित्यारोहावरोहयोर्ज्ञाने विशे-
षसंभवान्नैवमिति परिहरति॥ न वृक्षेति॥ संग्रहवाक्यविवरणो ति॥ देहादित्यादिना॥ चकाराद्गच्छतोऽपि सविज्ञानत्वं भवेदिति संबन्धः॥

ननु चन्द्रमण्डलादप्यवरोहतां देहान्तरगमनस्य तुल्यत्वाज्जलूकावत्सविज्ञानत्वमेव युक्तम्॥ तथा च सति घोरनरकानु-
भवदृष्टापूर्तादिकारिणां चन्द्रमण्डलादारभ्य प्राप्तो यावद्ब्राह्मणादिजन्म तथा च सत्यनर्थायेष्टापूर्तादुपासनं विहि-
तं स्यात्तु तेश्च प्रामाण्यमाप्तं वैदिकानां कर्मणामनर्थानुबन्धित्वात्॥ न वृक्षारोहणपतनवद्विशेषसंभवाद्यथा देहान्तरं प्र-
तिपित्सोः कर्मणोलब्धवृत्तित्वात्कर्मणोद्भावितेन विज्ञानेन सविज्ञानत्वं युक्तं वृक्षाग्रमारोहत इव फलं जिघृक्षोस्तथावि-
रादिनागच्छतां सविज्ञानत्वं भवेद्धूमादिना च चन्द्रमण्डलमारुरुक्षताम्॥ न तथा चन्द्रमण्डलादवरुरुक्षतां वृक्षाग्रादिव पतताम्।
तां संचेतनत्वं यथा च मुद्गराद्यभिहतानां तदभिघातवेदनानिमित्तसंमूर्छितप्रतिबद्धकरणानां स्वदेहेनैव देशाद्देशान्तरं नीय-
मानानां ज्ञानशून्यता दृष्टा तथा चन्द्रमण्डलान्मानुषादिदेहान्तरं प्रत्यवरुरुक्षतां स्वर्गभोगनिमित्तकर्मक्षयान्मृदितदेहानाम्॥

अवरोहतां जीवानां सर्वथा विज्ञानशून्यत्वमयुक्तम्॥ तेषां चैतन्यस्वाभाव्याद्दृष्टान्ततामपि विज्ञानमात्रमस्त्येवेत्याशंक्योदाहरणान्तर-
माह॥ यथा चेति॥ तेन मुद्गरादिनाऽभिघातेन रलनहेतुना या वेदना तन्निमित्तेन संमूर्छितानि संहृतानि प्रतिबद्धानि वा करणानि येषां
तेषामिति यावन्मृदितो भिन्नः स्थो देहोऽन्नमयःस्थूलो देहो येषां तेषाम्॥ तत एवमति वद्धकरणानामयुक्ता विज्ञानशून्यतेति संबन्धः॥ यथा-
त्र दृष्टान्तवशाच्चन्द्रमण्डलादवरोहन्तो विज्ञानशून्याः सिध्यन्तीति निगमयति॥ अत इति॥ तथापि मूर्छितानां स्थूलदेहसद्भावादेशा

अवरोहतां तु तदभावे कथं व्रीह्यादिभावः संभवतीत्यत आह ॥ अपरित्यक्तेति ॥ न परित्यक्तं देहभावस्य बीजं कर्म यैः पूर्वैर्याभिरद्भिस्ताभिः संपरिष्वक्ताः
पहिता जीवा मूर्च्छितवद्विज्ञानशून्या गगनादिक्रमेण पृथिवीं प्राप्य कर्मफलभूतजातिस्थावरशरीरैः संश्लिष्यन्त इति संबंधः स्थावरदे
हसंबंधित्वात्तत्र जीववत्तदा सविज्ञानत्वं संभवतीत्याशङ्क्याह ॥ प्रतिबद्धेति ॥ व्रीह्यादिसंश्लेषावस्थायामनुशयिनां कर्मणोऽनुद्भूतवृ
त्तित्वात्करणानां वृत्तिलाभाभावादनुद्भूतविज्ञानत्वं युक्तमित्यर्थः ॥ न केवलं व्रीह्यादिसंश्लेषकाले नुद्भूतविज्ञानत्वं किंतु व्रीह्यादे
र्लवनादिकालेपीत्याह ॥ तथेति ॥ पाकसंस्कारः रसादीन्यादिशब्देन शोणितमांसमेदोऽस्थिमज्जारेतांस्युच्यन्ते ॥ तस्मिन्काले मूर्च्छितवद
नुद्भूतविज्ञानत्वे देहाद्देहिनिर्गतानां प्राग्देहान्तरप्राप्तेस्तदस्त्येवेति हेतुमाह ॥ देहेति ॥ अलब्धवृत्तित्वादिति च्छेदः ॥ कथं पुनरनुशयिनां

प्रतिबद्धकरणानाममतस्तेऽपरित्यक्तदेहबीजभूताभिरद्भिर्मूर्च्छिता द्वाकाशादिक्रमेणेमाम वरुह्य कर्मनिमित्तजाति
स्थावरदेहैः संश्लिष्यन्ते प्रतिबद्धकरणतयानुद्भूतविज्ञाना एव ॥ तथा लवनखंडनपेषणसंस्कारभक्षणरसादिपरिणाम
रेतःसेककालेषु मूर्च्छितवदेव देहारंभकस्य कर्मणोऽलब्धवृत्तित्वात् ॥ देहबीजभूताप्संबंधापरित्यागेनैव सर्वास्ववस्था
स्वनुवर्तन्त इति जलूकावत्त्वं न विरुध्यते ॥ अन्तराले तु विज्ञानं मूर्च्छितवदेवेत्यदोषः ॥ विज्ञानशून्यत्वे तु यथा तृणजलौका तृणस्यान्तं गत्वा

न्यमाक्रममाक्रम्यात्मानमुपसंहरतीत्यादौ सचेतना जलूका दृष्टान्तत्वेनोपादीयते तत्राह ॥ देहबीजभूतेति ॥ सर्वास्ववस्थासु तासु ना व्री
ह्यादिसंश्लेषतल्लवनादिविशारदीति यावत् ॥ न चेतनावत्त्वं जलूकादृष्टान्ते विवक्षितं किंतु सातत्यमात्रमिति भावः ॥ जलूकावत्त्वं जलूकासा
दृश्यं अनुशयिनामित्यर्थः ॥ आरोहतां सविज्ञानत्वमवरोहतां विज्ञानराहित्यमित्युपपाद्यारोहतामपि यावत्स्वस्थानेभ्यः करणान्युपसं
हृत्य द्युस्थैव स्थानं तावदेव सविज्ञानत्वं ॥ न देहाद्देहिनिर्गतानां प्राग्देहान्तरप्राप्तेस्तदस्त्यनुशयिनां तु चन्द्रमंडलादवरुह्य सतामपि न भावि
देहपर्यन्ता वासना दीर्घा भवति प्रमाणाभावादित्याह ॥ अंतराले त्विति ॥ चन्द्रमंडलादवरोहतां देहान्तरगमनस्य तु त्यक्तेपि विज्ञानशून्यत्व
मदुष्टमित्युपसंहरति ॥ इत्यदोष इति ॥ यत्तु हिंसानुग्रहात्मत्वादिष्टादिकर्मणां स्थावरत्वमपि तत्फलमेव ॥ तथा चवैदिकानां कर्मणामन

॥नचेति॥उभयहेतुत्वमर्थानर्थहेतुत्वमितियावत्॥अहिंसन्नित्यादिश्रुतेःशास्त्रचोदितवैदिकेषुकर्मसुहिंसानानर्थहेतुरित्याह॥अ
भ्युपगतेपीति॥यद्यपिस्वरूपेणहिंसानर्थहेतुरभ्युपगम्यतेतथापितद्युक्तानांवैदिककर्मणांनानर्थारम्भकत्वं॥यथास्वरूपेणवि
षदध्यादेर्मरणज्वरादिहेतुत्वेपिमंत्रशर्करादिभिःसंप्रयुक्तस्यतत्कार्यानारंभकत्वं॥तथाहिंसायाःस्वतःअधर्महेतुत्वेपिवैदिककर्मनि
ष्ठायाःनतद्धेतुत्वंवैदिकैरेवकर्मभिस्तत्कृतदोषापनयनेनसिद्धिरित्यर्थः पूर्वोक्तमेवदृष्टांतंस्पष्टयति॥मंत्रेणेति॥तेनसंप्रयुक्तस्यविष

न च वैदिकानांकर्मणांहिंसायुक्तत्वेनोभयहेतुत्वंशक्यमनुमातुंहिंसायाःशास्त्रचोदितत्वादहिंसन्सर्वभूतान्यन्य-
त्रतीर्थेभ्यइतिश्रुतेःशास्त्रचोदितायाःहिंसायाःनाधर्महेतुत्वमभ्युपगम्यते॥अभ्युपगतेपिअधर्महेतुत्वेमंत्रविषा-
दिवत्तदपनयोपपत्तेर्नदुःखकार्यारंभकत्वोपपत्तिर्वैदिकानांकर्मणांमंत्रेणेवविषभक्षणस्येति॥तत्तत्रतेष्वनुशयिनांय

तद्यइहरमणीयचरणाअभ्याशोहयत्तेरमणीयांयोनिमापद्येरन्ब्राह्मणयोनिंवाक्षत्रिययोनिंवावैश्ययोनिं-

इहलोकेरमणीयंशोभनंचरणंयेषांतेरमणीयचरणारमणीयचरणेनोपलक्षितःशोभनोनुशयःपुण्यंकर्मयेषांतेर-
मणीयचरणाउच्यंते॥क्रौर्यानृतमायावर्जितानांहिशक्यउपलक्षयितुंशुभानुशयसद्भावस्तेनानुशयेनपुण्येनकर्म-
णाचन्द्रमंडलेभुक्तशेषेणाभ्याशोहक्षिप्रंयदितिक्रियाविशेषणंतेरमणीयांक्रौर्यादिवर्जितांयोनिमापद्येरन्प्राप्नुयुः

स्यानर्थाहेतुत्वेनपुष्टिहेतुत्ववद्वैदिककर्मानुप्रविष्टायाहिंसायाःपुरुषार्थत्वमेवासिद्धमितिचेन्नशब्दादितिन्यायादित्यर्थः॥न
इयएवभवतीत्येतत्प्रसंगागतंपरिसमाप्यप्रकृतांश्रुतिंव्याख्यानमनुवर्तयति॥तत्तत्रेति॥अन्याधिष्ठितपूर्ववदभिलापादितिन्या-
येनतेषुव्रीह्यादिषुसंश्लिष्टायेनुशयिनस्तेषांमध्येयेकेचिदस्मिंल्लोकेचंद्रमंडलप्राप्तेःप्रागवस्थायामनुष्ठिताःभुक्तरमणीयचर-
णास्तेरमणीयांयोनिमापद्येरन्नितिसंबंधःउक्तमेवस्पष्टयति॥शोभनमिति॥कथंरमणीयचरणानुरोधेनशोभनोनुशयोलक्ष्य-

ते खल्वनुशयिनो रेतःसिग्योगानंतरं तेन क्रमेण रमणीयां योनिमापद्येरन्निति यत्तत्क्षिप्रमेवेति योजना ॥ योनिविकल्पे हेतुमाह ॥
स्वकर्मेति ॥ अथेति प्रतीकं गृहीत्वा व्याचष्टे ॥ पुनरिति ॥ तद्विपरीतास्तेभ्यो रमणीयचरणेभ्यो विलक्षणा इति यावत्कपूयां योनिमशु
भाशयवशाद्रेतःसिग्योगानंतरमापद्येरन्निति यत्तदपि क्षिप्रमेवेति योजना ॥ तत्रापि विकल्पे कारणमाह ॥ स्वकर्मेति ॥ तृतीयपंथा
नमवतारयितुं पूर्वोक्तौ पंथानौ संक्षिप्यानुवदति ॥ ये त्विति ॥ शुभानुशयवशाद्ये के विद्वान्ब्राह्मणादियोनिमापन्नास्ते स्ववर्णाश्रम

ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा स्वकर्मानुरूपेण । अथ पुनर्ये तद्विपरीताः कपूयचरणोपलक्षितकर्माणो
ऽशुभानुशया अभ्याशो ह यत्ते कपूयां यथाकर्म योनिमापद्येरन्कपूयामेव धर्मसंबंधवर्जितां जुगुप्सितां योनिमापद्येरन् ॥
श्वयोनिं वा सूकरयोनिं वा चंडालयोनिं वा ॥ स्वकर्मानुरूपेणैव ॥ ये तु रमणीयचरणा द्विजातयस्ते स्वकर्मस्थाश्चेदिष्टादिकारि

वाथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरञ्श्वयोनिं वा सूकरयोनिं वा चंडालयोनिं वाथैतयोः
पथोर्न कतरेण चनता

णास्ते धूमादिना गच्छंत्यागच्छंति च पुनः पुनर्घटीयंत्रवत् विद्यां चेत्प्राप्नुयुस्तदार्चिरादिना गच्छंति ।
ति ॥ यदा तु न विद्यासेविनो नापीष्टादिकर्म सेवंते तदाप्येतयोः पथोर्यथोक्तयोरर्चिर्धूमादिलक्षणयोर्न कतरेणान्यतरेण च
नापि नयंति तानीमानि भूतानि क्षुद्राणि दंशमशककीटादीन्यसकृदावर्तीनि भवंत्यत उभयमार्गपरिभ्रष्टा ह्यसकृज्जाय

विहितकर्मनिष्ठाः संतो यदीष्टादिकर्म कृतवंतस्तदा दक्षिणेन पथा चंद्रं गच्छंति तत्र च भोक्तव्ये कर्मणि भोगेन क्षीणे पुनरवशिष्टेन कर्मणा
पृथिवीमागच्छंत्येवं घटीयंत्रवत्पुनः पुनः आरोहंतोऽवरोहंतश्च केवलकर्मिणो दृश्यंते च द्विजातयः स्वकर्मस्थाः संतो ध्यानं लभेरन्नुत्तरे
णयानेनेतो ब्रह्मलोकं गच्छंतीत्यर्थः ॥ इदानीं तृतीयस्थानमुपदिशति ॥ यदा त्विति ॥ पौनःपुन्येन लोप्यमध्यमैकवचनं ॥ तयोः सर्वो
श्र्यांतिषु विधानात्पुनः पुनर्जायंते म्रियंते चेत्यस्मिन्नर्थे जायस्व म्रियस्वेति प्रयोग इत्याह ॥ ८ ॥ ७ ॥ ५ ॥ ७ ॥ ८ ॥

॥तेषामिति॥यद्वा सर्वेभ्यो मार्गद्वयभ्रष्टं दृष्ट्वा तं जायस्व म्रियस्वेति प्रेरयन्त्येतदिहोच्यत इति द्रष्टव्यं॥तेनासावित्यादिवाक्यं व्याचष्टे॥येने॥
वमिति॥उक्तरीत्या निर्णीतान् प्रश्नान् विविच्य प्रतिपत्तिसौकर्यार्थं कथयति॥पंचमस्त्विति॥व्यावर्तनापि व्याख्यातेत्युत्तरत्र संबंधः॥मृता
नामविदुषां च विदुषां चेत्यर्थः॥अंत्येष्ट्यनंतरं विदुषां कर्मिणां च संवत्सरमिति ज्ञानिनां ग्रहणं॥अन्ये पितृलोकमिति केवलकर्मिण इति

तेषां जननमरणसंततेरनुकरणमिदमुच्यते जायस्व म्रियस्वेति।ईश्वरनिमित्ता चेष्टोच्यते।जननमरणलक्षणेनैव का
लयापना भवति।न तत्र क्रिया सुभोगेषु वा कालोऽस्तीत्यर्थः।एतत्क्षुद्रजंतुलक्षणं तृतीयं पूर्वोक्तौ पंथानावपेक्ष्य स्थानं
संसरतां येन एवं दक्षिणमार्गगा अपि पुनरागच्छंत्यनधिकृतानां ज्ञानकर्मणोरगमनमेव दक्षिणेन पथेति तेनासौ लोको
न संपूर्यते।पंचमस्तु प्रश्नः पंचाग्निविद्यया व्याख्यातः।प्रथमो दक्षिणोत्तरमार्गाभ्यामपाकृतो।दक्षिणोत्तरयोः पथोर्व्या

मानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवंति जायस्व म्रियस्वेत्येतत्तृतीयं स्थानं तेनासौ लोको न संपूर्यते तस्माज्जु
गुप्सेत॥

वर्तनापि मृतानामग्नौ प्रक्षेपः समानस्ततो व्यावर्तना अन्ये अर्चिरादिना यंत्यन्ये धूमादिना पुनरुत्तरदक्षिणा
यने षण्मासान् प्राप्नुवंतः संयुज्य पुनर्व्यावर्तंते अन्ये संवत्सरमन्ये मासेभ्यः पितृलोकमिति व्याख्याता।पुनरावृत्तिरपि क्षीणा
नुशयिनां चंद्रमंडलादाकाशादिक्रमेणोक्ताऽमुष्य लोकस्यापूरणं स्वशब्देनैवोक्तं तेनासौ लोको न संपूर्यत इति।यस्मादेवं
कष्टा संसारगतिस्तस्माज्जुगुप्सेत यस्माच्च जन्ममरणजनितवेदनानुभवकृतक्षणाः क्षुद्रजंतवो ध्वांते च घोरे दुस्तरे प्रवेशि

विभागः॥क्षीणानुशयिनां चंद्रलोके भोक्तव्यं कर्म भोगेन क्षपितवतामिति यावत्॥स्वशब्दमेवानुवदति॥तेनेति॥किमर्थमेषामहायासवती
ज्ञासंसारगतिरुक्तेत्याशंक्याह॥यस्मादिति॥तृतीयस्थानस्य कष्टत्वं स्पष्टयति॥यस्माच्चेति॥जन्मादिना जनिता या वेदना तदनुभवकृतः क्ष
णोऽवसरो नान्यत्र येषां तथाऽत्रेव इति छेदः॥तृतीयस्थानवदितरयोरावृत्तिमत्त्वात्तुल्या कष्टतेत्यभिप्रेत्याह॥ ८ ॥ ७ ॥ ८ ॥

छां॰भा॰ २५ | अ॰ ५

न स्माद्धेति ॥ संसारगत्युपवर्णनस्य तात्पर्यमुक्त्वा पंचाग्निविद्यायामनुष्ठानसिध्यर्थं तस्याः स्तावकं श्लोकमुदाहरतीत्याचष्टे ॥ तदेतस्मिन्नित्यादिना ॥ पंचाग्निविद्यामाहात्म्यं सप्तम्यर्थः ॥ पंच महापातकिनः श्लोके निर्दिश्यंते तेनानुपंचाग्निविद्यास्तुतिर्विहन्यातीत्याशंक्याह ॥ अथेति ॥ शुद्धत्वे हेतुमाह ॥ तेनेति ॥ कस्येदं फलमित्यपेक्षायां पूर्वोक्तविद्यावंतमनुवदति ॥ य एवमिति ॥ १० ॥ पूर्वोत्तरसंदर्भयोः संबंधं दर्शयन्नु

निराशश्चोत्तरणोपायमतिः तस्माच्चैवंविधां संसारगतिं जुगुप्सेत बीभत्सेत घृणी भवेत् मा भूदेवंविधे संसारे महोदधौ घोरे पात इति ॥ तदेतस्मिन्नर्थे एष श्लोकः पंचाग्निस्तुतये स्तेनो हिरण्यस्य ब्राह्मणसुवर्णस्य हर्ता सुरां पिबन् ब्राह्मणः सन् गुरोश्च तल्पं दारानावसन् ब्रह्महा ब्राह्मणस्य हंता चेत्येते पतंति चत्वारः पंचमश्च पतितैः सहाचरन्निति ॥ अथ पुनर्यो यथोक्तान् पंचाग्नीन् वेद स तैरप्याचरन् महापातकिभिः सह न पाप्मना लिप्यते शुद्ध एव तेन पंचाग्निदर्शनेन पावितो यस्मात् पूतः पुण्यो लोकः प्राजापत्यो

तदेष श्लोकः स्तेनो हिरण्यस्य सुरां पिबꣳश्च गुरोस्तल्पमावसन्ब्रह्महा चैते पतंति चत्वारः पंचमश्चाचरꣳस्तैरिति अथ ह य एतानेवं पंचाग्नीन्वेद न सह तैरप्याचरन्पाप्मना लिप्यते शुद्धः पूतः पुण्यलोको भवति य एवं वेद य एवं वेद ॥ १०

यस्यासौ पुण्यो लोको भवति य एवं वेद यथोक्तं समस्तं पंचभिः प्रश्नैः पृष्टमर्थजातं वेद द्विरुक्तिः समस्तप्रश्ननिर्णयप्रदर्शनार्था ॥ १० ॥ दक्षिणेन पथा गच्छतामन्नभाव उक्तस्ते देवानामन्नं तं देवा भक्षयंतीति क्षुद्रजंतुलक्षणा च कष्टा संसारगतिरुक्ता तदुभयपदोपपरिजिहीर्षया वैश्वानरात्मभावप्रतिपत्त्यर्थमुत्तरो ग्रंथ आरभ्यते ॥ अत्स्यन्नं पश्यसि प्रियमित्यादिलिंगादाख्यायिका तु सुखावबोधार्था विद्यासंप्रदानन्यायप्रदर्शनार्था च

९९ तत्संदर्भमवतारयति ॥ दक्षिणेनेत्यादिना ॥ उत्तरग्रंथस्य वैश्वानरात्मभावप्रतिपत्त्यर्थत्वे गमकमाह ॥ अत्सीति ॥ विद्यायाः संप्रदाने शिष्यः तस्य न्यायो विनयादिसंपत्तिस्तत्प्रदर्शनार्था चाख्यायिका दृश्यते चात्र प्राचीनशालप्रभृतीनां तत्संपत्तिरित्याह ॥ विद्येति ॥ कथमात्मब्रह्मशब्दयोरितरेतरविशेषणविशेष्यत्वं व्यावृत्त्योर्भावादित्याशंक्याह

राम २५

॥ब्रह्मेतीति॥ उक्तरीत्या मिथो विशेषणविशेष्यत्वे फलितमाह॥ अभेदेनेति॥ इतश्चोपास्यस्य सर्वात्मत्वं गम्यते परिच्छिन्नोपासनस्य

प्राचीनशाल इति नामत उपमन्योरपत्यमौपमन्यवः॥ सत्ययज्ञो नामतः पुलुषस्यापत्यं पौलुषिस्तथेंद्रद्युम्नो नामतो भ
ल्लवेरपत्यं भाल्लविस्तस्यापत्यं भाल्लवेयो जन इति नामतः शर्कराक्षस्यापत्यं शार्कराक्ष्यो बुडिलो नामतोऽश्वतराश्वस्या
पत्यमाश्वतराश्विः॥ पंचापि ते हैते महाशाला महागृहस्था विस्तीर्णाभिः शालाभिर्युक्ताः संपन्ना इत्यर्थः॥ महाश्रोत्रि
याः श्रुताध्ययनवृत्तसंपन्ना इत्यर्थः॥ ते एवंभूताः संतः समेत्य संभूय क्वचिन्मीमांसां विचारणां चक्रुः कृतवंत इत्यर्थः॥
कथं को नोऽस्माकमात्मा किं ब्रह्मेत्यात्मब्रह्मशब्दयोरितरेतरविशेषणविशेष्यत्वं॥ ब्रह्मेत्यध्यात्मपरिच्छिन्नमात्मानं निवर्त्त

प्राचीनशाल औपमन्यवः सत्ययज्ञः पौलुषिरिंद्रद्युम्नो भाल्लवेयो जनः शार्कराक्ष्यो बुडिल आश्वतराश्वि-
स्ते हैते महाशाला महाश्रोत्रियाः समेत्य मीमांसां चक्रुः को न आत्मा किं ब्रह्मेति ते ह संपादयांचक्रुरुद्दाल
को वै भगवंतोऽयमारुणिः संप्रतीममात्मानं वैश्वानरमध्येति तं हंताभ्यागच्छामेति तं हाभ्याजग्मुः

यत्यात्मेति चात्मव्यतिरिक्तस्यादित्यादिब्रह्मण उपास्यत्वं निवर्त्तयति॥ अभेदेनात्मैव ब्रह्म ब्रह्मैवात्मेत्येवं सर्वात्मा वैश्वा
नरो ब्रह्म स आत्मेत्येतत्सिद्धं भवति मूर्धा ते व्यपतिष्यदंधोऽभविष्यदित्यादिलिंगात्ते ह मीमांसंतोऽपि निश्चयमलभमानाः
संपादयांचक्रुः संपादितवंत आत्मन उपदेष्टारमुद्दालको वै प्रसिद्धो नामतो हे भगवंतः पूजावंतोऽयमारुणिररुणस्या
पत्यं संप्रतीमं सम्यगिममात्मानं वैश्वानरमस्मदभिप्रेतमध्येति स्मरति तं हंतेदानीमभ्यागच्छामेत्येवं निश्चित्य तं हाभ्या
जग्मुस्तं गतवंतः॥ आरुणिः स ह तान्दृष्ट्वा तेषामागमनप्रयोजनं बुद्ध्वा संपादयांचकार कथं प्रक्ष्यंति मां वैश्वानरमिमे म

निंदितत्वान्मूर्ध्नः क्रतुवज्यापत्वमिति न्यायादित्याह॥ मूर्धेति॥ भगवंतः संपादयांचक्रुरिति पूर्वेण संबंधः॥ अश्वपतिरित्यादौ भगवंत इति

छां॰भा॰ २५ प्राचीनशालप्रभृतयः संबोध्यंते॥ स हेत्यादि सोपस्कारं व्याचष्टे सहान्येद्युरित्यादिना॥ यथोक्तं शास्त्रप्रसिद्धमिति यावत्किं तर्हि भगवद् अ॰५

न सर्वमिव यत्पृष्टं प्रतिपत्स्ये वक्तुं नोत्सहे॥ अतो हन्ताहमिदानीमन्यमेषामभ्यनुशासानि वक्ष्याम्युपदेष्टारमित्येवं संपा
द्य तान्होवाचाश्वपतिर्नाम ततो भगवन्तोऽयं केकयस्यापत्यं कैकेयः संप्रतिसम्यगिममात्मानं वैश्वानरमध्येत्यादि समानं
॥ तेभ्यो ह राजा प्राप्तेभ्यः पृथक् पृथगर्हाण्यर्हणानि पुरोहितैर्भृत्यैश्च कारयांचकार कारितवान्॥ स हान्येद्यू राजा प्रातः
संजिहान उवाच विनयेनोपगम्यैतद्धनं मत्त उपादध्वमिति तैः प्रत्याख्यातो मयि दोषं पश्यन्ति नूनं यतो न प्रतिगृह्णन्ति म
त्तो धनमिति मन्वान आत्मनः सद्वृत्ततां प्रतिपादयिष्यन्नाह॥ न मे मम जनपदे स्तेनः परस्वहर्ता विद्यते न कदर्योऽदाता स

स ह संपादयांचकार प्रक्ष्यन्ति मामिमे महाशाला महाश्रोत्रियास्तेभ्यो न सर्वमिव प्रतिपत्स्ये हन्ताहमन्यम-
भ्यनुशासानीति तान्होवाचाश्वपतिर्वै भगवन्तोऽयं कैकेयः संप्रतीममात्मानं वैश्वानरमध्येति तं हन्ताभ्या-
गच्छामेति तं हाभ्याजग्मुस्तेभ्यो ह प्राप्तेभ्यः पृथगर्हाणि कारयांचकार॥ स ह प्रातः संजिहान उवाच न मे स्ते-
नो जनपदे न कदर्यो न मद्यपो नानाहिताग्निर्नाविद्वान्न स्वैरी स्वैरिणी कुतो यक्ष्यमाणो वै भगवन्तोऽहमस्मि यावदे-

ति विभवे न मद्यपो द्विजोत्तमः सन्नानाहिताग्निः शांताग्निर्नाविद्वानधिकारानुरूपं॥ न स्वैरी परदारेषु गन्ताऽत एव स्वैरि-
णी कुतः दुष्टचारिणी न संभवतीत्यर्थः॥ तैश्च न वयं धनेनार्थिन इत्युक्त आहाल्पमत्वेन धनं न गृह्णन्तीति यक्ष्यमाणो वै कति-
भिरहोभिरहं हे भगवन्तोऽस्मि तदर्थं क्लृप्तं धनं मया यावदेकैकस्मै यथोक्तमृत्विजे धनं दास्यामि॥ तावत्प्रत्येकं भगवद्भ्योऽपि
दास्यामि वसन्तु भगवन्तः पश्यन्तु च मम यागमित्युक्तास्ते होचुर्येन हैवार्थेन प्रयोजनेन यं प्रति चरेद्गच्छेत्पुरुषस्तं हैवार्थं राम २५
वदेदित्येवमेव प्रयोजनमागमनस्येत्ययं न्यायः सतां॥ वयं च वैश्वानरज्ञानार्थिन (( गमनस्य प्रयोजनं तदाह॥ वयं चेति॥ तन्म

आत्मानमिति॥शिष्यभावेनोपसन्नेभ्यो विद्यादानत्वानयथ्याकथंचिदितिराज्ञोऽभिप्रायः॥तेहेत्यादिवाक्यस्यतात्पर्यमाह॥यतइति॥यो गक्षेमार्थंराजानंप्रत्युपगमनमिष्टमेवेतिमन्वानोविशिनष्टि॥विद्यार्थिनइति॥तथेत्यत्रातःशब्दोद्रष्टव्यः॥उपनयनंपादयोनिपतनंवस्य

आत्मानमेवेमंवैश्वानरंसंप्रत्यध्येषिसम्यक्जानास्यतस्तमेवनोस्मभ्यंब्रूहीत्युक्तस्तान्होवाचप्रातर्वोयुष्मभ्यंप्रति वक्तास्मिप्रतिवाक्यंदातास्मीत्युक्तास्तेहराज्ञोऽभिप्रायज्ञाःसमित्पाणयःसमिद्भारहस्ताअपरेद्युःपूर्वाह्णेराजानंप्रति चक्रमिरेगतवन्तःयतएवंमहाशालामहाश्रोत्रियामहाब्राह्मणाःसंतोमहाशालत्वाद्यभिमानंहित्वासमिद्भारहस्ताजा तितोहीनंराजानंविद्यार्थिनोविनयेनोपजग्मुः॥तथान्यैर्विद्योपादित्सुभिर्भवितव्यं॥तेभ्यश्चाहाद्विद्यामनुपनीयैवोपनय नमकृत्वैवतान्यथायोग्येभ्योविद्यामदात्तथान्येनापिविद्यादातव्यादृत्याख्यायिकार्थः॥एतद्वैश्वानरज्ञानमुवाचेतिवक्ष्य

त्विजेधनंदास्यामितावद्भगवद्भ्योदास्यामिवसंतुभगवंतइतितेहोचुर्येनहैवार्थेनपुरुषश्चरेत्तंहैववदेदा त्मानमेवेमंवैश्वानरंसंप्रत्यध्येषितमेवनोब्रूहीतितान्होवाचप्रातर्वःप्रतिवक्तास्मीतितेहसमित्पाणयःपूर्वा ह्णेप्रतिचक्रमिरेतान्हानुपनीयैवैतदुवाच॥१॥औपमन्यवकंत्वमात्मानमुपास्सइतिदिवमेवभगवोराजन्निति ५८

माणेनसंबंधः॥१॥सकथमुवाचेत्याह॥औपमन्यवहेकमात्मानंवैश्वानरंत्वमुपास्सइतिपप्रच्छ॥नन्वयमन्यायआचा र्यःसन्शिष्यंपृच्छतीति॥नैषदोषःयद्वेत्यतेननमोपसीदततस्तऊर्ध्ववक्ष्यामीतिन्यायदर्शनादन्यत्राप्यप्रतिभानवतिशि ष्येप्रतिभोत्पादनार्थःप्रश्नोदृष्टः॥अ

माणंवैश्वानरविज्ञानंतेनैतदित्यस्य संबंधइतियावत्॥आख्यायिकातात्पर्यमुपसंहरति॥ यथेति॥१॥शिष्याहिमहाआचार्यस्तुप्रतिवक्तेतिन्यायेनशंकते॥नन्विति॥वाक्यशेषावष्टंभेनदूषयति॥नैषदोषइति॥बृहदारण्यकस्थ न्यालोचनायामपिनैतदन्याय्यमित्याह॥अन्यत्रापीति॥आचार्यस्या जातशत्रोरितिसंबंधः॥ तस्यात्मत्वेहेतुमाह॥ ॥ ॥

॥आत्मनइति॥एकाहादिरूपोज्योतिष्टोमादिरहर्गणस्तत्र सुतं सोमरूपं लतानाइव्यं अहीने प्रसुतं सत्रेत्वासुतमितिभेदः॥तवेति॥पुनर्व
चनमन्वयदर्शनार्थं नकेवलं प्राचीनशाल निष्ठमिदं फलं किंत्वन्यस्यापि भवतीत्याह॥अन्योपीति॥तर्हि यथोक्त वैश्वानरज्ञानादेवकृत

क्वैषतदाभूत्कुत एतदागादिति॥दिवमेव यसुलोकमेव वैश्वानरमुपासे भगवो राजन्निति होवाचैष वै
सुतेजाः शोभनं तेजो यस्य सोयं सुतेजाइति प्रसिद्धो वैश्वानर आत्मा यं आत्मनो वयवभूतत्वाद्यं त्वमात्मानमात्मैक
देशं उपास्से॥तस्मात्सुतेजसो वैश्वानरस्योपासनात्तवसुतमभिषुतं सोमरूपं कर्मणि प्रसुतं प्रकर्षेण च सुतमासुतं
चाहर्गणादिषु तव कुले दृश्यते अतीव कर्मिणस्त्वत्कुलीनाइत्यर्थः अत्स्यन्नं दीप्ताग्निः सन्पश्यसि च पुत्रपौत्रादिप्रि
यमिष्टमन्योप्यत्त्यन्नं पश्यति च प्रियं भवत्यस्य सुतं प्रसुतमासुतमित्यादि कर्मित्वं ब्रह्मवर्चसं कुले यः कश्चिदेतं यथो

होवाचैष वै सुतेजा आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्तव सुतं प्रसुतमासुतं कुले दृश्यते त्स्यन्नं प
श्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते मूर्द्धा त्वेष आ
त्मन इति होवाच मूर्द्धा ते व्यपतिष्यद्यन्मां नागमिष्य इति॥१२॥ एतमेवं वैश्वानरमुपास्ते मूर्द्धा तु वैश्वानरस्यैषः॥
न समस्तो वैश्वानरोतः समस्तबुद्ध्या वैश्वानरस्योपासनान्मूर्द्धा ते विपरीतग्राहिणो व्यपतिष्यत्पतितमभविष्य
द् यदि मां नागमिष्यो नागतो भविष्यः साध्वकार्षीर्यन्मामागतोसीत्यभिप्रायः॥१२॥ अथ होवाच सत्ययज्ञं पौलु
षिं हे प्राचीनयोग्य कं त्वमात्मानमुपास्से इत्यादि त्वमेव भगवो राजन्निति होवाच॥शुक्लनीलादिरूपत्वाद्विश्वरूप
त्वमादित्यस्य॥सर्वरूपत्वाद्वा सर्वाणि रूपाणि ११ कस्मिन्नित्याशंक्याह॥मूर्द्धात्विति॥अक्षरार्थमुक्त्वा विवक्षितार्थमाह॥न
साध्विति॥१२॥ अथ प्राचीनशाले तूष्णींभूते जिज्ञासमाने सत्यनंतरमित्यर्थः॥आदित्यस्य शुक्लत्वादि रूपत्वमग्रे स्पष्टी भविष्यति

॥तस्य सर्वरूपत्वेन विश्वरूपत्वमुक्तमुपपादयति॥सर्वाणीति॥८

अत्स्यन्नमित्यादि च चक्षुष्ट्वेत्यतः प्राक्तनमिति शेषः । चक्षुष्ट्वेत्यादिवाक्यं व्याचष्टे ॥ चक्षुरित्यादिना ॥ तत्रापि तात्पर्यं यथा पूर्वं द्रष्ट
दित्याच्छाणियतोः तां वा विश्वरूप आदित्यस्तदुपासनात्तव बहु विश्वरूपमिहामुत्रार्थमुपकरणं दृश्यते कुले ॥ किंच त्वामनु
प्रवृत्तोऽश्वतरीभ्यां युक्तो रथोऽश्वतरीरथो दासीनिष्को दासीभिर्युक्तो निष्को हारो दासीनिष्कः ॥ अत्स्यन्नमित्यादि समानं ॥ च
क्षुर्वैश्वानरस्य तु सविता तस्य समस्तदृष्ट्योपासनादन्धोऽभविष्यः चक्षुर्हीनोऽभविष्यो यन्मां नागमिष्य इति पूर्ववत् ॥ १२ ॥ अ

अथ होवाच सत्ययज्ञं पौलुषिं प्राचीनयोग्य कं त्वमात्मानमुपास्स इत्यादित्यमेव भगवो राजन्निति होवाचैष वै विश्व
रूप आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्तव बहु विश्वरूपं कुले दृश्यते प्रवृत्तोऽश्वतरीरथो दासीनिष्कोऽत्स्यन्नं पश्य
सि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते चक्षुष्ट्वेतदात्मन इति ।
होवाचान्धोऽभविष्यद्यन्मां नागमिष्य इति ॥ १३ ॥ अथ होवाचेन्द्रद्युम्नं भाल्लवेयं वैयाघ्रपद्य कं त्वमात्मानमुपास्स इति
वायुमेव भगवो राजन्निति होवाचैष वै पृथग्वर्त्मात्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वां पृथग्बलय आयन्
ति पृथग्रथश्रेणयोऽनुयन्त्यत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वै
श्वानरमुपास्ते प्राणस्त्वेष आत्मन इति होवाच प्राणस्त उदक्रमिष्यद्यन्मां नागमिष्य इति ॥ १४ ॥ अथ होवाचेन्द्रद्युम्नं भा
ल्लवेयं वैयाघ्रपद्य कं त्वमात्मानमुपास्स इत्यादि समानं ॥ पृथग्वर्त्मात्मा नानावर्त्मा नियतस्य वायोरावहोद्वहादिभेदैर्वर्त
मानस्य सोऽयं पृथग्वर्त्मात्मा वायुस्तस्मात्पृथग्वर्त्मात्मनो वैश्वानरस्योपासनात्पृथङ्नानादिक्कास्त्वां बलयो बल्यन्नादिलक्ष

व्यमित्याह ॥ पूर्ववदिति ॥ १३ ॥ सत्ययज्ञो परमानंतरमित्यथशब्दार्थः पृथगित्यतः प्राक्तनमादिपदेन गृहीतं ॥ पृथग्वर्त्मेति ॥ प्रतीकमादाय व्या
चष्टे ॥ नानेति ॥ आभिमुख्येनागच्छन्नावहः ऊर्ध्वं गच्छन्नुद्वहस्तस्मात्त्वामित्यादि व्याचष्टे ॥ तस्मादिति ॥ नानादिक्का नानाविधासु दिक्षु भवा इ

छां०भा०
२७

नरं त्वयन्नमित्यादिसमानमित्यन्तादिपदमुपास्त्यन्तवाक्यसंग्रहार्थं उत्तरवाक्येष्वभिप्रायसाम्यमत्वाह ॥ प्राणस्त्विति ॥ १४ ॥ दूरं त्वग्नो परा
मानंतर्यमथशब्दार्थः ॥ अत्रादिपदमेषइत्यस्मात्प्राक्तनवाक्यसंग्रहार्थं कथमाकाशस्यबहुलत्वमतआह ॥ बहुलत्वमिति ॥ कथंशरीर

पृथग्वर्त्मश्रेणयोरथपंक्तयोपि त्वामनुयन्त्यत्स्यन्नमित्यादिसमानं ॥ प्राणस्त्वेष आत्मन इति होवाच प्राणस्तेतनवउदक्र
मिष्यदुत्क्रांतो भविष्यद्यन्मात्रागमिष्यइति ॥ १५ ॥ अथ होवाच जनमित्यादिसमानमेषवैबहुलआत्मावैश्वानरो बहुल
त्वमाकाशस्यसर्वगतत्वाद्बहुलगुणोपासनाद्त्वंबहुलोसि ॥ प्रजयापुत्रपौत्रादिलक्षणया ॥ धनेन च हिरण्यादिना ॥ संदेह।

अथ होवाच जनं ७ शार्कराक्ष्य ७ शार्कराक्ष्यकं त्वमात्मानमुपास्स इत्याकाशमेव भगवो राजन्निति होवाचैष वै
बहुल आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वं बहुलोसि प्रजया च धनेन चात्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्य
ति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते संदेहस्त्वेष आत्मन इति होवाच संदेहस्ते व्य
शीर्यद्यन्मां नागमिष्य इति ॥ १५ ॥ अथ होवाच बुडिलमाश्वतराश्विं वैयाघ्रपद्य कं त्वमात्मानमुपास्स इत्यप एव भगवो
राजन्निति होवाचैष वै रयिरात्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्व ७ रयिमान्पुष्टिमानस्यत्स्यन्नं पश्यसि प्रियम

स्त्वेष संदेहो मध्यमं शरीरं वैश्वानरस्य देहे रूपचयार्थत्वान्मांसरुधिरास्थ्यादिभिश्च बहुलं शरीरं तत्संदेहस्ते तव शरीरं
व्यशीर्यत शीर्णमभविष्यद्यन्मां नागमिष्य इति ॥ १५ ॥ अथ होवाच बुडिलमाश्वतराश्विमित्यादिसमानमेषवैरयिरात्मा
वैश्वानरो धनरूपाह्यापोन्नतो धनमिति ॥ तस्माद्रयिमान्धनवान् ॥ मध्यमे भागे संशयवाची संदेहशब्दो वर्ततेतत्राह ॥ देहे इति
॥ आकाशस्य सर्वगतत्वेन बहुलत्वाद्देहस्य च परिच्छिन्नत्वेन तदभावात्कथमाकाशं वैश्वानरस्य शरीरस्यादित्याशंक्याह ॥ मांसेति ॥ तेच्छ
रीरमिति संबंधः ॥ १५ ॥ ननु स्यां परमानंतरमथशब्दार्थः कथमवाम्नकोवैश्वानरोरयिरिति धनेन निर्दिश्यते तत्राह ॥ अद्भ इति ॥ आपो वै धन

अ० ५
राम
२७

वैश्वानरोपासनादित्येतद्दर्शनरूपं वैश्वानरोपासनादर्शनवानित्येवं वक्तव्ये कथं पुष्टिमानित्यधिकावापस्तत्राह ॥ पुष्टेश्चेति ॥ मूत्राशयो ध
नुर्वेक्षो वस्तिरित्यभिधीयत इत्याशयेनाह ॥ वस्तिरिति ॥ १६ ॥ प्राचीनशालप्रभृतिषु पंचसु मौनमातिष्ठमानेष्वनंतरमित्यथशब्दार्थः ॥ १
७ ॥ उद्दालकांतेषु विद्यार्थिषूपसन्नेषु सामस्त्येन वैश्वानरविद्यावक्तृकामस्तेषां मिथोऽज्ञानमनुवदति ॥ तानित्यादिना ॥ अनर्थका वि

स्त्वं पुष्टिमांश्च शरीरेण पुष्टेश्चान्ननिमित्तत्वाद्वस्तिस्त्वेष आत्मनो वैश्वानरस्य ॥ वस्तिर्मूत्रसंग्रहस्थानं ॥ वस्तिस्ते व्य
भेत्स्यद्भिन्नो भविष्यद्यन्मां नागमिष्य इति ॥ १६ ॥ अथ होवाचोद्दालकमित्यादि समानं ॥ पृथिवीमेव भगवो राजन्निति
होवाचैष वै प्रतिष्ठा पादौ वैश्वानरस्य पादौ ते व्यम्लास्येतां विम्लानौ वभविष्यतां श्लथीभूतौ यन्मां नागमिष्य इति ॥ १७ ॥

पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते वस्तिस्त्वेष आत्मन इति होवा
च वस्तिस्ते व्यभेत्स्यद्यन्मां नागमिष्य इति ॥ १६ ॥ अथ होवाचोद्दालकमारुणिं गौतम कं त्वमात्मानमुपास्स इ
ति पृथिवीमेव भगवो राजन्निति होवाचैष वै प्रतिष्ठात्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वं प्रतिष्ठितोऽसि
प्रजया च पशुभिश्चात्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं
वैश्वानरमुपास्ते पादौ त्वेतावात्मन इति होवाच पादौ ते व्यम्लास्येतां यन्मां नागमिष्य इति ॥ १७ ॥ तान्होवाचैते वै

तान्यथोक्तवैश्वानरदर्शनवतो होवाचैते यूयं वै खल्वित्यनर्थको यूयं पृथगिवापृथक्सन्तमिममेकं वैश्वानरं विद्वां
सोऽन्नमत्थ परिच्छिन्नात्मबुद्ध्येत्येतत् ॥ हस्तिदर्शन इव जात्यंधाः ॥ { वानर्थको निपातो न त्वनर्थकावेव तेषां मिथ्याज्ञानित्वप्र
सिद्धिस्मारकत्वात् पृथगित्यन्वयार्थं प्रागुक्तमपि पाठक्रमेण पुनरनूद्य पृथगिव विद्वांस इति संबंधः ॥ यथा जात्यंधा हस्तिदर्शने भिन्न
दृष्टयो भवंति ॥ तथा यूयं वैश्वानरमात्मानमेकमपि सर्वात्मकं सन्तं भिन्नमिव विद्वांसः परिच्छिन्नात्मरूपेणात्मानं बुद्धवंतः ॥ ९ ॥ ९ ॥

128

छां॰ भा॰ २८ अ॰ ५

तथा च मिथ्यादर्शिनो यूयं प्रागेव मत्प्रत्ययान्मामागतवंतः साधुकृतवंत इत्यर्थः॥ प्रधानविषयां वक्तुं पातनिकां कृत्वा तामिदानीमुपदि-
शति॥ यस्त्वित्यादिना॥ एतमेवंभूतं यस्तूपास्ते स सर्वेष्वन्नमत्तीति संबंधः॥ एवंशब्दार्थमाह॥ यथोक्तेति॥ एकं समस्तं त्रैलोक्यात्मकमिति
यावत्प्रादेशमात्रमित्येतद्विभजते॥ प्रदेशैरिति॥ यथा त्वेनाधिदैविकैरवयवैरध्यात्मं प्रत्यगात्मन्येवामीयत इति श्रुत्यंतरात्प्रादेशमात्र-
त्वमिति यावत्प्रकारांतरेण व्याचष्टे॥ मुखादिष्विति॥ तेषु हि प्रदेशेषु प्रमितत्वेन साक्षितया मीयत इति श्रुत्यन्तरात्तथोच्यत इत्यर्थः॥ वि-

यस्त्वेतमेवं यथोक्तावयवैर्द्युमूर्धादिभिर्विशिष्टमेकं प्रादेशमात्रं प्रदेशैर्द्युमूर्धादिभिः पृथिवीपादांतैरध्यात्ममी-
यते ज्ञायत इति प्रादेशमात्रः मुखादिषु वा करणेषु वक्तृत्वेन मीयत इति प्रादेशमात्रो द्युलोकादिपृथिव्यंतप्रदेशपरि-
माणो वा प्रादेशमात्रः प्रकर्षेण शास्त्रेणादिश्यंत इति प्रादेशा द्युलोकादयस्त एव वाऽस्य परिमाणः प्रादेशमात्रः शाखांतरे

पृथिवीवेममात्मानं वैश्वानरं विद्वांꣳ सोऽन्नमत्ति यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वान॥रमुपास्ते

तु मूर्धादिचिबुकप्रतिष्ठ इति प्रादेशमात्रं कल्पयंति इह तु न तथाभिप्रेतः स ह वा एतस्यात्मन इत्याद्युपसं-
हारात् प्रत्यगात्मतयाभिविमीयतेऽहमिति ज्ञायत इत्यभिविमानस्तमेनमात्मानं वैश्वानरं विश्वान्नरान्नयति पुण्यपापानुरूपां गतिं
सर्वात्मेष ईश्वरो वैश्वानरो विश्वो नरश्चैव वा सर्वात्मत्वात् विश्वैर्वा नरैः प्रत्यगात्मतयाऽप्रविभज्यमानीयत इति वैश्वानरस्तमेवमुपास्ते

धांतरेण व्याचष्टे॥ द्युलोकादीति॥ अर्थांतरमाह॥ प्रकर्षेणेति॥ आमनंति चैनमस्मिन्निति न्यायेन पक्षांतरमाह॥ शाखांतरे त्विति॥ अस्तु तर्हि जा-
बालश्रुत्यनुसारेण मूर्धानमारभ्य अधरफलकपर्यंते देहावयवे संपादितो वैश्वानरः प्रादेशमात्र इति नेत्याह॥ इह त्विति॥ सर्वात्मत्वेन वैश्वानर-
स्योपसंहारदर्शनान्नात्र जाबालश्रुतिरनुसर्तव्येत्यर्थः॥ विशेषणांतरं व्याचष्टे॥ प्रत्यगात्मतयेति॥ सर्वेश्वरत्वं सर्वात्मत्वं सर्वप्रत्यक्त्वं बाहु-
नूक्त्वा वैश्वानरशब्दमनेकधा व्याकरोति॥ विश्वानित्यादिना॥ ईश्वरो वैश्वानर इत्यत्र वैश्वानरपदमुभयत्र संबध्यते॥ स वैश्वानरविदन्नमत्ति सर्वे-

राम २८

कथमभिमानेन शरीरादयो गृह्यन्ते तत्राह॥ तेषु हीति॥ सर्वेषु लोकेष्वित्यादिवाक्यस्य तात्पर्यार्थं दर्शयति॥ वैश्वानरविदिति॥ वैश्वानरोपासकः सर्वात्मा सन्नन्नमत्तीत्येवं कस्माद्धेतोर्निश्चितमित्याशंक्यानुवादहेतुप्रदर्शनपरत्वेनोत्तरवाक्यमुपादत्ते॥ कस्मादित्यादिना॥ वैश्वानरस्य सर्वात्मत्वात्तदुपासकस्यापि तदात्मतया सर्वात्मत्वात्स सर्वात्मा भूत्वा सर्वत्रान्नमत्तीति युक्तमित्यर्थः॥ तस्येत्यादिवाक्यस्य तात्पर्यान्तरमाह॥ अथ

सर्वेषु लोकेषु द्युलोकादिषु सर्वेषु भूतेषु चराचरेषु सर्वेष्वात्मसु शरीरेन्द्रियमनोबुद्धिषु॥ तेष्वात्मकल्पनाव्यपदेशः प्राणिनामन्नमत्ति वैश्वानरवित्सर्वात्मा सन्नन्नमत्ति न यथाज्ञः पिण्डमात्राभिमानः सन्नित्यर्थः॥ कस्मादेवं यस्मात्तस्य ह वै प्रकृतस्यैवैतस्यात्मनो वैश्वानरस्य मूर्द्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा संदेहो वहुलो वस्तिरेव रयिः पृथिव्येव।

स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्द्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा सन्देहो वहुलो वस्तिरेव रयिः पृथिव्येव पादावुर एव वेदिर्लोमानि वर्हिर्हृदयं गार्हपत्यो मनोन्वाहार्यपचन आस्यमाहवनीयः॥ १८॥ पादावथवा विध्यर्थमेतद्वचनमेवमुपास्य इति॥ अथेदानीं वैश्वानरविदो भोजनेऽग्निहोत्रं संपिपादयिषन्नाह तस्य वैश्वानरस्य भोक्तुरुर एव वेदिराकारसामान्याल्लोमानि वर्हिर्वेद्यामिवोरसि लोमान्यास्तीर्णानि दृश्यन्ते हृदयं गार्हपत्यो हृदयाद्धि मनः प्रणीतमिवानन्तरीभवति अतोऽन्वाहार्यपचनोऽग्निर्मनः आस्यं मुखमाहवनीय इवाहवनीयो हूयते ह्यस्मिन्नन्नमिति॥ १८॥ तत्रैवं सति

‘‘वेति॥ प्रधानविद्यामुक्त्वा तदंगप्राणाग्निहोत्रं दर्शयितुकामो भूमिकां करोति॥ अथेति॥ संपादयितुमिच्छन्नादौ तदंगान्यश्वपतिराहेत्यर्थः॥ वेदिरिति॥ स्थण्डिलमात्रं गृह्यते अग्निहोत्रे तावन्मात्रस्योपयुक्तत्वादितरस्य दर्शपूर्णमासाद्यंगत्वाद्वेद्यामास्तीर्यन्ते ये दर्भास्ते वर्हिःशब्देनोच्यन्ते हृदयस्य गार्हपत्यत्वं मनःप्रणयनहेतुत्वात्प्रणीतमुत्पन्नमिवेत्यर्थः॥ आहवनीयसादृश्यं च मुखस्य दर्शयति॥ आहवनीय इति॥ १८॥ एवं सतीत्युक्तन्यायेनाग्निहोत्रे संपादिते सतीत्यर्थः॥ संपादि

सामान्यादग्न्युद्धरणादीनितदङ्गान्यत्र भवेयुरित्याशंक्य तद्बुद्धिमात्रस्य विवक्षितत्वान्नैवमित्याह ॥ अग्निहोत्रेति ॥ इहेति वैश्वानरविदो भो-
जनमुच्यते भक्तं तद्धोमगतावांतरविभागमाह ॥ स यामिति ॥ कथमिति ॥ मंत्रो वा द्रव्यपरिमाणं वा फलं वा पृच्छ्यते तत्र प्रथमं प्रत्याह ॥ प्राणायेति ॥
यदि द्वितीयस्तत्राह । आहुतीति । अवदानस्य प्रमाणं परिमाणं कर्मणां प्रमाणं प्रसिद्धं तेन परिमितमिति यावत् तृतीयस्तत्राह तेनेति । भुंजानस्य



यद्भक्तं भोजनकाले आगच्छेद्भोजनार्थं तद्धोमार्थं होमीयं तद्धोतव्यं अग्निहोत्रसंपन्मात्रस्य विवक्षितत्वान्नाग्निहोत्रांगेतिक-
र्तव्यताप्राप्तिरिह स भोक्ता यां प्रथमामाहुतिं जुहुयात्तां कथं जुहुयादित्याह ॥ प्रा[णा]य स्वाहेत्यनेन मंत्रेणाहुतिशब्दादवदा-
नप्रमाणमन्नं प्रक्षिपेदित्यर्थः ॥ तेन प्राणस्तृप्यति प्राणे तृप्यति चक्षुस्तृप्यति चक्षुरादित्यो द्यौश्चेत्यादि तृप्यति यच्चान्यत् द्यौश्चा-

तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयं स यां प्रथमामाहुतिं जुहुयात्तां जुहुयात्प्राणाय स्वाहेति प्राणस्तृप्यति प्राणे तृप्य-
ति चक्षुस्तृप्यति चक्षुषि तृप्यत्यादित्यस्तृप्यत्यादित्ये तृप्यति द्यौस्तृप्यति दिवि तृप्यन्त्यां यत्किंच द्यौश्चादित्यश्चाधिति-
ष्ठतस्तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ १९ ॥ अथ यां द्वितीयां जुहुयात्तां जु-
हुयाद्व्यानाय स्वाहेति व्यानस्तृप्यति व्याने तृप्यति श्रोत्रं तृप्यति श्रोत्रे तृप्यति चन्द्रमास्तृप्यति चन्द्रमसि तृप्यति दिशस्तृ-

दित्यश्च स्वामित्वेनाधितिष्ठतस्तत्सर्वं तृप्यति तस्य तृप्तिमनु स्वयं भुंजानस्तृप्यत्येवं प्रत्यक्षं किंच प्रजादिभिश्च तेजः शरीरस्था
दीप्तिरुज्ज्वलत्वं प्रागल्भ्यं वा ब्रह्मवर्चसं वृत्तस्वाध्यायनिमित्तं तेजः ॥ १९ ॥ अथ यां द्वितीयां तृतीयां चतुर्थीं पंचमीमिति समानं ॥
२० ॥ २१ ॥ २२ ॥ २३ ॥ स यः कश्चिदिदं वैश्वानरदर्शनं यथोक्तमविद्वान्सन्नग्निहोत्रं प्रसिद्धं जुहोति यथांगारानाहुतियोग्यानपो-

तृप्तौ प्रत्यक्षं प्रमाणं प्राणादेस्तृप्तौ शास्त्रमिति विभागमभिप्रेत्याह ॥ प्रत्यक्षमिति ॥ प्रजादिभिश्च भोक्ता तृप्यतीति संबंधः ॥ १९ ॥ प्रसिद्धाग्नि-
होत्रनिंदाद्वारेण वैश्वानरविद्याविशिष्टस्योक्तमग्निहोत्रमवश्यकर्तव्यतायै स्तौति स य इत्यादिना ॥ प्राणाग्निहोत्रस्यैव शिष्टेहत्वं

तरमतः शब्दो यात्तं प्रश्नपूर्वकं प्रकटयति कथमित्यादिना नेयमिकाग्निहोत्रनिंदाद्वारा प्राणाग्निहोत्रस्तुत्यनंतरं विधांतरेण तस्यैव निरव
द्यत्वात्तुल्यं तस्य तदग्निहोत्रहवनं स्याद्वैश्वानरविदोग्निहोत्रमपेक्ष्येति प्रसिद्धाग्निहोत्रनिंदया वैश्वानरविदोग्निहोत्रंस्तू

तृप्यंतीयुयत्किंच दिशश्च चंद्रमाश्चाधितिष्ठंतितत्तृप्यतितस्यानुतृप्तिंतृप्यतिप्रजयापशुभिरन्नाद्येनतेजसाब्रह्म
वर्चसेनेति।२०।अथयांतृतीयांजुहुयात्तांजुहुयादपानायस्वाहेत्यपानस्तृप्यत्यपानेतृप्यतिवाक्तृप्यतिवाचितृप्य
त्यामग्निस्तृप्यत्यग्नौतृप्यतिपृथिवीतृप्यतिपृथिव्यांतृप्यंत्यांयत्किंचपृथिवीचाग्निश्चाधितिष्ठतस्तत्तृप्यतितस्यानु
तृप्तिंतृप्यतिप्रजयापशुभिरन्नाद्येनतेजसाब्रह्मवर्चसेनेति।२१।अथयांचतुर्थींजुहुयात्तांजुहुयात्समानायस्वाहे
तिसमानस्तृप्यतिसमानेतृप्यतिमनस्तृप्यतिमनसितृप्यतिपर्जन्यस्तृप्यतिपर्जन्येतृप्यतिविद्युत्तृप्यतिविद्युतितृप्यं
त्यांयत्किंचविद्युच्चपर्जन्यश्चाधितिष्ठतस्तत्तृप्यतितस्यानुतृप्तिंतृप्यतिप्रजयापशुभिरन्नाद्येनतेजसाब्रह्मवर्चसेने
ति।२२।अथयांपंचमींजुहुयात्तांजुहुयादुदानायस्वाहेत्युदानस्तृप्यत्युदानेतृप्यतिवायुस्तृप्यतिवायौतृप्यत्याका
शस्तृप्यत्याकाशेतृप्यतियत्किंचवायुश्चाकाशश्चाधितिष्ठतस्तत्तृप्यतितस्यानुतृप्तिंतृप्यतिप्रजयापशुभिरन्नाद्ये
नतेजसाब्रह्मवर्चसेनेति।२३।सयइदमविद्वानग्निहोत्रंजुहोतियथांगारानपोह्यभस्मनिजुहुयात्तादृक्तत्स्याद
थयएतदेवंविद्वानग्निहोत्रंजुहोतितस्यसर्वेषुलोकेषुसर्वेषुभूतेषुसर्वेष्वात्मसुहुतंभवतितद्यथेषीकातूलमग्नौप्रो
तंप्रदूयेतैवंहास्यसर्वेपाप्मानःप्रदूयंतेयएतदेवंविद्वानग्निहोत्रंजुहोतितस्मादुहैवंविद्यद्यपिचंडालायोच्छिष्टंप्रयच्छे

यते ऽतश्चैतर्हि विशिष्टमग्निहोत्रं॥कथमथयएतदेवंविद्वानग्निहोत्रंजुहोतितस्ययथोक्तवैश्वानरविज्ञानवतःसर्वेषुलोकेष्वित्याद्युक्ता
यताकीर्त्यतइत्ययशब्दार्थः॥एतदिति॥वैश्वानरदर्शनमुक्तं॥एवमितिवैश्वानरस्योक्तसर्वात्मत्वादिप्रकारेणेत्यर्थः॥अग्निहोत्रमिति॥सांपादिकमग्नि

॥हुतमिति॥ इतश्च वैश्वानरविद्यावतोग्निहोत्रं विशिष्टमिति वक्तुं वैश्वानरविद्यां स्तौति॥ किंचेति॥ तत्र वैश्वानरविद्यामाहात्म्ये दृष्टान्त इ-
ति यावत् इषीकायां मुंजमध्यवर्तितृणस्येतत्सर्वशब्दात्प्रारब्धकर्मणोपि दाहमाशंक्याह॥ वर्तमानेति॥ वैश्वानरविद्याया महाफलत्वसि-
द्धे तद्वतोग्निहोत्रं विशिष्टमिति तत्कर्तुः सर्वदोषास्पर्शित्वमित्याशयेनाह॥ स य इति॥ विद्यामेव विद्यास्तुतिद्वाराग्निहोत्रमिति यावत् स्तु-

हुतमन्नमत्तीत्यनयोरैकार्थ्यात्॥ किंच तद्यथेषीकायास्तूलमग्नौ प्रोतं प्रक्षिप्तं प्रदूयेत दह्येत क्षिप्रमेवं हास्य
विदुषः सर्वात्मभूतस्य सर्वान्नानामत्तुः सर्वे निरवशिष्टाः पाप्मानो धर्माधर्माख्या अनेकजन्मसंचिता इह च प्राक्ज्ञानोत्पत्ते
र्ज्ञानसहभाविनश्च प्रदूयन्ते दह्येरन्॥ वर्तमानशरीरारंभकपाप्मवर्जं लक्ष्यं प्रति मुक्तेषुवत्प्रवृत्तफलत्वात्तस्य न दाहः स य ए
तदेवं विद्वानग्निहोत्रं जुहोति भुंक्ते स यद्यपि चंडालायोच्छिष्टान्नार्हायोच्छिष्टं प्रयच्छेदुच्छिष्टं दद्यात् निषिद्धमुच्छिष्टदानं यद्य

स्यादिति तदेष श्लोको यथेह क्षुधिता बाला मातरं पर्युपासत एवं सर्वाणि भूतान्यग्निहोत्रमुपासत इत्यग्निहो
त्रमुपासत इति॥२४॥ इति छान्दोग्योपनिषदि पंचमप्रपाठकः समाप्तः॥५॥ ((पि कुर्यादात्मनि हैवास्य चंडालदेहस्थवै-

श्वानरे तद्धुतं स्यान्नाधर्मनिमित्तमिति विद्यामेव स्तौति॥ तदेतस्मिन्स्तुत्यर्थे श्लोको मन्त्रोप्येष भवति॥ यथेह लोके क्षुधिता बु
भुक्षिता बाला मातरं पर्युपासते॥ कदा नो माताऽन्नं प्रयच्छतीत्येवं सर्वाणि भूतान्यन्नादान्येवंविदोग्निहोत्रं भोजनमुपासते क
दा त्वसौ भोक्ष्यत इति जगत्सर्वं विद्वद्भोजनेन तृप्तं भवतीत्यर्थः॥ द्विरुक्तिरध्यायपरिसमाप्त्यर्था॥२४॥ इति श्रीमच्छंकराचार्य
भगवतः कृतौ छांदोग्योपनिषद्विवरणे पंचमप्रपाठकः समाप्तः ५॥ भाष्यं ६४० टी० ७१२॥ त्यर्थेग्निहोत्रस्तुतिरूपो योर्थस्तस्मिन्निति



तन्मंत्रस्य तात्पर्यार्थं दर्शयति जगदिति॥ विदुषो वैश्वानरात्मनः सर्वात्मत्वादित्यर्थः॥२४॥ इति श्रीमच्छुद्धानंदपादपूज्यशिष्यभगवदानंद
कृतायां छांदोग्यभाष्यटीकायां पंचमोऽध्यायः समाप्तः ५ ॥ ९ ॥

अथसटीकछान्दोग्योपनिषद्भाष्यस्यषष्ठोध्यायःप्रारभ्यते॥ ७ ॥

192

॥श्रीगणेशायनमः॥ वर्तिष्यमाणाध्यायस्यातीतेनसंदर्भेण संबंधंवक्तुंप्रतीकंगृहीत्वातंप्रतिजानीते॥श्वेतकेतुरिति॥तमेवप्रकटयन्नथमं
तृतीयाध्यायेनास्यसंबंधंकथयति॥सर्वमिति॥एतद्दृष्टांतदर्शोयंषष्ठोऽध्यायआरभ्यतइतिसंबंधः॥व्यवहितंसंबंधमुक्त्वाऽव्यवहितंतंदर्शय
ति॥अनंतरंचेति॥अध्यायतात्पर्यमुक्त्वाख्यायिकातात्पर्यमाह॥पितेति॥पिताप्रतिवक्तापुत्रश्चपृष्टेत्येवंविधेयमाख्यायिकासाचविद्यायाःसारि

श्वेतकेतुर्हारुणेयआसेत्याद्यध्यायसंबंधः॥सर्वंखल्विदंब्रह्मतज्जलानितीत्युक्तंकथंतस्माज्जगदिदंजायतेतस्मिन्नेवच
लीयतेऽनितिचेतिनैवेत्येतद्वक्तव्यं॥अनंतरंचैकस्मिन्भुक्तेविदुषिसर्वंजगत्तृप्तंभवतीत्युक्तं॥तदेकत्वेसत्यात्मनःसर्वभूतस्य
स्योपपद्यते॥नात्मभेदेकथंचतदेकत्वमितितद्दर्शनार्थोयंषष्ठोऽध्यायआरभ्यते॥पितापुत्राख्यायिकाविद्यायाःसारिष्ठत्वप्रद
र्शनार्था॥श्वेतकेतुरितिनामतोहस्मेत्यैतिह्यार्थः॥आरुणेयोरुणस्यपौत्रआसबभूवतंपुत्रंआरुणिःपितायोग्यंविद्याभाजनंम

ॐ श्वेतकेतुर्हारुणेयआसतंहपितोवाचश्वेतकेतोवसब्रह्मचर्यंनवैसोम्यास्मत्कुलीनोननूच्यब्रह्मबंधु
रिवभवतीतिसहद्वादशवर्षउपेत्यचतुर्विंशतिवर्षःसर्वान्वेदानधीत्यमहामनाअनूचानमानीस्तब्धएया

न्वानत्तस्योपनयनकालात्ययंचपश्यन्नुवाच॥हेश्वेतकेतोअनुरूपंगुरुंकुलस्यनोगत्वावसब्रह्मचर्यंनचैतद्यु
क्तंयदस्मत्कुलीनोहेसोम्याननूच्यानधीत्यब्रह्मबंधुरिवभवतीति॥ब्राह्मणान्बंधून्व्यपदिशतिनस्वयंब्राह्मणवृत्तइ
ति॥तस्यातःप्रवासोनुमीयतेपितुर्येनस्वयंगुणवान्सन्पुत्रंनोपनेष्यति॥सपित्रोक्तःश्वेतकेतुर्द्वादशवर्षःसन्नुपेत्याचा

र्यत्वद्योतनार्थापिताहिपुत्रायसारतरमेवोपदिशतीत्यर्थः॥कुलस्यानुरूपमित्यादिवचनान्नकुलाधमस्यगुरुत्वमितिगम्यते॥ब्रह्मच
र्यमध्ययनार्थमितिशेषः॥गत्वेत्यादिवचनान्माणवकाधीनमध्ययनमितिसूचितं॥माभूदुपनयनमध्ययनंचेत्याशंक्याह॥नचैतद्युक्त
मिति॥किमितिपितास्वयमेवोपनीयपुत्रंनाध्यापयतितत्राह॥तस्येति॥अतःशब्दःस्वगृहविषयः॥अनुमानंकल्पनंतत्रकल्पकमाह॥ये

अनूचानोऽनुवचनसमर्थः॥ कर्मेच्छुत्यन्त्याकारणश्रुत्यन्त्याचादेशशब्दो व्याख्यातः। किमित्यधीतसर्ववेदमधिगततदर्थं च पुत्रमात्मविद्याम
धिकृत्य पिता पृच्छति तस्य सर्ववेदाध्ययनादिनैव कृतार्थत्वादित्याशंक्याह॥ सर्वानपीति॥ तदेतद्दृष्ट्वेतं श्रुत्वाहेत्युक्तं विवृणोति॥ कथं न्विति॥
मृन्मयमित्यस्य व्याख्या मृद्विकारजातमिति॥ तद्यथा मृत्पिंडेन विज्ञातेन विज्ञातं स्यात्तथान्यदपि सर्वकारणेन विज्ञातेन तद्विकारजातं विज्ञा

तं सर्वमेव भूव तावत्सर्वान्वेदानश्चतुरोऽप्यधीत्य तदर्थं च बुद्ध्वा महामना महद्गंभीरं मनो यस्य सममात्मानमन्यैर्मन्यमान
स्य सोऽयं महामना अनूचानमानी॥ अनूचानमात्मानं मन्यत इत्येवं शीलो यः सोऽनूचानमानी स्तब्धोऽप्रणतस्वभाव एव या
य गृहं तमेवंभूतं ह्यात्मनोऽननुरूपशीलं स्तब्धमानिनं पुत्रं दृष्ट्वा पिता वाच तं सद्धर्मावतारचिकीर्षया श्वेतकेतो यन्विदं महा
मना अनूचानमानी स्तब्धश्चासि केन ते निशयः प्राप्त उपाध्यायाद्वात्पितमादेशमादिश्यत इत्यादेशः केवलशास्त्राचार्यो
पदेशगम्यमित्येतद्येन वा परं ब्रह्मादिश्यते स आदेशस्तमप्यादेशं पृष्टवानस्याचार्यं तमादेशं विशिनष्टि॥ येनादेशेन श्रुतेन

तꣳह पितोवाच श्वेतकेतो यन्नु सोम्येदं महामना अनूचानमानी स्तब्धोस्युत तमादेशमप्राक्ष्यो येनाश्रुतꣳश्रुतं
भवत्यमतं मतम

नाश्रुतमप्यन्यच्छ्रुतं भवत्यमतं मतं तर्कितं तर्कितं भवत्यविज्ञातमनिश्चितं निश्चितं भवतीति॥ स
र्वानपि वेदानधीत्य सर्वं चान्यद्वेद्यमधिगम्याप्यकृतार्थ एव भवति यावदात्मतत्त्वं न जानातीत्याख्यायिकातोऽवगम्यते
॥ तदेतद्दृष्ट्वेतं श्रुत्वाह॥ कथं न्वेतदप्रसिद्धमन्यविज्ञानेनान्यद्विज्ञातं भवतीत्येवं मन्वानः पृच्छति॥ कथं नु केन प्रकारे
ण हे भगवः स आदेशो भवतीति॥ यथा स आदेशो भवति तच्छृणु हे सोम्य यथा लोके एकेन मृत्पिंडेन रुचककुंभादिकारण
भूतेन विज्ञातेन सर्वमन्यत्तद्विकारजातं मृन्मयं मृद्विकारजातं विज्ञातं स्यात्॥ ननु कथं मृत्पिंडे कारणे विज्ञाते कार्यमन्यद्वि

तं भवतीति योजना॥ अन्यविज्ञानादन्यविज्ञानमदृष्टत्वादश्लिष्टमिति शंकते॥ कथमितीति॥ कार्यकारणयोरन्यत्वासिद्धेर्नैवमिति परिहरति॥ नै

॥यन्मन्यसइत्यादिना॥ अन्यत्वाभावेलोकप्रसिद्धिविरोधंशंकते॥कथंनहीति॥ वाचारंभणमित्यत्रवाचेतितृतीयाषष्ठ्यर्थोद्रष्टव्या॥नामधेयमित्यस्यार्थंकथयति॥नामैवेति॥विकारस्यमिथ्यात्वेकिंपरमार्थतोस्तीत्याशंक्याह॥मृत्तिकेत्येवेति॥एकेनैवदृष्टांतेनविवक्षितार्थसि

कारणेनानन्यत्वात्कार्यस्ययन्मन्यसेऽन्यस्मिन्विज्ञातेऽन्यन्नविज्ञायतइतिसत्यमेवंस्याद्यद्यन्यत्कारणात्कार्यंस्यान्नत्वेव मन्यत्कारणात्कार्यंकथंतर्हिलोकइदंकारणमयमस्यविकारइति॥शृणु॥वाचारंभणंवागारंभणंवागालंबनमित्येतत्को सौविकारोनामधेयंनामैवनामधेयं॥ ॥स्वार्थेधेयप्रत्ययोवागालंबनमात्रंनामैवकेवलं॥नविकारोनामवस्त्व

विज्ञातंविज्ञातमितिकथंनुभगवःसआदेशोभवतीतियथासोम्यैकेनमृत्पिंडेनसर्वंमृन्मयंविज्ञातꣳस्याद्वाचारंभणंविकारोनामधेयंमृत्तिकेत्येवसत्यं॥यथासोम्यैकेनलोहमणिनासर्वंलोहमयंविज्ञातꣳस्याद्वाचारंभणंविकारोनामधेयंलोहमित्येवसत्यंयथासोम्यैकेननखनिकृंतनेनसर्वंकार्ष्णायसंविज्ञातꣳस्याद्वाचारंभणंविकारोनामधेयंकृष्णायसमित्येवसत्यमेवꣳसोम्यसआदेशोभवतीतिनवैनूनंभगवंतस्तएतदवेदिषुर्यद्ध्येतदवेदिष्यन्कथंमेनावक्ष्यन्निितिभगवाꣳस्त्वेवमेतद्ब्रवीत्विितितथासोम्येतिहोवाच॥१॥ ॥ ॥

स्तिपरमार्थतोमृत्तिकेत्येवमृत्तिकैवतुसत्यंवस्त्विति॥ यथाचसोम्यैकेनलोहमणिनासुवर्णपिंडेनसर्वमन्यद्विकारजातं कटकमुकुटकेयूरादिविज्ञातंस्याद्वाचारंभणमित्यादिसमानंयथासोम्यैकेननखनिकृंतनेनोपलक्षितेनकार्ष्णायसपिंडेने त्यर्थः॥सर्वंकार्ष्णायसंकार्ष्णायसंविकारजातंविज्ञातंस्यात्समानमन्यत्॥अनेकदृष्टांतोपादानंदार्ष्टांतिकानेकभेदानुगमार्थंदृढप्रतिपत्त्यर्थंचएवंसोम्यसआदेशोयोमयोक्तोभवतीत्युक्तवतिपितर्याहेतरः॥१.द्वौ॥किमनेकदृष्टांतोपादानेनेत्याशंक्याह॥अ

तीत्यै

॥भगवन्त इति॥तेषामज्ञाने हेतुमाह॥यदीत्यादिना॥ननु मैवं तेषां गुरूणामज्ञानमाचक्षाणो गुरुद्रोही प्रत्यवायी स्यादित्याशंक्याह॥अवाच्य-
मपीति॥गुरूणामज्ञानमतः शब्दार्थः॥१॥यद्विज्ञानेन सर्वविज्ञानं लभ्यते तद्विज्ञानं प्रतिज्ञातं प्रकटीकर्तुं प्रथमं सर्वस्य सन्मात्रत्वं प्रतिजानीते॥सदे-
वेति॥सच्छब्दस्य सामान्यविशेषविषयत्वं व्युदस्यति॥सदितीति॥तस्य पृथिव्यादिभ्यो विशेषं दर्शयति॥सूक्ष्ममिति॥आकाशादिभ्यो विशेषमाह॥नि-
र्विशेषमिति॥अन्यविशेषव्यावृत्त्यर्थं विशेषमाह॥सर्वगतमिति॥तस्य तटस्थत्वं व्यावर्तयति॥एकमिति॥प्रत्यगभिन्नस्य तस्य संसारित्वं व्यावर्तयति॥

न वै नूनं भगवन्तः पूजावन्तो गुरवो मम ये त एतद्वस्तु नावेदिषुर्न विज्ञातवन्तो नूनं यद्यद्ध्यवेदिष्यन्विदितवन्तः एतद्वस्तु
कथं मे गुणवते भक्तायानुगताय नावक्ष्यन्नोक्तवन्तस्तेनाहं मन्ये न विदितवन्त इत्यवाच्यमपि गुरोर्न्यग्भावमवादीत्पुनर्गुरुकुल
प्रति प्रेषणभयात्तो भगवांस्त्वेव मे मह्यं तद्वस्तु येन सर्वज्ञत्वं ज्ञातेन मे स्यात्तद्ब्रवीतु कथयत्वित्युक्तः पितोवाच तथास्तु सोम्येति

सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं॥

॥१॥सदेव सदित्यस्तितामात्रं वस्तु सूक्ष्मं निर्विशेषं सर्वगतमेकं निरञ्जनं निरवयवं विज्ञानं यदवगम्यते सर्ववेदान्तेभ्य एव श-
ब्दोऽवधारणार्थः किं तदवधियत इत्याह॥इदं जगन्नामरूपक्रियावद्विकृतमुपलभ्यते यत्तत्सदेवासीदित्यासीच्छब्देन संबध्यते॥
कदा सदेवेदमासीदित्युच्यते॥अग्रे जगतः प्रागुत्पत्तेः॥किं नेदानीमिदं सत् येनाग्र आसीदिति विशेष्यते॥न कथं तर्हि विशेषणमिदानी-
मपीदं सदेव किंतु नामरूप-

निरञ्जनमिति॥निष्क्रियत्वेन तस्य कूटस्थत्वमाह॥निरवयवमिति॥यथोक्ते वस्तुनि प्रमाणमाह॥यदवगम्यत इति॥विशेषणानुसारेण शंक-
ते॥किं नेदानीमिति॥वर्तमानदशायामसत्त्वं जगतो नास्तीत्याह॥नेति॥सदा सत्त्वाविशेषे विशेषणं न निर्वहतीति शंकते॥कथमिति॥किं विशे-
षणसामर्थ्यादिदानीमसत्त्वं जगतः ख्याप्यते॥किं वा विशेषणस्यार्थवत्त्वं पृच्छ्यते॥तत्राद्यं दूषयति॥इदानीमपीति॥अप्यर्थस्य विरोधान्नव-
र्तमानावस्थायां जगदसत्त्वसिद्धिरित्यर्थः॥द्वितीयं प्रत्याह॥किं त्विति॥यच्चेदं वर्तमानं जगन्नामरूपविशेषणवदालक्ष्यते तदिदंशब्दस्य तद्-
द्बुद्धिविषयभावेन स्थितं भवतीति कृत्वेदमिदमिदानीमि-
त्यपि व्यवह्रियते॥

नन्वेवं तर्हि प्रागुत्पत्तेः सच्छब्दस्य बुद्धेश्चेत्येतावन्मात्रगम्यमेव न त्विदं शब्दस्य न बुद्धेश्च विषयो भवतीत्यग्रे सदेवेदमासीदित्यवधार्यते॥ तस्माद्विशेषणमिदं शब्दबुद्धिमात्रत्वे पक्षे प्राक्कालीने जगत्यविरुद्धमित्यर्थः॥ अथ वर्त्तमानावस्थायामपि जगतः सत्त्वे किमिति तत्रेदं शब्दबुद्धी न क्रमेते अत आह॥ नेहीति॥ यथा सुषुप्तिकाले सदपि वस्तु नेदं शब्दबुद्ध्योर्गोचरस्तथा प्रागुत्पत्तेः सदपि जगन्नामवत्त्वेन रूपवत्त्वेन चेदमिति न व्यवहर्त्तुं शक्यं प्रकरणोपसंहारस्योभयत्र तुल्यत्वादित्यर्थः॥ सुषुप्तेऽपि वस्तुनो न सत्त्वं मानाभावादित्याशंक्याह॥ यथेति॥ न हि तत्र वस्तुनः सत्त्वमुत्थितस्य परामर्शदर्शनादनुभूतस्यानुभवितुश्चाभावे तदयोगाच्च न च तत्र विभक्तं वस्तु दृश्यते सुषुप्त्यभावप्रसंगादतस्तत्र केव

विशेषणवदिदं शब्दबुद्धिविषयं चेतीदं च भवति॥ प्रागुत्पत्तेस्त्वग्रे केवलसच्छब्दबुद्धिमात्रगम्यमेवेति सदेवेदमग्र आसीदित्यवधार्यते न हि प्रागुत्पत्तेर्नामवद्रूपवद्वेदमिति ग्रहीतुं शक्यं वस्तु सुषुप्तकाल इव॥ यथा सुषुप्तादुत्थितः सत्त्वमात्रमवगच्छति सुषुप्ते सन्मात्रमेव केवलं वस्त्विति तथा प्रागुत्पत्तेरित्यभिप्रायः॥ यथेदमुच्यते लोके पूर्वाह्णे घटादिसिसृक्षुणा कुलालेन मृत्पिण्डं प्रसारितमुपलभ्य ग्रामान्तरं गत्वा प्रत्यागतो पराह्णे तत्रैव घटशरावाद्यनेकभेदभिन्नं कार्यमुपलभ्य मृदेवेदं घटशरावादि केवलं पूर्वाह्ण आसीदिति तथैवेहाप्युच्यते सदेवेदमग्र आसीदित्येकमेवेति स्वकार्यपतितमन्यन्नासीदित्येकमेवेत्युच्यते॥ अद्वितीयमिति मृद्व्यतिरेकेण मृदो यथान्यद्घटाद्याकारेण परिणमयितृ कुलालादि निमित्तकारणं दृष्टं तथा सद्व्यतिरेकेण सतः सहकारिकारणं द्वितीयं वस्त्वन्तरं प्राप्तं प्रतिषिध्यते॥ अद्वितीयमिति नास्य द्वितीयं वस्त्वन्तरं विद्यत

लं सन्मात्रं वस्त्विति यथावगमस्तथा प्रागुत्पत्तेरपि सर्वं सन्मात्रं युक्तमेवेत्यर्थः॥ उक्तमेवार्थं संप्रतिपन्नेनोदाहरणान्तरेण समर्थयते॥ यथेत्यादिना॥ किमिदं सदित्यपेक्षायां तल्लक्षणमाह॥ एकमिति॥ अवतारितलक्षणवाक्ये प्रथमविशेषणयोरर्थमाह॥ स्वकार्येति॥ सजातीयस्वगतभेदहीनमित्यर्थः॥ विशेषणान्तरमादाय व्याकरोति॥ अद्वितीयमितीति॥ विजातीयभेदशून्यमित्यर्थः॥ यदुक्तं सत्समानाधिकरण्यात्सदेव सर्वमिति तन्नारंभवादी शंकते॥ नन्विति॥ किं कार्यस्य सत्समानाधिकरण्यं वर्त्तमानदशायां परपक्षेऽपि संभवतीत्युच्यते किं वा प्रागवस्थायाम्

विकल्प्याद्यमंगीकरोति॥सत्यमिति॥द्वितीयं दूषयति॥प्रागुत्पत्तेस्त्विति॥लक्षणवाक्यं च परपक्षे दुर्योजनमित्याह॥नचेति॥वाक्यद्वयपर्यालोचनया परपक्षासंभवमुपसंहरति॥तस्मादिति॥दृष्टांतदार्ष्टांतिकयोरैकरूप्याद्दृष्टांतानां कार्यकारणाभेदनिष्ठत्वाच्च वैशेषिकपक्षासिद्धिरित्याह॥मृदादीति॥वैशेषिकपक्षासंभवेपि वैनाशिकपक्षो भविष्यतीति शंकते॥तत्रेति॥असच्छब्दस्य तुच्छव्यावृत्तविषयत्वं वारयति॥अभावमात्रमिति॥सतोन्यदसदिति स्थितेरसदादिनापि प्रतियोगिभूतं सदास्थितमित्याशंक्याह॥सदभावमात्रमिति॥तदेवं वैधर्म्ये दृष्टांतेन

वैशेषिकपक्षेपि सत्तासामानाधिकरण्यं सर्वस्योपपद्यते द्रव्यगुणादिषु सच्छब्दबुद्ध्यनुवृत्तिः सत् द्रव्यं सन् गुणः सत्कर्मेत्यादिदर्शनात्॥सत्यमेवं स्यादिदानीं प्रागुत्पत्तेस्तु नैवेदं कार्यं सदेवासीदित्यभ्युपगम्यते वैशेषिकैः प्रागुत्पत्तेः कार्यस्याऽसत्त्वाभ्युपगमात् न चैकमेव सदद्वितीयं प्रागुत्पत्तेरिच्छंति॥तस्माद्वैशेषिककल्पितात्सतोन्यत्कारणमिदं सदुच्यते मृदादिद

तद्धैक आहुरसदेवेदमग्र आसीदेकमेवाद्वितीयं तस्मादसतः सज्जायत

ष्टांतेभ्यः॥तत्र हैतस्मिन्प्रागुत्पत्तेर्वस्तुनिरूपण एके वैनाशिका आहुर्वस्तु निरूपयंतोऽसत्सदभावमात्रं प्रागुत्पत्तेरिदं जगदेकमेवाद्वितीयमासीदिति॥सदभावमात्रं हि प्रागुत्पत्तेस्तत्त्वं कल्पयंति बौद्धाः न तु सत्प्रतिद्वंद्वि वस्त्वंतरमिच्छंति॥यथासच्चासदिति गृह्यमाणं यथाभूतं तद्विपरीतं तत्त्वं भवतीति नैय्यायिकाः॥ननु सदभावमात्रं प्रागुत्पत्तेश्चेदभिप्रेतं वैनाशिकैः कथं प्रागुत्पत्तेरिदमासीदसदेकमेवाद्वितीयं चेति कालसंबंधः संख्यासंबंधोऽद्वितीयत्वं चोच्यते तैर्बाढं ॥ स्फुटयति॥यथेति॥सदितियथाभूतमसदिति च ततो विपरीतं गृह्यमाणं सच्चासच्चेति द्विविधं तत्त्वं भवतीति यथा नैयायिका वदंतीह तद्वत्सदसती भावाभावाविति तैरभ्युपगमान्न तथा बौद्धैर्द्विविधं तत्त्वमिष्टं॥सदत्यंताभावोऽसदित्यभ्युपगमादप्रतीतप्रतियोगिकाभावस्यात्यंताभावतया शशविषाणं नास्तीत्यादौ प्रसिद्धत्वादित्यर्थः॥तमिमं वैनाशिकपक्षं शिष्यमुखेन दूषयति॥नन्वित्यादिना॥शिष्योक्तमंगीकरोति॥बाढमिति॥ १ ॥ ६ ॥ १ ॥

भावस्य योऽभावस्तन्मात्रमसदित्यभ्युपगच्छतां तेषां पक्षे न युक्तं कालसंबंधाद्यसत इति युक्तमेवान्वयोक्तमित्यर्थः ॥ किं च तन्मते यस्य कस्य चिदसत्त्वमिष्टं सर्वस्यैवेति विकल्प्याद्यमुपेत्य द्वितीयं दूषयति ॥ असत्त्वेति ॥ किमभ्युपगंतास्य यदा कदाचिदभ्युपगंतव्यः किं वा प्रागवस्थायामपीति विकल्प्याद्यमंगीकृत्य द्वितीयं दूषयन्नाशंकते ॥ इदानीमिति ॥ स किं तदानीमसत्त्वान्नाभ्युपगम्यते किं वा तदभ्युपगंतुरभावान्नाद्य इत्याह ॥ न प्रागुत्पत्तेरिति ॥ न द्वितीयः प्रागुत्पत्तेर्जगदसदित्यस्याभ्युपगंतासंप्रत्यभ्युपगम्यते यथा न तथा प्रागवस्थायामभ्युपगंतास्ति नित्यस्यापि अभ्युपगंतुरिदानीमभ्युपगमसंभवान्न हि प्रागुत्पत्तेस्तत्सत्त्वे मानाभावो विमतः कालो ज्ञातृसत्तावान् कालत्वात् संमतवदित्यनुमानादित्याह ॥ प्रागुत्पत्तेरिति ॥ परपक्षं दूषयित्वा वाक्यतात्पर्यं दर्शयितुं चोदयति ॥ नन्विति ॥ अन्यापोहस्य शब्दार्थत्वे सत्यपोह्यवस्तुनस्तदर्थत्वे कथ-

न युक्तं तेषां भावाभावमात्रमभ्युपगच्छताम् असत्त्वमात्राभ्युपगमोऽपि अयुक्त एवाभ्युपगंतुरनभ्युपगमानुपपत्तेरिदानीमभ्युपगंताभ्युपगम्यते न प्रागुत्पत्तेरिति चेन्न प्रागुत्पत्तेः सद्भावस्य प्रमाणाभावात्प्रागुत्पत्तेरसदेवेति कल्पनानुपपत्तेः ॥ ननु कथं वस्त्वाकृतेः शब्दार्थत्वेऽसदेकमेवाद्वितीयमिति पदार्थवाक्यार्थोपपत्तिस्तदनुपपत्तौ चेदं वाक्यमप्रमाणं प्रसज्येतेति चेन्नैष दोषः सद्ग्रहणनिवृत्तिपरत्वाद्वाक्यस्य सदित्ययं तावच्छब्दः सदाकृतिवाचक एकमेवाद्वितीयमित्येतौ च सच्छब्देन समानाधिकरणौ ॥ तथेदमासीदिति च तत्र नञ् सद्वाक्ये प्रयुक्तः सद्वाक्यमेवावलंब्य सद्वाक्यार्थविषयां बुद्धिं सदेकमेवाद्वितीयमिदमासीदित्येवंलक्षणां ततः सद्वाक्यार्थान्निवर्तयत्यश्वारूढ इवाश्वालंबनोऽश्वं

((मसदिति शब्दस्यार्थे सिद्धिराकृतेश्च मीमांसकप्रक्रियया शब्दार्थत्वे सत्येकमद्वितीयमिति पदयोराकृतिवाचकत्वाद्योगाद्यर्थानुपपत्तिस्तदभावे च पदार्थसंसर्गाद्यात्मनो वाक्यार्थस्यानुपपत्तिर्वाक्यार्थानुपपत्तौ च निर्विषयमिदं वाक्यमप्रमाणं स्यादित्यर्थः ॥ सदभिनिवेशनिवृत्त्यर्थमिदं वाक्यं न त्वभून्यमेव साक्षादभिधत्ते तन्न वाक्याप्रामाण्यमिति परिहरति ॥ नैष दोष इति ॥ तथापि कथमसदादिशब्दानामगृहीतशक्तिकत्वे वाक्यार्थोपपत्तिरित्याशंक्याह ॥ सदित्ययमिति ॥ एकमद्वितीयमिति शक्तिद्वयवदिदमासीदिति च शब्दो सच्छब्देन समानाधिकरणावेवेत्याह ॥ तथेति ॥ सदेवे-

अ· ६·
त्यादिवाक्यस्योक्तविधयार्थवत्त्वेपि कथमसदे-
वेत्यादिवाक्यमर्थवदित्याशंक्याह ॥ तत्रेति ॥ इवशब्दो

यद्वदित्यस्मिन्नर्थे तद्वदिति पृथक्प्रयोगात्किमिति वाक्यस्य सदभिनिवेशनिवृत्तिपरत्वं सद्भावपरत्वमेव किं न स्यादित्याशंक्याह॥ नत्विति॥ सद्भाव
स्यात्यंताभावलक्षणस्य तुच्छत्वाच्छब्दशक्तिगोचरत्वासंभवादित्यर्थः॥ अन्यपरत्वासंभवे सदभिनिवेशनिवृत्तिपरत्वं वाक्यस्य सिद्धमित्युपसंहरति॥ अ
तइति॥ प्राक्काले पुरुषस्य सदभिनिवेशनिवृत्तिस्त्र विवक्षिता चेत्तर्हि नञ्पदमेव प्रयोक्तव्यं किमित्यसदेवेदमग्र आसीदिति प्रयुक्तमित्याशंक्याह॥ दर्शि
यित्वा हीति॥ अथवा सदेवेत्यादिना स्वपक्षमुक्त्वा तत्दृढीकरणार्थेनासदेवेत्यादिनानुवादोयमिति तात्पर्यांतरमाह॥ दर्शयित्वा हीति॥ प्रथमपक्षे तस्मा
दित्यादिवाक्यस्यार्थाभावात्द्वितीयः पक्षो गृहीतः॥ तत्र कारणस्यासत्त्वमुक्तमिदानीं कार्यस्यापि तद्दर्शयति॥ तस्मादिति॥ अजायतेति वक्तव्ये कथं श्रुत्या॥

तदभिमुखाद्विषयान्निवर्त्तयति तद्वत्॥ ननु पुनः सद्भावमेवाभिधत्तेऽतः पुरुषस्य विपरीतग्रहणनिवृत्त्यर्थे परमिदमसदेवे।
त्यादिवाक्यं प्रयुज्यते॥ दर्शयित्वा हि विपरीतग्रहणं ततो निवर्त्तयितुं शक्यत इत्यर्थवत्त्वाऽसदादिवाक्यस्य श्रौतत्वं प्रामाण्यं च सि
द्धमित्यदोषस्तस्मादसतः सर्वाभावरूपात्सद्विद्यमानमजायत समुत्पन्नमडभावश्छांदसः॥ तदेतद्विपरीतग्रहणं महावैना।

कुतस्तु खलु सोम्यैव ᳪ स्यादिति होवाच कथमसतः सज्जायेतेति॥ २॥

शिकपक्षं दर्शयित्वा प्रतिषेधति॥ कुतस्तु प्रमाणात्खलु हे सोम्य एवं स्यादसतः सज्जायेतेत्येवं कुतो भवेन्न कुतश्चित्प्रमाणा
देवं संभवतीत्यर्थः॥ यदपि बीजोपमर्देंकुरो जायमानो दृष्टोऽभावादेवेति तदप्यभ्युपगमविरुद्धं तेषां॥ कथं ये तावद्बीजावय
वा बीजसंस्थानविशिष्टास्तेंकुरेप्यनुवर्तन्त एव न तेषामुपमर्दोंकुरजन्मनि॥ यत्पुनर्बीजाकार

जायतेति प्रयुक्तमित्याशंक्याह॥
अडभावइति॥ कुतस्तु खल्वित्यादिवाक्यालोचनायामपि द्वितीयपक्षो ग्राह्य इत्यभिमेत्याह॥ तदेतदिति॥ विमतं अभावपुरःसरं कार्यत्वादंकुर
वदिति शंकते॥ यदपीति॥ अप्रसिद्धविशेषणत्वं मत्वा परिहरति॥ तदपीति॥ बीजोपमर्देनांकुरोत्पत्तेरिष्टत्वात्कथमप्रसिद्धविशेषणतेति शंकते
॥ कथमिति॥ किमंकुरोत्पत्तौ बीजावयवाउपमृद्यंते किं वा बीजाकारसंस्थानमिति विकल्प्याद्यमत्याह॥ येतावदिति॥ द्वितीयं दूषयति॥ यत्पुनरिति॥

१९६

तत्किं परमार्थवस्तु किं वा संवृतिसिद्धं नाद्योऽभ्युपगमविरोधादित्युक्त्वा द्वितीयमुत्थापयति ॥ अथ संवृत्येति ॥ संवृतिं विकल्पयति ॥ केयमिति ॥ आ
द्ये भावस्याभावादुत्पत्तौ दृष्टान्ताभावः संवृतेरवस्तुत्वेन बीजसत्त्वासाधकत्वादित्याह ॥ यदीति ॥ द्वितीयमनूद्य दूषयति ॥ अथेति ॥ तत्त्वं यया संव्रि
यते आच्छाद्यते सा संवृतिर्लौकिकी बुद्धिः सा चेज्ज्ञानरूपेष्टा न तर्हि तया बीजावयवानामङ्कुराकारपरिणामसिद्धेर्दृष्टान्तासिद्धिरित्यर्थः ॥ लौकिकबु
द्धिमनाश्रित्य परमतमेवादायाशङ्कते ॥ अवयवादिति ॥ असत्स्ववयविषूपमर्दायोगवदवयवेष्वपि तद्योगस्य तुल्यत्वान्नेदं चोद्यमित्युत्तरमा
ह ॥ न तदवयवेष्वपीति ॥ तदेव स्फुटयति ॥ यद्यपीति ॥ नन्वसन्मते परमावयवी नास्त्यवयवास्तु सन्त्येवेति चेत्तत्राह ॥ बीजावयवानामिति ॥ न हि ते

संस्थानं तद्बीजावयवव्यतिरेकेण वस्तुभूतं न वैनाशिकैरभ्युपगम्यते यदङ्कुरजन्मन्युपमृद्येताथ तदस्त्यवयवव्यति
रिक्तं वस्तुभूतं तथा च सत्यभ्युपगमविरोधः ॥ अथ संवृत्याभ्युपगतं बीजसंस्थानरूपमुपमृद्यत इति चेत्केयं संवृतिर्ना
म किमसावभाव उत भाव इति यद्यभावो दृष्टान्ताभावः ॥ अथ भावस्तथापि नाभावादङ्कुरोत्पत्तिर्बीजावयवेभ्यो ह्यङ्कुरोत्प
त्तिरवयवा अणुपमृद्यन्त इति चेन्न ॥ तदवयवेषु तुल्यत्वाद्यथा वैनाशिकानां बीजसंस्थानरूपोऽवयवी नास्ति तथावयवा
अपि नैव तेषामप्युपमर्दानुपपत्तिर्बीजावयवानामपि सूक्ष्मावयवास्तदवयवानामप्यन्ये सूक्ष्मतरावयवा इत्येवं प्रसङ्गस्या
निवृत्तेः सर्वत्रोपमर्दानुपपत्तिः ॥ सद्बुद्ध्यनुवृत्तेः सत्त्वानिवृत्तिश्चेति सद्वादिनां सत एव सदुत्पत्तिः सेत्स्यति ॥ न त्वसद्वादिनां दृ
ष्टान्तोऽस्त्यतः सदुत्पत्तेः मृत्पिण्डात् घटोत्पत्तिदर्शनेन सद्वादिनां तद्भावे भावात्तदभावे चाभावाद्यद्य ((पामङ्कुरजन्मन्युपमर्दः स्यादिति

चेत्तत्राह ॥ तदवयवानामपीति ॥ न चाङ्कुरजन्मन्यवयवपरंपराविश्रान्तिभूमिरुपपद्यते तस्याः शून्यत्वे तदुपमर्दे सत्कारणवादापाताच्छून्य
त्वेऽपि कार्यत्वे कादाचित्कत्वस्य सावयवत्वेनोक्तदोषतादवस्थ्यादकार्यत्वे भावश्चेदुपमर्दासिद्धिरभावश्चेत्तदुपमर्दे सत्कारणवादापत्तिरे
वेति भावः ॥ असद्वादस्याप्रामाणिकत्वमुक्त्वा सद्वादस्य प्रामाणिकत्वमाह ॥ सद्बुद्धीति ॥ परमते दृष्टान्ताभावमुक्तमनूद्य स्वमते तत्सत्त्वं च समु
च्चिनोति ॥ न त्विति ॥ घटस्याप्यभावादेवोत्पत्तेरिष्टत्वाद्दृष्टान्तासंप्रतिपत्तिरित्याशङ्क्याह ॥ यदीति ॥ किं च यद्यस्योपादानं तच्छब्दप्रत्ययौ तत्रानुव

धियोनतन्मात्रानुवर्तनेस्यातांनचानुवर्तेतेतस्मादसतःसदुत्पत्तिरयुक्तेत्याह॥अभावेति॥सतोमृत्पिंडस्यघटादिकारणत्वमन्वयव्यतिरेकाभ्या-
मुक्तंतत्रान्वयव्यतिरेकयोरन्यथासिद्धिमुद्भावयति॥यदपीति॥तस्मिन्नपिपक्षेनसत्त्वस्यक्षतिरित्युत्तरमाह॥नदपीति॥यदुक्तंसद्रूपायाबु-
द्धेःसद्रूपाबुद्धिप्रतिकारणत्वमितितदसिद्धमितिशंकते॥मृद्घटबुद्ध्योरिति॥सत्त्वसिद्धौहिपूर्वभावित्वं॥कारणत्वंकार्यत्वंचोत्तरभावित्वमु-
क्तं॥बुद्धीनांचासत्त्वादानंतर्यमात्रेणव्यवह्रियतेनिमित्तनैमित्तिकत्वमित्यर्थः असतीनामपिबुद्धीनामानंतर्येणनिमित्तनैमित्तिकत्वमित्य-
तन्नशक्यंसंभावयितुंदृष्टांताभावादित्युत्तरमाह॥बुद्धीनामिति॥कुतस्तुखल्वित्यादिवाक्यव्याख्यानमुपसंहरति॥अतइति॥पूर्वमसतः
सदुत्पत्तौदृष्टांताभावउक्तइदानीमनुपसंहृतमितिशंकांवारयति॥असतइति॥स्वपक्षसिद्धिमुपसंहरतीतिसंबंधः॥सिद्धांतेपिदृष्टांताऽसि-

भावादेवघटउत्पद्येततुघटार्थिनामृत्पिंडोनोपादीयेतभावशब्दबुद्ध्यनुवृत्तिश्चघटादौप्रसज्येतनत्वेतदस्त्यतोनासतःसदुत्प-
त्तिःयदप्याहुर्मृद्बुद्धिर्घटबुद्धेर्निमित्तमितिमृद्बुद्धिर्घटबुद्धेःकारणमुच्यतेनतुपरमार्थतएवमृद्घटौवास्तीतितदपिमृद्बुद्धिर्वि-
द्यमानाविद्यमानायाएवघटबुद्धेःकारणमितिनासतःसदुत्पत्तिर्मृद्घटबुद्ध्योर्निमित्तनैमित्तिकतयानंतर्यमात्रंनतुकार्य-
कारणत्वमितिचेन्नबुद्धीनांनैरंतर्येगम्यमानेवैनाशिकानांबहिर्दृष्टांताभावादतःकुतस्तुखलुसोम्यैवंस्यादितिहोवाचक-
थंकेनप्रकारेणासतःसज्जायेतेति॥असतःसदुत्पत्तौनकश्चिदपिदृष्टांतप्रकारोस्तीत्यभिप्रायः॥एवमसदादिपक्षमुन्म-
थ्यस्वपक्षसिद्धिमुपसंहरतिसत्त्वेवसोम्येदमग्रआसीदितिस्वपक्षसिद्धिः॥ननुसद्वादिनोपिसतःसदुत्पद्यतइतिनैवदृष्टां-
तोस्ति॥घटाद्यंतरोत्पत्त्यदर्शनात्सत्यमेवंनसतःसदंतरमुत्पद्यते॥किंतर्हिसदेवसंस्थानांतरेणावतिष्ठते॥यथासर्पःकुं-

द्धिस्तुल्येतिशंकते॥नन्विति॥यद्यपिमृदोघटोत्पत्तिर्दृष्टातथापिनमृदोमृदंतरंघटाद्यंतरमुत्पद्यमानमुपलभ्यतेतस्मान्नसतःसदंत-
रोत्पत्तिरित्यर्थः॥किंसदंतरस्यासतःसकाशादुत्पत्तिरेववार्यतेकिंवाकारणत्वंसतोनिराक्रियतेतत्राद्यमंगीकरोति॥सत्यमिति॥द्वितीयं
निराकरोति॥किंतर्हीति॥तत्रापिदृष्टांताभावमाशंक्याह॥यथेति॥कुंडलीभावेकार्यत्वसिद्धिर्नास्तीत्याशंक्योदाहरणांतरमाह॥यथाच

छां. भा.

प्रभेदैरवतिष्ठत इति संबंधः सत एव सर्वप्रकारेणावस्थाने प्राक्कालिकं कार्यस्य सत्ववचनमयुक्तं तस्य सर्वदा सत्त्वाविशेषादिति शंकते ॥ यद्येवमिति ॥ प्रागवस्थं हि कारणं सन्मात्रं कार्यस्यावधार्यते तथा च कारणस्यैव सतस्तेन तेनाकारेणावस्थानमित्यंगीकारेऽपि कार्यस्य प्राक्कालिकसत्त्वावधारणमविरुद्धमित्युत्तरमाह ॥ नन्विति ॥ कार्यस्य कारणमात्रत्वं चेदेवं तर्हि कारणमेवासीन्न कार्यं तदसदेवेदानीं जातमिति असत्कार्यवादिमतमायातमिति शंकते ॥ प्राप्तमिति ॥ कारणस्यैव कार्यरूपेणावस्थानान्नासत्कार्यवादापत्तिरिति दृष्टांतेन परिहरति ॥ नेत्यादिना ॥ विमतमुपादानाद्भिन्न तितद्विलक्षणबुद्धिविषयत्वाद्यथाश्वबुद्धिविलक्षणविषयो महिष इत्यतो भिन्नं तेन तथा च कथं सत एवेदंधीविषयानिर्वाच्यावस्थांगीकारेणासत्कार्यवा

मृच्चूर्णपिंडघटकपालादिप्रकारैर्यद्येवं सदेव सर्वप्रकारावस्थं कथं प्रागुत्पत्तेरिदमासीदित्युच्यते ननु न श्रुतं त्वया सदेवेत्यव-
धारणमिदंशब्दवाच्यस्य कार्यस्य प्राक्तन हि प्रागुत्पत्तेः सदेवासीन्नेदंशब्दवाच्यमिदानीमिदं जातमिति न सत एवेदंशब्दबुद्धि-
विषयतयावस्थानाद्यथा मृदेव पिंडघटादिशब्दबुद्धिविषयत्वेनावतिष्ठते तद्वत् ॥ ननु यथा मृद्वस्त्वेवं पिंडघटाद्यपि तद्वत्सद्बु-

सदेवसोम्येदमग्रआसी ॥ २ ॥

द्धेरन्यबुद्धिविषयत्वात्कार्यस्य सतोऽन्यद्वस्त्वन्तरं स्यात्कार्यं जातं यथाश्वाद्गौः ॥ न पिंडघटादीनामितरेतरव्यभिचारेऽपि मृत्त्वा-
व्यभिचारात् ॥ यद्यपि घटः पिंडं व्यभिचरति पिंडश्च घटं तथापि पिंडघटौ मृत्त्वं न व्यभिचरतः तस्मान्मृन्मात्रं पिंडघटौ ॥ व्यभिच
(रति त्वश्वं गौरश्वो वा गां तस्मान्मृ

दापत्तिसमाधिरिति चोदयति ॥ नन्विति ॥ विलक्षणबुद्धिविषयत्वस्य भेदमात्रसाधकत्वे सिद्धसाधनता तात्त्विकभेदसाधकत्वे दृष्टांतासिद्धिरित्यभिप्रेत्याह ॥ नेति ॥ किंच कार्यस्य व्यभिचारित्वेन रज्जुसर्पादिवन्मिथ्यात्वानुमानादनिर्वाच्यसंस्थानादिवत्कार्यबुध्यालंबनत्वं सतोऽंगीकर्तव्यमित्याह ॥ पिंडेति ॥ तदेव स्फुटयति ॥ यद्यपीति ॥ मृत्त्वमंतरेण पिंडघटयोः स्वरूपाभावादिति तच्छब्दार्थः ॥ अव्यभिचारे मृत्त्वमित्यादिदृष्टांतः ॥ अव्यभिचारफलमाह ॥ तस्मादिति ॥ दृष्टांतगतमर्थं दार्ष्टान्तिके समर्थयति ॥ २ ॥ २ ॥

॥ एवमिति ॥ पृथगेव प्रथमानस्य कार्यस्य कथं सन्मात्रत्वमित्याशंक्याह ॥ वाचारंभणेनेति ॥ कार्यमिथ्यात्वं स्फुटीकर्तुं चोदयति ॥ नन्विति ॥ यथा स्वल्पत्वज्ञातेभ्यो रज्ज्वाद्यवयवेभ्यः सर्पादिसंस्थानमनिर्वाच्यमिष्टं तथा श्रुतिजनितजगत्कारणत्वबुद्ध्यनुपपत्त्या कल्पितेभ्यः सतो मायोपाधिकस्यावयवेभ्यो विकारसंस्थानमुपपद्यते तस्मादयं द्वैतप्रपंचो ब्रह्मविवर्तः संभवतीति परिहरति ॥ नैष दोष इति ॥ ब्रह्मविवर्तो जगदित्यत्र श्रुतिमनुकूलयति ॥ वाचारंभणमिति ॥ प्रपंचमिथ्यात्वं फलितमुपसंहरति ॥ एकमेवेति ॥ अद्वितीयत्वसमर्थनार्थमुत्तरवाक्यमुत्थाप्य व्याचष्टे ॥ तत्त्व ॥

एवं सत्संस्थानमात्रं इदं सर्वमिति युक्तं प्रागुत्पत्तेः सदेवेति ॥ वाचारंभणमात्रत्वाद्विकारसंस्थानमात्रस्य ननु निरवयवं सन्निष्कलं निष्क्रियं शांतं निरवद्यं निरंजनं सबाह्याभ्यंतरो ह्यजः इत्यादिश्रुतिभ्यो निरवयवस्य सतः कथं विकारसंस्थानमुपपद्यते ॥ नैष दोषो रज्ज्वाद्यवयवेभ्यः सर्पादिसंस्थानवद्बुद्धिपरिकल्पितेभ्यः सदवयवेभ्यो विकारसंस्थानोपपत्तेर्वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यमेवं सदेव सत्यमिति श्रुतेरेकमेवाद्वितीयं परमार्थत इदंबुद्धिकालेपि तत्सदैक्षतेक्षां दर्शनं कृतवदतश्च न प्रधानं सां

देकमेवाद्वितीयं तदैक्षत बहु स्यां प्रजायेयेति ॥

ख्यपरिकल्पितं जगत्कारणं प्रधानस्याचेतनत्वाभ्युपगमादिदं तु सच्चेतनमीक्षितृत्वात् ॥ तत्कथमैक्षतेत्याह ॥ बहु प्रभूतं स्यां भवेयं प्रजायेय प्रकर्षेणोत्पद्येय ॥ यथा मृद्घटाद्याकारेण ॥ यथा वा रज्ज्वादि सर्पाद्याकारेण बुद्धिपरिकल्पितेन ॥ असदेव तर्हि सर्वं । यद्गृह्यते रज्जुरिव सर्पाद्याकारेण न सत एव द्वैतभेदेनान्यथा गृह्यमाणत्वान्नासत्त्वं कस्यचित्क्वचिदिति ब्रूमः ॥ दिति ॥ सच्चद्वाच्यं जगत्कारणं प्रधानमिति केचित्तदप्येतेन निरस्तमित्याह ॥ अतश्चेति ॥ इच्छापूर्वकारित्वादिति यावदचेतनत्वाभ्युपगमात्तस्येक्षापूर्वकं स्रष्टृत्वमिति शेषः ॥ परिणामविवर्तवादावाश्रित्योदाहरणद्वयं बहु स्यामित्यादिश्रुतितात्पर्यार्थं वक्तुं निरस्तमेव चोद्यमुद्भावयति ॥ असदेवेति ॥ बहु स्यां प्रजायेयेत्यनेनेक्षितुरेवकार्याकारापत्तिवचनेन वैशेषिकादिमतमेतन्निरस्तमिति श्रुतितात्पर्यं दर्शयन्नुत्तरमाह ॥ नेत्यादिना ॥ ६ ॥

तदेवप्रपंचयति॥यथेत्यादिना॥प्रतिज्ञातमर्थमेतद्वयानुसारेण दृष्टांताभ्यां स्पष्टयति॥यथा रज्ज्विति॥अज्ञानान्वयव्यतिरेकाभ्यां रज्जु सर्पादे
रज्ञानमयत्वं चद्वैताभिनिवेशस्य सन्मात्राविवेकेसत्येवोत्पत्ते र्विचारेणतद्विवेके चानुत्पत्तेर्द्वैतमप्यज्ञानमयमेवतस्यतुतत्त्वंसन्मात्रमधिष्ठानं
वाङ्मनसातीतमित्यर्थः॥तस्यवाङ्मनसातीतत्वेप्रमाणमाह॥यतइति॥ अन्यदेवतद्विदितादित्यादिवाक्यमादिपदार्थः॥तैत्तिरीयश्रुतिवि
रोधमाशंकते॥नन्विति॥तथापिकथंविरोधधीरित्याशंक्याह॥इतिविरुद्धमिति॥अस्यांश्रुतौसतः सकाशादेवप्राथम्येनतेजः सृज्यमानमुच्य

यथासतोन्यद्वस्त्वंतरं परिकल्प्यपुनस्तस्यैवप्रागुत्पत्तेः प्रध्वंसाच्चोर्ध्वमसत्त्वंब्रुवतेतार्किकाः नतथास्माभिः कदाचित्क्वचिद
पिसतोन्यदभिधानंअभिधेयंवावस्तुपरिकल्प्यतेसदेवतुसर्वमभिधानमभिधीयतेचयदन्यबुध्या॥यथारज्जुरेवसर्पबुध्या
सर्पइत्यभिधीयते॥यथावापिण्डघटादिमृदन्यबुध्यापिंडघटादिशब्देनाभिधीयतेलोके॥रज्जुविवेकदर्शिनांतुसर्पाभिधा
नबुद्धीनिवर्त्तेते॥यथाचमृद्विवेकदर्शिनांघटादिशब्दबुद्धी॥तद्वत्सद्विवेकदर्शिनांअन्यविकारशब्दबुद्धीनिवर्त्तेते॥यतोवाचो

तत्तेजोसृजत॥श्रीरामायनमः॥

निवर्त्तंते अप्राप्यमनसासहेति॥अनिरुक्ते ऽ निलयनेइत्यादिश्रुतिभ्य एवमीक्षित्वा तत्तेजोसृजततेजः सृष्टवत्॥ननुतस्मा
द्वाएतस्मादात्मन आकाशः संभूतइतिश्रुत्यंतरेआकाशाद्वायुस्ततस्तृतीयंतेजः श्रुतमिह कथंप्राथम्येनतस्मादेवतेजः सृज्यतेत
तएवचाकाशमितिविरुद्धं नैषदोषः आकाशवायुसर्गानंतरं तत्सत्तेजोसृजतेतिकल्पनोपपत्तेरथवा अविवक्षितइहसृष्टि
(( क्रमः सत्कार्यमिदं सर्वमतः सदेकमेवाद्वितीयमित्येतद्विवक्षि
तंश्रुत्यंतरेतुतस्मादेवसतः सकाशादाकाशं प्राथम्येनसृष्टमित्युपरि
ष्टंतथाचकथमिदं मिथोविरुद्धं सिध्यतीत्यर्थः॥तैत्तिरीयश्रुत्यनुसारेणछांदोग्यश्रुतेर्व्याख्यानसंभवान्नविरोधोस्तीतिपरिहरति॥नैषदोषइ
ति॥सृष्टिक्रमस्याविवक्षितमंगीकृत्योक्तंतदेवनास्तिअद्वितीयत्वंतुसतोविवक्षितमितिपक्षांतरमाश्रित्याह॥अथवेति॥तत्रगमकं दर्शयति

मृदादिकार्यं घटादि तद्व्यतिरेकेण नास्ति मृदादिवस्तु सत्यमिति दृष्टान्तोपादानात् ब्रह्मणः सतस्तेजोबन्नादिकार्यं तद्व्यतिरेकेण नास्ति सन्मात्र
मेव सत्यमिति दार्ष्टान्तिकेऽपि विवक्षितं प्रतिभातीत्यर्थः ॥ तत्तेजोऽसृजतेत्यादिश्रुतेस्तात्पर्यान्तरमाह ॥ अथवा त्रिवृत्करणस्येति ॥ तासां त्रिवृतं
त्रिवृतमेकैकां करवाणीत्यादौ त्रिवृत्करणस्य श्रुतत्वात्त्रयाणामेव भूतानामिह सृष्टिरुच्यते ॥ नन्वेवं पञ्चीकरणं विवक्षितमिति वाच्यं ॥ भूतत्र
यसृष्टिश्रुतौ श्रुत्यन्तरसिद्धाकाशादिसृष्टेरुपलक्षणवत्त्रिवृत्करणश्रुत्या पञ्चीकरणोपलक्षणं ॥ तथा च श्रुत्यन्तरसिद्धयोराकाशवाय्वोस्ते

अथवा त्रिवृत्करणस्य विवक्षितत्वात्तेजोबन्नानामेव सृष्टिमाचष्टे । तेज इति प्रसिद्धं लोके दग्धृ पक्तृ प्रकाशकं रोहितं चेति
॥ तत्सृष्टं तेज ऐक्षत तेजोरूपसंस्थितं सदैक्षतेत्यर्थः ॥ बहु स्यां प्रजायेयेति पूर्ववत् तदपोऽसृजत आपो द्रवाः स्निग्धाः स्यन्दिन्यः शु
क्लाश्चेति प्रसिद्धा लोके यस्मात्तेजसः कार्यभूता आपस्तस्माद्यत्र क्वचदेशे काले वा शोचति संतप्यते स्वेदते प्रस्विद्यते वा पुरुष

तत्तेज ऐक्षत बहु स्यां प्रजायेयेति तदपोऽसृजत तस्माद्यत्र क्व च शोचति स्वेदते वा पुरुषस्तेजस एव तदध्यापो जायन्ते ॥
ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति ता अन्नमसृजन्त तस्माद्यत्र क्व च वर्षति तदेव भूयिष्ठमन्नं भवत्यद्भ्य एव तद ((अन्नाद्यं जायते ॥४

स्तेजस एव तदध्यापोऽधिजायन्ते ता आप ऐक्षन्तेति पूर्ववदेवाबाकारसंस्थितं सदैक्षतेत्यर्थः ॥ बह्व्यः प्र
भूताः स्याम भवेम प्रजायेमह्युत्पद्येमहीति ता अन्नमसृजन्त पृथिवीलक्षणं पार्थिवं ह्यन्नं ॥ यस्मात्तत्कार्यमन्नं तस्माद्यत्र क्वच
वर्षति देशे तत्तत्रैव भूयिष्ठं बहुतरमन्नं भवति ॥

((जःप्रभृतिषु तदन्तर्भावमभिप्रेत्य लघूपायेन सर्वस्य सन्मात्रत्वं मन्तव्यमिति मत्वा नाश्रु
ति त्रिवृत्करणमेवाचक्षाणा तदनुरोधेन त्रयाणामेव सृष्टिमाहेत्यर्थः ॥ तेजसोऽचेतनस्य कथमीक्षितृत्वमित्याशङ्क्य वाक्यार्थमाह ॥ तेजोरूप
मिति ॥ अपां तेजःकार्यत्वे लोकानुभवमनुकूलयति ॥ यस्मादिति ॥ पृथिव्यामन्नशब्दप्रयोगे हेतुमाह ॥ पार्थिवं हीति ॥ अपां कार्यमन्नमित्यत्रा
पि लोकप्रसिद्धिं दर्शयति यस्मादिति ॥ ता अन्नमसृजन्तेत्यत्राद्यान्नसृष्टिरूपदृष्टान्तेऽपि तोभ्यस्तत्सृष्टिरूपदिश्यते तथा चपीनरूपमित्याद्य

॥अन्नमिति॥ तत्तेज ऐक्षतेत्यादौ यथाश्रुतमर्थं गृहीत्वा चोदयति॥ नन्विति॥ प्राणिषु हिंसाप्रतिषेधादनुग्रहविधानाच्च तेजःप्रभृतिषु तदभा
वात्तेषामीक्षणकार्यं दृष्टिवदेतेषु दृष्ट्यभावाच्च नैतेषामीक्षणं प्रामाणिकं तथा च प्रकृतं वाक्यं प्रमाणं गौणमित्यर्थः॥ तेषां गौणमीक्षितृत्वमुपेत्य परिहर
ति॥ नैष दोष इति॥ सतो गौणमीक्षणमुपचारप्रायपाठादिति शङ्कते॥ नन्विति॥ सन्निधेः शब्दस्य बलीयस्त्वमुपेत्य परिहरति॥ न सदीक्षणस्ये
ति॥ तुल्यं तेजःप्रभृतिष्वपि शब्दगम्यत्वमीक्षणस्येति चेन्नेत्याह॥ तेजःप्रभृतीनां त्विति॥ विमतमीक्षितृ न भवत्यचेतनत्वात्कुम्भवदित्यनुमाना

अतोऽअ एव तदन्नाद्यं अभिजायत इति॥ ता अन्नमसृजन्त इति पृथिव्युक्ता पूर्वमिह तु दृष्टान्ते अन्नं च तदाद्यं चेति विशेषणाद्व्रीहि-
यवाद्या उच्यन्ते॥ अन्नं च गुरु स्थिरं च धारणं॥ कृष्णं च रूपमतः प्रसिद्धं॥ ननु तेजःप्रभृतिष्वीक्षणं न गम्यते हिंसादिप्रतिषेधाभा-
वान्नासारिकायोऽनुपलंभाच्च तत्र कथं तत्तेज ऐक्षतेत्यादि॥ नैष दोषः ईक्षितृकारणपरिणामत्वात्तेजःप्रभृतीनां सत एवेक्षितु
र्नियतक्रमविशिष्टकार्योत्पादकत्वात्तेजःप्रभृतीक्षितृ इवेक्षितृ इत्युच्यते भूतं तनु सतोऽप्युपचरितमेवेक्षितृत्वं न सदीक्षण
स्य केवलशब्दगम्यत्वान्न शक्यमुपचरितं कल्पयितुं॥ तेजःप्रभृतीनां त्वनुमीयत ईक्षणाभाव इति युक्तमुपचरितं कल्पयि-
तुं॥ ननु सतोऽपि मृद्वत्कारणत्वादचेतनत्वं शक्यमनुमातुमतः प्रधानस्येवाचेतनस्य सतश्चेतनार्थत्वान्नियतकालक्रमवि-
शिष्टकार्योत्पादकत्वादीक्षत इवैक्षतेति शक्यमनुमातुमुपचरितमेवेक्षणं दृष्टश्च लोके अचेतने चेतनवदुपचारो यथा कू-
लं पिपतिषतीति तद्वत्सतोऽपि स्यात्तत्सत्यं स आत्मेति तस्मिन्नात्मोपदेशादात्मोपदेशोऽप्युपचरित इति चेन्न॥ यथा ममात्मा भद्र-
सेन इति सर्वार्थकारिण्यनात्मन्यात्मोपचारस्तद्वन्न सदस्मीति ९ तेजोमुख्ये जगतीक्षणासंभवात्तत्प्रश्रुतं तदौपचारिकमुचितमित्यर्थः

॥सांख्योऽनुमानावष्टंभेन शङ्कते॥ नन्विति॥ अचेतनस्य कथमीक्षणमित्याशंक्याह॥ अत इति॥ अनुमातुं कल्पयितुमिति यावत्॥ कथमचेतने चे-
तनवदुपचारस्तत्राह॥ दृष्टश्चेति॥ आत्मशब्दावष्टंभेन नेत्यादिना परिहरति॥ आत्मोपदेशोऽपि प्रधाने गौणो भविष्यतीति शङ्कते॥ आत्मोपदेशो-
ऽपीति॥ तामेव शङ्कां दृष्टान्तद्वारा विवृणोति॥ यथेति॥ इदं परिहरन्नात्मोपदेशो गौणो न भवति तन्निष्ठस्य मोक्षोपदेशादित्युत्तरमाह॥ नेत्यादिना॥

मोक्षोपदेशोऽप्युपचरितो भविष्यतीति शंकते ॥ सोपीति ॥ शंकामेव विवृणोति ॥ प्रधानात्मेति ॥ एकविज्ञानेन सर्वविज्ञानोपदेशमाश्रित्य परिहरति ॥ नयेनेति ॥ उक्तमेव विवृणोति ॥ सत्येकस्मिन्निति ॥ सतोऽन्यस्य ज्ञातव्यस्याप्रामाणिकत्वाच्च सतो ज्ञाने सर्वज्ञानोपदेशो युक्तिमानित्याह ॥ न चेति ॥ संप्रति हि प्रधानज्ञाने तद्विकारस्य तदभिन्नस्य ज्ञानं न तस्य च पुरुषार्थत्वात्तद्ज्ञाने पुरुषाणामपि ज्ञानमुपचर्यते तेन तस्मादेकविज्ञानेन सर्वविज्ञानोपदेशान्न मोक्षोपदेशमुख्यत्वसिद्धिरित्याशंक्याह ॥ सर्वस्य चेति ॥ कथमुपनिषदारंभो वृथेत्युच्यते पुमर्थसाधनज्ञानार्थत्वादित्याशंक्याह ॥ पुरुषार्थेति ॥ तस्यानुमानवादिनः सांख्यस्य मते मुक्तिहेतोर्ज्ञानस्य जडाजडयोरैक्यानुपपत्तिरित्यादिना तर्केणैव सिद्धत्वादुपनिषदारंभो वृथेत्यर्थः ॥

सदात्माभिसंधस्य तस्य तावदेव चिरमिति मोक्षोपदेशात् ॥ सोऽप्युपचार इति चेत्प्रधानात्माभिसंधस्य मोक्षसामीप्यं वर्त्तत इति मोक्षोपदेशोऽप्युपचरित एव यथा लोके ग्रामं गंतुं प्रस्थितः प्राप्तवानहं ग्राममिति ब्रूयात्त्वरयेप्सयात्तद्वन्न येन विज्ञातेनाविज्ञातं विज्ञातं भवतीत्युपक्रमात्सत्येकस्मिन्विज्ञाते सर्वं विज्ञातं भवतीति तदनन्यत्वाच्च सर्वस्याद्वितीयवचनाच्च न चान्यद्विज्ञातव्यमवशिष्टं श्राविते श्रुत्यानुमेयं वा लिंगतोऽस्ति येन मोक्षोपदेशोऽप्युपचरितः स्यात्सर्वस्य च प्रपाठकार्थस्योपचरितत्वपरिकल्पनायां वृथा श्रमः परिकल्पितः स्यात् ॥ पुरुषार्थसाधनविज्ञानस्य तर्केणैवाधिगतत्वात्तस्य तस्मादिदमप्रामाण्यान्न युक्तः श्रुतार्थपरित्यागः ॥ अतश्चेतनावत्कारणं जगत इति सिद्धं ॥ ७ ॥ तेषां जीवाविष्टानां खल्वेषां पश्वादीनां भूतानामेषामिति ॥

श्रुतेर्मुख्यार्थत्वे बाधकाभावात्तत्परित्यागायोगादीक्षत्यधिकरणन्यायेन प्रधानवादासिद्धिरिति परमतनिरसनमुपसंहरति ॥ तस्मादिति ॥ प्रधानवादारंभाभावे परिशेषायातं स्वमतं निगमयति ॥ अत इति ॥ आमहाभूतानामचेतनानां ब्रह्मकार्यतोक्ता संप्रति जीवाविष्टानां भौतिकानामपि परंपरया ब्रह्मकार्यत्वं वेति वक्तुं तान्यनुवदति ॥ तेषामिति ॥ पूर्वाध्याये येषां गत्यागती दर्शिते तृतीयं च स्थानमुक्तं तानि तच्छब्देन परामृश्यंते ॥ तेषां प्रसिद्धत्वद्योतनार्थः खल्वित्युक्तं भूतानां त्रीण्येव बीजानि भवंतीत्युत्तरत्र संबंधः ॥ भूतशब्दस्य तेजःप्रभृतिषु रूढत्वात्तेषामिह ग्रहणं किं न स्यादित्याशंक्याह ॥ एषामिति ॥ भूतानां प्रत्यक्षत्वमेषामिति निर्दिश्यते संभवति च पश्वादीनां प्रत्यक्षतेति ॥ तान्येवात्र भू

॥ननुतेजःप्रभृतीनितेषांप्रत्यक्षत्वायोगादित्यर्थःतेजःप्रभृतीनांप्रत्यक्षत्वायोगादेषामितिनिर्देशानुपपत्तिंसमर्थयते॥तेषामिति॥तेषांप्रत्यक्ष
त्वयानिर्देशाभावेहेत्वंतरमाह॥देवताशब्देति॥देवतानांपरोक्षत्वंप्रसिद्धमेतेषुचदेवतापदप्रयोगान्नैतेषांप्रत्यक्षत्वोपपत्तिरित्यर्थः॥तस्मा
न्महाभूतानामत्रभूतशब्देनोपादानायोगादित्यर्थः॥आंडजंपक्ष्यादीत्येतत्प्रत्यक्षेणोपपादयति॥पक्षिसर्पादिभ्योहीति॥अन्यदपीति॥गो

प्रत्यक्षनिर्देशान्ननुतेजःप्रभृतीनांतेषांत्रिवृत्करणस्यवक्ष्यमाणत्वादसतित्रिवृत्करणेप्रत्यक्षनिर्देशानुपपत्तिर्देवताशब्द-
प्रयोगाच्चतेजःप्रभृतिषुइमास्तिस्रोदेवताइति॥तस्मात्तेषांखल्वेषांभूतानांपशुपक्षिस्थावरादीनांत्रीण्येवनातिरिक्तानि-
वीजानिकारणानिभवंतिकानितानीत्युच्यंते॥आंडजमंडाज्जातंअंडजमेवांडजंपक्ष्यादिपक्षिसर्पादिभ्योहिपक्षिसर्पादयो
जायमानादृश्यंतेतेनपक्षीपक्षिणांवीजं॥सर्पःसर्पाणां॥तथान्यदप्यंडाज्जातंतज्जातीयानांवीजमित्यर्थः॥नन्वंडाज्जातमंडज

तेषांखल्वेषांभूतानांत्रीण्येववीजानिभवंत्यांडजंजीवजमुद्भिज्जमिति॥१॥

मुच्यतेऽतोंडमेववीजमितियुक्तंकथमंडजंवीजमुच्यते॥सत्यमेवंस्याद्यदित्वदिच्छातंत्राश्रुतिःस्यात्स्वतंत्राश्रुतिर्येनआ-
हांडजाद्येववीजंनांडादीतिदृश्यतेचांडजाद्यभावेतज्जातीयसंतत्यभावोनांडाद्यभावेऽतोंडजादीन्येववीजान्यंडजादीनां॥त-
थाजीवाज्जातंजीवजंजरायुजमित्येतत्पुरुषपश्वादि॥उद्भिज्जंउद्भिनत्तीत्युद्भित्स्थावरंततोजातमुद्भिज्जं॥धानावोद्भित्ततोजा-
((यतइत्युद्भिज्जंस्थावराणांवी-

धाद्युच्यतेअंडाज्जातमितिव्युत्पत्त्यनुसारेणांडमेववीजंनत्वंडजमितिशंकते॥नन्विति॥पौरुषेयीव्युत्प
त्तिःश्रुत्याबाध्येतिपरिहरति॥सत्यमित्यादिना॥नकेवलंश्रुतेरेषाव्यवस्थाकिंतूपपत्तेश्चेत्याह॥दृश्यतेचेति॥सत्यंडजादौतज्जातीयमंडजा
दिसंतत्याजायतेतदभावेतदभावइत्यन्वयव्यतिरेकाभ्यामंडजाद्येवांडजानिकारणं॥यद्यप्यंडाद्यभावेनांडजादिर्जायते॥तथाप्यंडादिभावे
ऽडजाद्यभावेपितद्भवतीतिनान्वयस्तस्मादंडजानांअंडजान्येववीजानिनांडादीनीत्यर्थः॥धानाशब्दोवीजविषयः॥ श्रीरामकृष्णायनमः॥

नन्वन्यत्स्वेदजंसंशोकजमितिबीजद्वयमवशिष्यतेतत्किमितिनव्याख्यायतेतत्राह॥ स्वेदजेति॥ स्वेदजमुद्भिद्यजायमानंदंशमशकादितदुद्भि-
ज्जेंतर्भवति॥ संशोकादौष्म्याज्जायमानंयूकादितदंडजेंतर्भवति॥ यद्वास्वेदजंयूकादितदंडजेंतर्भूतंसंशोकादौष्म्याद्भूमिमुद्भिद्यजातंमशकादितत्त-
स्योद्भिज्जेंतर्भावस्तथाचनतयोरस्तिपृथगुत्पादनापेक्षेत्यर्थः॥ स्वेदजादेरंडजादावंतर्भावस्यप्रापकमाह॥ एवमिति॥ जीवाविष्टानांभूतानांस-
त्कार्यत्वंप्रकरणप्रामाण्यादुक्तमिदानींजीवानांविशिष्टरूपत्वेनब्रह्मकार्यत्वेऽपिनस्वरूपेणतत्कार्यत्वंब्रह्मैवोपाधिप्रविष्टंजीवव्यवहारास्पदमिह-
त्यंगीकारात्तथाचब्रह्मणिविज्ञातेजीवविज्ञानंसेत्स्यतिजीवानांचभोगायतनानिभौतिकानिकार्याणितेषांनामरूपनिर्माणंवक्तव्यमित्यभिप्रेत्योत्तर-

स्वेदजसंशोकजयोरंडजोद्भिज्जयोरेवयथासंभवमंतर्भावएवंह्यवधारणंत्रीण्येवबीजानीत्युपपन्नंभवति॥ सेयंप्रकृतासदा-
ख्यातेजोबन्नयोनिर्देवतोक्तेक्षितवती॥ यथापूर्वंबहुस्यामितितदेवबहुभवनंप्रयोजनंनाद्यापिनिर्वृत्तमितिअतईक्षांपुनःकृ-

सेयंदेवतैक्षतहंताहमिमास्तिस्रोदेवताअनेनजीवेनात्मनानुप्रविश्यनामरूपेव्याकरवाणीति॥

तवतीबहुभवनमेवप्रयोजनमुररीकृत्य॥ कथंहंतेदानीमहमिमायथोक्तास्तेजआद्यास्तिस्रोदेवताअनेनजीवेनेतिस्वबु-
द्धिस्थंपूर्वसृष्ट्यनुभूतप्राणधारणमात्मानमेवस्मरंत्याह॥ अनेनजीवेनात्मनेतिप्राणधारणकर्त्रात्मनेतिवचनात्स्वात्मनोऽव्यतिरि-
क्तेनचैतन्यस्वरूपतयाविशिष्टेनेत्येतद्दर्शयत्यनुप्रविश्यते

१ ग्रंथमादायव्याकरोति॥ सेयमित्यादिना॥ यथाबहुस्यामितिपूर्वमीक्षि-
तवतीतथाकिमितिपुनरैक्षतप्रयोजनाभावादित्याशंक्याह॥ तदेवेति॥ इदानींमहाभूतसृष्टेरनंतरमित्यावत्॥ ब्रह्मणोमायोपाधिकस्यकारण-
त्वान्मायोपाधिवशात्पूर्वसृष्टावनुभूतत्वेनतत्संस्कारस्यबुद्धिस्थत्वस्मरणंचेत्यादिनविरुद्धमितिद्रष्टव्यं॥ आत्मनेतिविशेषणस्यतात्पर्यमाह॥ प्रा-
णेति॥ निर्विकल्पकचिन्मात्ररूपादेवतामायावशाद्भूतानिसृष्ट्वातेषुयदाप्रविष्टातदातदारब्धेषुसूत्रविराट्प्रभृतिषुसमष्टिव्यष्ट्यात्मसुदेहेषुप्रवि-
श्यतत्तद्देहाभिमानवतीचैत्रदेवदत्तादिनाम्नारूपेणशौक्ल्यादिनासंयोज्यपिंडंव्याकरोतीत्याह॥ अनुप्रविश्येति॥ देवतायाःसर्वज्ञत्वादसंसारि-

॥नन्विति॥ किं साक्षादनुप्रवेशादि विकल्प्यते॥ किंवा जीवद्वारापीति विकल्प्याद्यमंगीकरोति॥ सत्यमिति॥ साक्षादनुप्रवेशादिना स्ति चेत्तर्हि कथं तदित्याकांक्षापूर्वकं द्वितीयं दूषयति॥ कथमिति॥ देवताया जीवद्वारेणानुप्रवेशाद्यविरुद्धमिति शेषः॥ अविरोधमेव साधयितुं जीवस्वरूपमाह॥ जीवो हीति॥ आभिमुख्येनाहमित्यापरोक्ष्येण भासत इत्याभासः स्वतोऽपरोक्षश्चित्प्रतिबिंबस्तन्मात्रं जीवो नामेत्यर्थः॥ तस्य स्वरूपेणानादित्वेऽपि विशिष्टरूपेण सादित्वं दर्शयति॥ बुद्ध्यादीति॥ बुद्ध्यादिभिर्भूतमात्राभिश्चिदात्मनः संसर्गस्तेन जनितस्तत्तत्र इति यावत्॥ ननु चिदात्मा कूटस्थोऽसंगो द्वितीयश्चेष्यते स कथं बुद्ध्यादिभूतमात्रादिभिश्च संसृज्यते तत्राह॥ अचिंत्येति॥ सत्त्वादिप्रकारैरशक्यचिन्तनीयानादिरनिर्वाच्या सम्यक्ज्ञानमंतरेण नाशशून्या दृश्यमानाया मायाशक्तिस्तस्या विषयत्वेनाश्रयत्वेन च परा देवतावतिष्ठते तस्याश्च स्वनिष्ठमायाशक्ति

जीवन्न भूतमात्रासंसर्गेण लब्धविशेषविज्ञाना सती नामरूपं च नामरूपे व्याकरवाणि विस्पष्टमाकरवाणि॥ असौ नामाऽयमिदंरूपमिति व्याकुर्यामित्यर्थः॥ ननु न युक्तमिदमसंसारिण्याः सर्वज्ञाया देवताया बुद्धिपूर्वकमनेकशतसहस्रानर्थाश्रयं देहमनुप्रविश्य दुःखमनुभविष्यामीति संकल्पनमनुप्रवेशश्च स्वातंत्र्ये सति॥ सत्यमेवं न युक्तं स्याद्यदि स्वेनैवाविकृतेन रूपेणानुप्रविशेयं दुःखमनुभवेयमिति च संकल्पितवती न त्वेवं कथं तर्ह्यनेन जीवेनात्मनानुप्रविश्येति वचनाज्जीवो हि नाम देवताया आभासमात्रं बुद्ध्यादिभूतमात्रासंसर्गजनित आदर्श इव प्रविष्टः पुरुषप्रतिबिंबो जलादिष्विव च सूर्यादीनामचिंत्यानंतशक्तिमत्या देवताया बुद्ध्यादिसंबंधश्चैतन्याभासो देवतास्वरूपाविवेकाग्रहणनिमित्तः सुखी दुःखी मूढ इत्याद्यनेकविकल्पप्रत्ययहेतुः

वशाद्बुद्ध्यादिभिरात्मनः संबंधः सिध्यतीत्यर्थः॥ बुद्ध्यादिसंबंधफलमाह॥ चैतन्येति॥ तदाभासो जीवशब्दवाच्यः सिध्यतीति शेषः॥ बुद्ध्यादिभिरात्मनः संबंधे मायाशक्तिरुपादानमित्युक्तं तत्रैव निमित्तकारणमाह॥ देवतेति॥ आवरणविक्षेपशक्तिसंपन्ना हि मायाशक्तिस्ततो विद्योऽन्यदेशकालाद्यनवच्छिन्नदेवतास्वरूपोऽहमिति विशेषाग्रहणमावरणं निमित्तं कृत्वा बुद्ध्याद्यध्यासः सिध्यतीत्यर्थः॥ बुद्ध्याद्यध्यासस्य कार्यांतरं दर्शयति॥ सुखीति॥ परैव तर्हि देवता संसारिणी स्यादिति चेन्नेत्याह अज्ञानद्वारा बुद्ध्यादि

परस्या देवतायाः स्वतः संसाराभावं दृष्टांतेन स्पष्टयति॥ यथेत्यादिना॥ तस्याः स्वतो दुःखाद्यसंबंधे श्रुतिं प्रमाणयति॥ सूर्य इति॥ उपाधिद्वारा त
स्याः सांसारित्वं च श्रुतिरस्तीत्याह॥ ध्यायतीति॥ प्रतिबिंबे छायाशब्दप्रयोगान्मिथ्यात्वमिष्टमिति मन्वानः शंकते॥ नन्विति॥ तन्मृषात्वमिष्टमेवेत्या
शंक्याह॥ तथेति॥ जीवस्य मृषात्वे स्वीकृते सति तस्येहलोकपरलोकौ तद्धेतुर्मोक्षश्चेति सर्वं मृषा स्यादित्यर्थः॥ विशिष्टरूपेण मिथ्यात्वेपि स्वरूपे
ण सत्यत्वाज्जीवस्य ब्रह्मास्मीति ज्ञानान्मुक्तिः संभवतीति समाधत्ते॥ नैष दोष इति॥ यत्तु परलोकेहलोकादि मृषा स्यादिति तत्राह॥ सर्वं चेति॥ क
थं तर्हि तस्य मिथ्यात्वोक्तिरित्याशंक्याह॥ स्वत इति॥ यथा प्रपंचो ब्रह्मात्मना सत्योपि स्वरूपेण मिथ्येत्युक्तं तथा जीवशब्दवाच्योपि ब्रह्मात्मना स

जीवस्वरूपेणानुप्रविष्टत्वाद्देवता न दैहिकैः स्वतः सुखदुःखादिभिः संबध्यते॥ यथा पुरुषादित्यादय आदर्शोदकादिषु
छायामात्रेणानुप्रविष्टा आदर्शोदकादिदोषैर्न संबध्यंते तद्वद्देवतापि॥ सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्य
दोषैः एकस्तथा सर्वभूतांतरात्मा न लिप्यते लोकदुःखेन बाह्यः॥ आकाशवत्सर्वगतश्च नित्य इति हि काठके ध्यायतीव लेलायती
वेति च वाजसनेयके॥ ननु छायामात्रश्चेज्जीवो मृषैव प्राप्तस्तथा परलोकेहलोकादि तस्य नैष दोषः सदात्मना सत्यत्वाभ्युपग
मात्सर्वं च नामरूपादि सदात्मनैव सत्यं विकारजातं॥ स्वतस्त्वनृतमेव वाचारंभणं विकारो नामधेयमित्युक्तत्वात्तथा जीवोपीति
यक्षानुरूपो बलिरिति हि न्यायप्रसिद्धिः॥ अतः सदात्मना सर्वव्यवहाराणां सर्वविकाराणां च सत्यत्वं सतोन्यत्वे चानृतत्वमिति न क
श्चिद्दोषस्तार्किकैरिहानुषक्तुं शक्यो यथेतरेतरविरुद्धद्वैतवादाः स्वबुद्धिविकल्पमात्रा अतत्त्वनिष्ठा इति शक्यं वक्तुं॥ सेयं तिस्रो देव

त्यं स्वरूपेण मिथ्येति स्वीकर्तव्यमित्याह॥ तथेति॥ अथ भोक्ता स्वरूपेणापि सत्योस्तु भोग्यप्रपंचस्यैव मिथ्यात्वमिष्यतामित्याशंक्याह॥ यक्षानु॥
रूपो हीति॥ लौकिकन्यायानुसारेण भोग्यप्रपंचस्य मिथ्यात्वे भोक्तुरपि विशिष्टरूपेण तत्प्रसिद्धिरतो जीवशब्दवाच्यस्य मिथ्यात्वेपि तल्लक्ष्यस्य स
न्मात्रस्य सत्यत्वमिति व्यवस्थेत्यर्थः॥ यत्तु तार्किकैरुच्यते प्रपंचस्य मिथ्यात्वे सौगतमतानुमतिः सत्यत्वे चाद्वैतहानिरिति तत्रप्युक्तन्यायेन नि
रस्तमित्याह॥ अत इति॥ अद्वैतवादे दोषाभावं वैधर्म्यदृष्टांतेन स्पष्टयति॥ यथेति॥ व्याकरवाणीत्येतदंतं व्याख्याय तदनूद्य तासामित्यादि व्याच

मृषामास्तु

करवाणीत्यैक्षतेति संबंधः॥कथं पुनरिदं त्रिवृत्करणमित्याशंक्य प्रथममेकैकां देवतां द्विधा द्विधा विभज्य पुनरेकैकं भागं द्विधा कृत्वा तदित-
रभागयोर्निक्षिप्य त्रिवृत्करणं विवक्षितमित्याह॥एकैकस्यादिति॥गुणप्रधानभावानंगीकारे समानपरिमाणसूत्रत्रयनिर्मितरज्जुवत्त्रिवृ-
त्करणमेकमेव स्यादित्याह॥अन्यथेति॥एवकारार्थं दर्शयति॥नत्विति॥गुणप्रधानभावेन त्रिवृत्करणमुपसंहर्तुमिति शब्दः॥इतश्च गुण-

अनुप्रविश्य स्वात्मावस्थे बीजभूते अव्याकृते नामरूपे व्याकरवाणीतीक्षित्वा तासां च तिसृणां देवतानामेकैकां त्रिवृतं त्रिवृ-
तं करवाणि एकैकस्याः त्रिवृत्करणे एकैकस्याः प्राधान्यं द्वयोर्द्वयोर्गुणभावोऽन्यथा हि रज्ज्वा इवैकमेव त्रिवृत्करणं स्यान्न तु तिसृणां
पृथक् पृथक् त्रिवृत्करणमित्येवं हि तेजोबन्नानां पृथङ्नामप्रत्ययलाभः स्यात्तेज इदमिमा आपोऽन्नमिदमिति च सति च पृथङ्ना-
मप्रत्ययलाभे देवतानां सम्यग्व्यवहारप्रसिद्धिप्रयोजनं स्यादेवमीक्षित्वा सेयं देवतेमास्तिस्रो देवता अनेनैव यथोक्तेनैव जीवेनात्म-

तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति सेयं देवतेमास्तिस्रो देवता अनेनैव जीवेनात्मनानुप्रविश्य नामरूपे व्या-
करोत्तासां त्रिवृतं त्रिवृतमेकैकामकरोद्यथा तु खलु सोम्येमास्तिस्रो देवतास्त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीही-
ति॥३॥

येयं वदन्तः प्रविश्य वैराजं पिंडं प्रथमं देवादीनां च पिंडाननुप्रविश्य यथासंकल्पमेव नामरूपे व्याकरोदसौ ना-
मायमिदं रूपमिति॥तासां च देवतानां गुणप्रधानभावेन त्रिवृतं त्रिवृतमेकैकामकरोत्कृतवती देवता। तिष्ठतु तावद्देवतादि-
पिंडानां नामरूपाभ्यां व्याकृतानां तेजोबन्नमयत्वेन त्रिधात्वं॥यथा तु बहिरिमाः पिंडेभ्यस्तिस्रो देवतास्त्रिवृत्त्रिवृदेकैका
भवति॥तन्मे मम निगदतो विजानीहि विस्पष्टमवधारयोदाहरणतः॥३॥

प्रधानभावेन त्रिवृत्करणमेष्टव्यमित्याह॥एवं-
हीति॥पृथङ्नामप्रत्ययलाभेनापि किं स्यादित्याशंक्याह॥पृथगिति॥सेयमित्यादि व्याचष्टे॥एवमित्यादिना॥संक्षेपेण त्रिवृत्करणमति-
ज्ञायोदाहरणतः स्फुटीकर्तुमारभमाणो देहे त्रिवृत्करणस्याग्रे स्फुटीकर्तव्यत्वाद्देहातिरिक्तेषु प्रथमं तदुदाहर्तुमुपक्रमते तिष्ठतु तावदि-

कथं उदाहरणतोऽवधारणमित्याशंक्यानंतरवाक्यमवतारयति॥ यत्तदिति॥ उदाहरणशब्दं व्युत्पादयति॥ उदाहरणंनामेति॥ तत्रैव श्रुतिमवता

यत्तद्देवतानां त्रिवृत्करणमुक्तं तस्यैवोदाहरणमुच्यते॥ उदाहरणंनामैकदेशप्रसिद्ध्याशेषप्रसिद्ध्यर्थमुदाह्रियतइति॥ त
देतदाह यदग्नेस्त्रिवृत्कृतस्य रोहितं रूपं प्रसिद्धं लोके तदग्नेस्त्रिवृत्कृतस्य तेजसो रूपमिति विद्धि॥ तथा यच्छुक्लं रूपमग्नेरेवतद
पामत्रिवृत्कृतानां यत्कृष्णं तस्यैवाग्ने रूपं तदन्नस्य पृथिव्या अत्रिवृत्कृताया इति विद्धि॥ तथा तन्नैवं सति रूपत्रयव्यतिरेकेणा
ग्निरिति यन्मन्यसे त्वं॥ तस्याग्नेरग्नित्वमिदानीमपागादपगतं प्राग्रूपत्रयविवेकविज्ञानाद्याग्नित्वबुद्धिरासीत्ते साग्नित्वबु

यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागादग्नेरग्नित्वं वाचारंभणं विकारो नामधे
यं त्रीणि रूपाणीत्येव सत्यं यदादित्यस्य रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागादादित्यादा
दित्यत्वं वाचारंभणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यं यच्चन्द्रमसो रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां
यत्कृष्णं तदन्नस्यापागाच्चंद्राच्चंद्रत्वं वाचारंभणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यं यद्विद्युतो रोहितं रूपं तेज
सस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागाद्विद्युतो विद्युत्त्वं वाचारंभणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्य

द्धिरपगताग्निशब्दश्चेत्यर्थः॥ यथा दृश्यमानरक्तोपधानसंयुक्तः स्फटिको गृह्यमाणः पद्मरागोऽयमिति शब्दबुद्ध्योः प्रयोजको
भवति प्राग्रुपधानस्फटिकयोर्विवेकविज्ञानात्तद्विवेकविज्ञाने तु पद्मरागशब्दबुद्धी निवर्तेते तद्विवेकविज्ञातुस्तद्वन्नु किमत्र
बुद्धिशब्दकल्पनया क्रियते प्राक् रूपत्रय

यं व्याचष्टे॥ तदेतदित्यादिना॥ अत्रिवृत्कृतानां रूपमिति विद्धीति संबंधः॥ तत्राग्नौ रूपत्रये
पूर्वोक्तरीत्या पृथक्कृते सतीति यावदिदानीं विवेकदशायामित्यर्थः॥ अक्षरार्थमुक्त्वा तात्पर्यमाह॥ प्रागिति॥ रूपत्रयविवेकात्प्रागवस्थायां अ

॥ यदग्नेरित्यादिना ॥ अग्निविषयेऽश्रुतं हित्वाधिककल्पनायां नास्ति निबन्धनमिति शंकते ॥ नन्विति ॥ रोहितादिरूपत्रयविवेके सत्यग्नेरग्नित्वमपग-
च्छतीत्यत्र दृष्टान्तमाह ॥ यथेति ॥ शब्दबुद्धिप्रसंगेऽपि न श्रुतत्यागोऽस्तीति परिहरति ॥ नैवमिति ॥ तत्र प्रमाणत्वेनानन्तरवाक्यमादाय व्याचष्टे ॥ यत इ-
ति ॥ अग्नेर्नाममात्रत्वमतः शब्दार्थः ॥ प्रक्रमपर्यालोचनायामुदाहरणे न्यूनत्वमस्तीति शंकते ॥ नन्विति ॥ यदपां वापीकूपादीनां रोहितं रूपं
तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य यच्च व्रीह्यादे रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्येत्युदाहरणसंभवान्न
न्यूनतेति परिहरति ॥ नैष दोष इति ॥ तर्हि तेजोविषयमप्युदाहरणमुपनेयं किमित्युदाहृतं तत्रेत्याशंक्याह ॥ तेजस इति ॥ यद्यपि किंचिदपि नोदाहरण-
मुच्यते तेनोपलक्षणमेव सिद्धं तत्त्रयाणां रूपवत्त्वेन यथोक्तरूपविभागस्य तेषु स्फुटत्वसंभवात्तेजसो दृष्टान्तप्रदर्शनमबादिविषयोदाहरणोपल-

विवेककरणादग्निरेवासीत्तस्मादग्नेरग्नित्वं रोहितादिरूपविवेककरणादपागादिति युक्तं यथा तन्तूपकर्षणे पटाभावो नैवं बु-
द्धिशब्दमात्रमेव ह्यग्निर्येन आह वाचारम्भणमग्निर्नाम विकारो नामधेयं नाममात्रमित्यर्थः ॥ अतोऽग्निबुद्धिरपि मृषैव तर्हि किं त-
त्र सत्यं ॥ त्रीणि रूपाणीत्येव सत्यं नाणुमात्रमपि रूपत्रयव्यतिरेकेण सत्यमस्तीत्यवधारणार्थः ॥ तथा यदादित्यस्य यच्चन्द्रमसो
यद्विद्युत इति समानं ॥ ननु यथा खलु सोम्येमास्तिस्रो देवतास्त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहीत्युक्त्वा तेजस एव चतु-
र्भिरप्युदाहरणैरग्न्यादिभिस्त्रिवृत्करणं दर्शितं नाबन्नयोरुदाहरणं दर्शितं त्रिवृत्करणे नैष दोषः अबन्नविषयाण्युदाहरणान्ये-
वमेव चोह्यानीति मन्यते श्रुतिः ॥ तेजस उदाहरणमुपलक्षणार्थं रूपवत्त्वात्स्पष्टार्थत्वोपपत्तेश्च ॥ गन्धरसयोरनुदाहरणं त्रया-
णामसंभवात्

क्षणार्थत्वेनापेक्षितमित्यर्थः ॥ अबन्नयोरपि त्रिवृत्करणमुपलक्षितं चेत्तर्हि तत्र रसगन्धयोरसाधारण्यात्तयोस्त्रिवृत्करण-
मुदाहर्तव्यमित्याशंक्याह ॥ गन्धरसयोरिति ॥ यथा यदबन्नयोर्भास्वरं लोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्येति शक्यते
रूपं विवक्तुं न तथा गुणो रसो गन्धो वा तेजसोऽपामग्नेश्चास्तीति ज्ञातुं शक्यमित्यनुदाहरणं तयोरित्यर्थः ॥ ननु त्रिवृत्करणे त्रिष्वपि रूपवद्गन्ध-
रसौ संभाविनौ तत्कथं तयोस्त्रयाणामसंभवोक्तिस्तत्राह ॥ नहीति ॥ संभाविनावपि तौ त्रिषु विवेक्तुमशक्याविति अनुदाहरणीयावित्यर्थः ॥ १

तर्हि सर्वेषु भूतेषु संभावितयोः स्पर्शशब्दयोरुदाहरणं किं न स्यादित्याशंक्याह ॥ स्पर्शशब्दयोरिति ॥ यथा लोहितादि रूपत्रयं त्रयाणां विभागेन
दर्शयितुं शक्यं ॥ न तथा शब्दत्रयं स्पर्शत्रयं च त्रयाणां विभागेन दर्शयितुं शक्यं ॥ नो खल्वेकत्रोष्णशीतानुष्णाशीतस्पर्शत्रयं दृश्यते नापि स्वरमधुर
॥ध्यमशब्दत्रयमेकत्रोपलभ्यमित्यर्थः ॥ सर्वस्य त्रिवृत्कृतत्वे फलितमाह ॥ यदीति ॥ यथाग्न्यादि त्रिवृत्कृतं तथा सर्वमेव जगद्यदि त्रिवृत्कृतमित्यं
गीकृतं तदाग्नेरग्नित्ववज्जगतो जगत्त्वमपगतं त्रीणि रूपाणीत्येव सत्यमिति योजना ॥ तथापि कथं सन्मात्रपरिशेषः स्यादित्याशंक्याह ॥ तथेति ॥ रूप
त्रयव्यतिरेकेण जगतोऽभाववत्कृत्स्नस्यापि रूपस्य पृथिवीशब्दितस्य शुक्लरूपमात्रजलकार्यत्वात्तदतिरेकेणासत्त्वं पृथिवीवदपामपि शुक्लरूप
मात्राणां लोहितरूपमात्रतेजोविकारत्वात्तद्व्यतिरेकेणाभावात्तस्यापि सत्कार्यत्वात्ततो भेदेनासत्त्वं सन्मात्रमेव परिशिष्टमित्येतत्त्रिवृत्करणप्रक

स्पर्शशब्दयोरनुदाहरणं विभागेन दर्शयितुमशक्यत्वात् ॥ यदि सर्वं जगत्त्रिवृत्कृतमित्यग्न्यादिवत्त्रीणि रूपाणीत्येव सत्यम
ग्नेरग्नित्ववदपागाज्जगतो जगत्त्वं तथाऽन्नस्याप्यप्शुंगत्वादाप इत्येव सत्यं वाचारंभणमात्रमन्नं तथापामपि तेजःशुंगत्वाद्वाचा
रंभणत्वं तेज इत्येव सत्यं तेजसोऽपि सच्छुंगत्वाद्वाचारंभणत्वं सदित्येव सत्यमित्येषोऽर्थो विवक्षितः ॥ ननु वाय्वंतरिक्षे त्वत्रिवृत्कृते
तेजःप्रभृतिष्वनंतर्भूतत्वादवशिष्येते एवं गंधरसशब्दस्पर्शाश्चावशिष्टा इति कथं सता विज्ञातेन सर्वमन्यदविज्ञातं विज्ञातं भ
वेत्तद्विज्ञाने वा प्रकारांतरं वाच्यं नैष दोषः ॥ रूपवद्द्रव्ये सर्वस्य दर्शनात्कथं तेजसि तावद्रूपवति शब्दस्पर्शयोरप्युपलंभाद्वाय्वंतरि
क्षयोस्तत्र स्पर्शशब्दगुणवतोः सद्भावोऽनुमीयते ॥

॥ रणे विवक्षितमित्यर्थः ॥ त्रिवृत्करणपक्षेऽनेकविज्ञानेन सर्वविज्ञानं सिध्यति परि
शिष्टविज्ञेयसद्भावादिति शंक्यते ॥ नन्विति ॥ इतिपदं कथमित्यादिना संबध्यते ॥ गंधादयश्च शब्दांता गुणा गुणिष्वनंतर्भूताः संतीति न सद्वि
ज्ञानेन तद्विज्ञानोपपत्तिरित्याह ॥ गंधेति ॥ तद्विज्ञाने सद्विज्ञानेन वा स्यादिति विज्ञानं तत्र प्रकारांतरं तत्कार्यत्वादतिरिक्तकार्यमिति यावत् ॥ आ
काशादेस्त्रिष्वेवांतर्भावसंभवान्न परिशिष्टं विज्ञेयमस्तीति परिहरति ॥ नैष दोष इति ॥ कथं तेजोवन्नेषु सर्वस्याकाशादेर्दर्शनमित्याह ॥ कथमि
ति ॥ तत्र शब्दस्पर्शविषययोराकाशवाय्वोश्च भूतत्रये प्रत्यक्षानुमानाभ्यामुपलब्धिं दर्शयति ॥ तेजसीति ॥ तेजोग्रहणमवन्नयोरुपलक्षणं ॥

तत्रापि स्पर्शाद्युपलब्धेर्विशेषात्तत्तु गंधादिवत्तेयांतरमिति तत्राह ॥ तथेति ॥ भूतत्रये स्पर्शोद्यंतर्भाववदिति यावत् ॥ त्रिष्वेवांतर्भावे फलि-
तमाह ॥ रूपवतामिति ॥ भूतत्रये रूपवत्त्याकाशादेरंतर्भावं व्यतिरेकद्वारा समर्थयते ॥ नहीति ॥ अंतर्भावोक्तिप्रयासं परिहर्तुं पक्षांतरमाह ॥ अथ-
वेति ॥ प्रदर्शनार्थं पंचीकरणस्येति शेषः ॥ कथं पंचीकरणे सन्मात्रपरिशेषः सिध्यतीत्याशंक्याह ॥ यथेति ॥ यदा पंचापि भूतानि प्रत्येकं द्वेधा विभ-
ज्य पुनरेकैकं भागं चतुर्धा कृत्वा स्वभागातिरिक्तेषु पूर्वेषु भागेषु एकैकशो निक्षिप्यंते तदा पंचीकरणं श्रुत्युपलसितं लभ्यते ॥ तत्रापि पंचानां भा-

तथा वाय्वन्नयो रूपवतो रसगंधांतर्भावद्वत् रूपवतां त्रयाणां तेजोबन्नानां त्रिवृत्करणप्रदर्शनेन सर्वं तदंतर्भूतं सद्विकार-
त्वात्त्रीण्येव रूपाणि विज्ञातं मन्यते श्रुतिर्न हि मूर्तं रूपवद्द्रव्यं प्रत्याख्याय वाय्वाकाशयोस्तद्गुणयोर्गंधरसयोर्वा ग्रह-
णमस्ति ॥ अथवा रूपवतामपि त्रिवृत्करणं प्रदर्शनार्थमेव मन्यते श्रुतिर्यथा तु त्रिवृत्कृते त्रीणि रूपाणीत्येव सत्यं ॥ तथा पं-
चीकरणेपि समानो न्याय इत्यतः सर्वस्य सद्विकारत्वात्सता विज्ञातेन सर्वमिदं विज्ञातं स्यात् ॥ सदेकमेवाद्वितीयं सत्यमिति तत्

मेतद्ध स्म वै तद्विद्वांसः आहुः पूर्वे महाशाला महाश्रोत्रिया न नोऽद्य कश्चनाश्रुतममतमविज्ञातमुदाहरिष्यतीति

सिद्धमेव भवति ॥ तदेकस्मिन् सति ज्ञाते सर्वमिदं ज्ञातं भवतीति च सूक्तमेतद्विद्वांसो विदितवंतः पूर्वेऽति "ह्येभ्यो विदांचक्रुः"
क्रांताः महाशाला महाश्रोत्रिया आहुर्ह स्म वै किल उक्तवंत इत्याह ॥ न नोऽस्माकं कुलेऽद्येदानीं यथोक्तविज्ञानवतां कश्चन

गानां पृथक्करणे पंचैव तन्मात्राण्यवशिष्यंते ॥ तान्यपि पृथिव्यादीन्यवादि कार्यत्वात्तत्कारणव्यतिरेकेण न सिध्यंतीति त्रिवृत्करणव-
त्पंचीकरणेपि न्यायसाम्यात्सर्वस्य सद्विकारत्वात्तद्व्यतिरेकेणाभावात्तेन विज्ञातेन तदपि विज्ञातमेव स्यात्सन्मात्रं तु परमार्थसत्यं परिशि-
ष्टं भवतीत्यर्थः ॥ उक्तन्यायेनैकविज्ञानेन सर्वविज्ञानश्रुतिरविरुद्धेत्युपसंहरति ॥ तदेकस्मिन्निति ॥ त्रिवृत्करणपक्षेप्येकविज्ञानेन स-
र्वविज्ञानश्रुतिरविरुद्धेत्युपपाद्य त्रिवृत्करणमुदाहरणांतरेण दर्शयितुमारभंते ॥ ॥ श्रीसीतारामचन्द्रः प्रसन्नो भवतु ॥ ॥

॥एतदिति॥त्रिवृत्करणमितियावत्॥पुनरिति॥त्रिवृत्करणविज्ञानवन्तोनिर्दिश्यन्ते।वेदनप्रकारमेवाकांक्षापूर्वकंप्रकटयति॥कथमित्यादिना॥
अन्यदग्न्यादिभ्यःसकाशादितिशेषः यदनेकरूपत्वात्कपोतादिरूपेणसंदिह्यमानमेतद्दृश्यतेतस्मिन्कपोतस्वरूपेयत्किंचिद्रोहितमिवरूपं

विज्ञातमुदाहरिष्यतिनोदाहरिष्यतिसर्वंविज्ञातमेवास्मत्कुलीनानांसद्विज्ञानत्वादित्यभिप्रायः॥तेपुनःकथंसर्वंविज्ञातवन्त
इत्याह॥एभ्यस्त्रिभ्योरोहितादिरूपेभ्यस्त्रिवृत्कृतेभ्योविज्ञातेभ्यःसर्वमप्यन्यच्छिष्टमेवमेवेतिविदांचक्रुर्विज्ञातवन्तोयस्मात्तस्मा
त्सर्वज्ञाएवसद्विज्ञानात्तआसुरित्यर्थः॥अथवैभ्योविदांचक्रुरित्यग्न्यादिभ्योदृष्टान्तेभ्योविज्ञातेभ्यःसर्वमन्यद्विदांचक्रुरित्येत
त्॥कथमन्यद्रूपेणसंदिह्यमानमेवकपोतादिरूपंरोहितमिवयद्गृह्यमाणमभूत्तेषांपूर्वेषांब्रह्मविदांतत्तेजसोरूपमितिविदां

यदुरोहितमिवाभूदितितेजसस्तद्रूपमितितद्विदांचक्रुर्यदुशुक्लमिवाभूदित्यपांरूपमितितद्विदांचक्रुर्यदुकृ
ष्णमिवाभूदित्यन्नस्यरूपमितितद्विदांचक्रुर्यद्वविज्ञातमिवाभूदित्येतासामेवदेवतानांसमासइतितद्विदांचक्रु
र्यथानुखलुसोम्येमास्तिस्रोदेवताःपुरुषंप्राप्यत्रिवृत्त्रिवृदेकैकाभवतितन्मेविजानीहीति॥७॥

चक्रुस्तथायच्छुक्लमिवा
भूद्गृह्यमाणंतदपांयत्कृष्णमिवगृह्यमाणंतदन्नस्येतिविदांचक्रुरेवमेवात्यन्तदुर्लक्ष्यंयत्तदप्यविज्ञातमिवविशेषतोऽगृह्य
माणमभूत्तदप्येतासामेवतिसृणांदेवतानांसमासःसमुदायइतिविदांचक्रुः॥एवंतावद्बाह्यंवस्त्वग्न्यादिवद्विज्ञातंतथेदा
नींयथानुखलुहेसोम्येमायथोक्तास्तिस्रोदेवताःपुरुषंशिरःपाण्यादिलक्षणंकार्यकरणसंघातंप्राप्यपुरुषेणोपयुज्यमानास्त्रि
वृत्त्रिवृदेकैकाभवतितन्मेविजानीहिनिग

गृह्यमाणंपूर्वेषामासीत्तत्तेजसोरूपमितितेविदितवन्तइतियोजना॥अत्यन्तदुर्लक्ष्यंनामरूपा
भ्यांदुर्ज्ञानंद्वीपान्तरादागतपश्वादीत्यर्थः॥अगृह्यमाणमितिच्छेदः॥यथानुखल्वित्यादिवाक्यंवृत्तानुवादपूर्वकंअवतारयति॥एवंताव
दिति॥यथाखल्वेकादेवतापुरुषंप्राप्यत्रिवृद्भवतितथेदानींतराध्यात्मिकंत्रिवृत्करणमेवनिजानीहीतिसंबंधः॥आध्यात्मिकंत्रिवृत्करणमि

कथं त्रिधा विभज्यमानत्वं कथं वा तस्य विनियोग इति प्रश्नपूर्वकं विवृणोतीति ॥ कथमित्यादिना ॥ रसादीत्यादिशब्देन रुधिरादिर्गृह्यते ॥ कथं तं । स्य नाडीप्रवेशोक्तिरिति हिताख्या नाड्यस्ता इति यावत्कथमन्नोपयोगात्प्रागेव मनसः सिद्धत्वात्तन्मनो भवतीत्युच्यते तत्राह ॥ मनोरूपेणेति ॥ मनसोऽन्नोपचितत्ववचनाद्वैशेषिकपरिभाषापि दूषिता वेदितव्येत्याह ॥ ततश्चेति ॥ मनसो दैवत्वविशेषणान्नित्यत्वसिद्धिरित्याशंक्याह ॥ यदपीति ॥

अन्नमशितं भुक्तं त्रेधा विधीयते जाठरेणाग्निना पच्यमानं त्रिधा विभज्यते कथं तस्यान्नस्य त्रिधा विधीयमानस्य यः स्थविष्ठः स्थूलतमो धातुः स्थूलतमं वस्तु विभक्तस्य स्थूलांशस्तत्पुरीषं भवति यो मध्यमो धातुरन्नस्य तद्रसादिक्रमेण परिणम्य मांसं भवति योऽणिष्ठोऽणुतमो धातुः स ऊर्ध्वं हृदयं प्राप्य सूक्ष्मासु हिताख्यासु नाडीष्वनुप्रविश्य वागादिकरणसंघातस्य स्थितिमुत्पादयन्मनो भवति मनोरूपेण विपरिणमन्मनस उपचयं करोति ॥ ततश्चान्नोपचितत्वान्मनसो भौतिकत्वमेव न वैशेषिकतन्त्रोक्तलक्षणं नित्यं निरवयवं चेति गृह्यते ॥ यदपि मनोऽस्य दैवं चक्षुरिति वक्ष्यति तदपि न नित्यत्वापेक्षया किं तर्हि सूक्ष्मव्यवहितविप्रकृष्टादिसर्वेन्द्रियविषयव्यापकत्वापेक्षया यच्चान्येन्द्रियविषयापेक्षया नित्यत्वं तदप्यापेक्षिकमेवेति वक्ष्यामः ॥ सदेकमेवाद्वितीयमिति श्रुतेः तथापः पीतास्त्रेधा विधीयन्ते तासां यः स्थविष्ठो धातुस्तन्मूत्रं भवति यो मध्यमस्तल्लोहितं भवति योऽणिष्ठः स प्राणो भवतीति

अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति यो मध्यमस्तन्मांसं योऽणिष्ठस्तन्मनः ॥१॥ आपः पीतास्त्रेधा विधीयन्ते तासां यः स्थविष्ठो धातुस्तन्मूत्रं भवति यो मध्यमस्तल्लोहितं योऽणिष्ठः स प्राणः ॥२॥ तेजोऽशितं त्रेधा विधीयते तस्य यः

केनाभिप्रायेण तर्हि विशेषणमित्याशंक्याह ॥ किं तर्हीति ॥ तर्हि चक्षुरादिभ्यो वैलक्षण्यादस्ति तदपेक्षया नित्यत्वमित्याशंक्याह ॥ यच्चेति ॥ यद्वा चक्षुरादिष्वसत्स्वपि मनसः सत्त्वोपलम्भात्तदपेक्षया तस्य नित्यत्वमेष्टव्यमित्याशंक्याह ॥ यच्चेति ॥ आत्मवन्मनसो नित्यत्वं किं न स्यादित्याशंक्याह ॥ सदिति ॥ भुक्तस्यान्नस्य त्रैविध्यमुक्त्वा पीतानामपामपि त्रैविध्यमाह ॥ तथेति ॥ कथं तेजसोऽग्न्यादित्यादि

॥तैलेति॥मज्जाशब्दार्थमाह॥अस्थीति॥योणिष्ठः सा वागित्युक्तं व्यक्तीकरोति॥तैलघृतादीति॥भुक्तस्यान्नस्य पीतानामपामशितस्य तै-
लादेश्च ये णिष्ठा धातवस्ते मनो वाक्प्राण इत्येवं यतः सिद्धमतः तेषामन्नादिमयत्वं युक्तमित्याह॥यत इति॥तेषामन्नादिमयत्वं व्यतिरेका-
सिद्धिमाश्रित्याक्षिपति॥नन्विति॥आखुप्रमुखानां स्फुटो हि पानाद्यनुपलंभेपि येषां भक्ष्यतत्त्वेवोदकाद्यनभावसंभवात्प्राणाद्यन्नम

वक्ष्यति ह्यापोमयः प्राणो न पिबतो विच्छेत्स्यत इति तथा तेजोऽशितं तैलघृतादि भक्षितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तद-
स्थि भवति यो मध्यमः स मज्जा यः स्वर्गतः स्नेहो योऽणिष्ठः सा वाक् तैलघृतादिभक्षणाद्धि वाग्विशदा भाषणे समर्था भवतीति प्रसि-
द्धं लोके यत एवमन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक्॥ननु केवलान्नभक्षिण आखुप्रभृतयो वाग्मिनः प्राणव-
न्तश्च तथाऽब्मात्रभक्ष्याः सामुद्रा मीनमकरप्रभृतयो मनस्विनो वाग्मिनः तथा स्नेहपानामपि प्राणवत्त्वं मनस्वित्वं चानुमेयं य-

स्थविष्ठो धातुस्तदस्थि भवति यो मध्यमः स मज्जा योऽणिष्ठः सा वागन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजो-
मयी वागिति॥

११ दृश्यंते तत्र कथमन्नमयं हि सोम्य मन इत्युच्यते॥नैष दोषः सर्वस्य त्रिवृत्कृतत्वात्सर्वत्र सर्वोपपत्तेर्न ह्य-
त्रिवृत्कृतमन्नमश्नाति कश्चिदापो वाऽत्रिवृत्कृताः पीयन्ते तेजो वाऽत्रिवृत्कृतमश्नाति कश्चिदित्यन्नादानामाखुप्रभृतीनां वा-
ग्मित्वं प्राणवत्त्वं चेत्याद्यविरुद्धमित्येवं प्रत्यायितः श्वेतकेतुराह॥भूय एव पुनरेव मा मा भगवाननन्नमयं हि सोम्य मन इत्यादि वि-
ज्ञापयतु दृष्टान्तेनावगमयतु॥नाद्यापि

११ यत्वाद्युपपन्नमित्युत्तरमाह॥नैष दोष इति॥सर्वस्यान्नादेस्त्रिवृत्करणस्योक्तत्वात्त-
स्य सर्वस्यैव भक्ष्यस्य भूतत्रयात्मत्वसंभवादेकैकं भक्षयन्तोपि सर्वभक्षकत्वोपपत्तेर्मन आदेरन्नादिमयत्वमविरुद्धमित्यर्थः॥उक्तमेव
व्यक्तीकरोति॥नहीत्यादिना॥उक्तरीत्या मन आदेरन्नादिमयत्वप्रत्यायनद्वारेण नामप्रनाड्या सन्मात्रपरिशेषे प्रत्यायिते सति श्वेतकेतुश्चोद-
यतीत्याह॥इत्येवमिति॥सर्वेषां सन्निधानाविशेषे अन्नस्य सूक्ष्मांशो मन एवोपचिनोतीति न प्रमाणमिति निश्चयासिद्धिरित्याह॥नाद्यापीति॥

पार्थिवांशः पार्थिवमेवोपचिनोतीति विशेषमाशंक्याह ॥ यस्मादिति ॥ एकस्मिन्नुदरे प्रविष्टानामन्नादीनां मिश्रीभूतत्वान्मनसश्च सर्वभूतगुण
व्यंजकत्वेन सर्वभूतारब्धत्वात्पार्थिवत्वासिद्धेर्नोक्तो विशेषः संभवतीत्यर्थः यस्मादेवमभिप्रायः श्वेतकेतोरत इति योजना ॥ मन आदेरन्नादिमयत्व
मुपपादयितुमुत्तरग्रंथमवतारयति ॥ तमेवमिति ॥ यत्तु मन आदेरन्नादिमयत्वं कथमिति एतच्च सिद्धमिदं यथोपपद्यते तेन स्यात्तान्नादिमयत्वं तस्य

मुमास्मिन्नर्थे संप्रत्ययो जातः यस्मात्तेजोबन्नमयत्वेनाविशिष्टे देहे एकस्मिन्नुपयुज्यमानान्यन्नाप्तेजांस्यणिष्ठधातु
रूपेण मनः प्राणं वाचं चोपचिन्वन्ति स्वजात्यनतिक्रमेणेति तद्विज्ञेयमित्यभिप्रायोऽतो भूय एवेत्याद्याह तमेवमुक्तवंतं तथास्तु ।
सोम्येति होवाच पिता शृणु तत्र दृष्टान्तं यथैतदुपपद्यते यत्पृच्छसि ॥ ५ ॥ दध्नः सोम्य मथ्यमानस्य योऽणिमाणुभावः स ऊर्ध्वः स ।
मुदीषति संभूयोर्ध्वं नवनीतभावेन गच्छति तत्सर्पिर्भवति ॥ यथायं दृष्टान्तः एवमेव खलु सोम्यान्नस्यौदनादेरश्यमानस्य भुज्य

भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ ५ ॥ दध्नः सोम्य मथ्यमानस्य योऽणिमा स ऊर्ध्वः सम
दीषति तत्सर्पिर्भवत्येवमेव खलु सोम्यान्नस्याश्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति तन्मनो भवत्यपां ॥ मानस्यौ

दर्येणाग्निना वायुसहितेन खजेनेव मथ्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति तन्मनो भवति मनोवयवैः सह संभूय मन उपचि
नोतीत्येतत् तथापां सोम्य पीयमानानां योऽणिमा स ऊर्ध्वः समुदीषति स प्राणो भवतीत्येवमेव खलु सोम्य तेजसोऽश्यमानस्य योऽणिमा ।
स ऊर्ध्वः समुदीषति सा वाग्भवति ॥ अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति युक्तमेवमयोक्तमित्यभिप्रायः अतो

दृष्टान्तमुच्यमानं शृण्विति योजना ॥ ५ ॥ मिश्रीभावेपि सूक्ष्मभागस्य पृथगेव कार्यकरत्वे दृष्टान्तमाह ॥ दध्न इति ॥ दृष्टान्तमनूद्य दार्ष्टान्तिकमा
ह ॥ यथेति ॥ खजो मंथस्तेन मथ्यमानस्य दध्नो यथाणिमा तथाशितस्यान्नस्य योऽणिमेति योज्यं ॥ कथं तन्मनो भवतीत्युच्यते प्रागपि मन
सः सिद्धत्वादित्याशंक्याह ॥ मनोवयवैरिति ॥ मन आदेरन्नादिमयत्वमुपसंहरति ॥ अन्नमयं हीति ॥ अतो भवदभिप्रायादिति यावत् ॥ एत

प्राणस्याम्मयत्वं वाचस्तेजोमयत्वं चोच्यते॥ हृदयप्रदेशे प्राणादिसन्निधानाविशेषे कथं मनस एवान्नरसेनोपचयइत्येतन्नाद्यापिस माहितमितिमत्वाह॥ मनस्त्विति॥ मनसोविशेषतोन्नमयत्वमुपपादयितुमुत्तरग्रंथमुत्थापयति॥ तथेति॥ ६॥ अन्वयव्यतिरेकाभ्यांमन सोन्नरसोपचितत्वं दर्शयितुमन्नरसजनितांशक्तिंकलात्वेनकल्पयति॥ अन्नस्येत्यादिना॥ षोडशादिनावच्छेदेनषोडशधाकल्पनं द्रष्टव्यं

मनस्त्वन्नमयमित्यत्रनैकांतेनममनिश्चयोजातोभूयएवमाभगवान्मनसोन्नमयत्वंदृष्टांतेनविज्ञापयत्विति॥ तथा सोम्येतिहोवाचपिता॥ ६॥ अन्नस्यभुक्तस्ययोणिष्ठोधातुःसमनसिशक्तिमधात्सा अन्नोपचितामनसःशक्तिःषोडशधा प्रविभज्यपुरुषस्यकलात्वेननिर्दिदिक्षिता॥ तयामनस्यन्नोपचितयाशक्त्याषोडशधाप्रविभक्तयासंयुक्तस्तद्वान्कार्य कारणसंघातएषोजीवविशिष्टःपुरुषःषोडशकलउच्यते॥ यस्यांसत्यांद्रष्टाश्रोतामंतावोद्धाकर्ताविज्ञातासर्वक्रियासम

सोम्यपीयमानानांयोणिमासऊर्ध्वःसमुदीषतिसप्राणोभवतितेजसःसोम्याश्यमानस्ययोणिमासऊ र्ध्वःसमुदीषतिसावाग्भवत्यन्नमयंहिसोम्यमनआपोमयःप्राणस्तेजोमयीवागितिभूयएवमाभगवान्वि ज्ञापयत्वितितथासोम्येतिहोवाच॥ ६॥ पंचदशाहानिमाशीःकाममपःपिबापोमयःप्राणोनपिबतोविच्छेत्स्यत इति॥ १॥

नायांचयस्यांसत्यांसामर्थ्यहानिः॥ वक्ष्यतिचात्रान्नस्यायीद्रष्टेत्यादि॥ सर्वस्यकार्यकरणस्यसामर्थ्यंमनःकृतमेवमान सेनहिवलेनसं

॥ तथापिपुरुषस्यकथंषोडशकलत्वमतआह॥ तयेति॥ तामेवप्रकृतामन्नरसकृतांशक्तिंविशिनष्टि॥ यस्यामिति॥ व लेनसंयुक्तःपुरुषःषोडशकलइतिपूर्वेणसंबंधः॥ अन्नरसजनितमानसशक्तिप्रयुक्तसंघातस्यसामर्थ्यमित्यत्रवाक्यशेषंप्रमाणयति॥ व क्ष्यतिचेति॥ आयोलाभोस्यास्तीत्यायीयावदन्नंप्राप्यात्रीभवतितावदेवास्यद्रष्टेत्यादिव्यवहारःसंभवतीत्यर्थः॥ उक्तेर्थेलोकानुभवमनुकूलं यति॥ सर्वस्येति॥ तदेवस्पष्टयति॥ मानसेनेति॥ किंचकेचिन्मानसेनैववलेनध्यानाहाराद्दृश्यंतेतच्चध्यानमन्नपरंपरापरिनिष्पन्नमन्नस्यैव

ध्यानेति ॥ एवं प्रातनिकां कृत्वा षोडशकलशब्दार्थमाह ॥ अन्नमिति ॥ यतो ऽन्नकृतं मानसं वीर्यमतः तदेव षोडशधा विभज्य कलायस्येति योजना ॥ एतच्छब्देनान्नकृतं मानसं वीर्यं परामृश्यते ॥ विच्छेत्स्यत इति विच्छेदमापत्स्यते यस्मात्तस्मादपः पिबेति पूर्वेण संबंधः ॥ अपां पानपरित्यागे प्राणवि

ध्यानाहाराश्च केचिदन्नस्य सर्वात्मकत्वाद् अतोऽन्नकृतं मानसं वीर्यं षोडशकलाय स्य पुरुषस्य सोऽयं षोडशकलः पुरुषः ॥ एतत्प्रत्यक्षीकर्तुमिच्छसि यदि पञ्चदशसंख्याकान्यहानि माशीः अशनं मा कार्षीः ॥ कामं यथेष्टमपः पिब यस्मान्न पिबतो ऽपस्ते प्राणो विच्छेत्स्यते विच्छेदमापत्स्यते ॥ यस्मादापोमयोऽब्विकारः प्राण इत्यवोचाम न ह्विकार्यं स्वकारणोपष्टम्भमन्तरेणाविभ्रश्यमानं स्थातुमुत्सहते ॥ स ह एवं श्रुत्वा मनसोऽन्नमयत्वं प्रत्यक्षीकर्तुमिच्छन् पञ्चदशाहानि नाशाशनं न कृतवान् अथ षोडशे ह्नि हैनं पितरमुपससाद उपगतवानुपगम्य चोवाच ॥ किं ब्रवीमि भो इतीतर आह ऋचः सोम्य यजूंषि सामान्यधीष्वेत्येवमु

प्राणो नापिबतो विच्छेत्स्यत इति स ह पञ्चदशाहानि नाशाथ हैनमुपससाद किं ब्रवीमि भो इत्यृचः सोम्य यजूंषि सामानीति स होवाच न वै मा प्रतिभान्ति भो इति ॥ तं होवाच यथा सोम्य महतोऽभ्याहितस्यैकोऽङ्गारः खद्योतमात्रः परिशिष्टः

क्तः पित्राह न वै मा मामृगादीनि प्रतिभान्ति ॥ न प्रतिभान्ति मम मनसि न दृश्यन्त इत्यर्थः ॥ हे भो भगवन्नित्येवमुक्तवन्तं पिता आह शृणु ॥ तत्र कारणं येन ते तवार्गादीनि न प्रतिभान्तीति तं होवाच ॥ यथा लोके हे सोम्य महतो महत्परिमाणस्याभ्याहितस्योपचितस्येन्धनैरग्नेरेकोऽङ्गारः खद्योतमात्रः खद्योतपरिमाणः शान्तस्य परिशिष्टोऽवशिष्टः स्यात्तेनाङ्गारेण ततोऽपि तत्परिमाणादीषदपि न बहु दहेदेवमेव खलु सोम्य ते तवान्नोपचितानां षोडशानां कलानामेका कलावयवोऽतिशिष्टावशिष्टा स्यात्तया त्वं खद्योतमात्राङ्गारतुल्ययैतर्हीदानीं वेदान्नानुभवसि न प्रतिपद्यसे श्रुत्वा च मे ममवाचमथाशेषं ॥ छेदे कारणमाह ॥ यस्मादिति ॥ प्राण-



स्यापोमयत्वेऽपि किमित्यपां परित्यागे तस्योच्छेदस्तत्राह ॥ नहीति ॥ ऋगाद्यप्रतिभानं तत्रेत्युच्यते ॥ ईषदपि न दहेदित्युक्तो बहु दहेदिति योजना ॥ १ ॥

व्यावृत्तिर्व्यतिरेकः अन्नोपयोगाभावे मनसः सामर्थ्याभावः॥ अनुवृत्तिः पुनरन्नोपयोगे मनसः सामर्थ्यमिति भेदः मनसोऽन्नमयत्वमुपपाद्

विज्ञास्यस्य शनं स ह स्वतावत्सह तथैवाश भुक्तवानथानंतरं हैनं पितरमुपससार तं होपगतं पुत्रं यत्किंच ग्रोष्षु पप्रच्छ ग्रंथरूपमर्थजातं वा पिता स श्वेतकेतुः सर्वं ह न प्रतिपेदे ऋगाद्यर्थतो ग्रंथतश्च तं होवाच पुनः पिता यथा सौम्य महतोऽभ्याहितस्येत्यादि समानं॥ एकमंगारं शांतस्याग्नेः खद्योतमात्रं परिशिष्टं तं तृणैश्चूर्णैश्चोपसमाधाय प्राज्वलयेद्दद्धेनेनेद्धेनांगारेण ततोऽपि पूर्वपरिमाणाद्बहु दहेदेवं सौम्यान्नकलानां सामर्थ्यरूपाणामेका कलातिशिष्टाभूदतिशिष्टासीत्सा च दशाहान्यभुक्तवत एकैकेनाह्नैकैका कल।

स्यात्तेन ततोऽपि न बहु दहेदेवं सौम्य ते षोडशानां कलानामेका कलातिशिष्टा स्यात्तयैतर्हि वेदान्नानुभवस्यशाना थमे विज्ञास्यसीति स हाशाथ हैनमुपससाद तं ह यत्किंच पप्रच्छ सर्वं ह प्रतिपेदे तं होवाच यथा सौम्य महतोऽभ्या हितस्यैकमंगारं खद्योतमात्रं परिशिष्टं तं तृणैरुपसमाधाय प्राज्वलयेत्तेन ततोऽपि बहु दहेदेवं सौम्य ते षोडशानां कलानामेका कलातिशिष्टाभूत्सान्नेनोपसमाहिता प्राज्वालीत्तयैतर्हि वेदाननुभवस्यन्नमयं हि सौम्य मन आपोम यः प्राणस्तेजोमयी वागिति तद्धास्य विजज्ञाविति विज

लाचंद्रमसकूवापरपक्षे क्षीणा सातिशिष्टा कला नवान्नेन भुक्तेनोपस माहिता वर्द्धितोपचिता प्राज्वालीत्॥ दैर्घ्यं छांदसं॥ प्रज्वलिता वर्द्धिता इत्यर्थः॥ प्राज्वलीदिति वा पाठांतरं॥ तदन्नेनोपसमाहिता स्वयं प्रज्वलितवतीत्यर्थः॥ तया वर्द्धितयैतर्हि इदानीं वेदाननुभवस्युपलभसे॥ एवमावृत्त्यनुवृत्तिभ्यामन्नमयत्वं मनसः सिद्धमित्युपसंहरति अन्नमयं हि सोम्य मन इत्यादि यथैतन्मनसोऽन्नमयत्वं तव सिद्धं॥ तथापोमयः प्राणस्तेजोमयी वागित्येतदपि सिद्धमेवेत्यभिप्रायः॥ तदेतद्धास्य पितुरुक्तं मनआदीनामन्नादिमयत्वं विजज्ञौ विज्ञातवान् श्वेतकेतुर्द्विरभ्यासस्त्रिवृत्करणप्रकरणसमाप्त्यर्थः पितुरुपक्रांतमापोमयः प्राण इत्यादि कथमिहोच्यते तत्राह॥ यथैतदिति॥ विद्यासमाप्तिमंतरेण कथं द्विर्वचनमित्याशंक्याह॥ द्विरभ्यास इति॥७॥

त्रिवृत्करणनिर्णयमवांतरप्रकरणं परिसमाप्य महाप्रकरणं सद्विषयमेवानुवर्तयन्नेव मनसो लये सुषुप्तौ जीवस्य सतः संपत्तिं वक्तुं मनउपाधिक
त्वमुक्तमनुवदति ॥ यस्मिन्निति ॥ उपाधेः स्वरूपमुक्तं संचारयति ॥ तन्मनइति ॥ उपाध्युपहितैकार्यकरत्वं दर्शयति ॥ तन्मयइति ॥ मनसो भा
वे जाग्रत्स्वप्नव्यवहारसिद्धिरित्युक्त्वा तदभावे सुषुप्तिमवतारयति ॥ तदुपरमे चेति ॥ आत्मनि मनोवशादेव दर्शनादिव्यवहारो न स्वारस्ये
नेत्यत्र बृहदारण्यकश्रुतिं प्रमाणयति ॥ तदुक्तमिति ॥ द्वितीयवाक्ये सधीरित्येतदुपयुज्यते ॥ तृतीये तु विज्ञानमयो [नोम] मयइति च पदद्वयमुपजी

यस्मिन्मनसि जीवेनात्मनानुप्रविष्टा परा देवता आदर्श इव पुरुषः प्रतिबिंबेन जलादिष्विव च सूर्यादयः प्रतिबिंबैस्तन्मनोन्न
मयं तेजोमयाभ्यां वाक्प्राणाभ्यां संगतमधिगतं यन्मयो यत्स्थश्च जीवो मननदर्शनश्रवणादिव्यवहारायकल्पते ॥ तदुपर
मे च स्वं देवतारूपमेव प्रतिपद्यते ॥ तदुक्तं श्रुत्यंतरे ध्यायतीव लेलायतीव सधीः स्वप्नो भूत्वेमं लोकमतिक्रामति स वा अयमा
त्मा ब्रह्म विज्ञानमयो मनोमयइत्यादि स्वप्नेन शारीरमित्यादि प्राणन्नेव प्राणो भवतीत्यादि ॥ तस्याः स्वमनस्यस्य मनआ

॥ उद्दालको हारुणिः श्वेतकेतुं पुत्रमुवाच

ख्यां गतस्य मनउपशमद्वारेणेंद्रियविषयेभ्यो निवृत्तस्य यस्यां परस्यां देवतायां स्वात्मभूतायां यदवस्थानं तत्सुत्रापा
चिख्यासुरुद्दालकः किलारुणिः श्वेतकेतुं पुत्रमुवाचोक्तवान् ॥ स्वप्नांतं स्वप्नमध्यं स्वप्नइति दर्शनवृत्तेः स्वप्नस्याख्यानं
स्य मध्यं स्वप्नांतं सुषुप्तमित्येतत् ॥ अथवा स्वप्नांतं स्वप्नसतत्त्वमित्यर्थः ॥ तत्राप्यर्थात्सुषुप्तमेव भवति ॥ स्वमपीतो भवती

भते ॥ एवं भूमिकां कृत्वा समनंतरवाक्यमादत्ते ॥ तस्येति ॥ तत्सुत्रापेत्यत्र तस्यां देवतायां तदवस्थानमिति तच्छब्दार्थः ॥ तत्रेति द्वितीयप्रसो
क्तिः ॥ अर्थादिति ॥ स्वप्नस्य सद्विकार्यस्य सतत्त्वं कारणं तच्च सुषुप्तमेव सुषुप्ताख्यं तमोज्ञानं बीजं स्वप्नप्रबोधयोरित्युभयापगमनात् द्वितीय
व्याख्यानं सुषुप्तमेवार्थवशात्फलतीत्यर्थः ॥ इतश्च स्वप्नांतशब्देन साक्षादर्थाद्वा सुषुप्तमेवोक्तमित्याह ॥ स्वमिति ॥ नन्ववस्थांतरेपि

नहीति॥नत्रापिकथंस्वाप्यःस्यादित्याशंक्याह॥तत्रेति॥स्वपितिनामनिर्वचनसामर्थ्यसिद्धमर्थंनिगमयति॥अतइति॥ननुस्वप्नान्तश
ब्दोसुप्तान्तशब्दवद्यदास्वप्नमेवाभ्याचष्टेतदापिस्वमपीतोभवतीतिअविरुद्धंसर्वदाजीवस्यसद्रूपब्रह्मप्राप्तेस्तुल्यत्वादतआह॥यत्र
त्रेति॥स्वप्नदर्शनस्यपुण्यापुण्यकार्यत्वंप्रकटयति॥पुण्यापुण्ययोर्हीति॥नकेवलंपुण्यापुण्याभ्यामेवस्वप्नेसंयुज्यतेकिंतुविद्यादि

नह्यन्यत्रसुषुप्तात्स्वपितीतिजीवस्येक्तंतिब्रह्मविदस्तत्रह्यादर्शापनयेपुरुषप्रतिबिंबआदर्शगतोयथास्वमेवपुरुषमपी
तोभवत्येवंमनआद्युपरमेचैतन्यस्यप्रतिबिंबरूपेणजीवेनात्मनामनसिप्रविष्टानामरूपव्याकरणायपरादेवतासास्वमेवा
त्मानंप्रतिपद्यतेजीवरूपतांमनआख्यांहित्वातःसुषुप्तएवस्वप्नान्तशब्दवाच्यइत्यवगम्यतेयत्रतुसुप्तःस्वप्नान्पश्यतितत्स्वा
प्नदर्शनंसुखदुःखसंयुक्तमितिपुण्यापुण्यकार्यंपुण्यापुण्ययोर्हिसुखदुःखारंभकत्वंप्रसिद्धंपुण्यापुण्ययोश्चाविद्याकामोप
ष्टंभेनैवचसुखदुःखतद्दर्शनकार्यारंभकत्वमुपपद्यतेनान्यथेत्यविद्याकामकर्मभिःसंसारहेतुभिःसंयुक्तएवस्वप्नइतिन

स्वप्नान्तं॥९

स्वमपीतोभवति।अनन्वागतंपुण्येनानन्वागतंपापेनतीर्णोहितदासर्वाञ्छोकान्हृदयस्यभवतितद्वाअस्येतदितिचदाएषपरमात्मा
लंइत्यादिश्रुतिभ्यःसुषुप्तएवस्वंदेवतारूपंजीवत्वविनिर्मुक्तंदर्शयिष्यामीत्याहस्वप्नान्तं॥मेममनिगदतोहेसोम्यविजानीहिविस्प
ष्टमवधारयेत्यर्थः॥कदास्वप्नान्तोभवतीत्युच्यते॥यत्रयस्मिन्कालेएतन्नामभवतिपुरुषस्यस्वपतःप्रसिद्धंहिलोकेस्वपितीतिगौ
णंचेदंनामेत्याह॥यदास्वपितीत्युच्यतेपुरुषस्तदातस्मिन्कालेसतासच्छब्दवाच्ययाप्रकृतयादेवतयासंपन्नोभवतिसंगतएकीभू
तोभवति॥मनसिप्रविष्टंमनआदिसंसर्गकृतंजीवरूपंपरित्यज्यस्वंसद्रूपंयत्परमार्थसत्यमपीतोगतोभवति॥ भिश्चेतिनतत्रस्वाप्ययः
संभवतीत्याह॥पुण्यापुण्ययोश्चेति॥तर्हिस्वप्नवन्नसुषुप्तेस्वाप्ययःस्यात्तत्रापिकामकर्मादिसंबंधसंभवादित्याशंक्याह॥अनन्वागतमिति॥सम

तस्मादित्यस्यातः शब्दो व्याख्यातस्तेन परामृष्टं हेतुमेव स्पष्टयति॥ स्वमात्मानमिति॥ स्वपितिनिमित्तनिर्वचनफलं दर्शयति॥ गुणेति॥ इ
सुषुप्ते स्वरूपावस्थानस्य मुख्यस्यासंभवान्मुक्तत्वेनानुत्थानप्रसंगात्स्वरूपावस्थानप्रसिद्धेर्निमित्तं वक्तव्यमिति पृच्छति॥ कथं पुनरिति॥
ज्वरादिरोगग्रस्तस्य स्वभावस्थितौ प्रसिद्धः श्रमाभावः सुषुप्ते च श्रमापनोदावस्थानं तथा च तत्र स्वरूपस्थितिप्रसिद्धिर्विरुद्धेत्याह॥ जा
ग्रदिति॥ संगृहीतं समाधानं विवृणोति॥ जागरिते हीति॥ करणानामनेकव्यापारनिमित्ताग्लानिर्भवतीत्यनुमानमाह॥ श्रुतेश्चेति॥ अ

अतस्तस्मात्स्वपितीत्येनमाचक्षते लौकिकाः स्वमात्मानं हि यस्मादपीतो भवति॥ गुणनामप्रसिद्धितोऽपि स्वात्मप्राप्तिर्गम्य
त इत्यभिप्रायः॥ कथं पुनर्लौकिकानां प्रसिद्धा स्वात्मसंपत्तिर्जाग्रच्छ्रमनिमित्तोद्भवत्वात्स्वापस्येत्याह जागरिते हि पुण्यापु
ण्यनिमित्तसुखदुःखाद्यनेकायासानुभवाच्छ्रान्तो भवति ततश्चायस्तानां करणानां अनेकव्यापारनिमित्तग्लानानां स्व

मे सोम्य विजानीहीति यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा संपन्नो भवति स्वमपीतो भवति तस्मादेनं स्व
पितीत्याचक्षते स्वं ह्यपीतो भवति॥

व्यापारेभ्य उपरमो भवति॥ श्रुतेश्च श्राम्यत्येव वाक् श्राम्यति चक्षुरित्येवमादि तथा
च गृहीता वाग्गृहीतं चक्षुर्गृहीतं श्रोत्रं गृहीतं मन इत्येवमादीनि करणानि प्राणग्रस्तानि प्राण एकोऽश्रान्तो देहकुलाये यो
जागर्ति तदा जीवः श्रमापनुत्तये स्वं देवतारूपमात्मानं प्रतिपद्यते॥ नान्यत्र स्वरूपावस्थानाच्छ्रमापनोदः स्यादिति युक्ता प्र
सिद्धिर्लौकिकानां स्वं ह्यपीतो भवतीति दृश्यते हि लोके ज्वरादिरोगग्रस्तानां तद्विनिर्मोके स्वात्मस्थानां विश्रमणं तद्वदिहा।

नुभवसमुच्चयार्थश्चकारः॥ सुषुप्त्यवस्थायां करणानामुपरतौ प्रमाणमाह॥ तथा चेति॥ सुप्ते प्राणस्यापि वागादिवदुपसंहृतत्वमाशंक्या
ह॥ करणानीति॥ अन्यथा मृतभ्रान्तिः स्यादिति भावः॥ जीवस्यापि तर्हि स्वव्यापारः स्यादिति चेन्नैवं करणाभावादित्याह॥ तदेति॥ ननु सुषु
प्ते श्रमापनोदमात्रेण स्वरूपावस्थानं तत्कुतो लौकिकी प्रसिद्धिरित्याशंक्याह॥ नान्यत्रेति॥ उक्तमर्थं लौकिकदृष्टान्तेन स्पष्टयति॥ दृश्यत

बृहदारण्यकश्रुत्यालोचनायामपि सुषुप्त्यवस्थायामवस्थाद्वयजनितश्रमापोहार्थं ब्रह्मणि जीवप्राप्तिर्गम्यत इत्याह॥ तद्यथेति॥ तत्रे॥
ति॥ सुषुप्त्यवस्थोच्यते॥ यथोक्तेऽर्थे जीवस्य ब्रह्मण्यवस्थानं तस्मिन्निति यावत्॥ स शब्दो दृष्टान्तविषयः शकुनिविषयो वा अप्राप्येति च्छेदः
॥ यथा मंचाक्रोशनेन मंचस्थो देवदत्तो लक्ष्यते तथा तन्मन इति मनसि स्थितो जीवो लक्ष्यो भवतीत्याह॥ मंचाक्रोशनवदिति॥ न केव

तद्यथा श्येनो वा सुपर्णो वा विपरिपत्य श्रान्त इत्यादिश्रुतेश्च॥ तत्रायं दृष्टान्तो यथोक्तेऽर्थे स यथा शकुनिः पक्षी शाकुनिका-
नकस्य हस्तगतेन सूत्रेण प्रबद्धः पाशितो दिशं दिशं बंधनमोक्षार्थी सन् प्रतिदिशं पतित्वान्यत्र बंधनादायतनमाश्रयं विश्र-
मणायाऽलब्ध्वाऽप्राप्य बंधनमेवोपश्रयते॥ एवमेव यथायं दृष्टान्तः खलु हे सोम्य तन्मनस्तत्प्रकृतं षोडशकलमन्नोप-
चितं मनो निर्धारितं तत्प्रविष्टः तत्स्थस्तदुपलक्षितो जीवस्तन्मन इति निर्दिश्यते॥ मंचाक्रोशनवत्॥ स मनआख्योपाधिर्जी-

स यथा शकुनिः सूत्रेण प्रबद्धो दिशं दिशं पतित्वान्यत्रायतनमलब्ध्वा बंधनमेवोपश्रयत एवमेव खलु सो-
म्य तन्मनो दिशं दिशं पतित्वान्यत्रायतनमलब्ध्वा प्राणमेवोपश्रयते प्राणबंधनꣳ हि सोम्य मन इति॥२॥

वोऽविद्या-
कामकर्मोपदिष्टां दिशं दिशं सुखदुःखादिलक्षणां जाग्रत्स्वप्नयोः पतित्वा गत्वानुभूयेत्यर्थः॥ अन्यत्र सदाख्यात्स्वात्मन आयतनं।
विश्रमणस्थानमलब्ध्वा प्राणमेव प्राणेन सर्वकार्यकरणाश्रयेणोपलक्षिता प्राण इत्युच्यते सदाख्या परा देवता प्राणस्य प्राणं प्रा-
णशरीरो भारूप इत्यादिश्रुतेरतस्तां देवतां प्राणं प्राणाख्यामेवोपश्रयते॥ प्राणो बंधनं यस्य मनसस्तत्प्राणबंधनं हि यस्मात्सोम्य म-
नः प्राणोपलक्षितदेवताश्रयं मन इति तदुपलक्षितो जीव इति॥ एवं स्वपिति नामप्रसिद्धिद्वारेण जीवस्य सत्यं स्वरूपं जगतो मूलं

लं प्रकरणात्प्राणशब्देन परा देवता लक्ष्यते अन्यत्र प्रयोगदर्शनाच्चेत्याह॥ प्राणस्येति॥ प्राणशब्देन परदेवतालक्षणायां फलितमाह॥ अतइति॥ प्रा-
णमेवोपश्रयते विज्ञानात्मेत्यत्र हेतुमाह॥ प्राणबंधनमिति॥ वृत्तमनूद्यानंतरवाक्यमुत्थापयति॥ एवमिति॥ आहाशनापिपासे सोम्येत्यादीतिशेषः

छां॰ भा॰ ६९

किमभिप्रायः सन् पिता पुत्रं प्रत्येवमाहेत्याकांक्षायामाह ॥ अन्नादीति ॥ अन्नादीनि कार्याणि कारणान्यबादीनि तेषां या परंपरा तया जगतो य
त्सल्लक्षणं मूलं तद्दर्शयितुमिच्छन् पिता पुत्रं प्रत्यशनेत्यादिकं वाक्यमाहेत्यर्थः ॥ अशनेत्यस्य सन्नंतत्वाभावे पि कथं तदर्थो व्याख्यायतेनेत्याह ॥
॥ अशनेति ॥ यकारस्य लोपेनास्मिन्प्रयोगे सन्नंतत्वमप्रयुक्तं तथा च तदर्थोक्तिरविरुद्धेत्यर्थः ॥ तयोरशनायापिपासयोः सतत्त्वं विज्ञापयति ॥ य

ऽन्नादिकार्यकारणपरंपरयापि जगतो मूलं सद्दिदर्शयिषुरशनापिपासे अशितुमिच्छाशनाया सन् यलोपेन पातुमिच्छा पिपासा
ते अशनापिपासे अशनापिपासयोः सतत्त्वं विजानीहीत्येतद्यत्र यस्मिन्काल एतन्नाम पुरुषो भवति किंतदशिशिषत्यशितुमि
च्छतीति तदा तस्य पुरुषस्य किंनिमित्तं नाम भवतीत्याह ॥ यत्तत्पुरुषेणाशितमन्नं कठिनं पीता आपो नयंते द्रवीकृत्य रसादिभावेन
विपरिणमयंते तेन तदा भुक्तमन्नं जीर्यते अथ च भवत्यस्य नामाशिशिषतीति गौणं जीर्णे ह्यन्नेऽशितुमिच्छति सर्वो हि जंतुः तत्रापाम

शनापिपासे सोम्य विजानीहीति यत्रैतत्पुरुषोऽशिशिषति नामाप एव तदशितं नयंते तद्यथा गोनायोऽश्वनायः पु
रुषनाय इत्येवं तदप आचक्षतेऽशनायेति तत्रैतच्छुंगमुत्पतितं सोम्य विजानीहि नेदममूलं भविष्यतीति तस्य क

शितनेतृत्वादशनाया इति नाम प्रसिद्धमित्येतस्मिन्नर्थे यथा गोनायो गा नयतीति गोनाय इत्यु (( मूलं स्यादन्यत्रान्ना
च्यते गोपालस्तथाश्वान्नयतीत्यश्वनायोऽश्वपालक उच्यते ॥ पुरुषनायः पुरुषान्नयतीति राजा सेनापतिर्वैवं तत्तदाप आचक्ष
ते लौकिका अशनायेति विसर्जनीयलोपेन तत्रैवं सत्यद्भीरसादि (( त्रेति ॥ सामान्येनोक्तं नाम विशेषतो ज्ञातुं पृच्छति ॥ किंतदिति ॥ ऽ
यत्कठिनमन्नं पुरुषेणाशितं पीता आपो नयंते तदिति संबंधः ॥ तदेति ॥ परिणामावस्थोक्तिरर्थेत्यन्नस्य भुक्तस्य जीर्णत्वानंतर्यमुच्यते ॥ कथं
तदा नाम्नो गौणत्वं तदाह ॥ जीर्णे हीति ॥ तदर्थत्वं तच्छब्दार्थमाह ॥ तत्रेति ॥ एतस्मिन्नर्थे दृष्टांत उच्यत इति शेषः ॥ अशनायेति कथम
पामाख्यानं अशनाया इति हि वक्तव्यं तत्राह ॥ विसर्जनीयेति ॥ तत्रत्यस्य व्याख्यानमेवं सतीत्यपामशितनेतृत्वे सतीत्यर्थः ॥ अद्भिः पीताभि

अ॰ ६

राम ६९

॥तत्रेति शरीरनिर्देशः॥ अन्नस्य देहमूलत्वमाकाङ्क्षापूर्वकमुत्पादयति॥ कथमित्यादिना॥ तथापुरुषभुक्तान्नवदितियावत्॥ तथापि
कथं सतो मूलस्य सिद्धिरत आह॥ यत्त्विति॥ सतो मूलस्य वास्तवरूपं दर्शयत्येकमिति॥ तस्य सर्वकल्पनाधिष्ठानत्वेन परिणामवादं व्यु।

भावेन नीतेनाशितेनान्नेन निष्पादितमिदं शरीरं॥ वटकणिकायामिव शुङ्गोऽङ्कुर उत्पतित उद्गतं तदिमं शुङ्गं कार्यं शरीरा
ख्यं वटादिशुङ्गवदुत्पतितं हे सोम्य विजानीहि॥ किं तत्र विज्ञेयमित्युच्यते॥ शृण्विदं शुङ्गवत्कार्यत्वाच्छरीरं नामूलं मूलरहि।
तं भविष्यतीत्युक्त आह श्वेतकेतुर्यद्येवं समूलमिदं शरीरं वटादिशुङ्गवत्तस्यास्य शरीरस्य क्व मूलं स्याद्भवेदित्येवं पृष्ट आह पि
ता तस्य क्व मूलं स्यादन्यत्रान्नादन्नं मूलमित्यभिप्रायः॥ कथमशितं ह्यन्नमद्भिर्द्रवीकृतं जाठरेणाग्निना पच्यमानं रसभावेन
परिणमते। रसाच्छोणितं शोणितान्मांसं मांसान्मेदो मेदसोऽस्थीन्यस्थिभ्यो मज्जा मज्ज्ञायाः शुक्रं तथा योषिता भुक्तं चान्नं रसा

वमेव खलु सोम्यान्नेन शुङ्गेनापो मूलमन्विच्छाद्भिः सोम्य शुङ्गेन तेजो मूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूल।

दिक्रमेणैवं परिणतं लोहितं भवति ताभ्यां शुक्रशोणिताभ्यामन्नकार्याभ्यां संयुक्ताभ्यामन्नेनैवं प्र ८मन्विच्छ सन्मूलाः
त्यहं भुज्यमानेनापूर्यमाणाभ्यां कुड्यमिव मृत्पिण्डैः प्रत्यहमुपचीयमानोऽन्नमूलो देहशुङ्गः परिनिष्पन्न इत्यर्थः। यत्तु देह
शुङ्गस्य मूलमन्नं निर्दिष्टं तदपि देहवद्विनाशोत्पत्तिमत्त्वात्कस्माच्चिन्मूलादुत्पतितं शुङ्ग एवेति कृत्वा आह॥ यथा देहशुङ्गो।
न्नमूलः एवमेव खलु सोम्यान्नेन शुङ्गेन तत्कार्यभूतेनापो मूलमन्विच्छ प्रतिपद्यस्वापामपि विनाशोत्पत्तिमत्त्वाच्छुङ्गत्वम
वेह्यद्भिः सोम्य शुङ्गेन कारणं तेजो मूलमन्विच्छ तेजसोऽपि विनाशोत्पत्तिमत्त्वाच्छुङ्गत्वमिति तेजसा सोम्य शुङ्गेन सन्मूलमेकमे
वाद्वितीयं परमार्थसत्यं यस्मिन्सर्वमिदं वाचारम्भणं नाम विकारो नामधेयमनृतं रज्ज्वामिव सर्पादिविकल्पजातमध्यस्तमविद्य
यातदस्य जगतो मूलमतः सन्मूलाः सत्कारणा हे सोम्येमाः स्थावरजङ्गमलक्षणाः ८ दस्यति॥ यस्मिन्निति॥ अध्यासे मूलकारणमा

61

प्रजाः सर्वाः सन्मूलाः सदायतनाश्चेत्युक्तमर्थं दृष्टान्तेन समर्थयते ॥ नहीति ॥ सत्प्रतिष्ठाः सदायतनाश्चेत्यनयोरर्थे भेदाभावमाशं-
क्याह ॥ ते चेति ॥ प्रतिष्ठाशब्दस्य लयवाचित्वादायतनशब्दस्य चाश्रयविषयत्वान्न पौनरुक्त्यमित्यर्थः ॥ लयशब्दस्य सुषुप्त्यादिवि-
षयत्वं वारयति ॥ समाप्तिरिति ॥ सम्यगाप्तिः समाप्तिरिति प्राप्तिरित्यत्र विवक्षितेति शंकां वारयति ॥ अवसानमिति ॥ तस्याभावत्वेन तुच्छ-
रूपत्वं निरस्यति ॥ परिशेष इति ॥ अन्नाख्यशुङ्गद्वारा सतो मूलस्याधिगतेरनन्तरमित्यथशब्दार्थः ॥ पिपासतीत्येतन्नामा पुरुषो यस्मिन्का-

सर्वाः प्रजा न केवलं सन्मूला एवेदानीमपि स्थितिकाले सदायतनाः सदाश्रया एव न हि मृदमनाश्रित्य घटादेः सत्त्वं स्थिति-
र्वाऽस्त्यतो मृद्वत्सन्मूलत्वात्प्रजानां सदायतनाः प्रजा अन्ते च सत्प्रतिष्ठाः सदेव प्रतिष्ठा लयः समाप्तिरवसानं परिशेषो यासां ताः
सत्प्रतिष्ठाः अथेदानीमप्शुङ्गद्वारेण सतो मूलस्यानुगमः कार्य इत्याह । यत्र यस्मिन्काले एतन्नाम पिपासति पातुमिच्छ-

सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः ॥ अथ यत्रैतत्पुरुषः पिपासति नाम तेज एव तत्पीतं नयते तद्यथा
गोनायोऽश्वनायः पुरुषनाय इत्येवं तत्तेज आचष्ट उदन्येति तत्रैतदेव शुङ्गमुत्पतितं सोम्य विजानीहि नेदममूलं
भविष्यतीति तस्य क्व मूलं स्यादन्यत्राद्भ्योऽद्भिः सोम्य शुङ्गेन तेजो मूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूल ।
((मन्विच्छ सन्मूलाः

तीति पुरुषो भवति तस्याशिशिषतीतिवदिदमपि गौणमेव नाम भवति द्रवीकृतस्याशितस्यान्नस्य ने ।
त्र्य आपोऽन्नशुङ्गं देहं क्लेदयन्त्यः शिथिलीकुर्युरब्बाहुल्याद्यदि तेजसा न शोष्यन्ते नितरां च तेजसा शोष्यमाणास्वप्सु देहभावेन
परिणममानासु पातुमिच्छा पुरुषस्य जायते तदा पुरुषः पिपासति नाम तदेतदाह तेज एव तत्तदा पीतमबादि शोषयद्देहगत-
((लोहितप्राणभावे

ले भवतीति योजना ॥ कथं पिपासतीत्येतन्नाम पुरुषस्य गौणमित्याशंक्याह ॥ द्रवीकृतेति ॥ भवत्वपां तेजसा शोष्यमाण-
त्वं किंनावतेत्याशंक्याह ॥ नितरां चेति ॥ तदा पानेच्छावस्थायामित्यर्थः ॥ तेजसो यदुदकनेतृत्वमुक्तं तत्र श्रुतिमवतार्य व्याचष्टे ॥ तदेतदाहेति ॥

उदन्यमितिवक्तव्येकथमुदन्येत्युक्तंतत्राह॥उदन्येतीति॥तत्रापितेजस्यपीत्येतद्यथाशनायेतिछांदसंतथातेजस्युदन्येत्यपिछांदसमेवेत्या
ह॥पूर्ववदिति॥अन्नद्वारासतोमूलस्याधिगमवदब्द्वारापितस्याधिगतिरस्तीत्याह॥अपामपीति॥तेजःशुंगद्वारापिसतोमूलस्यप्रतिप
त्तिरस्तीत्याह॥सामर्थ्यादिति॥त्रिवृत्करणवशादितियावच्छरीरस्यभूतत्रयकार्यत्वमतःशब्दार्थः॥यथापूर्वमन्नशुंगेनदेहेनान्नाख्यमूलं
गम्यतइत्याख्याततथातेजःशुंगेनदेहेनतेजोमूलंगम्यतइत्यादिव्याख्येयमित्याह॥पूर्ववदिति॥वृत्तानुवादपूर्वकंयथेत्यादिवाक्यमादत्ते॥

तद्यथागोनायइत्यादिसमानमेवंतत्तेजआचष्टेलोकेउदन्येतिउदकंनयतीत्युदन्यमुदन्येतीतिछांदसंतत्रापिपूर्ववदपा
मय्येतदेवशरीराख्यंशुंगंनान्यदित्येवमादिसमानमन्यत्॥सामर्थ्यात्तेजसोप्येतदेवशुंगमतोऽपांशुंगेनदेहेनापोमूलंगम्य
तेऽद्भिःशुंगेनतेजोमूलंगम्यतेतेजसाशुंगेनसन्मूलंगम्यतेपूर्ववत्॥एवंहितेजोवन्नमयस्यदेहशुंगस्यवाचारंभणमात्र
स्यान्नादिपरंपरयापरमार्थसत्यंसन्मूलमभयमसंत्रासंनिरायासंसन्मूलमन्विच्छेतिपुत्रंगमयित्वाशिशिषतिपिपास

सोम्येमाःसर्वाःप्रजाःसदायतनाःसत्प्रतिष्ठा यथानुखलुसोम्येमास्तिस्रोदेवताःपुरुषंप्राप्यत्रिवृत्त्रिवृदेकैकाभ॥
तीतिनामप्रसिद्धिद्वारेणयदन्यदिहास्मिन्प्रकरणेतेजोवन्नानांपुरुषेणोपयुज्यमानानांकार्यकरणसंघातस्य ४वति॥

४॥एवंहीति॥४॥

उक्तयारीत्यानामप्रसिद्धिद्वारेणयथोक्तदेहाख्यशुंगस्यान्नादिकारणपरंपरयासदाख्यमूलमुक्तविशेषणंसन्मूलमन्विच्छेत्युपदेशेनश्वेतके
तुंज्ञापयित्वाव्यवस्ययाशरीरमेकैकभूतारब्धमित्याक्षेपप्राप्तेयदस्मिन्प्रकरणेतेजःप्रभृतीनामुपयुज्यमानानांस्वस्वभावानुसारेणसंघात॥
स्योपचयकरत्वंवक्तव्यप्राप्तंतदिहसर्वशरीरेषुसर्वभूतकार्योपलंभाद्यवस्थायांप्रमाणाभावाद्दृश्यमानेसंघातेकस्यभूतस्यकियत्कार्यमि
त्यपेक्षायामन्नमशितमित्यादावुक्तमेवद्रष्टव्यमितिपूर्वोक्तव्यपदिशतीतियोजनासतोमूलस्यव्यवहारसत्यत्वंवारयति॥परमार्थेति॥वस्तु
तोनाविद्यासंबंधस्तस्यास्तीत्याह॥अभयमिति॥अविद्याकार्यसंबंधोपिपरमार्थतोनतस्यास्तीत्याह॥असंत्रासमिति॥उभयसंबंधाभा

छां·भा·
२१

पूर्वोक्तमेव व्यक्तीकरोति ।। तत्रैवेति ।। किंतदन्नमशितमित्याद्युक्तं तत्राह ।। अन्नादीनामिति ।। माषधातुकं त्वगसृङ्मांसमेदोमज्जास्थिशुक्राख्याः सप्त धातवस्तेषां संहतिरूपमित्यर्थः ।। तेजोबन्नकार्यभूतदेहशुङ्गद्वारा सतत्त्वं निरूपितमिदानीं मरणद्वारेणापि तन्निरूपयितुमारभते ।। सोऽयमिति ।। तदाहेत्यत्र क्रमवन्मनं तदित्युक्तं वाग्व्यापारस्य मनसि लये हेतुमाह ।। मनःपूर्वको हीति ।। प्राणसंपत्तिरेनेनास्तत्तदधीनत्वमतो

अ· ६

देहशुङ्गस्य स्वजात्यसांकर्येणोपचयकरत्वं वक्तव्यं प्रासंगादिहोक्तमेव द्रष्टव्यमिति पूर्वोक्तं व्यपदिशति यथा तु खलु येन प्रकारेणमास्तेजोबन्नाख्यास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति तदुक्तं पुरस्तादेव भवत्यन्नमशितं त्रेधा विधीयत इत्यादि तत्रैवोक्तमन्नादीनामशितानां यो मध्यमो धातवस्ते माषधातुकं शरीरमुपचिन्वन्तीत्युक्तं मांसं भवति लोहितं भवति मज्जा भवतीति ।। ये त्वणिष्ठा धातवो मनः प्राणं वाचं च देहस्यान्तःकरणसंघातमुपचिन्वन्तीति चोक्तं तन्मनो भवति स प्राणो भवति सा वाग्भवतीति ।। ये त्वणिष्ठा धातवो मनः प्राणं वाचं च देहस्यान्तःकरणसंघातमुपचिन्वन्तीति चोक्तं तन्मनो भवति स प्राणो भ

तदुक्तं पुरस्तादेव भवत्यस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि संपद्यते ।। मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवता(१)यां

वति सा वाग्भवति सोऽयं प्राणकरणसंघातो देहे विशीर्णे देहान्तरं जीवाधिष्ठितो येन क्रमेण पूर्वदेहात्प्रच्यवते गच्छति तदाहास्य हे सोम्य पुरुषस्य प्रयतो म्रियमाणस्य वाङ्मनसि संपद्यते मनस्युपसंह्रियते अथ तदाहुर्ज्ञातयो न वदतीति मनःपूर्वको हि वाग्व्यापारो यद्धि मनसा ध्यायति तद्वाचा वदतीति श्रुतेर्वाच्युपसंहृतायां मनसि मनो मननव्यापारेण केवलेन वर्तते ।। मनोऽपि यदोपसंह्रियते तदा मनः प्राणे संपन्नं भवति ।। सुषुप्तकाल इव तदा पार्श्वस्था ज्ञातयो न विजानातीत्याहुः ।। प्राणश्च तदोर्ध्वोच्छ्वासी स्वात्मन्युपसंहृतबाह्यकरणः संवर्ग

(१) व्यापारनिवृत्त्यवस्थानदेत्युच्यते ।। प्राणश्च तदेत्य विज्ञानावस्था कथ्यते ।। कथं प्राणस्य स्वात्मन्युपसंहृतबाह्यकरणत्वं तदाह संवर्गविद्यायामिति ।। तत्र हि प्राणः संवृक्ते वागादीनिति दृष्टमतो युक्तमस्य स्वात्मन्युपसंह

राम
२१

॥तेजसीति॥भौतिकमाध्यात्मिकं तेजो गृह्यते॥जीवतीत्याहुरिति संबंधः सकरणस्य सप्राणस्य च भूतवर्गस्य परस्यां देवतायामुक्तक्रमेणो-
पसंहारेऽपि जीवस्य किमायातमित्याशंक्याह॥तदैवमिति॥तस्यां परस्यां देवतायामुक्तेन क्रमेण तेजस्युपसंहृते सतीति यावत्॥स्वमूलं मन-
सो मूलभूतं पंचकं निमित्तोपसंहारादित्यत्र निमित्तमनो विवक्षितं॥सत्संपन्नस्य सत्याभिसंधेन पुनरुत्थानमित्येतत्तद्दृष्टांतेन स्पष्टयति॥य-

विद्यायां दर्शनाद्धस्तपादादीन्संभृतशकटवच्छब्दं कुर्वन्विक्षिपन्मर्मस्थानानि निकृंतन्निवोत्सृजेत्क्रमेणोपसंहृतस्ते-
जसि संपद्यते॥तदाहुर्ज्ञातयो न चलतीति मृतो नेति वा विचिकित्संतो देहमालभमाना उष्णं चोपलभमाना देहे उष्णं जीवतीति
यदा तदुष्णत्वलिंगं तेज उपसंह्रियते॥तदा तत्तेजः परस्यां देवतायां प्रशाम्यति॥तदैवं क्रमेणोपसंह्रियते॥स्वमूलं प्राप्ते च मन-
सि तत्स्थो जीवोऽपि सुषुप्तकालवन्निमित्तोपसंहारादुपसंह्रियमाणः सत्सत्याभिसंधिपूर्वकं चेदुपसंह्रियते स देव संपद्यते॥
न पुनर्देहाय तरायसुषुप्तादिवोत्तिष्ठति॥यथा लोके सभये देशे वर्तमानः कथंचिदिवाभयं देशं प्राप्तस्तद्वदितरस्त्वनात्मज्ञस्त-

स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा॥तत्त्वमसि श्वेतकेतो इति

स्मादेव मूलात्सुषुप्तादिवोत्थाय मृत्वा पुनर्देहजालमाविशति॥यस्मान्मूलादुत्थाय देहमाविशति जीवः स यः सदाख्य एष
उक्तोऽणिमाणुभावो जगतो मूलमैतदात्म्यमेतत्सदात्मा यस्य सर्वस्य तदिदमेतदात्म तस्य भाव ऐतदात्म्यमेतेन सदाख्येनात्मनात्मव-
त्सर्वमिदं जगन्नान्योऽस्त्यसंसारी नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ इत्यादिश्रुत्यंतरात्तेन चात्मनात्मवत्सर्वं तदेव सदा-
ख्यं कारणं सत्यं परमार्थसदतः स एवात्मा जगतः प्रत्यक्स्वरूपं सतत्त्वं याथात्म्यं

थेति॥अभयं देशं प्राप्तो न पुनः सभयं देशं गंतुमि-
च्छतीति शेषः॥यस्त्वनृताभिसंधो यथोक्तरीत्या सत्संपन्नस्तं प्रत्याह॥इतरस्त्विति॥अस्येति षष्ठ्या सर्वं जगदुक्तमसंसारीवेति च्छेदः॥मृदा-
दिविशेषं दर्शयति॥परमार्थेति कल्पितस्य जगतः स्वरूपं प्रत्यग्भूतमतात्त्विकमिति शंकां वारयति॥सतत्त्वमिति॥तत्त्वेन सहितमपि सतत्त्वमि-

कथमेवमर्थत्वमात्मशब्दस्य लभ्यते तेनत्राह ॥ आत्मशब्दस्येति ॥ सतो भवत्वात्मत्वं मम किं स्यादित्याशंक्याह ॥ अतइति ॥ संदेहास्पदमेव वि-
शिनष्टि ॥ अहन्यहनीति ॥ संदेहे हेतुमाह ॥ येनेति ॥ तेन संदिग्धमेतदिति पूर्वेण संबंधः संदेहव्यावृत्तिस्तर्हि कथमित्यत आह ॥ अतइति ॥ पु-
त्रस्य प्राप्तसंदेहापोहार्थमुत्तरग्रंथमुत्थापयति ॥ एवमिति ॥ ८ ॥ यथेत्यादिदृष्टांतमवतारयति ॥ यन्नृच्छसीति ॥ यत्त्वहं सुषुप्ते सर्वाः प्रजाः सत्सं-



आत्मशब्दस्य निरुपपदस्य प्रत्यगात्मनि गवादिशब्दवन्निरूढत्वात् ॥ अतस्तत्त्वमसीति हे श्वेतकेतो इत्येवं प्रत्यायितः
पुत्र आह ॥ भूय एव मा भगवान्विज्ञापयतु यद्भवदुक्तं तत्संदिग्धं मम यदहन्यहनि सर्वाः प्रजाः सुषुप्ते सत्संपद्यंत इत्यत एव न स-
त्संपद्य न विदुः सत्संपन्ना वयमित्यतो दृष्टांतेन मां प्रत्याययत्वित्यर्थः ॥ एवमुक्तस्तथास्तु सोम्येति होवाच पिता ॥ ८ ॥ यन्नृ-
च्छस्यहन्यहनि सत्संपद्य न विदुः सत्संपन्नाः स्म इति तत्कस्मादित्यत्र शृणु दृष्टांतं ॥ यथा लोके सोम्य मधुकृतो मधु कुर्वंती

भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ ८ ॥ यथा सोम्य मधु मधुकृतो निस्तिष्ठंति नानात्यया-
नां वृक्षाणांꣳ रसान्समवहारमेकताꣳ रसं गमयंति ॥ १ ॥ ते यथा तत्र न विवेकं लभंतेऽमुष्याहं वृक्षस्य रसोऽस्म्यमुष्याहं वृ-

ति मधुकृतो मधुकरमक्षिका मधु निस्तिष्ठंति मधु निष्पादयंति तत्पराः संतः कथं नानात्ययानां नानाग ((क्षस्य रसोऽस्मीत्ये
तीनां नानादिक्कानां वृक्षाणां रसान्समवहारं समाहृत्य समाहृत्यैकतामेकभावं मधुत्वेन रसान्गमयंति मधुत्वमापादयं-
ति ते रसा यथा मधुत्वेनैकतां गतास्तत्र मधुनि विवेकं न लभंते ॥

((पद्य सत्संपन्नाः स्मो वयमिति यन्न विदुः तदज्ञानं कस्मात्कार-
णादिति यन्मां पृच्छसि तत्र सुषुप्त्यादावज्ञाने कारणभूतं दृष्टांतमुच्यमानं शृणु त्वमिति योजना ॥ यथा सदृष्टांतः स्पष्टो भवति तथोच्य-
त इत्याह ॥ यथेति ॥ पुनर्मधुपदं क्रियापदेन संबंधप्रदर्शनार्थं मधुकृतां मधुनिष्पादकत्वमाकांक्षापूर्वकं दर्शयति ॥ कथमित्यादिना ॥
नानागतीनां नानाफलानामित्येतद्बहूनां रसानां कथमेकतेत्याशंक्याह ॥ मधुत्वेनेति ॥ तदेव स्पष्टयति ॥ मधुत्वमिति ॥ यथेत्यादिव्याचष्टे ते

उक्तमर्थं वैधर्म्यदृष्टान्तेन स्पष्टयति ॥ यथाहीत्यादिना ॥ इहेति ॥ प्रकृतदृष्टान्तोक्तिः ॥ दृष्टान्तमनूद्य दार्ष्टान्तिकमाह ॥ यथेति ॥ रसानामचेतनत्वेन विवेकानर्हत्वात्कथं चेतनावतामेव दृष्टान्तः स्यादित्याशंक्याह ॥ यस्माच्चेति ॥ एवं यथोक्तरसदृष्टान्तवशेनेति यावच्चेतनानाम

कथममुष्याहमाम्रस्य पनसस्य वाहस्य रसोस्मीति च यथा हि लोके बहूनां चेतनावतां समेतानां प्राणिनां विवेकबोधो भवति ॥ अमुष्याहं पुत्रो नप्तास्मीति ते च लब्धविवेकाः सन्तो न संकीर्यन्ते न तथेहानेकप्रकारवृक्षरसानामपि मधुराम्लतिक्तकटुकादीनां मधुत्वेनैकतां गतानां मधुरादिभावेन विवेको गृह्यत इत्यभिप्रायः ॥ यथायं दृष्टान्त इत्येवं खलु सोम्येमाः सर्वाः प्रजा अहन्यहनि सति संपद्य सुषुप्तकाले मरणप्रलययोश्च न विदुर्न विजानीयुः सति संपद्यामह इति संपन्ना इति वा यस्माच्चैवमात्मनः सद्रूपतामज्ञात्वैव सत्संपद्यन्तेऽतस्त इह लोके यत्कर्मनिमित्तां यां यां जातिं प्रतिपन्ना आसुर्व्याघ्रादीनां व्या

वमेव खलु सोम्येमाः सर्वाः प्रजाः सति संपद्य न विदुः सति संपद्यामह इति त इह व्याघ्रो वा सिꣳहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दꣳशो वा मशको वा यद्यद्भवन्ति तदाभवन्ति स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ

घ्रोऽहं सिंहोऽहमित्येवं ते तत्कर्मज्ञानवासनाङ्किताः सन्तः सत्प्रविष्टा अपि तद्भावेनैव पुनराविर्भवन्ति ॥ पुनः सत आगत्य व्याघ्रो वा सिंहो वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यत्पूर्वमिह लोके भवन्ति बभूवुरित्यर्थः ॥ तदेव पुनरागत्य भवन्ति युगसहस्रकोट्यन्तरिता अपि संसारिणो जन्तोर्या पुरा भाविता वासना सा न नश्यतीत्यर्थः ॥ यथा प्रज्ञं हि संभवा इति श्रुत्यन्तरात्ताः प्रजा यस्मिन्प्रविश्य पुनराविर्भवन्ति ये त्वितोऽन्ये सत्सत्यात्माभिसंधाय मणुभावं ((

पि सुषुप्त्यादौ जाड्यास्कंदिततया रसतुल्यत्वात्तेषां विवेकानर्हावस्थामात्रं प्रकृतमुदाहरणमविरुद्धमिति भावः ॥ सता संपन्नानामपि पुनरुत्थाने मुक्तानामपि तत्स्यादित्याशंक्याह ॥ संसारिण इति ॥ स य एषोऽणिमेत्याद्यवतारयति ॥ ताः प्रजा इति ॥ सद्विज्ञानरहितेभ्यः सकाशादिति प्रतिपाद्य म

न्तच्छब्दो व्याहर्त्तव्यः प्रश्नांतरं दृष्टांतबलादुत्थापयति॥ यथेति॥ सतोहमागतोस्मीत्युत्थितस्य ज्ञानाभावं दृष्टांतेनोपपादयितुमुत्तरग्रं

सदात्मानं प्रविश्य नावर्त्तेते॥ सएषोणिमेत्यादि व्याख्यातं॥ यथा लोके स्वकीये गृहे सुप्त उत्थाय ग्रामांतरं गतो जानाति स्व-
गृहादागतोस्मीत्येवं सत आगतोस्मीति च जंतूनां कस्माद्विज्ञानं न भवतीति भूय एव मा भगवान् विज्ञापयत्वित्युक्तस्त-
थास्तु सोम्येति होवाच पिता॥१॥ शृणु तत्र दृष्टांतं यथा सोम्य मा नद्यो गंगाद्याः पुरस्तात्पूर्वां दिशं प्रति प्राच्यः प्रागंचनाः स्यंदंते
स्रवंति पश्चात्प्रतीचीं दिशं प्रति सिंध्वाद्याः प्रतीचीमंचंति गच्छंतीति प्रतीच्यः ताः समुद्रादंभोनिधेर्जलधरैराक्षिप्ताः पुनर्वृ-
ष्टिरूपेण पतिता गंगादिनदीरूपिण्यः पुनः समुद्रमंभोनिधिमेवापियंति स समुद्र एव भवति ता नद्यो यथा तत्र समुद्रे समुद्रा-

स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच॥१॥ इमाः सोम्य न-
द्यः पुरस्तात्प्राच्यः स्यंदंते पश्चात्प्रतीच्यस्ताः समुद्रात्समुद्रमेवापियंति स समुद्र एव भवति ता यथा तत्र न विदुरि-
यमहमस्मीयमहमस्मीत्येवमेव खलु सोम्येमाः सर्वाः प्रजाः सत आगम्य न विदुः सत आगच्छामह इति त इह-
व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतंगो वा दंशो वा मशको वा यद्यद्भवंति(( त्मनैकतां गता न विदु-

नैजानंति इयं गंगाहमस्मि इयं यमुनाहमस्मीति इयमस्म्यहमस्मीति चैवमेव खलु सोम्येमाः सर्वाः प्रजा यस्मात्सति संप-
द्य न विदुः तस्मात्सत आगम्य न विदुः सत आगच्छामहे आगता इति वा त इह व्याघ्र इत्यादि समानमन्यत्॥ दृष्टं लोके जल-
वीचीतरंगफेनबुद्बुदादयउत्थिताः पुनस्तद्भावं गता विनष्टा इति जीवास्तु तत्कारणभावं प्रत्यहं गच्छंतोपि सुषुप्ते मरणप्र-

यमुत्थापयति॥ इत्युक्त इति॥१॥ आगमनावबोधपरिज्ञानं तत्रेत्युक्तं॥ प्रश्नांतरं व्याचष्टे॥ दृष्टमिति॥ विनष्टा इति॥ लोके दृष्टमिति संबं-
धः॥ जीवास्तु प्रत्यहं सुषुप्त्यवस्थायां मरणप्रलययोश्च कारणभावं गच्छंतोपि न विनश्यंतीति यदेतदिति योजना जीवविनाशं शंकमानस्य

॥तथेति॥ १०॥ जीवस्य नाशाभावं वक्तुमादौ दृष्टांतमाह ॥ शृण्विति॥ ननु रोगग्रस्तायां वातोपहतायां शाखायां प्राणोपसंहारेऽपि कुतो जी
वोपसंहारः संभवति तत्राह॥ वागिति॥ ननु वृक्षे जीवस्य सद्भावे तत्रोपसंहारानुपसंहारौ वक्तव्यौ न च तस्य सत्त्वं तु कुत इत्यत आह॥

तद्भूय एव मा भगवान्विज्ञापयत्विति दृष्टांतेन तथा सोम्येति होवाच पिता॥ १०॥ शृणु दृष्टांतमस्य हे सोम्य महतोऽनेकशाखा
दियुक्तस्य वृक्षस्य अस्येत्यग्रतः स्थितं वृक्षं दर्शयन्नाह॥ यदि कश्चिदस्य मूलेऽभ्याहन्यात्परश्वादिना सकृद्घातमात्रेण
शुष्यतीति जीवन्नेव भवति॥ तदा तस्य रसः स्रवेत्तथा यो मध्येऽभ्याहन्याज्जीवन्स्रवेत्तथा योऽग्रेऽभ्याहन्याज्जीवन्स्रवेत्स एष
वृक्ष इदानीं जीवेनात्मनानुप्रभूतोऽनुव्याप्तः पेपीयमानोऽत्यर्थं पिबन्नुदकं भौमांश्च रसान्मूलैर्मोदमानो हर्षं प्राप्नुवंस्तिष्ठति

तदा भवंति स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञा
पयत्विति तथा सोम्येति होवाच॥ १०॥ अस्य सोम्य महतो वृक्षस्य यो मूलेऽभ्याहन्याज्जीवन्स्रवेद्यो मध्येऽभ्याहन्याज्जी
वन्स्रवेद्योऽग्रेऽभ्याहन्याज्जीवन्स्रवेत्स एष जीवेनात्मनानुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति॥ तस्यास्य यदेकां शा

खां रोगग्रस्तामाहतां वा जीवो जहात्युपसंहरति शाखायां विप्रसृतमात्मांशमथ सा शुष्यति॥ वाङ्मनःप्राणकरणग्रामानुप्र
विष्टो हि जीव इति तदुपसंहारे उपसंह्रियते जीवेन च प्राणयुक्तेनाशितं पीतं च रसतां गतं जीवच्छरीरं वृक्षं च वर्द्धयद्रसरूपेण
जीवस्य सद्भावे लिंगं भवत्यशितपीताभ्यां हि देहे जीवस्तिष्ठतीति चाशितपीते जीवकर्मानुसारिणी इति तस्यैकांगवैकल्यनि
मित्तं कर्म यदोपस्थितं भवति तदा जीव एकां शाखां जहाति शाखाया आत्मानमुपसंहरत्यथ तदा सा शाखा शुष्यति॥ जीव
स्थितिनिमित्तो रसो जीवकर्माक्षिप्तो जीवोपसंहारेन तिष्ठति रसापगमे च शाखा शोषमुपैति॥ जीवेन चेति॥ रसरूपेण वर्द्धयदि
ति संबंधः॥ वृक्षशरीरे जीवस्य सत्त्वेऽपि किमित्यसौ कदाचित्तदीयामेकां शाखां जहातीत्याशंक्याह॥ अशितेति॥ जीवोपसंहारे किमिति शा

जीवस्यस्थितिर्निमित्तंयस्येतिविग्रहस्तथाशाखायामुक्तप्रकारेणेतियावत्अनुवैशेषिकवैनाशिकाभ्यांस्थावराणांनिर्जीवत्वेनाचेतनत्वमुक्तं
तदेतन्निरस्तमित्याह॥वृक्षस्येति॥आदिशब्दोवृश्चिमोदादिसंग्रहार्थः॥सएषवृक्षोजीवेनात्मनानुप्रभूतइतिदृष्टान्तश्रुतिः॥श्रुतिदृष्टान्तेवि
वक्षितमंशमनूद्यदार्ष्टान्तिकमाह॥यद्येत्यादिना॥जीवस्यसुषुप्तेनाशाभावेहेत्वन्तरमाह॥कार्यशेषेचेति॥तस्मिन्स्तनिसुप्ताभूत्वापुनरुत्थितस्य

तथासर्वंवृक्षमेवयदाऽयंजहातितदासर्वोऽपिवृक्षःशुष्यतिवृक्षस्यरसस्रवणशोषणादिलिंगाज्जीववत्त्वंदृष्टान्तश्रुतेश्चचेतना
वन्तःस्थावराइतिबौद्धकाणादमतंअचेतनाःस्थावराइत्येतदसारमितिदर्शितंभवति॥यथास्मिन्वृक्षदृष्टान्तेदर्शितंजीवेनयु
क्तोवृक्षोऽशुष्कोरसपानादियुक्तोजीवतीत्युच्यतेतदपेतश्चम्रियतइत्युच्यते॥एवमेवखलुसोम्यविद्धीतिहोवाचजीवापेतंजी
वविप्रयुक्तंवावकिलेदंशरीरंम्रियतेनजीवोम्रियतइति॥कार्यशेषेचसुप्तोत्थितस्यममेदंकार्यशेषमपरिसमाप्तमितिस्मृत्वा

स्ययदेकांशाखांजीवोजहात्यथसाशुष्यतिद्वितीयांजहात्यथसाशुष्यतितृतीयांजहात्यथसाशुष्यतिसर्वंज
हातिसर्वःशुष्यत्येवमेवखलुसोम्यविद्धीतिहोवाचजीवापेतंवावकिलेदंम्रियतेनजीवोम्रियतइति॥सयएषोऽणिमै
तदात्म्यमिदंसर्वंतत्सत्यंसआत्मातत्त्वमसिश्वेतकेतोइतिभूयएवमाभगवान्विज्ञापयत्वितितथासोम्येतिहोवा

समापनदर्शनात्॥जातमात्राणांचजंतूनांस्तन्याभिलाषभयादिदर्शनाच्चातीतजन्मांतरानुभूतस्तनपानदुःखानुभवस्मृति
र्गम्यते॥अग्निहोत्रादीनांचवैदिकानांकर्मणामर्थवत्त्वान्नजीवोम्रियतइति॥सएषोऽणिमेत्यादिसमानं॥कथंपुनरिदमत्यंत

कार्यस्यशेषोऽस्तियस्मिन्कर्मणितदिदंममाऽसमाप्तमितिस्मृत्वातस्यसमापनदर्शनान्नस्वापेजीवोनश्यतीत्यर्थः॥मरणकालेतन्नाशाभा
वेहेत्वन्तरमाह॥जातमात्राणामिति॥आद्यश्चकारःसमुच्चयेद्वितीयोऽवधारणेजीवस्यमलयादावविनाशेकारणांतरमाह॥अग्निहोत्रादी
नामिति॥इतिशब्दोजीवस्यनित्यत्वोपसंहारार्थः॥यदुक्तंसन्मूलाःसोम्येत्यादितत्रचोदयति॥कथंपुनरिति॥ ॥ ७ ॥ ॥ः

सौम्येति

विलक्षणयोर्नैकार्यकारणत्वमिति शंकमानं प्रतिबोधयितुमुत्तरवाक्यमुपादत्ते॥११॥ स्थूलस्य कार्यस्य सूक्ष्मं मूलं कारणत्वमेतदित्युच्यते॥ अस्य सोम्य महतो वृक्षस्येति प्रक्रांतं दृष्टांतं परामृशति॥ अत इति॥ यमेतमणिमानं न पश्यसि तस्याणिम्नो बीजस्येति संबंधः॥ तथापीति॥ अत्यंताणुत्वाद्दृशिनेयीत्यर्थः॥ अत्यंतसूक्ष्माद्बीजादत्यंतस्थूलस्य वृक्षस्योत्पत्त्युपलंभात् इति शब्दार्थः॥ सन्मूलाः सोम्येत्यादिश्रुत्या

वज्जगदत्यंतसूक्ष्मात्सद्रूपान्नामरूपरहितात्सतो जायत इत्येतदृष्टांतेन भूय एव मा भगवान्विज्ञापयत्विति तथास्तु सो

म्येति होवाच पिता॥११॥ यद्येतत्प्रत्यक्षीकर्तुमिच्छसि ततोऽस्मान्महतो न्यग्रोधात्फलमेकमाहरेत्युक्तस्तथा चकार स इदं

भगवदुपहृतं फलमिति दर्शितवंतं प्रत्याह फलं भिंधीति भिन्नमित्याहेतरस्तमाह पिता किमत्र पश्यसीत्युक्त आहाण्व्योऽ

णुतरा इवेमा धाना बीजानि पश्यामि भगवन् इत्यासां धानानामेकां धानामंग हे वत्स भिंधीत्युक्त आह भिन्ना भगवन् इति॥ यदि

न्यग्रोधफलमत आहरेतीदं भगव इति भिंधीति भिन्नं भगव इति किमत्र पश्यसीत्यण्व्य इवेमा धाना भगव इ

त्यासामंगैकां भिंधीति भिन्ना भगव इति किमत्र पश्यसीति न किंचन भगव इति तं होवाच यं वै सोम्यैतमणिमानं

न निभालयसे एतस्य वै सोम्यैषोऽणिम्न एवं महान्न्यग्रोधस्तिष्ठति॥ भिन्नायां धानायां तस्यां भिन्नायां किं पश्यसीत्युक्त आ

ह न किंचन पश्यामि भगवन् इति तं पुत्रं होवाच॥ वटधानायां भिन्नायां वटबीजाणिमानं हे सोम्यैतं न निभालयसे न पश्य

सि॥ तथाप्येतस्य वै किल सोम्यैष महान्न्यग्रोधो बीजस्याणिम्नः सूक्ष्मस्यादृश्यमानस्य कार्यभूतः स्थूलः शाखास्कंधफ

लपलाशवान्तिष्ठत्युत्पन्नः सन्नु तिष्ठतीति वोच्छेद्यो ध्याहार्यो तः श्रद्धत्स्व सोम्य सत एवाणिम्नः स्थूलं नामरूपादिमत्कार्यं

जगदुत्पन्नमिति॥ यद्यपि न्यायागमाभ्यां निर्धारितोऽर्थस्तथैवेत्यवगम्यते॥ तथाप्य ॥ दृश्यते त्विति न्यायेन च जगतः सत्कार्यत्वे

सिद्धे श्रद्धामंतरेणापि तन्निर्णयसंभवात्किमिति श्वेतकेतुः श्रद्धत्स्वेति पित्रा नियुज्यते नेत्याह॥ तथापीति सत्यामपि श्रद्धायां कथं वा स्यावि

॥श्रद्धायां त्विति॥ मनःसमाधानवशाद्बुभुत्सितस्यार्थस्यावगतिरित्यत्र बृहदारण्यकश्रुतिं संवादयति॥ अन्यत्रेति॥ प्रत्यक्षतोऽनुपल-
भ्यमानत्वान्नास्तीति मन्वानः शंकते॥ यदीति॥ अनुपलभ्यमानस्यापि सत्त्वमाशंक्याह॥ इन्येनदृष्टेति॥ अप्रत्यक्षस्यापि जगन्मूलस्यास्तित्वप्र-
तिपादयितुमुत्तरग्रंथमवतारयति॥ नश्येति॥ १२॥ नोपलभ्यते स्वेन प्रकारेणेति शेषः॥ इदानीमसमर्थं प्रत्यक्षीकर्तुं यदीच्छसि तर्हि दृष्टांतमत्र॥ अ-

त्यंतसूक्ष्मेऽप्यर्थे बुद्ध्वा बाह्यविषयासक्तमनसः स्वभावप्रवृत्तस्यासत्यां गुरुतरायां श्रद्धायां दुरवगमत्वं स्यादित्याह श्रद्धत्स्वे-
ति॥ श्रद्धायां तु सत्यां मनसः समाधानं बुभुत्सितेऽर्थे भवेत् ततश्च तदर्थावगतिरन्यत्रमना अभूवमित्यादिश्रुतेः॥ स य इत्युक्ता-
र्थं यदि तत्सज्जगतो मूलं कस्मान्नोपलभ्यत इत्येतत् दृष्टांतेन मा भगवान्भूय एव विज्ञापयत्विति॥ तथा सोम्येति होवाच पि-
ता॥ १२॥ विद्यमानमपि वस्तु नोपलभ्यते प्रकारांतरेण तूपलभ्यत इति शृणु अत्र दृष्टांतं यदि चेममर्थं प्रत्यक्षीकर्तुमि-

श्रद्धत्स्व सोम्येति स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भ-
गवान्विज्ञापयत्विति तथा सोम्येति होवाच॥ १३॥ लवणमेतदुदकेऽवधायाथ मा प्रातरुपसीदथा इति स ह तथा
((चकार तं ह

च्छसि पिंडरूपं लवणमेतदुदकेऽवधाय प्रक्षिप्याथ मा मां श्वः प्रातरुपसीदथा उपगच्छेथा
इति स ह पित्रोक्तमर्थं प्रत्यक्षीकर्तुमिच्छन् तथा चकार तं होवाच परेद्युः प्रातः यल्लवणं दोषा रात्रौ उदकेऽवधा निक्षिप्त-
वानसि॥ अंग हे वत्स तदाहरेत्युक्तस्तल्लवणमाजिहीर्षुर्ह किलावमृश्योदके न विवेद न विज्ञातवान् यथा तल्लवणं विद्य-
((मानमपि सद
पिवतियोजना॥ रात्रेरत्ययानंतर्यमथशब्दार्थः जगन्मूले स्वतोऽप्रत्यक्षमपि प्रत्यक्षमुपायांतरेणेति पित्रोक्तो-
ऽर्थस्तं प्रत्यक्षीचिकीर्षुर्घटादावुदके पिंडरूपं लवणं रात्रौ प्रक्षिप्य तदत्ययानंतरं प्रातःकाले पितुः समीपं श्वेतकेतुर्गतवानित्याह॥ स
हेति॥ यथा तत् पिंडरूपं लवणं प्रक्षेपात्प्रागभूत् तथा न विज्ञातवानिति संबंधः॥ उदके प्रक्षिप्तं लवणं विमृश्याथ न ज्ञायते चेत् सदेव तर्हि

कथंन हि तस्य विद्यमानत्वमवगंतंतत्राह ॥ यथेति ॥ यद्यपि पिंडरूपं लवणमुदके क्षिप्तमवमृश्यापि चक्षुःस्पर्शनाभ्यांनान्वं नेत्यन तथापि तत्त
त्र विद्यत एव यतस्ताभ्यामगृह्यमाणमपि तत्रोपायांतरेणोपलभ्यत इत्येतमर्थं पुत्रं प्रत्याययितुमुत्तरवाक्यमित्यर्थः ॥ यथाशब्दो यद्यपीत्य
र्थे तदित्यादि व्याचष्टे ॥ लवणमिति ॥ संवर्तत इतीदं वचनं ब्रुवन्नेवाजगामेति संबंधः ॥ दृष्टांतमनूद्य दार्ष्टांतिकमाह ॥ इत्येवमुक्तवंतमित्या

यथा विलीनं लवणं न वेत्थ न तथापि तच्चक्षुषा स्पर्शनेन च पिंडरूपं लवणमगृह्यमाणं विद्यत एवोपलभ्यते चोपायांतरेणे
त्येतत्पुत्रं प्रत्याययितुमिच्छन्नाहांगास्योदकस्यांतादुपरि गृहीत्वाचामेत्युक्त्वा पुत्रं तथा कृतवंतमुवाच ॥ कथमिति तर आह ॥ ल
वणं स्वादुत इति तथा मध्यादुदकस्य गृहीत्वाचामेति कथमिति लवणमिति तथांतादधोदेशाद्गृहीत्वाचामेति कथमिति लव
णमिति ॥ यद्येवमभिप्रास्य परित्यज्यैतदुदकमाचम्याथ मोपसीदथा इति तद्ध तथा चकार लवणं परित्यज्य पितृसमीपमाज
गामेत्यर्थः इदं वचनं ब्रुवन् तल्लवणं तस्मिन्नेवोदके यन्मया रात्रौ क्षिप्तं शश्वन्नित्यं संवर्तते विद्यमानमेव सत् सम्यग्वर्तते इत्ये

होवाच यद्दोषा लवणमुदकेऽवाधा अंग तदाहरेति तद्धावमृश्य न विवेद ॥ यथा विलीनमेवांगास्यांतादाचामेति क
थमिति लवणमिति मध्यादाचामेति कथमिति लवणमित्यंतादाचामेति कथमिति लवणमित्यभिप्रास्यैतदथ मो

वमुक्तवंतं होवाच पिता यथेदं लवणं दर्शनस्पर्शनाभ्यां पूर्वं गृहीतं पुनरुदके विलीनं ताभ्यामगृह्यमा ॥ पसीदथा इ
णमपि विद्यत एवोपायांतरेण जिह्वयोपलभ्यमानत्वादेवमेवात्र वावास्मिन्नेव तेजोबन्नादिकार्यशुंगे देहे वाव किलेत्याचा
र्योपदेशस्मरणप्रदर्शनार्थौ सत्तेजोबन्नादिशुंगकारणं वटबीजाणिमवद्विद्यमानमेवेन्द्रियैर्नोपलभसे न निभालयसे यथात्रै
वोदके दर्शनस्पर्शनाभ्यामनुपलभ्यमानं लवणं विद्यमानमेव जिह्वयोपलब्धवानसि एवमेवात्रैव किल विद्यमानं सज्जगन्मू

दिना सतो जगन्मूलस्यास्मिन्देहे सत्त्वं त्वया कथमवगतमत आहोवाचेति ॥ अत्र वावेत्यादिनात्रैव किलेत्यस्य पौनरुक्त्यमाशंक्यार्थविशेषं

उपायांतरं जिज्ञासया पृच्छति॥ यद्येवमिति॥ नहि तदित्यध्याहृत्य नेत्यादिना संबंधः सतो मूलस्योपलंभेनुपलंभे वा किं स्यादित्याशंक्याह
॥यदुपलंभादिति॥ बुभुत्सितमुपायमुपदर्शयितुमुत्तरग्रंथमुपादत्ते॥ तथेति॥१॥ यथा यमुपायः शक्यो ज्ञातुं तथा लोके प्रदर्श्येन दृष्टांतद्
त्याह॥ यथेति॥ तमेव दृष्टांतं व्याचष्टे हे सोम्येति॥ यथा दिग्भ्रमोपेतो यत्किंचिद्दिगभिमुखो विक्रोशति तथा स तत्र विजने देशे शब्दं कुर्या



मवद्धुपलप्स्यसे इति वाक्यशेषः स यदित्यादि समानं॥ यद्येवं लवणमिव चक्षुरादिभिरनुपलभ्यमानमपि जगन्मूलं सदुपा
यांतरेणोपलब्धुं शक्यते॥ यदुपलंभात्कृतार्थः स्यामनुपलंभाच्चाकृतार्थः स्यामहं तस्यैवोपलब्धौ क उपाय इत्येतद्भूय एव मा
भगवान्विज्ञापयतु दृष्टांतेनेति तथा सोम्येति होवाच पिता॥१॥ यथा लोके हे सोम्य पुरुषं यं कंचिद्गंधारेभ्यो जनपदेभ्योऽभिनद्धा
क्षं बद्धचक्षुषमानीय यथा तस्करस्तमभिनद्धाक्षमेव बद्धहस्तमरण्ये ततोऽप्यतिजनेऽतिगतजने त्वन विगतजने देशे विसृजेत्॥
स तत्र दिग्भ्रमोपेतो यथा प्राङ्वा प्रागंचनः प्राङ्मुखो वेत्यर्थः॥ तथोदङ्वाधराङ्वा प्रत्यङ्वा प्राध्मायीत शब्दं कुर्याद्विक्रोशेदभि

तद्ध तथा चकार तच्छश्वत्संवर्तते तं होवाचात्र वाव किल सत्सोम्य न निभालयसेऽत्रैव किलेति स य एषोऽणिमैतदा
त्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच॥३॥
((यथा सोम्य पुरुषं गंधारेभ्योऽभिनद्धा

नद्धाक्षोऽहं गंधारेभ्यस्तस्करेणानीतोऽभिनद्धाक्ष एव विसृष्ट इत्येवं विक्रोशतस्तस्य यथा
भिनहनं यथा बंधनं प्रमुच्य मुक्त्वा कारुणिकः कश्चिदेतां दिशं गंधारा एतां दिशं व्रजेति प्रब्रूयात्स एवं कारुणिकेन बंधान्मो
क्षितो ग्रामाद्ग्रामांतरं पृच्छन्पंडित उपदेशवान्मेधावी परोपदिष्टग्रामप्रवेशमार्गावधारणसमर्थः सन्गंधारानेवोपसंपद्येत:
((नेतरो मूढमति

दिति संबंधः॥ प्राङित्यस्यार्थमाह॥ प्रागंचन इति॥ तस्यैव विवक्षितमर्थं कथयति॥ प्राङ्मुख इति॥ वक्ष्यमाणप्रकारेण विक
ल्पार्थो वाशब्दः यथा बंधनमनुसृत्येति यावत्पंडितो मेधावीति विशेषणद्वयस्य व्यवच्छेद्यं दर्शयति॥ नेतर इति॥ व्याख्यातं दृष्टांतं सोपस्करमनुवद

दार्ष्टांतिकं व्याचष्टे ॥ एवमिति ॥ आदिशब्देनवाक्यांशो गृह्यते ॥ मयड्विकारार्थः ॥ देहारण्यस्यानेकानर्थसंकटत्वं कथयति ॥ वातेति ॥ शीतोष्णा
दीत्यादिपदेनरागद्वेषादिद्वंद्वं गृहीतं तेनानेकेनद्वंद्वेनजातंसुखदुःखंचतदुपेतमिदंदेहारण्यमित्यनेनद्वंद्वव्याघ्रीत्यादिशब्दोमित्रस्नेहादिविषयः
॥ पुण्यापुण्यादीत्यादिपदं अविद्याकामवासनासंग्रहार्थं देहारण्यंप्रविष्टस्यजंतोर्विक्रोशनप्रकारंसकारणंसूचयति ॥ अहमित्यादिनातन ।
स्यसदादुःखित्वशंकांवारयति ॥ कथंचिदिति ॥ आपाततोब्रह्मवित्त्वमात्रेणमुक्तबंधनत्वासिद्धिंविशिनष्टि ॥ ब्रह्मिष्ठमिति ॥ यदासारयति

दृष्टांतोवर्णितः स्वविषयेभ्योगंधारेभ्यः पुरुषस्तस्करैरभिनद्धाक्षोऽविवेकोदिङ्मूढोऽशनायापिपासादिमान्व्याघ्रतस्कराद्य
नेकभयानर्थव्रातयुतमरण्यंप्रवेशितोदुःखार्तोविक्रोशन्बंधनेभ्योमुमुक्षुस्तिष्ठति ॥ कथंचिदेवकारुणिकेनकेनचिन्मो
क्षितः स्वदेशान्गांधारानेवापन्नोनिर्वृतः सुख्यभूत् ॥ एवमेवसतोजगदात्मनः स्वरूपात्तेजोवन्नादिमयंदेहारण्यंवातपित्तकफ
रुधिरमेदोमांसास्थिमज्जाशुक्रकृमिमूत्रपुरीषवच्छीतोष्णाद्यनेकद्वंद्वदुःखवच्चेदंमोहपटादिपिनद्धाक्षोभार्यापुत्रमित्रपशु

तंततोऽतिजनेविसृजेत्सयथातत्रप्राङ्वोदङ्वाधराङ्वाप्रत्यङ्वाप्रध्मायीताभिनद्धाक्षआनीतोभिनद्धाक्षोविसृष्ट
स्तस्ययथाभिनहनंप्रमुच्यप्रब्रूयादेतां दिशंगंधाराएतांदिशंव्रजेतिसग्रामाद्ग्रामंपृच्छन्पंडितोमेधावीगंधारानेवोपसंपद्येत

बंध्वादिदृष्टादृष्टानेकविषयतृष्णापाशितः पुण्यापुण्यादितस्करैः प्रवेशितोऽहममुष्यपुत्रोममैतेबांधवाः
सुख्यहंदुःखीमूढः पंडितोधार्मिकोबंधुमान्जातोजीर्णः पापीपुत्रोमेमृतोधनंमेनष्टंहाहतोऽस्मिकथंजीविष्यामिकामेगतिः
किंमेत्राणमित्येवमनेकशतसहस्रानर्थजालवान्विक्रोशन्कथंचिदेवपुण्यातिशयात्परमकारुणिकंकंचित्सद्ब्रह्मात्मवि
दं विमुक्तबंधनंब्रह्मिष्ठंयदासादयतितेनब्रा

नदासुखीस्यादितिउत्तरत्रसंबंधः ॥ संसारविषयदोषदर्शनेनतस्यलिप्सुत्वादिज्ञानं
नस्यमार्गोविवेकः सयस्याचार्येणदर्शितः विद्यातः संदर्शितसंसारविषयदोषदर्शनमार्गः ॥ आचार्येणसाधनचतुष्टयसंपन्नस्याधिकारिणः

संसारान्मोक्षितत्वप्रकारं दर्शयति॥नासीति॥यद्यपि वाक्यार्थज्ञाने वाक्यमेवोपायस्तथाप्याचार्योपदेशजनितातिशयदर्शनात्तदुपदेशो॥
वगत्यंतवाक्यार्थज्ञाने प्रथमोहेतुरुपदेशमात्राद्यस्यनावगत्यंतवाक्यार्थधीस्तस्यप्रमाणाद्यसंभावनानिरसनसमर्थो विचारोमेधावीश
ब्देनविहितस्तस्यप्रज्ञातिशयवदितिप्रयोगादितिभावः॥पुरुषव्यत्ययेहेतुमाह॥सामर्थ्यादिति॥अस्मद्युपपदेःस्त्युत्तमपुरुषप्रयोग

विषयदोषदर्शनमार्गोविरक्तःसंसारविषयेभ्यः नासित्वंसंसारीत्रपुष्यपुत्रादिधर्मवान् किंतर्हि सद्यत्तत्त्वमसीत्यविद्या
मोहपटोऽभिनहनान्मोक्षितोगंधारपुरुषवच्चस्वंसदात्मानमुपसंपद्यसुखीनिर्वृतःस्यादिति॥एतमेवार्थमाहाचार्यवा
न्पुरुषोवेदेतितस्यास्यैवमाचार्यवतोमुक्ताविद्याभिनहनस्यतावदेवतावानेवकालक्षिप्रं क्षेपःसदात्मस्वरूपसंपत्तेरितिवा
क्यशेषः॥कियान्कालक्षिप्रमित्युच्यते॥यावन्नविमोक्ष्येनविमोक्ष्यतइत्येतत्पुरुषव्यत्ययेनसामर्थ्याद्येनकर्मणाशरीरमा

वमेवेहाचार्यवान्पुरुषोवेदतस्यतावदेवचिरंयावन्नविमोक्ष्येऽथसंपत्स्यइति॥

रब्धंतस्योपभोगेनक्षयादेहपातोयावदित्यर्थः॥अथतदैवसत्संपत्स्येसंपत्स्यतइतिपूर्ववन्नहिदेहमोक्षस्यसत्संपत्तेश्चका
लभेदोस्ति॥येनाथशब्दआनंतर्यार्थःस्यात्॥ननुयथासहिज्ञानानंतरमेवदेहपातःसत्संपत्तिश्चनभवतिकर्मशेषवशात्त
थाऽप्रवृत्तफलानिप्राग्ज्ञानोत्पत्तेर्जन्मांतरसंचितान्यपिकर्माणिसंतीतितत्फलोपभोगार्थंपतितेऽस्मिन्शरीरेशरीरांतरमा
रब्धव्यं॥उत्पन्नेचज्ञानेयावज्जीवविहितानिप्रतिषिद्धानिवाकर्माणिकरोत्येवेतितत्फलोपभोगार्थंचावश्यंशरीरांतरमा
रब्धव्यंततश्चकर्माणिततःशरीरांतरमितिज्ञानानर्थक्यंकर्मणांफलवत्त्वादप्रवृत्तफलानिकर्माणि॥ नुपपत्तेर्देहादिस्थित्यनुप

पत्तेरेवेत्यर्थः॥यावदित्यादिवाक्यार्थंस्पष्टयति॥येनेति॥पूर्ववदिति सामर्थ्यात्पुरुषव्यत्ययंलक्षयति॥अथशब्दस्यसत्संपत्तेर्देहमोक्षादा
नंतर्यमर्थोभविष्यतीत्याशंक्याह॥नहीति॥अथसंपत्स्यतइतिविदेहमुक्तिमाक्षिपति॥नन्विति॥अप्रवृत्तफलानीतिच्छेदः॥उत्पन्नेचेति

क्षीयंते कर्मत्वात्प्रवृत्तफलकर्मवदित्यर्थः ॥ क्षीयंते चास्य कर्माणि ज्ञानाग्निः सर्वकर्माणीत्यादिश्रुतिस्मृतिविरोधात्कालात्ययापदिष्ट-
तेति शंकते ॥ अथेति ॥ अतिप्रसंगान्न श्रुतिस्मृत्योर्यथाश्रुतार्थतेति परिहरति ॥ तदेति ॥ ज्ञानस्यानर्थक्यमुक्त्वा पक्षांतरमाह ॥ देशांतरेति
॥ यथा ग्रामप्राप्त्युपायो ऽश्वारोहो वेति ज्ञाने सति असत्यंतराये कस्य चिदेव ग्रामप्राप्तिर्भवति न त्वंतराये सत्यज्ञानेपि न तत्प्राप्तिस्तथा सत्यप्यव
ज्ञानस्यापि कस्य चिदेव भोगेन क्षीणकर्माशयस्य मोक्षो न ज्ञानमात्रादित्यनियतफलत्वमित्यर्थः ॥ कर्मत्वहेतोरप्रयोजकत्वं वदन्सूत्र-
माह ॥ न कर्मणामिति ॥ संग्रहवाक्यमेव प्रपंचयन्नादौ नेत्यर्थं स्फुटयति ॥ यदुक्तमिति ॥ तत्र हेतुमाह ॥ विदुष इति ॥ प्रामाण्याद्देहांतरारंभेत-
द्विरोधप्रसंगादिति शेषः ॥ श्रुत्यंतरमाश्रित्य शंकते ॥ नन्विति ॥ तथा चानारब्धकर्मवशाद्विदुषोपि देहांतरमारब्धव्यमिति शेषः ॥ तत्प्रामा-

ब्रह्मज्ञानेन क्षीयंते कर्मत्वात्प्रवृत्तफलकर्मवदित्युक्तं तत्र ज्ञानाग्निः सर्वकर्माणीति स्मृतिविरोधः ॥ अथ ज्ञानव-
तः क्षीयंते कर्माणि ॥ तदा ज्ञानप्राप्तिसमकालमेव ज्ञानस्य सत्त्वसंपत्तिहेतुत्वान्मोक्षः स्यादिति शरीरपातः स्यात्तथा चा-
चार्याभावस्त्याचार्यवान्पुरुषो वेदेत्यनुपपत्तिर्ज्ञानान्मोक्षाभावप्रसंगश्च देशांतरप्राप्त्युपायवदनैकांतिकफलत्वं वा
ज्ञानस्य ॥ न कर्मणां प्रवृत्ताप्रवृत्तफलवत्त्वविशेषोपपत्तेः ॥ यदुक्तमप्रवृत्तफलानां कर्मणां ध्रुवफलवत्त्वाद्ब्रह्मविदः श-
रीरपतिते शरीरांतरमारब्धव्यमप्रवृत्तकर्मफलोपभोगार्थमित्येतदसद्विदुषस्तस्य तावदेव चिरमिति श्रुतेः प्रामाण्या-
त् ॥ ननु पुण्यो वै पुण्येन कर्मणा भवतीत्यादिश्रुतेरपि प्रामाण्यमेव सत्यमेवं ॥ तथापि प्रवृत्तफलानामप्रवृत्तफलानां च
कर्मणां विशेषोऽस्ति कथं यानि प्रवृत्तफलानि कर्माणि यैर्विद्वच्छरीरमारब्धं तेषामुपभोगेनैव क्षयो यथारब्धवेगस्य ल-
क्ष्यमुक्तेष्वादेर्वेगक्षयादेव स्थितिर्नै

ण्यमंगीकरोति ॥ सत्यमेवमिति ॥ तर्हि विदुषो देहांतरमनारब्धकर्मवशादारब्धव्यमनेत्या
ह ॥ तथापीति ॥ विशेषमेवाकांक्षाद्वारा विशदयति ॥ कथमित्यादिना ॥ प्रवृत्तफलत्वमेव स्फुटयति ॥ यैरिति ॥ उक्तमर्थं दृष्टांतेन स्पष्टय-
ति ॥ यथेति ॥ लक्ष्यस्य व्याधो भेदनं तत्समकालमिष्वादेरूर्ध्वगतिप्रयोजनं नास्तीति न स्थितिर्लक्ष्यमुद्दिश्य मुक्तस्य तत्सारब्धवेगस्य प्र

छां॰भा॰ २८

देहे विद्यालाभानंतरंफलंनास्तीतिनकर्माणिनिवर्तंतेनेकिंतुभोगस्यावश्यत्वात्तस्यफलस्यअश्वत्थइत्यादिन्यायेनअप्रवृत्तफलेभ्यःप्रवृत्तफलानांकर्मणांविशेषमाह॥यानित्विति॥नचाप्रवृत्तफलानांकर्मणांक्षयोऽप्रसिद्धस्तथाविधस्यैवप्रायश्चित्तेनापक्षयोपगमादित्याह॥प्रायश्चित्तेनेति॥आरब्धफलातिरिक्तानांकर्मणांज्ञानान्निवृत्तोऽस्तुतिस्मृतीदर्शयति॥ज्ञानाग्निरित्यादिना॥अप्रवृत्ताप्रवृत्तफलयुक्कर्मसुसिद्धविशेषंफलितमाह॥अनइति॥जीवितादीन्यादिशब्देनपुत्रकलत्रादिगृह्यते॥मुक्तस्याप्रतिबंधेनादेर्यावद्देहस्थितिशेषप्रवदारब्ध

समकालमेवप्रयोजनंनास्तीतितद्ध्यानित्वप्रवृत्तफलानीहप्राक्ज्ञानोत्पत्तेरूर्ध्वंचकृतानिवाक्रियमाणानिवातीतजन्मांतरकृतानिवाऽप्रवृत्तफलानिज्ञानेनदह्यंतेप्रायश्चित्तेनेवज्ञानाग्निःसर्वकर्माणिभस्मसात्कुरुतेतथेतिस्मृतेश्चक्षीयंतेचास्यकर्माणिइतिचाथर्वणे॥अतोब्रह्मविदोजीवितादिप्रयोजनाभावेपिप्रवृत्तफलानांकर्मणामवश्यमेवफलो

सयएषोऽणिमैतदात्म्यमिदꣳसर्वंतत्सत्यꣳसआत्मातत्त्वमसिश्वेतकेतोइतिभूयएवमाभगवान्विज्ञापयत्विति
तथासोम्येतिहोवाच॥१७॥पुरुषꣳसोम्योपतापिनंज्ञातयःपर्युपासतेजानासिमांजानासिमामितितस्ययावन्न

पभोगःस्यादितिमुक्तेषुवत्तस्यतावदेवचिरमितियुक्तमेवोक्तमितियथोक्तदोषचोदनानुपपत्तिर्ज्ञानोत्पत्तेरूर्ध्वंचब्रह्मविदःकर्माभावमवोचामब्रह्मसंस्थोऽमृतत्वमेतीत्यत्रनचस्मर्तुमर्हसि॥सयइत्याद्युक्तार्थंयआचार्यवान्विद्वान्येनक्रमेणसंपद्यते॥तंक्रमंदृष्टांतेनभूयएवमाभगवान्विज्ञापयत्विति॥ १॥ २॥ ३॥

कर्मणांफलभोगोवश्यमेवस्यादितिसंबंधः॥यत्तुआरब्धकर्मणांभोगादेवक्षयस्ततस्तस्येत्यादिनायच्चिरत्वंसंपत्तेरुक्तंतद्युक्तमेवेतिकृत्वायथोक्तस्यदोषस्यसद्यःशरीरपातादिविलक्षणस्याशंकानुपपत्तिरित्युपसंहरति॥इतीति॥आद्यस्मृतिशब्दस्यतस्येत्यनेनसंबंधः॥यत्तूत्पन्नेपिज्ञानेयावज्जीवंविहितानिकरोत्येवेतितत्राह॥ज्ञानोत्पत्तेरिति॥ज्ञानस्यनानर्थक्यमविद्यातत्कार्यनिवर्तनेनसत्संपत्तिहेतुत्वान्नाप्यनैकांतिकफलत्वमंतरायाभावादित्युक्तमिदानीमर्चिरा

दिमार्गमाप्याचामेवाविद्यानिवृत्तिमात्रेणवासंपत्तिरितिसंदिहानःशंकते॥आचार्यवानिति॥

ग्रं॰ २८

संशयानस्य संबोधनार्थं उत्तरं वाक्यमवतारयति॥ तथेति॥ १५॥ नन्वेषः संसारिणो मरणक्रमो न तु विदुषः सत्संपत्तिक्रमस्तयोर्विशेष
स्य वक्तव्यत्वादित आह॥ संसारिण इति॥ करणोपरमे तेजः सहचरितभूतसूक्ष्मोपसंहारे च विशेषविज्ञानाभावः समान एव विद्वदविदुषो
रित्यर्थः॥ कस्तर्हि तयोर्विशेषस्तत्राह॥ अविद्वानिति॥ ततस्तस्मादज्ञानात्सदात्मनः सकाशादितियावत्॥ एकदेशिमतमनुत्थाप्य मतमाचष्टे॥

तथा सोम्येति होवाच॥ १५॥ पुरुषं हे सोम्योपतापिनं ज्वराद्युपतापवन्तं ज्ञातयो बान्धवाः परिवार्योपासते मुमूर्षुं जाना
सि मां तव पितरं पुत्रं भ्रातरं चेति पृच्छन्तस्तस्य मुमूर्षोर्यावन्न वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां दे
वतायामित्येतदुक्तार्थं संसारिणो यो मरणक्रमः स एवायं विदुषोऽपि सत्संपत्तिक्रम इत्येतदाह परस्यां देवतायां तेजसि संप
न्नेऽथ न जानाति॥ अविद्वांस्तु तत उत्थाय प्राग्भावितं व्याघ्रादिभावं देवमनुष्यादिभावं वा विशति॥ विद्वांस्तु शास्त्राचार्योप

वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायां तावज्जानात्यथ यदास्य वाङ्मनसि संपद्यते म
नः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायामथ न जानाति॥ २॥

देशजनितज्ञानदीपप्रकाशितं सद्ब्रह्मात्मानं प्रविश्य ना
वर्तत इत्येष सत्संपत्तिक्रमः॥ अन्ये तु मूर्द्धन्यया नाड्योत्क्रम्यादित्यादिद्वारेण सद्गच्छन्तीत्याहुस्तदसद्देशकालनिमित्तफ
लाभिसंधानेन गमनदर्शनात्न हि सदात्मैकत्वदर्शिनः सत्याभिसंधस्य देशकालनिमित्तफलाद्यनृताभिसंधिरुपपद्यते
विरोधाद्विद्याकामकर्मणां च गमननिमित्तानां सद्विज्ञानहुताशनविप्लुष्टत्वाद्गमनानुपपत्तिरेव पर्याप्तकामस्य कृतात्म
नस्त्विहैव सर्वे प्रविलीयन्ति का

अन्ये त्विति॥ भवतु विदुषोऽपि तदभिसंधिपूर्वकं गमनमित्याशंक्याह॥ न हीति॥ आदिशब्देन गन्ता
गतिश्च गृह्यते॥ सद्विज्ञानवतो गमनायोगे हेत्वन्तरमाह॥ अविद्येति॥ विदुषोऽविद्याकामकर्मणामभावे प्रमाणमाह॥ पर्याप्तकामस्येति॥
ननु कामप्रविलय एवात्र श्रूयते नाविद्याकर्मनिर्मोकस्तत्राह॥ नदीति॥ यथा नद्यो गंगाद्या नामरूपे विहाय समुद्रं प्रविशन्ति तथा विद्वा

श्रुतेर्नामरूपबीजावस्थाविद्यापालयोगम्यते॥ नचाविद्याकामयोरभावे कर्मोपपत्तिस्तस्मान्न विदुषो गतिपूर्विका सत्संपत्तिरित्यर्थः॥ विमतः सत्संपन्नः पुनरावृत्तिमर्हति सत्संपन्नत्वान्मरणकाले सत्संपन्नवत् विमतो वा विशेषविज्ञानाभावो नात्यंतिको विदुषो विशेषविज्ञानाभावत्वान्मरणकालीनविशेषविज्ञानाभाववदित्यनुमानाद्विद्वदविदुषोरविशेषमन्वानः शंकते॥ यदीति॥ तत्रानृताभिसंधत्वतादृग

दृष्टांतश्रुतेश्च सयद्वत्यादि समानं॥ यदि म्रियतो मुमुक्षतश्च तुल्या सत्संपत्तिस्तत्र विद्वान्सत्संपन्नो नावर्तते आवर्तते त्वविद्वानित्यत्र कारणं दृष्टांतेन भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच॥१५॥ शृणु यथा सोम्य पुरुषं चौर्यकर्मणि संदिह्यमानं निग्रहाय परीक्षणाय वा नापि हस्तगृहीतं बद्धहस्तमानयंति राजपुरुषाः किंकृतवानयमिति पृष्टाश्चाहुरपहार्षीद्धनमस्यायमिति ते चाहुः किमपहरणमात्रेण बंधनमर्हति॥ अन्यथा दत्तेपि धने बंधनप्रसंगादित्युक्ताः पुनराहुः

स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच॥१५॥ पुरुषꣳ सोम्योत हस्तगृहीतमानयंत्यपहार्षीत्स्तेयमकार्षीत्परशुमस्मै तपतेति

स्तेयमकार्षीच्चौर्येण धनमपहार्षीदिति तेष्वेवं वदत्सु तु नरोऽपह्नुते नाहं तत्कर्तेति ते चाहुः संदिह्यमानास्तेयमकार्षीस्त्वमस्य धनस्येति तस्मिंश्चापह्नुववत्याहुः॥ परशुमस्मै तपतेति शोधयत्वात्मानमिति॥ स यदि तस्य स्तेन्यस्य कर्ता भवति बहिश्चापह्नुते स एवंभूतस्तत एवानृतमन्यथाभूतं संतमन्यथा आत्मानं कुरुते॥ तथानृताभिसंधोऽनृतेनात्मानमंतर्धाय व्यवहितं कृत्वा परशुं तप्तं मोहात्प्रतिगृह्णाति स दह्यतेऽथ हन्यते राजपुरुषैः स्वकृतेनानृताभिसंधिदोषेणाथ यदि तस्य कर्मणोऽकर्ता भ-

भिसंधिमत्त्विष्टत्वं चोपाधिरित्यनुमानद्वयं दूषयितुमुत्तरग्रंथमुत्थापयति॥ तथेति॥१५॥ परीक्षणाय परीक्षाद्वारेण रक्षणार्थमिति॥ यावत्परस्वग्रहणमात्रेण बंधने प्रतिग्रहीतुरपि बंधनप्रसंगान्न तन्मात्रं बंधनकारणमित्याह॥ अन्यथेति॥ तत एवानृताभिसंधत्वादे

स्तेन्यस्य कर्मणोऽकर्तृत्वादित्यर्थः॥ दृष्टांते विवक्षितमर्थमनुवदति॥ तथेति॥ तदनुवादपूर्वकं दार्ष्टांतिकमाह॥ स य इति॥ स य एषोऽणिमे-
त्यादि व्याख्यातं॥ ऐतदात्म्यमिति॥ त्वं तदसीति त्वमर्थोद्देशेन तदर्थभावो विधीयते तेन त्वमुद्देश्यस्य शरीरद्वयविशिष्टस्य विरोधादशरीरब्रह्म

स तथा स्तेन्याकर्ता तथात्मानमंतर्धाय परशुं प्रतिगृह्णाति॥ सत्याभिसंधः सन्न दह्यते सत्यव्यवधानादित्यस्मुच्यते च मृषाभि-
योक्तृभ्यः तप्तपरशुहस्ततलसंयोगस्य तुल्यत्वेपि स्तेयकर्त्रकर्त्रोरनृताभिसंधो दह्यते न तु सत्याभिसंधः॥ स यथा सत्या-
भिसंधस्तप्तपरशुग्रहणकर्मणि सत्यव्यवहितहस्ततलत्वान्न दाह्येत न दह्यते इत्येतदेवं सद्ब्रह्म सत्याभिसंधीनयोः शरी-
रपातकाले तुल्यायां सत्संपत्तौ विद्वान्सत्संपद्य न पुनर्व्याघ्रदेवादिदेहग्रहणायावर्तते॥ अविद्वांस्तु विकारानृताभिसंधः

स यदि तस्य कर्ता भवति तत एवानृतमात्मानं कुरुते सोऽनृताभिसंधोऽनृतेनात्मानमंतर्धाय परशुं तप्तं प्रतिगृ-
ह्णाति स दह्यतेऽथ हन्यतेऽथ यदि तस्याकर्ता भवति तत एव सत्यमात्मानं कुरुते स सत्याभिसंधः सत्येनात्मान-
मंतर्धाय परशुं तप्तं प्रतिगृह्णाति स न दह्यतेऽथ मुच्यते स यथा तत्र नादाह्येत॥ स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं

पुनर्व्याघ्रादिभावं देवतादिभावं वा यथाकर्म यथाश्रुतं प्रतिपद्यते॥ यदात्माभिसंध्यनभिसंधिकृते मोक्षबं-
धने यच्च मूलं जगतो यदायतनाः यत्प्रतिष्ठाश्च सर्वाः प्रजाः यदात्मकं च सर्वं यच्चाजममृतमभयं शिवमद्वितीयं तत्सत्यं स
आत्मा तत्त्वमसि हे श्वेतकेतो इत्युक्तार्थमसकृद्वाक्यं कः पुनरसौ श्वेतकेतुस्त्वंशब्दार्थो योऽहं श्वेतकेतुरुद्दालकस्य
पुत्र इति वेदात्मानमादेशं श्रुत्वा मत्वा विज्ञाय चाश्रुत

त्वमतं विधातुमशक्यमिति मन्वानश्चोदयति॥ कः पुनरिति॥ त्वंपदेन वा-
च्यस्य लक्ष्यस्य वा ब्रह्मत्वायोगस्तयोश्चांतेनाद्यः अंगीकारात्‌ न द्वितीयः शरीरद्वयवैशिष्ट्योपलक्षितस्य श्रोतृत्वाद्यध्यासास्पदस्य त्वंप-
दलक्ष्यस्य ब्रह्मत्वविधाने विरोधास्फुरणादिति परिहरति॥ योऽहमिति॥ अविज्ञाय च वेदेति पूर्वेण सह संबंधस्तस्य सतः सकाशादौपाधि

तेजोबन्नमयमिति ॥ त्वंपदार्थंश्वेतकेतुं निर्द्धार्य तद्धास्येत्यादि व्याचष्टे ॥ आत्मानमिति ॥ १६ ॥ अज्ञातार्थप्रकाशनं मानफलं तत्स्वप्रका-
शे ब्रह्मणि नोपपत्तिरिति मन्वानश्चोदयति ॥ किं पुनरिति ॥ अत्रात्मनीति संबंधः स्वप्रकाशे प्रकाशातिशयस्य मानफलस्यासंभवे प्यश्रुत
आवृत्तिस्तत्फलं भविष्यतीत्युत्तरमाह ॥ कर्तृत्वेति ॥ अश्रुतस्य श्रवणायामतस्य मननायाविज्ञातस्य विज्ञानफलसिद्धये चाधिकृतं यमर्थं

ममतममविज्ञातं विज्ञातुं पितरं पप्रच्छ कथं नु भगवः स आदेशो भवतीति स एषोऽधिकृतः श्रोता मन्ता विज्ञाता तेजोबन्नमयं का-
र्यकारणसंघातं प्रविष्टा परैव देवता नामरूपव्याकरणायादर्शे इव पुरुषः सूर्यादिरिव जलादौ प्रतिबिंबरूपेण स आत्मानं
कार्यकारणेभ्यः प्रविभक्तं सद्रूपं सर्वात्मानं प्राक् पितुः श्रवणान्न विजज्ञावथेदानीं पित्रा प्रतिबोधितस्तत्त्वमसीति दृष्टांतैर्हे-
तुभिश्च तत्पितुरस्य ह किलोक्तं सदेवाहमस्मीति विजज्ञौ विज्ञातवान् द्विर्वचनमध्यायपरिसमाप्त्यर्थं ॥ १६ ॥ किं पुनरत्र श

स आत्मा तत्त्वमसि श्वेतकेतो इति तद्धास्य विजज्ञाविति विजज्ञाविति ॥ १६ ॥ इति छांदोग्योपनिषद्ब्राह्मणे षष्ठः प्रपा-
ठकः समाप्तः ॥ ६ ॥

ष्टवाक्यप्रमाणेन जनितं फलमात्मनि कर्तृत्वभोक्तृत्वयोरधिकृतत्वविज्ञाननिवृत्तिस्तस्य फलं वय-
मवोचाम त्वंशब्दवाच्यमर्थं श्रोतुं मंतुं चाधिकृतमविज्ञातविज्ञानफलार्थं प्राक् चैतस्माद्विज्ञानादहमेवं करिष्याम्यग्निहो-
त्रादीनि कर्माण्यहमत्राधिकृतः एषां च कर्मणां फलमिहामुत्र च भोक्ष्ये कृतेषु तेषु वा कर्मसु कृतकर्तव्यः स्यामित्येवं कर्तृ-
त्वभोक्तृत्वयोरधिकृतोऽस्मीत्यात्मनि यद्विज्ञानमभूत्तस्य यत्सज्जगतो मूलमेकमेवाद्वितीयं तत्त्वमसीत्यनेन वाक्येन प्रतिबु-
द्धस्य निव

त्वंपदवाच्यमवोचाम तस्यात्मनि क्रियाकर्तृत्वे फलभोक्तृत्वे च यन्निश्चये वाधिकृतत्वविज्ञानं तन्निवृत्तिर्मानफलमिति
योजना ॥ यथोक्तं मानफलमेव प्रपंचयति ॥ प्राक् चेति ॥ अहमेवात्राधिकृतश्चेति चकारस्य संबंधः तस्येत्यत्र ज्ञानस्येत्यर्थः ॥ विरोधमेव स्फोरयति
॥ नहीति ॥ प्रमाणफलमुपसंहरति ॥ ८ ॥

॥तस्मादिति॥तत्त्वमसीतिवाक्यंमुख्यैकत्वपरमितिस्वपक्षमुक्त्वापरपक्षंशंकते॥नन्विति॥आध्यासिकं[मेक]त्वंतत्सामानाधिकरण्यालंबनमि
तिस्वपक्षंदृष्टान्तेनोक्त्वासिद्धान्तंदूषयति॥नत्विति॥श्वेतकेतोःसन्मात्रत्वेनतद्ज्ञानायोगात्सकृदुपदेशासिद्धिरित्यर्थः॥किमध्यासवाक्य
सामान्यादाध्यासिकमेकत्वंसामानाधिकरण्यालंबनंकिंवामुख्यैकत्वेबाधकसद्भावादितिविकल्प्याद्यंदूषयतिनेत्यादिना॥यथालोके
शुक्तिकारजतमितिमन्येतेत्यादावितिशब्दपरंसामानाधिकरण्यंनवस्तुनिष्ठंदृष्टंतथाध्यासवाक्यानामप्यादित्योब्रह्मेत्यादेशइत्यादीना
मितिशब्दपरसामानाधिकरण्यवशादवस्तुनिष्ठत्वंगम्यते॥नतथातत्त्वमसिवाक्यस्यावस्तुनिष्ठत्वमितिशब्दपरत्वाभावेनसामानाधिक

द्वितीयआत्मन्ययमहमस्मीतिविज्ञातेममेदमन्यदनेनकर्त्तव्यमिदंकृत्वाअस्यफलंभोक्ष्यइतिवाभेदविज्ञानमुपप
द्यतेतस्मात्सत्संपत्याग्द्वितीयात्मविज्ञानेविकारानृतजीवात्मविज्ञानंनिवर्त्ततइतियुक्तं॥ननुतत्त्वमसीत्यत्रत्वंशब्दवाच्ये
ऽर्थेसद्बुद्धिरादिश्यतेयथाआदित्यमनआदिषुब्रह्मादिबुद्धिर्यथाचलोकेप्रतिमादिषुविष्ण्वादिबुद्धिस्तद्वन्नतुसदेवत्व
मिति॥यदिसदेवश्वेतकेतुःस्यात्कथमात्मानंनविजानीयाद्येनतस्मैतत्त्वमसीत्युपदिश्यते॥नआदित्यादिवाक्यवैल
क्षण्यादादित्योब्रह्मेत्यादावितिशब्दव्यवधानान्नसाक्षाद्ब्रह्मत्वंगम्यतेरूपादिमत्त्वोच्चादित्यादीनामाकाशमनसो
श्चेतिशब्दव्यवधानादेवाब्रह्मत्वमिहतुसतएवेहप्रवेशंदर्शयित्वातत्त्वमसीतिनिरङ्कुशंसदात्मभावमुपदिशति ननु
पराक्रमादिगुणैःसिंहोऽसित्वमितिवत्तत्त्वमसीतिस्यात्नमृदादिवत्सदेकमेवाद्वितीयंसत्यमित्युपदेशान्नचोपचार

रण्यस्यस्वरूपपर्यवसायित्वनिश्चयादित्यर्थः॥इहत्वितिप्रकरणोक्तिः॥इहप्रवेशंदर्शयित्वेत्यत्रतेजोबन्नमयंसंघातमिहेतिव्यपदि
शति॥जीवब्रह्मणोर्भेदग्राहिप्रमाणाविरोधान्नमुख्यमेकत्वंकिंतुचैतन्यगुणयोगाद्गौणमितिद्वितीयंशंकते॥नन्विति॥यथामृदादि
कारणमेवघटादिकार्येनपृथगस्तितथासर्वमिदमाकाशादिकार्यंसन्मात्रंतत्रसर्वप्रकारभेदरहितमेकरसमबाधितमित्युपदेशवशा
न्नगौणमेकत्वमित्युत्तरमाह॥नेत्यादिना॥इतश्चनोपचरितमेकत्वमित्याह॥नचेति॥औपचारिकविज्ञानस्यमृषात्वेदृष्टान्तमाह॥

॥त्वमिति॥ किंच गौणमेकत्वं वदता स्तुत्यर्थं विधिपरत्वं वा वाक्यस्य वक्तव्यं आद्येपि श्वेतकेतोः सतो वा स्तुतिरिति विकल्प्याद्यं दूषयति॥ नापीति॥ उपास्यत्वात्सतो स्तुस्तुतिरिति द्वितीयमाशंक्य दूषयति॥ नापि सदिति॥ इतश्च श्वेतकेतुत्वोपदेशेन सतो न स्तुतिरित्याह॥ नापि सत इति॥ श्वेतकेतोरनुपास्यत्वेन स्तुत्यसंभवेपि कर्तृत्वात्कर्मसु तत्त्वावबोधकत्वाद्वाक्यस्य युक्तं इत्याशंक्य कर्मविध्यसन्निधानात्सदात्मत्वमात्रप्रतीतेश्चैनैव मित्याह॥ नचेति॥ विकल्पान्तरं समुद्भावयति॥ सदस्मीति॥ एकविज्ञानेन सर्वविज्ञानवचनविरोधान्न दृष्टिविधिपरत्वमित्युत्तरमाह॥ नन्विति॥ गौणपक्षेपि तुल्यानुपपत्तिरित्यपेरर्थः॥ एकविज्ञानेन सर्वविज्ञानश्रुते

विज्ञानात्तस्य तावदेव चिरमिति सन्संपत्तिरुपदिश्यते मृषात्वादुपचारविज्ञानस्य त्वमिंद्रो यम इतिवन्नापि स्तुतिरनुपास्यत्वाच्छ्वेतकेतोर्नापि सतः श्वेतकेतुत्वोपदेशेन स्तूयते नहि राजा दासस्त्वमिति स्तुतः स्यान्नापि सतः सर्वात्मन एकदेशनिरोधो युक्तः॥ तत्त्वमसीति देशाधिपतेरिव ग्रामाध्यक्षस्त्वमिति॥ नचान्यागतिरिह सदात्मत्वोपदेशादर्थान्तरभूता संभवति॥ ननु सदस्मीति बुद्धिमात्रमिह कर्तव्यतया चोद्यते न तु ज्ञानं सदस्मीति ज्ञाप्यत इति चेत्॥ नन्वस्मिन्पक्षेपि अश्रुतं श्रुतं भवतीत्याद्यनुपपन्नं॥ नसदस्मीति बुद्धिविधेः स्तुत्यर्थत्वात् नाचार्यवान्पुरुषो वेद तस्य तावदेव चिरमित्युपदेशाद्यदि हि सदस्मीति बुद्धिमात्रं कर्तव्यतया विधीयते न तु तच्छब्दवाच्यस्य सद्रूपत्वमेव॥ तदा नाचार्यवान्वेदेति ज्ञानोपायोपदेशो वाच्यः स्याद्यथाग्निहोत्रं जुहुयादित्येवमादिष्वर्थप्राप्तमेवाचार्यवत्त्वमिति तद्वत्तस्य तावदेव

नेविरोधोस्तीति पूर्ववाद्याह॥ नेति॥ नेयमेकविज्ञानेन सर्वविज्ञानदृष्टिविधिस्तुतिः कार्यकारणानन्यत्वादियुक्तिभिरुपपादितत्वाद्विधिपक्षे चासंभावनादिनिरासमसमर्थाचार्यवत्त्वोपदेशानर्थक्यादौपदेशिकज्ञानमात्रेण विध्यनुष्ठानसिद्धेर्विध्यपेक्षितस्य च तेने वाक्षेपादित्युत्तरमाह॥ नाचार्यवानिति॥ तदेव विवृणोति॥ यदिहीति॥ आचार्यवत्त्वमिति नोपदिश्यत इति शेषः॥ इतश्च नेदं वाक्यं दृष्टिविधिपरमेष्टव्यमित्याह॥ तस्येति॥ सदात्मत्वसाक्षात्कारादर्तेपि सकृदनुष्ठितपरोक्षबुद्धिमात्रान्मोक्षसंभवाद्विलंबाभिधान

यथासकृदनुष्ठितादपियागाद्भवतिस्वर्गस्तद्वदिहचचिरमितिक्षेपकरणंमोक्षस्येति॥तस्मान्नेदंदृष्टिविधिपरमित्यर्थः॥किंच
विधिवादिनाप्रतीयमानेर्थेवाक्यस्याप्रामाण्यंविपर्यासलक्षणंअनुत्पत्तिलक्षणंवावाच्यंतदुभयंदुर्वचमित्याह॥नचेति॥तत्त्वम
सीत्यधिकारिणंप्रत्युक्तेसतिप्रमाणभूतेनतेनवाक्येनजनितासद्ब्रह्माहमितियातस्यबुद्धिस्तांनिवर्तयितुंनाहंसदितिबलवतीबुद्धिरु
त्पन्नेतिनशक्यतेवक्तुंविवेकवतःश्रुतवाक्यस्यतथाविधबुद्ध्यनुत्पादान्नचाधिकारिणःश्रुतवाक्यस्यसद्ब्रह्माहमितिबुद्धिर्नोत्पन्नेतिवक्तुं
शक्यंअधिकारिणःप्रमितिजनकोवेदइतिन्यायान्नचभेदप्रत्ययोयथोक्तायाबुद्धेर्बाधकस्तस्यस्वाप्नभेदप्रत्ययवन्मिथ्यात्वानुमानादित्य
र्थः॥इतश्चतत्त्वमसिवाक्यंवस्तुपरमेवेत्याह॥सर्वोपनिषदिति॥तत्त्वमसिवाक्यान्नायथार्थाबुद्धिरित्येतमर्थंदृष्टान्तेनाह॥यथेति॥जी

चिरमितिचक्षेपकरणंनयुक्तंस्यात्सदात्मत्वेऽविज्ञातेपिसकृद्बुद्धिमात्रकरणेमोक्षप्रसंगात्॥नचतत्त्वमसीत्युक्तेना
हंसदितिप्रमाणवाक्यजनिताबुद्धिर्निवर्तयितुंशक्यानोत्पन्नेतिवाशक्यंवक्तुं॥सर्वोपनिषद्वाक्यानांतत्परतयैवोपक्षया
द्यथाग्निहोत्रादिविधिजनिताग्निहोत्रादिकर्तव्यताबुद्धीनामतथार्थत्वमनुपपन्नत्वंवानशक्यतेवक्तुंतद्वत्॥यत्तूक्तंसदा
त्मास्वात्मानंकथंनजानीयादितिनासौदोषःकार्यकरणसंघातव्यतिरिक्तोहंजीवःकर्ताभोक्तेत्यपिस्वभावतःप्राणिनां
विज्ञानदर्शनात्किमुतस्यसदात्मविज्ञानेकथमेवंव्यतिरिक्तविज्ञानेसतितेषांकर्तृत्वादिविज्ञानंसंभवतिदृश्यतेचतद्वद्

विभासमानेप्यनवभासमानत्वान्नस्वभावोब्रह्मेत्युक्तंअनूद्यदूषयति॥यदुक्तमिति॥लोकायतातिरिक्तानांदेहादतिरेकोजीवस्यस्वा
भाविकोपिनावभासतेनतथाब्रह्मस्वभावोपितस्यानाद्यनिर्वाच्याज्ञानसामर्थ्यादेवनावभासिष्यते॥तथाचतस्मिन्भासमानेप्यनवभासमा
नत्वान्नस्वभावोब्रह्मेत्ययुक्तंब्रह्मस्वभावादित्याह॥कार्येति॥ननुदेहव्यतिरिक्तात्मवादिनामात्मनिभातिदेहव्यतिरिक्तोपिभात्येवेति
व्याप्तिसिद्धिरित्याशंक्याह॥कथमिति॥देहादिसंघातादतिरिक्तोहमित्येवंव्यतिरिक्तविज्ञानेसतिकथंतेषांकर्तृत्वादिविज्ञानंसंभ
वति॥नहिसंघाताभिमानविगमेतद्युज्यते॥नचेतन्नास्त्येवदृश्यमानत्वादित्यर्थः॥सिद्धेदृष्टांतेदार्ष्टांतिकमाह॥तद्वदिति॥ः॥८४॥

देहाद्यतिरिक्तस्य सतोऽप्यप्रतिभासवत्सदात्मकस्यापि श्वेतकेतोर्देहादिष्वात्माभिमानित्वात्सदात्मनि ब्रह्मणि विज्ञानं न स्यादतस्तत्त्व
भावस्यापि ब्रह्मभावस्याप्रतिभानमज्ञानकृतमित्यर्थः॥ वाक्यस्यार्थान्तरपरत्वासंभवे फलितमुपसंहरति॥ तस्मादिति॥ महावाक्यस्यो
क्तया विधयार्थान्तरपरत्वासंभवाद्विकारानृताभिसंधिकृतोऽयं जीवात्मेत्येवंरूपं यन्मिथ्याज्ञानं तस्य सनिदानस्य निवर्तकमेवेदं तत्त्व



देहादिष्वात्मबुद्धित्वान्न स्यात्सदात्मविज्ञानं तस्माद्विकारानृताधिकृतजी
वात्मविज्ञाननिवर्तकमेवेदं वाक्यं तत्त्वमसीति सिद्धमिति॥ ॥इति श्रीपरिव्राजकाचा
र्यश्रीशङ्करभगवतः कृतौ छांदोग्योपनिषद्विवरणे षष्ठः प्रपाठकः समाप्तः॥ ६ ॥

मसिवाक्यं तत्त्वभूतप्रादुर्भावफलमित्येवं जीवब्रह्मणोरैक्यं सर्वोपनिषत्सारभूतमित्यर्थः॥ ॥ इति श्रीपरमहंसपरिव्राजकभ
गवदानन्दज्ञानकृतायां श्रीछांदोग्यभाष्यटीकायां षष्ठोऽध्यायः ६॥ भाष्य ७२५ टीका ७७५ एवं १५००

॥श्रीगणेशाय नमः॥ षष्ठसप्तमयोरध्याययोः संबन्धं वक्तुकामः षष्ठे वृत्तं कीर्तयति॥ परमार्थेति॥ उत्तमाधिकारिणं प्रत्यबाधिततत्त्वबोधनप्रधानत्वमतीतोऽध्यायः सतो ब्रह्मणः प्रत्यक्त्वनिश्चयपरत्वेनैव व्याख्यात इत्यर्थः॥ अध्यायान्तरं भूमिकामारभते॥ न सत इति॥ मध्यममधिकारिणं प्रति परंपरया ब्रह्मात्मत्वमुपदेष्टुं सप्तमप्रपाठकप्रवृत्तिरित्यर्थः॥ नन्वत्रापि ब्रह्मात्मत्वमेवोपदेष्टुमिष्टं चेत्किमिति तर्हि नामादीनि तत्त्वानि निर्दिश्यन्ते तत्राह॥ अनिर्दिष्टेष्विति॥ वाशब्दः शङ्कानिरासार्थः॥ यद्वा द्वयोरध्याययोरद्वितीयब्रह्मात्मविषयत्वाविशेषेऽपि सह्यात्मारंपर्याभ्यामपौनरुक्त्यमुक्तं सप्तमे तु नामादीनामुत्तरोत्तरभूयस्त्वविशिष्टानां सन्मात्रविज्ञानेनाविज्ञानादेकविज्ञानेन सर्वविज्ञानमयुक्तमित्याशङ्क्य ब्रह्मविदः सर्वज्ञत्वं स्फुटीकर्तुमुत्तरग्रन्थारंभ इत्याह॥ अनिर्दिष्टेति॥ नामादिसंकीर्तनस्य तात्पर्यान्तरमाह॥ अथवेति॥ः

परमार्थतत्त्वोपदेशप्रधानपरः षष्ठोऽध्यायः सदात्मैकत्वनिर्णयपरतयैवोपयुक्तः। न सतोऽर्वाग्विकारलक्षणानि तत्त्वानि निर्दिष्टानीत्यतस्तानि नामादीनि प्राणान्तानि क्रमेण निर्दिश्य तद्द्वारेणापि भूमाख्यं निरतिशयं तत्त्वं निर्देक्ष्यामि शाखाचन्द्रदर्शनवदितीमं सप्तमं प्रपाठकमारभते॥ अनिर्दिष्टेषु हि सतोऽर्वाक्तत्त्वेषु सन्मात्रे च निर्दिष्टेऽन्यदप्यविज्ञातं स्यादित्याशङ्का कस्यचित्स्यात्सा माभूदिति वा तानि निर्दिदिक्षति अथवा सोपानारोहणवत्स्थूलादारभ्य सूक्ष्मं सूक्ष्मतरं च बुद्धिविषयं ज्ञापयित्वा तदतिरिक्ते स्वाराज्येऽभिषेक्ष्यामीति नामादि निर्दिदिक्षति॥ अथवा नामाद्युत्तरोत्तरविशिष्टानि तत्त्वान्यतितरां च तेषामुत्कृष्टतमं भूमाख्यं तत्त्वमिति तत्स्तुत्यर्थं नामादीनां क्रमेणोपन्यासः॥ आख्यायिका तु परविद्यास्तुत्यर्था॥ कथं नारदे

अधमोऽधिकारी नामादीनि ब्रह्मत्वेनोपास्य तत्फलं च भुक्त्वा क्रमेण साक्षाद्ब्रह्मात्मभावं प्राप्नोतीति प्रदर्शयितुमुत्तरो ग्रन्थ इत्यर्थः॥ शाखाचन्द्रनिदर्शनन्यायेन मध्यमस्याधिकारिणो ब्रह्मसिद्धिस्वीकारार्थमधमस्याधिकारिणो ध्यानार्थं च नामादिकीर्तनमित्युक्तमिदानीमुत्तममेवाधिकारिणमधिकृत्य भूमस्तुत्यर्थं नामादिवचनमिति मतान्तरमाह॥ अथवा नामादीति॥ अध्यायसंबन्धमुक्त्वाख्यायिकासंबन्धमाह॥ आख्यायिका त्विति॥ स्तुत्यर्थमेव प्रश्नपूर्वकं प्रकटयति॥ कथमित्यादिना॥ तथा च परविद्याया कृतार्थत्वात्तस्याः

अतीताध्यायादिषुसदात्मत्वविज्ञानादन्यदेवतोपासनंमोक्षसाधनमित्याशंकायांतन्निषेधेनसदात्मत्वविज्ञानस्यैवमोक्षसाधनत्वंद्रढी
कर्त्तुमाख्यायिकाप्रवृत्तेतिपक्षांतरमाह॥अध्यवेति॥द्वितीयमाख्यायिकातात्पर्यंप्रपंचयति॥येनेत्यादिना॥सर्वस्मिन्ज्ञेयस्ययद्विज्ञानं
तस्यसाधनमुपासनंतत्रशक्त्यासंपन्नस्यवेदवेदांगाभिज्ञस्यापीतियावदस्तिहिनारदस्योत्तमाभिजनेजन्मब्रह्मणोमानसपुत्रत्वाद्

कृतकर्तव्यःसर्वविद्योपिसन्नात्मज्ञत्वाच्छुशोचैवकिमुवक्तव्यमन्योल्पविज्जंतुरकृतपुण्यातिशयोऽकृतार्थइति॥अ
थवानान्यदात्मज्ञानान्निरतिशयश्रेयःसाधनमस्तीत्येतत्प्रदर्शनार्थंसनत्कुमारनारदाख्यायिकारभ्यते॥येनसर्वज्ञान
साधनशक्तिसंपन्नस्यापिनारदस्यदेवर्षेःश्रेयोनबभूव॥येनोत्तमाभिजनविद्यावृत्तसाधनशक्तिसंपत्तिनिमित्ताभिमानंहि
त्वाप्राकृतपुरुषवत्सनत्कुमारमुपससादश्रेयःसाधनप्राप्तयेऽतःप्रख्यापितंभवतिनिरतिशयश्रेयःप्राप्तिसाधनत्वमात्मवि

अधीहिभगवइतिहोपससादसनत्कुमारंनारदस्तꣳहोवाचयद्वेत्थतेनमोपसीदततस्तऊर्ध्वंवक्ष्यामीतिसहो
वाचऋग्वेदंभगवोऽध्येमियजुर्वेदꣳसामवेदमाथर्वणंचतुर्थमितिहासपुराणंपंचमंवेदानांवेदंपित्र्यꣳराशिंदैवं
॥ निधिं

यायाइति॥अधीहि॥अधीष्वभगवोभगवन्नितिहकिलोपससादअधीहिभगवइतिमंत्रःसनत्कुमारंयोगीन्द्र
रंब्रह्मिष्ठंनारदउपसन्नवान्।तंन्यायतःउपसन्नंहोवाचयदात्मविषयेकिंचिद्वेत्थतेनतत्प्रख्यापनेनमामुपसीदेदमहंजा
ने॥ततोहंभवतोविज्ञानात्तेतुभ्यमूर्ध्वंवक्ष्यामीत्युक्तवतिसहोवाचनारदःऋग्वेदंभगवोध्येमिस्मरामि ॥ त्तिचोत्तमकर्मविद्याअ
स्तिचवृत्तंसदाचरणंअस्तिचश्रवणध्यानादिसाधनशक्तीनांधर्माधर्मसाधनस्यवाशरीरस्यशक्तेःसंपत्तिरेवंजन्मादयोनिमित्तंयस्याभि
मानस्यतंत्यक्त्वेतियावत् इतिशब्दोऽध्यायाख्यायिकयोःसंबंधोक्तिसमाप्त्यर्थः॥अध्ययनेनज्ञानंलक्ष्यतेतथाचाधीष्वज्ञापयेत्यर्थः॥
मंत्रःदेवतोपासनमोक्षोपसदनस्येतिशेषः॥न्यायतःसमित्पाणिरित्यादिशास्त्रोक्तविधिवशादितियावत्॥अध्ययनवाचिपदंस्मरण

॥ यद्वेत्थेति ॥ गंधयुक्तिकुंकुमादिसंपादनं न तर्हि सर्वज्ञत्वं कृतकृत्योसीत्याशंक्याह ॥ सोहमिति ॥ कथं मंत्रविदित्यस्य कर्मविदिति व्याख्यानं दृत्याशंक्याह ॥ मंत्रेष्विति ॥ मंत्रविदेव नात्मविदित्यत्र विरोधं चोदयति ॥ नन्विति ॥ मंत्रवित्त्वे तत्प्रकाश्यात्मवित्त्वमपि स्यात्तदभावे मंत्रवित्त्वमपि न युक्तमित्यर्थः ॥ अभिधानमभिधेयमित्येवंरूपस्य भेदस्य विकारत्वेन मिथ्यात्वादात्मनश्चाविकारत्वानङ्गीकाराच्च मंत्रप्रकाश्यत्वा

यद्वेत्थेति विज्ञानस्य पृष्टत्वात् तथा यजुर्वेदं सामवेदमाथर्वणं चतुर्थं वेदं वेदशब्दस्य प्रकृतत्वादितिहासपुराणं पञ्चमं वेदं वेदानां भारतपंचमानां वेदं व्याकरणमित्यर्थः ॥ व्याकरणेन हि पदादिविभागश ऋग्वेदादयो ज्ञायंते ॥ पित्र्यं श्राद्धकल्पं राशिं गणितं दैवमुत्पातज्ञानं निधिं महाकालादिनिधिशास्त्रं वाकोवाक्यं तर्कशास्त्रमेकायनं नीतिशास्त्रं देवविद्यां निरुक्तं ब्रह्मणऋग्यजुःसामाख्यस्य विद्यां ब्रह्मविद्यां शिक्षाकल्पच्छन्दश्चितयो भूतविद्यां भूततंत्रं क्षत्रविद्यां धनुर्वेदं नक्षत्रविद्यां ज्योतिषं सर्प

वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याꣳ सर्पदेवजनविद्यामेतद्भगवोऽध्येमि सोहं भगवो मंत्रविदेवास्मि नात्मवित्

देवजनविद्यां सर्पविद्यां गारुडं देवजनविद्यां गंधयुक्तिनृत्यगीतवाद्यशिल्पादिविज्ञानानि ॥ एतत्सर्वं हे भगवोऽध्येमि ॥ सोहं भगव एतत्सर्वं जानन्नपि मंत्रविदेवास्मि शब्दार्थमात्रविज्ञानवानेवास्मि इत्यर्थः ॥ सर्वो हि शब्दोऽभिधानमात्रमभिधानं च सर्वं मंत्रेष्वंतर्भवति ॥ मंत्रविदेवास्मि मंत्रवित्कर्मविदित्यर्थः ॥ मंत्रेषु कर्माणीति हि वक्ष्यति नात्मवित् नात्मानं वेद्मि ॥ नन्वात्मापि मंत्रैः प्रकाश्यत एवेति कथं मंत्रविच्चेन्नात्मवित् अभिधानाभिधेयभेदस्य विकारत्वान्न च विकार आत्मेष्यते ॥ नन्वात्मात्मशब्देनाभिधीयते न यतो वाचो निवर्तंते यत्र नान्यत्पश्यतीत्या

दिश्रुतेः ॥ कथं तर्हीति

भावान्न विरोध इति परिहरति ॥ नाभिधानेनेति ॥ आत्मनो विकारत्वाभावेप्यभिधेयत्वमेष्टव्यमिति शंकते ॥ नन्विति ॥ श्रुत्यंतरावष्टंभेन निराचष्टे ॥ नेत्यादिना ॥ आत्मद्योतितात्मशब्देनात्मनोऽभिधेयत्वाभाववाक्यशेषादिविरोधः स्यादित्याशङ्क्यते ॥ कथं तर्हीति ॥ \ ॥ \ ॥

आत्मशब्देनावाच्यस्याप्यात्मनस्तेन लक्षणया प्रतिपत्तिसंभवान्नोपक्रमोपसंहारविरोधोस्तीत्युत्तरमाह ॥ नैष दोष इति ॥ विशिष्टे गृहीत
शब्दो विशेषणे प्रत्युक्ते यत्तन्मात्रं परिशिष्टं तद्वाच्यमपि लक्षणया बोधयतीत्यर्थः ॥ केवलात्मविषयस्यात्मशब्दस्य तद्दर्शनमंतरेण वि
शिष्टात्मदृष्टिमात्रेण कथं प्रयोगः कथं वा तत्प्रयोगेपि ततो विवक्षितात्मधीरित्याशंक्य दृष्टांतेन परिहरति ॥ यथेत्यादिना ॥ आत्मनो मुख्य

वाच्यत्वात् स आत्मेत्यादिशब्दा आत्मानं प्रत्याययंति नैष दोषः देहवति प्रत्यगात्मनि भेदविषये प्रयुज्यमानः शब्दो देहादीना
मात्मत्वे प्रत्याख्यायमाने यत्परिशिष्टं सद्वाच्यमपि प्रत्याययति ॥ यथा सराजिकायां दृश्यमानायां सेनायां छत्रध्वजपता
कादिव्यवहितेऽदृश्यमानेपि राजनि एष राजा दृश्यत इति भवति शब्दप्रयोगः तत्र कोसौ राजेति राजविशेषनिरूपणायां दृ
श्यमानेतरप्रत्याख्यानेऽन्यस्मिन्नदृश्यमानेपि राजनि राजप्रतीतिर्भवेत्तस्मात्सोहं मंत्रवित्कर्मविदेवास्मि कर्मकार्यं च सर्वो

श्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति सोहं भगवः शोचामि तं मा भगवाञ्छोकस्य पारं तारयत्वि
ति तं होवाच यद्वै किंचैतदध्यगीष्ठा नामैवैतन्नाम वा ऋग्वेदो यजुर्वेदः सामवेद आथर्वणश्चतुर्थ इतिहासपु ((राणः

विकार इति विकारज्ञ एवास्मि नात्मवित् नात्मप्रकृतिस्वरूपज्ञ इत्यर्थः ॥ अत एवोक्तमाचार्यैर्वानुरूपो वेदेति
॥ यतो वाचो निवर्तंत इत्यादिश्रुतिभ्यश्च ॥ श्रुतमागमज्ञानमस्त्येव हि यस्मान्मम भगवद्दृशेभ्यो युष्मत्सदृशेभ्यस्तरति
अतिक्रामति शोकं मनस्तापमकृतार्थबुद्धितामात्मविदित्यतः सोहमनात्मवित्त्वाद्भगवः शोचामि अकृतार्थबुद्ध्या संतप्ये
सर्वदा तं मां शोकस्य शोकसागरस्य पारं भगवांस्तारयत्वात्मज्ञानो ((कृत्या मंत्रप्रकाश्यत्वाभावे फलितमाह ॥ तस्मादिति ॥ श्रा
द्धार्थज्ञानमात्रेणात्मवित्त्वं न भवतीत्यनेनाचार्योपदेशजनितज्ञानवत एवात्मवित्त्वमपीत्युक्तं तत्र प्रमाणमाह ॥ अत एवेति ॥ औपदेशिक
ज्ञानविषयत्वं तर्हि स्वीकृतमित्याशंक्याह ॥ यत इति ॥ मा तर्हि तवात्मविद्याभूदित्याशंक्य शोकनिवृत्त्युपायत्वेन तदपेक्षां सूचयति ॥ श्रुतं

यावन्त्कथं मदीयमर्थज्ञानं सर्वं नाममात्रमित्याशंक्याह ॥ वाचारंभणमिति ॥ उक्तमुपपादयति ॥ नामवाइति ॥ तदुपसंहरति ॥ नामैवेति ॥
केन रूपेणेदं नामादत्तेत्युमित्याशंक्याह ॥ नामेति ॥ उपास्तिप्रकारं दृष्टांतेन स्पष्टयति ॥ यथेति ॥ नाम्नि ब्रह्मदृष्ट्योपास्यमाने किं स्यादित्या
शंक्याह ॥ स यस्त्विति ॥ यो नामेत्यादिवाक्यस्य पौनरुक्त्यमाशंक्याह ॥ यो नामेति ॥ २ ॥ वाग्वाव नाम्नो भूयसीत्युक्तं वाङ्नाम्नोरेकत्वा ॥

द्रूपेण कृतार्थबुद्धिमापादयन्तु अभयं गमयन्त्वित्यर्थः ॥ तमेवमुक्तवन्तं होवाच ॥ यद्वे किंचैतदध्यगीष्ठा अधीतवानस्य
ध्ययनेन तदर्थज्ञानमुपलक्ष्यते ज्ञानवानसीत्येतन्नामैवैतद्वाचारंभणं विकारो नामधेयमिति श्रुतेः ॥ नाम वा ऋग्वेदो यजु
र्वेद इत्यादि नामैवैतन्नामोपास्व ब्रह्मेति ब्रह्मबुद्ध्या यथा प्रतिमां विष्णुबुद्ध्योपास्ते तद्वत् ॥ स यस्तु नाम ब्रह्मेत्युपास्ते तस्य यत्फ

पंचमो वेदानां वेदः पित्र्यो राशिर्दैवो निधिर्वाकोवाक्यमेकायनं देवविद्या ब्रह्मविद्या भूतविद्या क्षत्रविद्या
नक्षत्रविद्या सर्पदेवजनविद्या नामैवैतन्नामोपास्वेति स यो नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य यथा
कामचारो भवति यो नाम ब्रह्मेत्युपास्तेऽस्ति भगवो नाम्नो भूय इति नाम्नो वाव भूयोऽस्तीति तन्मे भगवान्ब्र
वीत्विति ॥ १ ॥ वाग्वाव नाम्नो भूयसी वाग्वा ऋग्वेदं विज्ञापयति यजुर्वेदं ((लं भवति तच्छृणु यावन्नाम्नो गतं ना

म्नो गोचरं तत्र तस्मिन्नामविषयेऽस्य यथाकामचारः कामचरणं राज्ञ इव स्वविषये भवति यो नाम ब्रह्मेत्युपास्ते इत्युपसं
हारः किमस्ति भगवो नाम्नो वाव भूयोऽधिकतरं यद्ब्रह्मदृष्ट्यर्हं मन्यसे इत्यभिप्रायः ॥ सनत्कुमार आह ॥ नाम्नो वाव भूयो
ऽस्त्येवेत्युक्त आह ॥ यद्यस्ति तन्मे भगवान्ब्रवीत्विति ॥ १ ॥ वाग्वाव वागिंद्रियं जिह्वामूलादिष्वष्टसु स्थानेषु स्थितं वर्णानाम

न्यथा कृतत्वानुपपत्तिरित्याशंक्य व्याचष्टे ॥ वागिंद्रियमिति ॥ जिह्वामूलादि ((भिव्यंजकं वर्णाश्च नामेति नाम्नो वाग्भूयसीत्युच्यते))
ष्वित्यादिशब्देनोरः कंठशिरोदंतोष्ठनासिकाताल्वूनि गृह्यंते ॥ वागिंद्रियसिद्धेन तस्य वर्णेभ्योऽभिव्यंग्येभ्यो भूयस्त्वं नाम्नो वाचो भूयस्त्वं कृतं

तयोर्व्यंग्यव्यंजकभावेपिकथंव्याप्यव्यापकत्वमित्याशंक्याह॥कार्याद्धीति॥वाचोनाम्नोभूयस्त्वंप्रश्नपूर्वकंप्रपंचयति॥कथंचेत्यादिना
॥इतश्चवाचोभूयस्त्वमेष्टव्यमित्याह॥यदीति॥अन्वयव्यतिरेकाभ्यांतस्याःसिद्धेभूयस्त्वेफलितमाह॥तस्मादिति॥सयोवाचमित्यादिश्रु
कार्यात्कारणंभूयोहिदृष्टंलोकेयथापुत्रात्पितातद्वत्कथंचवाग्नाम्नोभूयसीत्याह॥वाग्वाऋग्वेदंविज्ञापयति॥तथायजु
र्वेदंइत्यादिसमानेहृदयज्ञंहृदयप्रियंतद्विपरीतमहृदयज्ञंयद्यदिवाङ्नाभविष्यद्वागभावेऽध्ययनाभावोऽध्ययनाभावेत
सामवेदमाथर्वणंचतुर्थमितिहासपुराणंपंचमंवेदानांवेदंपित्र्यंराशिंदैवंनिधिंवाकोवाक्यमेकायनंदेववि
द्यांब्रह्मविद्यांभूतविद्यांक्षत्रविद्यांनक्षत्रविद्यांसर्पदेवजनविद्यांदिवंचपृथिवींचवायुंचाकाशंचापश्चतेज
श्चदेवांश्चमनुष्यांश्चपशूंश्चवयांसिचतृणवनस्पतीञ्छ्वापदान्याकीटपतंगपिपीलकंधर्मंचाधर्मंच
सत्यंचानृतंचसाधुचासाधुचहृदयज्ञंचाहृदयज्ञंचयद्वैवाङ्नाभविष्यन्नधर्मोनाधर्मोव्यज्ञापयिष्यन्नसत्यं
नानृतंनसाधुनासाधुनहृदयज्ञोनाहृदयज्ञोवागेवैतत्सर्वंविज्ञापयतिवाचमुपास्स्वेतिसयोवाचंब्रह्मेत्युपा
स्तेयावद्वाचोगतंतत्रास्ययथाकामचारोभवतियोवाचंब्रह्मेत्युपास्तेऽस्तिभगवोवाचोभूयइतिवाचोवाव
भूयोस्तीतितन्मेभगवान्ब्रवीत्विति॥३॥मनोवाववाचोभूयोयथावैद्वेवामलकेद्वेवाकोलेद्वौवाक्षौमुष्टिरनु
दर्थेऽश्रवणाभावस्तच्छ्रवणाभावेधर्मादिनव्यज्ञापयिष्यन्नविज्ञातमभविष्यदित्यर्थः॥तस्माद्वागेवैतच्छब्दोच्चारणेन
सर्वंविज्ञापयत्यतोभूयसीवाक्नाम्नस्तस्माद्वाचंब्रह्मेत्युपास्स्वसमानमन्यत्॥२॥मनोमनस्यनविशिष्टमंतःकरणंवा
चोभूयःतद्धिमननव्यापारवद्वाचंवक्तव्येप्रेरयतितेनवाङ्मनस्यंतर्भवति॥यच्चयस्मिन्नं[illegible]न्यदित्युच्यते॥३॥मनःशब्दस्यवृ
तिमात्रविषयत्वंव्यावर्तयति॥मनस्यनेति॥कथंतस्यवाचोभूयस्त्वंतदाह॥तद्धीति॥वाचोमनस्यंतर्भावेपिकुतोमनसस्तस्याभूयस्त्वं

मनसोवाग्गादेर्व्याप्तिंदृष्टांतेनस्पष्टयति॥यथेत्यादिना॥इतश्चमनसोस्तिभूयस्त्वमित्याह॥सयदेति॥विवक्षाबुद्धिस्तांकरोतीतिशेषः॥
इच्छेयेतीच्छांकृत्वेतिशेषः॥तस्यात्मत्वमुपपादयति॥आत्मनइति॥तस्यलोकत्वंसाधयति॥सत्येवेति॥३॥संकल्पशब्दार्थमाह॥सं

तर्भवतितत्तस्यव्यापकत्वात्ततोभूयोभवति॥यथावैलोकेद्वेवामलकेफलेद्वेवाकोलेबदरफलेद्वौवाक्षौविभीतक
फलेमुष्टिरनुभवतिमुष्टिस्तेफलेव्याप्नोतिमुष्टौहितेअंतर्भवतः॥एवंवाचंचनामचामलकादिवन्मनोनुभवति॥सय
दापुरुषोयस्मिन्कालेमनसांतःकरणेनमनस्यतिमनस्यनंविवक्षाबुद्धिःकथंमंत्रानधीयीयोच्चारयेयमित्येवंविव
क्षांकृत्वाथाधीतेतथाकर्माणिकुर्वीयीयेतिचिकीर्षाबुद्धिंकृत्वाथकुरुतेपुत्रांश्चपशूंश्चेच्छेयेतिप्राप्तीच्छांकृत्वातत्प्राप्त्यु

नामचमनोनुभवतिसयदामनसामनस्यतिमंत्रानधीयीयेत्यथाधीतेकर्माणिकुर्वीयेत्यथकुरुतेपुत्रां
श्चपशूंश्चेच्छेयेत्यथेच्छतइमंचलोकममुंचेच्छेयेत्यथेच्छतेमनोह्यात्मामनोहिलोकोमनोहिब्रह्मम
नउपास्स्वेतिसयोमनोब्रह्मेत्युपास्तेयावन्मनसोगतंतत्रास्ययथाकामचारोभवतियोमनोब्रह्मेत्युपास्तेस्ति
भगवोमनसोभूयइतिमनसोवावभूयोस्तीतितन्मेभगवान्ब्रवीत्विति॥३॥ उपायानुष्ठानेनाथेच्छतेपुत्रादीन्प्राप्नोती
त्यर्थः॥तथेमंचलोकममुंचोपायेनेच्छेयमितितत्प्राप्त्युपायानुष्ठानेनाथेच्छतेप्राप्नोतिमनोह्यात्मात्मनःकर्तृत्वंभोक्तृ
त्वंचसतिमनसिनान्यथेतिमनोह्यात्मेत्युच्यते॥मनोहिलोकःसत्येवहिमनसिलोकोभवतितत्प्राप्त्युपायानुष्ठानंचेतिम
नोहिलोकोयस्मात्तस्मान्मनोहिब्रह्मयतएवंतस्मान्मनउपास्स्वेतिसयोमनइत्यादिसमानं॥३॥संकल्पोवावमनसोभूया
न्संकल्पोपिमनस्यनवदंतःकरणवृत्तिःकर्तव्याकर्तव्यविषयविभागेनसमर्थनंविभागेनहि॥संकल्पोपीति॥कासांतःकरणवृत्ति
र्यासंकल्पशब्दितेत्याशंक्याह॥कर्तव्येति॥द्विविधेविषयेविभागेनसमर्थितेपिकथंयथोक्तस्यसंकल्पस्यमनसोभूयस्त्वमित्याशङ्क्याह

संकल्पस्यकारणत्वान्मनसश्चकार्यत्वादतोभूयस्त्वमित्यर्थः॥कार्यकारणभावंतयोराकांक्षापूर्वकंव्यक्तीकरोति॥कथमित्यादिना॥मनसःसकाशाद्वाचोनंतरभावित्वेविशेषंदर्शयति॥तांचेति॥नाम्निमंत्राणामंतर्भावंसमर्थयति॥सामान्येहीति॥कथंमंत्रेष्वनुपलब्धकर्मणामंतर्भावस्तत्राह॥मंत्रेति॥कथंकर्मणांमंत्रत्वमस्तीत्युच्यतेब्राह्मणेविहितस्यापिकर्मणोदर्शनादित्याशंक्याह॥यद्धीति॥ब्राह्मणस्यमंत्र

समर्थितेविषयेचिकीर्षाबुद्धिर्मनस्यनानंतरंभवति॥कथंयदावैसंकल्पयतेकर्तव्यादिविषयान्विभजतेइदंकर्तुंयुक्तमिदंनेति॥अथमनस्यतिमंत्रानधीयीयेत्यादि॥अथानंतरंवाचमीरयतिमंत्राद्युच्चारणेनतांचवाचंउनाम्निनामोच्चारणनिमित्तांविवक्षांकृत्वेरयति॥नाम्निनामसामान्येमंत्राःशब्दविशेषाःसंतःएकंभवंत्यंतर्भवंतीत्यर्थः॥सामान्येहिविशेषोंतर्भवति॥

संकल्पोवावमनसोभूयान्यदावैसंकल्पयतेथमनस्यत्यथवाचमीरयतितामुनाम्नीरयतिनाम्निमंत्राएकंभवंतिमंत्रेषुकर्माणि॥१॥

मंत्रेषुकर्माण्येकंभवंति॥मंत्रप्रकाशितानिकर्माणिक्रियंतेनामंत्रकमस्तिकर्मयद्धिमंत्रप्रकाशनेनलब्धसत्ताकंसत्कर्मब्राह्मणेनेदंकर्तव्यमस्मैफलायेतिविधीयतेयाप्युत्पत्तिःब्राह्मणेषुकर्मणोदृश्यतेसापिमंत्रेषुलब्धसत्ताकानामेवकर्मणांस्पष्टीकरणंनहिमंत्राप्रकाशितंकर्मकिंचिद्ब्राह्मणेउत्पन्नंदृश्यते॥त्रयीविहितंकर्मेतिप्रसिद्धंलोकेत्रयीशब्दश्चऋग्यजुःसामसमाख्यामंत्रेषुकर्माणिकवयोयान्यपश्यन्नितिचाथर्वणेतस्माद्युक्तंमंत्रेषुकर्माण्येकंभवंतीति॥तानिहवाएतानिमनआदीनिसंकल्पैकायनानिसंकल्पएकोऽयनंगमनं

॥ व्याख्यानरूपत्वादितिस्पष्टंमंत्रानुपलंभेपिकल्प्यतेमंत्रोक्तत्वमित्यर्थः॥एतदेवप्रपंचयति॥सापीत्यादिना॥एकस्यांशाखायांयत्कर्ममंत्रेष्वनुपलब्धंतच्छाखांतरीयमंत्रप्रकाशितंभविष्यतीत्यत्रहेत्वंतरमाह॥त्रयीति॥तथापिकथंमंत्रप्रकाशितत्वंतत्राह॥त्रयीशब्दश्चेति॥मंत्रेषुकर्माण्यंतर्भवंतीत्यत्रश्रुत्यंतरानुमतिंकथयति॥मंत्रेष्विति॥तथापिकथंसंकल्पस्यभूयस्त्वमित्याशंक्याह॥तानीति॥अयनपर्या

संकल्पोवावमनसोभूयान्यदावैसंकल्पयति॥

॥प्रलयइति॥इतश्च संकल्पस्याप्यस्ति महत्त्वमित्याह॥समक्लृपतामिति॥ यतो द्यावापृथिव्यादिषु महत्स्वपि संकल्पानुवृत्तिर्दृश्यते ततोऽपि तस्य महत्त्वं गम्यते न केवलं कारणादेवेत्यर्थः इतश्च तस्य महत्त्वमेष्टव्यमित्याह॥तेषामिति॥वृष्ट्यादेर्लोकादिकार्यत्वात्तदीयसंकल्पस्य तन्निमित्तत्वोपचारात्तच्चिकीर्षेणेन भूयस्त्वसिद्धिरित्यर्थः॥वृष्टिवशादन्नं समृद्धं भवतीत्यत्र प्रसिद्धिं प्रमाणयति॥वृष्टेर्हीति॥अन्नाधीनं प्राणसामर्थ्य

प्रलये येषां तानि संकल्पैकायनानि संकल्पात्मकान्युत्पत्तौ संकल्पे प्रतिष्ठितानि स्थितौ समक्लृपतां संकल्पं कृतवन्ताविव हि द्यौश्च पृथिवी च द्यावापृथिव्यौ निश्चले लक्ष्येते समकल्पेतां वायुश्चाकाशं च एतावपि संकल्पं कृतवन्ताविव तथा समकल्पन्तापश्च तेजश्च स्वेन रूपेण निश्चलानि लक्ष्यन्ते॥यतस्तेषां द्यावापृथिव्यादीनां संक्लृप्त्यै संकल्पनिमित्तं वर्षं संकल्पते स

तानि ह वा एतानि संकल्पैकायनानि संकल्पात्मानि संकल्पे प्रतिष्ठितानि समक्लृपतां द्यावापृथिवी समकल्पेतां वायुश्चाकाशं च समकल्पन्तापश्च तेजश्च तेषां संक्लृप्त्यै वर्षं संकल्पते वर्षस्य संक्लृप्त्या अन्नं संकल्पतेऽन्नस्य संक्लृप्त्यै प्राणाः संकल्पन्ते प्राणानां संक्लृप्त्यै मन्त्राः संकल्पन्ते मन्त्राणां संक्लृप्त्यै कर्माणि संकल्पन्ते कर्मणां संक्लृप्त्यै लोकः संकल्पते लोकस्य संक्लृप्त्यै सर्वं संकल्पते स एष संकल्पः॥ मर्थी भवति॥तथा वर्षस्य संक्लृप्त्यै संकल्पनिमित्तमन्नं संकल्पते वृष्टेर्ह्यन्नं भवत्यन्नस्य संक्लृप्त्यै प्राणाः संकल्पन्तेऽन्नमया हि प्राणा अन्नोपष्टंभकाः अन्नं दामेति हि श्रुतिस्तेषां संक्लृप्त्यै मन्त्राः संकल्पन्ते प्राणवान्हि मन्त्रानधीते नाबलः॥मन्त्राणां हि संक्लृप्त्यै कर्माण्यग्निहोत्रादीनि संकल्पन्तेऽनुष्ठीयमानानि मन्त्रप्रकाशितानि समर्थी भवन्ति फलाय ततो लोकः फलं संकल्पते कर्तृसमवायितया समर्थी भवतीत्यर्थः॥ १॥

मित्यत्र हेतुमाह॥अन्नमया हीति॥आपोमयः प्राण इत्युक्तत्वात्कथमन्नमयत्वमित्याशंक्याह॥अन्नोपष्टंभका इति॥तत्र वाजसनेयकश्रुतिं प्रमाणयति॥अन्नमिति॥प्राणानां मन्त्राध्ययनकारणत्वं व्युत्पादयति॥प्राणवानिति॥ततो मन्त्रप्रकाशितकर्मवशादिति यावत्कर्मफ

॥एतद्धीति॥तन्महत्त्वे फलितमाह॥अत इति॥आत्मातिरिक्तानां लोकानां कथं नित्यत्वेत्याह॥अत्यंतेति॥लोकानामेवं ध्रुवत्वमुच्यते कि मिति लोकिनस्तद्व्यपेतत्वाह॥लोकिनो हीति॥कथमुपकरणसंपन्नेषु प्रतिष्ठितशब्दो भवतीत्याशंक्याह॥पशुपुत्रादिभिरिति॥यावत्संक ल्पस्येत्यादिश्रुतेर्विषयसंकोचं दर्शयति॥आत्मन इति॥संकल्पस्य यावद्गोचरस्तत्रास्य कामचारो भवतीति संबंधः॥निरंकुशे संकल्पशब्दे

लोकस्य संक्लृप्तेः सर्वं जगत्संकल्पते स्वरूपावक्लृप्त्यै एतद्धीदं सर्वं जगद्यत्फलावसानं तत्सर्वं संकल्पमूलमतो विशिष्टः स एव संकल्पः॥ अतः संकल्पमुपास्वेत्युक्त्वा फलमाह तदुपासकस्य स यः संकल्पं ब्रह्मेति ब्रह्मबुद्ध्योपास्ते॥ क्लृप्तान्वै धात्रास्येमे लोकाः फलमिति क्लृप्तान्समर्थितान्संकल्पितान्विद्वान्ध्रुवान्नित्यानत्यन्तं ध्रुवापेक्षया ध्रुवश्च स्वयं लोकिनो ह्यध्रुवत्वे न लोके ध्रु

संकल्पमुपास्वेति स यः संकल्पं ब्रह्मेत्युपास्ते क्लृप्तान्वै स लोकान्ध्रुवान्ध्रुवः प्रतिष्ठितान्प्रतिष्ठितोऽव्यथमानान व्यथमानोऽभिसिध्यति यावत्संकल्पस्य गतं तत्रास्य यथाकामचारो भवति यः संकल्पं ब्रह्मेत्युपास्तेऽस्ति भगवः संकल्पाद्भूय इति संकल्पाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति॥३॥

वत्वमित्यर्थ इति ध्रुवः सन्प्रतिष्ठितानुपकरणसंपन्नानित्यर्थः॥पशुपुत्रादिभिः प्रतितिष्ठतीति दर्शनात्स्वयं च प्रतिष्ठित आत्मीयोपकरणसंपन्नोऽव्यथमानानमित्रादित्रासरहितानव्यथमानश्च स्वयमभिसिध्यति॥अभिप्राप्नोतीत्यर्थः॥यावत्संकल्पस्य गतं संकल्पगोचरः तत्रास्य यथाकामचारो भवत्यात्मनः संकल्पस्य न तु सर्वेषां संकल्पस्येति॥उत्तरफलविरोधाद्यः संकल्पं ब्रह्मेत्युपास्त इति पूर्ववत्॥३॥

काहानिरित्याशंक्याह॥उत्तरेति॥यदि संकल्पमात्रस्य गोचरे संकल्पोपासकस्य कामचारो भवति तर्हि सर्वसंकल्पस्य विविक्ततया सर्वगोचरत्वसंभवाद्यावच्छिन्नस्य गतमित्यादिना वक्ष्यमाणफलं विरुध्येत॥न हि संकल्पोपासनादेव सर्वस्मिन्फले सिद्धे चित्ताद्युपासनं तत्फलं वा पृथक्कथयितुमुचितमतो यावत्संकल्पस्येत्यादिश्रुतेरतः संकोचो युक्त इत्यर्थः॥३॥ ॥ ॥ ॥ ॥

चित्तशब्दस्य मनःशब्देन पौनरुक्त्यं परिहरति ॥ चित्तं चेतयितृत्वमिति ॥ तस्यात्मत्वं व्यावर्तयति ॥ प्राप्तेति ॥ इदं वस्त्वेवं प्राप्तमिति प्राप्तका
लवस्त्वनुरोधाच्चेतनात्स्योपरति विशेषणस्तद्वत्त्वं चित्तमित्यर्थः ॥ अतीतं भोजनं तृप्तिसाधनं दृष्टं भोजनत्वादागामिनोऽपि तस्य तदेव प्रयोजन
मिति निरूपणसामर्थ्यं चित्तमिति प्रसिद्धमित्याह ॥ अतीतेति ॥ यथोक्तस्य चित्तस्य संकल्पाद्भूयस्त्वं प्राप्तपूर्वकमुत्पादयति ॥ कथमित्या

चित्तं वाव संकल्पाद्भूयोऽस्ति चित्तं चेतयितृत्वं प्राप्तकालानुरूपबोधवत्त्वमतीतानागतविषयप्रयोजननिरूपणसामर्थ्यं
च तत्संकल्पादपि भूयः कथं यदा वै प्राप्तं वस्त्विदमेवं प्राप्तमिति चेतयते तदा तदादानाय वापोहनाय वाथ संकल्पयतेऽथ मनस्यतीत्या
दि पूर्ववत्तानि संकल्पादीनि कर्मफलान्तानि चित्तैकायनानि चित्तात्मानि चित्तोत्पत्तीनि चित्ते प्रतिष्ठितानि चित्तस्थितीन्यपि पूर्ववत्

चित्तं वाव संकल्पाद्भूयो यदा वै चेतयतेऽथ संकल्पयतेऽथ मनस्यत्यथ वाचमीरयति तामु नाम्नीरयति नाम्नि मन्त्रा
एकं भवन्ति मन्त्रेषु कर्माणि तानि ह वा एतानि चित्तैकायनानि चित्तात्मानि चित्ते प्रतिष्ठितानि तस्माद्यद्यपि बहुविद
चित्तो भवति नायमस्तीत्येवैनमाहुर्यदयं वेद यद्वा अयं विद्वान्नेत्थमचित्तः स्यादित्यथ यद्यल्पविच्चित्तवान्भवति

त् ॥ किंच चित्तस्य माहात्म्यं यस्माच्चित्तं संकल्पादिमूलं तस्माद्यद्यपि बहुविद्बहुशास्त्रादिपरिज्ञानवानचित्तो भवति प्राप्ता
दिचेतयितृत्वसामर्थ्यरहितो भवति ॥ तं निपुणा लौकिका नायमस्ति विद्यमानोऽप्यसत्सम एवेत्येनमाहुः यच्चायं किंचिच्छास्त्रा
दि वेद श्रुतवांस्तदप्यस्य वृथैवेति कथयन्ति ॥ कस्मात् यदयं विद्वान्स्यादित्थमेवमचित्तो न स्यात्तस्मादस्य श्रुतमप्यश्रुतमेवे

दिना ॥ संकल्पप्रकरणं परामृशति ॥ पूर्ववदिति ॥ संकल्पस्य निमित्तत्वे सति स्तुत्यर्थमधिकरणत्वं युक्तं तथा चित्तस्य संकल्पादिषु निमित्त
त्वेऽपि स्तुत्यर्थमेव तदधिकरणत्वमाह ॥ तानीति ॥ इतश्च चित्तस्यास्ति वैशिष्ट्यमित्याह ॥ किंचेति ॥ यद्यपि बहुशास्त्रार्थपरिज्ञानवान्
भवति तथापि यद्यचित्तो भवतीति योजना ॥ अचित्तस्यासत्समत्वं श्रुतवैयर्थ्यं चेत्युक्तं प्रश्नद्वारा विवृणोति ॥ कस्मादित्यादिना श्रुतमपीत्य

चित्ताभावेश्रुतादेवैयर्थ्योक्त्या तदेकशिष्टत्वमादिष्टमिदानीं तदेकशिष्टत्वे हेत्वंतरमाह॥ अथेति॥ चित्तवतोक्तार्थग्रहणार्थं श्रोतुमिच्छा लोक
स्य भवतीत्यत्र हेतुमाह॥ तस्मादिति॥५॥ किं तद्ध्यानमित्यपेक्षायामाह॥ ध्यानं नामेति॥ अचलत्वं साधयति॥ भिन्नजातीयैरिति॥ कथं
तस्य चित्ताद्भूयस्त्वमित्याशंक्याह ध्यानेकाग्रताशोपहतस्यातीतादिफलनिरूपणसामर्थ्यादर्शनादेकाग्रतारूपो ध्यानपदार्थश्चेतनपित्र

अथाल्पविदपि यदि चित्तवान्भवति तस्मा एतस्मै तदुक्तार्थग्रहणायैवोतापि शुश्रूषंते श्रोतुमिच्छंति तस्माच्च चित्तं ह्येवैषां
संकल्पादीनां एकायनमित्यादि पूर्ववत् चित्तानुपचितान्बुद्धिमद्गुणैः स चित्तोपासको ध्रुवानित्यादि चोक्तार्थं॥५॥ ध्यानं
वाव चित्ताद्भूयो ध्यानं नाम शास्त्रोक्तदेवताद्यालंबनेष्वचलो भिन्नजातीयैरनंतरितः प्रत्ययसंतान एकाग्रतेति यमाहुः दृश्य

तस्मा एवोत शुश्रूषंते चित्तं ह्येवैषामेकायनं चित्तमात्मा चित्तं प्रतिष्ठा चित्तमुपास्स्वेति स यश्चित्तं ब्रह्मेत्युपा
स्ते चित्तान्वै स लोकान्ध्रुवान्ध्रुवः प्रतिष्ठितान्प्रतिष्ठितोऽव्यथमानानव्यथमानोऽभिसिध्यति यावच्चित्तस्य गतं त
त्रास्य यथाकामचारो भवति यश्चित्तं ब्रह्मेत्युपास्तेऽस्ति भगवश्चित्ताद्भूय इति चित्ताद्वाव भूयोऽस्तीति तन्मे भग
वान्ब्रवीत्विति॥५॥ ध्यानं वाव चित्ताद्भूयो ध्यायतीव पृथिवी ध्यायतीवांतरिक्षं ध्यायतीव द्यौर्ध्यायंतीवापो ध्या

ते च ध्यानस्य माहात्म्यं फलतः कथं यथा योगी ध्यायन्निश्चलो भवति ध्यानफललाभ एवं ध्यायतीव निश्चला दृश्यते पृथि
वी ध्यायतीवांतरिक्षमित्यादि समानमन्यत् देवाश्च मनुष्याश्च देवमनुष्या मनुष्या एव वा देवसमा देवमनुष्याः शमादिगुण
संपन्ना मनुष्या देवस्वरूपं न जहतीत्यर्थः॥ यस्मादेवं विशिष्टं ध्यानं

त्वात्तस्य कारणत्वात्ततो भूयो ध्यानमेवेत्यभिप्रेत्याह॥ एकाग्रते
ति॥ दृतश्चास्ति तस्य भूयस्त्वमित्याह॥ दृश्यते चेति॥ फलद्वारा तन्माहात्म्यं प्रश्नपूर्वकं दृष्टांतेन स्पष्टयति॥ कथमित्यादिना गौरवपरिहा
रार्थं पक्षांतरमाह॥ मनुष्या एवेति॥ मनुष्याणामेव सतां कुतो देवत्वमित्याशंक्याह॥ शमादीति॥ ध्यानफलं नैश्चल्यं तन्महत्सु पृथिव्यादिषु

॥धनादिभिर्महत्त्वहेतुमुक्तं कर्मेति यावत्॥ध्यानस्यापादनं अनुष्ठानं तेन तत्फललाभो लक्ष्यते तेन तस्यांशो येषामस्ति ते तथा॥ ध्यानफ
ललाभकलावत्त्वमेव स्फुटयति॥ निश्चलादिति॥ इवकारार्थमाह॥ नेति॥ महत्सु पुरुषेषु ध्यानफलानुवृत्तिर्दृष्टेत्यन्वयमुक्त्वा व्यतिरेक



तस्माद्य इह लोके मनुष्याणामेव धनैर्विद्यया गुणैर्वा महत्तां महत्त्वं प्राप्नुवंति धनादिमहत्त्वहेतुं लभंत इत्यर्थः॥ ध्याना
पादांशा इव ध्यानस्यापादनमापादो ध्यानफललाभ इत्येतत् तस्यांशो ऽवयवः कला काचिद्ध्यानफललाभकलावंत इवे
त्यर्थः ते भवंति निश्चला इव लक्ष्यंते न क्षुद्रा इवाथ ये पुनरल्पाः क्षुद्राः किंचिदपि धनादिमहत्त्वैकदेशमप्राप्तास्ते पूर्वोक्त
विपरीताः कलहिनः कलहशीलाः पिशुनाः परदोषोद्भासकाः उपवादिनः परदोषसामीप्ययुक्तमेव वदितुं शीलं येषां त उप

वपर्वता ध्यायंतीव देवमनुष्यास्तस्माद्य इह मनुष्याणां महत्तां प्राप्नुवंति ध्यानापादांशा इवैव ते भवंत्यथ ये ।
ल्पाः कलहिनः पिशुना उपवादिनस्ते ऽथ ये प्रभवो ध्यानापादांशा इवैव ते भवंति ध्यानमुपास्स्वेति॥ स यो ध्यानं ब्र
ह्मेत्युपास्ते यावद्ध्यानस्य गतं तत्रास्य यथाकामचारो भवति यो ध्यानं ब्रह्मेत्युपास्ते ऽस्ति भगवो ध्यानाद्भूय इति ध्याना
द्वाव भूयो ऽस्तीति तन्मे भगवान्ब्रवीत्विति॥६॥ विज्ञानं वाव ध्यानाद्भूयो विज्ञानेन वा ऋग्वेदं विजानाति यजुर्वेदं सा

वादिनश्च भवंति॥ अथ ये महत्त्वं प्राप्ता धनादिनिमित्तं ते ऽन्यान्प्रति प्रभवंतीति प्रभवो विद्याचार्यराजेश्वरादयो ध्यानापादांशा इवे
त्याद्युक्तार्थं अतो दृश्यते ध्यानमहत्त्वफलतो ऽतो भूयश्चित्तादतस्तदुपास्स्वेत्याद्युक्तार्थं॥६॥ विज्ञानं वाव ध्यानाद्भूयो विज्ञानं शा
स्त्रार्थविषयं ज्ञानं तस्य ध्यानकारणत्वाद्ध्यानाद्भूयस्त्वं कथं च तस्य भूयस्त्वमित्याह॥ विज्ञानेन वा ऋग्वेदं विजानाति अयमृग्वे

माह॥ अथेति॥ व्यतिरेकं दर्शयित्वान्वयमुपसंहरति॥ अथ ये महत्त्वमिति॥ महत्सु नैश्चल्यदर्शनमतः शब्दार्थः॥ महत्त्वफलमाह॥ अत इति
॥६॥ विज्ञानस्योक्तं भूयस्त्वं प्रश्नपूर्वकं दर्शयति॥ कथं चेत्यादिना॥ यद्यपि प्रमाणतया तज्ज्ञानं शास्त्रार्थज्ञानपूर्वकं तथापि कथं तस्य ध्यानका

॥ किंचेति॥ भूयस्त्वफलमाह॥ अतइति॥ ज्ञानविज्ञानशब्दयोरर्थभेदं कथयति॥ विज्ञानमिति॥ तथापि लोकानामचेतनानां कृतस्तदुभयाश्रय
त्वमित्याशंक्याह॥ तद्धिरिति॥ ७॥ यथोक्तबलशब्दार्थे श्वेतकेतुवाक्यं प्रमाणयति॥ अनशनादिति॥ कथं तर्हि शरीरसामर्थ्ये बलशब्दप्र
ध्यानकारणं तथा यजुर्वेदमित्यादि किं च पश्वादीश्च धर्माधर्मौ शास्त्रसिद्धौ साध्वसाधुनी लोकतः स्मार्ते वा दृष्टविषयं च सर्वं
विज्ञानेनैव विजानातीत्यर्थः॥ तस्माद्युक्तं ध्यानाद्विज्ञानस्य भूयस्त्वं॥ अतो विज्ञानमुपास्स्वेति शृणूपासनफलं विज्ञानवतो वि
ज्ञानं येषु तान्विज्ञानवतो लोकान् ज्ञानवतश्चाभिसिध्यति माप्नोति॥ विज्ञानं शास्त्रार्थविषयं ज्ञानमन्यविषयं नैपुण्यं तद्वि

माथर्वणं चतुर्थमितिहासपुराणं पंचमं वेदानां वेदं पित्र्यंराशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मवि
द्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्यां सर्पदेवजनविद्यां दिवं च पृथिवीं च वायुं चाकाशं चापश्च तेजश्च देवांश्च मनु
ष्यांश्च पशूंश्च वयांसि च तृणवनस्पतीञ्छ्वापदान्याकीटपतंगपिपीलकं धर्मं चाधर्मं च सत्यं चानृतं च साधु चा
साधु च हृदयज्ञं चाहृदयज्ञं चान्नं च रसं चेमं च लोकममुं च विज्ञानेनैव विजानाति विज्ञानमुपास्स्वेति स यो विज्ञानं
ब्रह्मेत्युपास्ते विज्ञानवतो वै स लोकान्ज्ञानवतोऽभिसिध्यति यावद्विज्ञानस्य गतं तत्रास्य यथाकामचारो भवति यो
विज्ञानं ब्रह्मेत्युपास्तेऽस्ति भगवो विज्ञानात्भूय इति विज्ञानाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति॥ ७॥ बलं
वाव विज्ञानाद्भूयोऽपि ह शतं विज्ञानवतामेको बलवानाकंपयते स यदा बली भवत्यथोत्थाता भवत्यु (९ युक्तान्लोका

नुप्राप्नोतीत्यर्थः॥ यावद्विज्ञानस्येत्यादि पूर्ववत्॥ ७॥ बलं वाव विज्ञानाद्भूयो बलमित्यन्नोपयोगजनितं मनसो विषये प्रतिभानं
सामर्थ्यं अनशनादृगादीनि न वै मा प्रतिभान्ति भो इति श्रुतेः शरीरेऽपि तद्देवोत्थानादिसामर्थ्यं॥ यस्माद्विज्ञानवतां (९ योगः तत्राह॥ शरीरे
पीति॥ तद्देवेति अन्नोपयोगजनितमेवेत्यर्थः॥ न केवलं कारणादेव बलं विज्ञानाद्भूयः किंतु भन्यस्यं च तस्य ततो भूयस्त्वं इत्याह॥ विज्ञानवतां

छां·भा· ८

समुदितमपिकंपयतेतथान्यत्रापिद्रष्टव्यमितिसंबंधः॥ यस्मादेवंबलस्यकारणत्वंविज्ञानस्यचकार्यत्वंतस्मात्तद्भूयस्त्वमित्यस्मिन्नर्थेकार्य
कारणभावमेवतयोरुपपादयति॥यस्मादित्यादिना॥द्रुतञ्चबलस्यभूयस्त्वमेष्टव्यमित्याह॥किंचेति॥८॥अथवायदिसोऽभुंजानोपिकथं:

शतमप्येकःप्राणीबलवानाकंपयते॥यथाहस्तीमत्तोमनुष्याणांशतंसमुदितमपि॥यस्मादेवमन्नाद्युपयोगनिमित्तंबलंत
स्मात्सपुरुषोयदाबलीबलेनतद्वान्भवति॥अथोत्थातोत्थानस्यकर्त्ता॥उत्तिष्ठंश्चगुरूणामाचार्यस्यचपरिचरितापरिचरणस्यशु
श्रूषायाःकर्त्ताभवतिपरिचरन्नुपसत्तातेषांसमीपगोंतरंगःप्रियोभवतीत्यर्थः॥उपसीदंश्चसामीप्यंगच्छन्नेकाग्रतयाचार्यस्या
न्यस्यचोपदेष्टुर्गुरोर्द्रष्टाभवति॥ततस्तदुक्तस्यश्रोताभवति॥ततइदमेभिरुक्तमेवमुपपद्यतइत्युपपत्तितोमंताभवतिमन्वान

त्तिष्ठंश्चपरिचरिताभवतिपरिचरन्नुपसत्ताभवत्युपसीदन्द्रष्टाभवतिश्रोताभवतिमंताभवतिबोद्धाभवति
कर्त्ताभवतिविज्ञाताभवतिबलेनवैपृथिवीतिष्ठतिबलेनांतरिक्षंबलेनद्यौर्बलेनपर्वताबलेनदेवमनुष्याबले
नपशवश्चवयांसिचतृणवनस्पतयःश्वापदान्याकीटपतंगपिपीलकंबलेनलोकस्तिष्ठतिबलमुपास्स्वेतिस
योबलंब्रह्मेत्युपास्तेयावद्बलस्यगतंतत्रास्ययथाकामचारोभवतियोबलंब्रह्मेत्युपास्तेऽस्तिभगवोबलाद्भूय
इतिबलाद्वावभूयोऽस्तीतितन्मेभगवान्ब्रवीत्विति॥८॥अन्नंवावबलाद्भूयस्तस्माद्यद्यपिदशरात्रीर्नाश्नीयाद्यद्यु

श्चबोद्धाभवतिएवमेवेदमिति॥ततएवंनिश्चित्यतदुक्तार्थस्यकर्त्तानुष्ठाताभवति॥विज्ञातानुष्ठानफलस्यानुभविताभव
तीत्यर्थः॥किंचबलस्यमाहात्म्यंबलेनवैपृथिवीतिष्ठतीत्याद्युक्तार्थं॥८॥अन्नंवावबलाद्भूयोबलहेतुत्वात्कथंबलहेतुत्व
मित्युच्यते॥यस्माद्बलकारणमन्नंतस्माद्यद्यपिकश्चिद्दशरात्रंनाश्नीयात्सोऽन्नोपयोगनिमित्तस्यबलस्यहान्याम्रियतेनचेन्म्रि
यतेयद्युहजीवेद्दृश्यंतेहिमासमप्यनश्नंतोजीवंतोथच॥चिरंजीवेत्तदाजीवन्नपिसोऽद्रष्टेतिसंबंधः॥कथमशनशून्यस्यजीवनमित्या

अ· ७

राम

अन्नोपयोगाभावेबलहानिरितिव्यतिरेकमुक्त्वातदुपयोगेबलंभवतीत्यन्वयमन्वाचष्टे॥अथेति॥अथयदान्नस्यायैइत्यपिपाठोस्तिः
तत्रान्नस्यायीइत्येतदेवपदंअन्नाप्तिपरतयाव्याख्येयमपीकारमेकारत्वेनविपरिणमय्यवर्णव्यत्ययांगीकारादित्याह॥आयेइत्येतदिति

सञ्जीवन्नप्यद्रष्टाभवतिगुरोरपितन्नएवाश्रोतेत्यादिपूर्ववैपरीत्यंसर्वंभवति॥अथयदावहून्यहान्यनशितोदर्शनादिक्रिया
स्वसमर्थःसन्नन्नस्यायीआगमनमायोन्नस्यप्राप्तिरित्यर्थःसायस्यविद्यतेसोन्नस्यआयीआयेइत्येतद्वर्णव्यत्ययेनएकारस्य
व्यत्ययेनईकारांतत्वेनाथान्नस्यायेइत्यपिपाठेएवमेवार्थः द्रष्टेत्यादिकार्यश्रवणात् दृश्यतेह्यन्नोपयोगेदर्शनादिसामर्थ्येनतत्
द्भ्रासवतोन्नमुपास्स्वेतिफलंचान्नवतःप्रभूतान्नान्वैसलोकान्पानवतःप्रभूतोदकांश्चान्नपानयोर्नित्यसंबंधाल्लोकानभिसि

अद्रष्टाऽश्रोताऽमंताऽबोद्धाऽकर्ताऽविज्ञाताभवत्यथान्नस्यायैद्रष्टाभवतिश्रोताभवतिमंताभवतिबोद्धाभवतिकर्ताभ-
वतिविज्ञाताभवत्यन्नमुपास्स्वेतिसयोन्नंब्रह्मेत्युपास्तेऽन्नवतोवैसलोकान्पानवतोभिसिध्यतियावदन्नस्यगतंतत्रास्य
यथाकामचारोभवतियोन्नंब्रह्मेत्युपास्तेस्तिभगवोन्नाद्भूयइत्यन्नाद्वावभूयोस्तीतितन्मेभगवान्ब्रवीत्विति॥१॥आ
पोवाअन्नाद्भूयस्यस्तस्माद्यदासुवृष्टिर्नभवतिव्याधीयंतेप्राणाअन्नंकनीयोभविष्यतीत्यथयदासुवृष्टिर्भवत्यानं
दिनःप्राणाभवंत्यन्नंबहुभविष्यतीत्यापएवेमामूर्तायेयंपृथिवीयदंतरिक्षंयद्द्यौर्यत्पर्वतायद्देवमनुष्यायत्पशवश्च

ध्यतिसमानमन्यत्॥१॥आपोवाअन्नाद्भूयस्योऽन्नकारणत्वाद्यस्मादेवंतस्माद्यदायस्मिन्कालेसुवृष्टिःसस्यहिताशोभना॥
वृष्टिर्नभवतितदाव्याधीयंतेप्राणादुःखिनोभवंति॥किंनिमित्तमित्याह॥अन्नमस्मिन्संवत्सरेनःकनीयोल्पतरंभविष्यतीत्यथ

द्रष्टाऽश्रोतेत्याद्यन्नकार्यस्यश्रवणादपिपाठांतरमन्नप्राप्तिपरतयाव्याख्येयमित्याह॥द्रष्टेत्यादीति॥कथंतदन्नकार्यमित्याशंक्यान्वयव्य
तिरेकौदर्शयति॥दृश्यतेहीति॥१॥अपांकारणत्वेनान्नाद्भूयस्त्वमन्वयव्यतिरेकाभ्यांसाधयति॥यस्मादित्यादिना॥ ९ ॥ ६ ॥ ९ ॥

अपां सर्वजगदात्मकत्वाच्चान्नात् भूयस्त्वमुचितमित्याह ॥ अप्संभवत्वादिति ॥ दधिपयःप्रभृत्याहुतिपरिणामत्वादन्तरिक्षादेरप्संभवत्वमवधेयं अपां सर्वमूर्तात्मकत्वमुपसंहरति ॥ इत्याद्याहेति ॥ १० ॥ इतिशब्दस्तदाहुरित्यनेन संबध्यते वैशब्दार्थं दर्शयति ॥ प्रसिद्धमिति ॥ अमे



सुखिनो हृष्टाः प्राणिनो भवन्त्यन्नं बहु प्रभूतं भविष्यतीत्यप्संभवत्वान्मूर्तस्यान्नस्याप एवेमा मूर्ता मूर्तभेदाकारपरिणता इति मूर्ता येयं पृथिवी यदन्तरिक्षमित्यादि आप एवेमा मूर्ता अतोऽप उपास्स्वेति फलं स यो ऽपो ब्रह्मेत्युपास्ते ॥ आप्नोति सर्वान्कामान्तृप्तिमतो विषयानित्यर्थः ॥ अप्संभवत्वाच्चान्नस्याप उपासनात्तृप्तिमांश्च भवति समानमन्यत् ॥ १० ॥ तेजो वा अद्भ्यो भूयस्तेजसोऽप्कारणत्वात्कथमप्कारणत्वमित्याह ॥ यस्माद्वा एतत्तेजस्तस्मात्तद्वा एतत्तेजो वायुमागृह्यावष्टभ्य स्वात्मना निश्चलीकृत्य वायु

वयांसि च तृणवनस्पतयः श्वापदान्याकीटपतङ्गपिपीलकमाप एवेमा मूर्ता अप उपास्स्वेति स यो ऽपो ब्रह्मेत्युपास्त आप्नोति सर्वान्कामांस्तृप्तिमान्भवति यावदपां गतं तत्रास्य यथाकामचारो भवति यो ऽपो ब्रह्मेत्युपास्तेऽस्ति भगवोऽद्भ्यो भूय इत्यद्भ्यो वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ १० ॥ तेजो वा अद्भ्यो भूयस्तद्वा एतद्वायुमागृह्याकाशमभितपति तदाहुर्निशोचति नितपति वर्षिष्यति वा इति तेज एव तत्पूर्वं दर्शयित्वाथापः सृजते ॥

माकाशमभितपति आकाशमभिव्याप्नुवत्तपति यदा तदाहुर्लौकिकाः निशोचति संतपति सामान्येन जगन्नितपति देहानतो वर्षिष्यति वा इति प्रसिद्धं हि लोके कारणमभ्युद्यतं दृष्टवतः कार्यं भविष्यतीति विज्ञानं तेज एव पूर्वमात्मानमुद्भूतं दर्शयित्वाऽथानन्तरमपः सृजते ऽतोऽप्स्रष्टृत्वादद्भ्यो भूयस्तेजः किंचान्यत्तदेतत्तेज एव स्तनयित्नुरूपेण वर्षहेतुर्भवति ॥ कथमूर्ध्वाभिश्चोर्ध्वगाभिर्विद्युद्भिस्तिरश्चीभिश्च तिर्यग्गताभिश्च सह ह्रादाः स्तननशब्दाश्चरन्ति ॥

तेजसो हक्कं कार्यकारणत्वमुपजीव्य फलितमाह ॥ तेज एवेति ॥ अप्तेजसोर्विधान्तरेण कार्यकारणभावं दर्शयति ॥ किंचान्यदिति ॥ तदेवोपपादयति ॥ ऊर्ध्वाभिरिति ॥ तेजसो भूयस्त्वफलमाह ॥

॥तेजइति॥ नमःशब्दार्थमाह॥ बाह्येति॥ बाह्यंतमः शार्वरं प्रसिद्धं आध्यात्मिकं अज्ञानरागादि तदुभयमपहतं तमस्कानित्यत्र तमःशब्दित

तस्मात्तद्दर्शनादाहुर्लौकिका विद्योतते स्तनयति वर्षिष्यति वा इत्याद्युक्तार्थं अतस्तेज उपास्वेति तस्य तेजस उपासनाफलं
तेजस्वी वै भवति तेजस्वत एव च लोकान्भास्वतः प्रकाशवतोऽपहततमस्कान् बाह्याध्यात्मिकाज्ञानाद्यपहततमस्कान्अ
पनीतबाह्याध्यात्मिकादितमस्कानभिसिध्यति ऋज्वर्थमन्यत्॥११॥ आकाशो वाव तेजसो भूयान्वायुसहितस्य तेजसः का
रणत्वाद्व्योम्नो वायुमागृह्येति तेजसा सहोक्तो वायुरिति द्रष्टव्यमिह नोक्तस्तेजसः कारणं हि लोके कार्याद्भूयो दृष्टं यथा घटादिभ्यो

तदेतदूर्ध्वाभिश्च तिरश्चीभिश्च विद्युद्भिराह्रादाश्चरंति तस्मादाहुर्विद्योतते स्तनयति वर्षिष्यति वा इति तेज एत
त्पूर्वं दर्शयित्वाथापः सृजते तेज उपास्वेति स यस्तेजो ब्रह्मेत्युपास्ते तेजस्वी वै स तेजस्वतो लोकान्भास्वतोऽपहततम
स्कानभिसिध्यति यावत्तेजसो गतं तत्रास्य यथाकामचारो भवति यस्तेजो ब्रह्मेत्युपास्तेऽस्ति भगवस्तेजसो भूय इ
ति तेजसो वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति॥११॥ आकाशो वाव तेजसो भूयानाकाशे वै सूर्याचंद्रमसावुभौ
विद्युन्नक्षत्राण्यग्निराकाशेनाह्वयत्याकाशेन शृणोत्याकाशेन प्रतिशृणोत्याकाशे रमत आकाशे न रमत आकाशे

मृत्तथाकाशो वायुसहितस्य तेजसः कारणमिति ततो भूयान् कथमाकाशे वै सूर्याचंद्रमसावुभौ तेजोरूपौ विद्युन्नक्षत्राण्यग्निश्च
तेजोरूपाण्याकाशेऽन्तः यच्च यस्यांतर्वर्ति तदल्पं भूय इतरत् किंचाकाशेनाह्वयति चान्यः आकाशेन शृणोति अन्योक्तं च शब्दमन्यः
प्रतिशृणोति आकाशे रमते क्रीडत्यन्योन्यं सर्वस्तथा न रमते चाकाशे बंध्वादिवियोगे आकाशे जायते न मूर्तेनावष्टब्धे तथाकाश
मभिलक्ष्यांकुरादि जायते न प्रतिलोम

मित्यर्थः॥ अपहतशब्दार्थमाह॥ अपनीतेति॥ ११॥ वायोः सकाशादाकाशो भूयानिति वक्तव्ये कथं तेजसो भूयानित्युक्तं अत आह॥ वाय्विति॥
कारणत्वेऽपि कथमाकाशस्य वायुसहितात्तेजसो भूयस्त्वमित्याशंक्याह॥ कारणमिति॥ तेजसो वायुसहितादाकाशस्य भूयस्त्वं प्रश्नपूर्वकं प्र
कारांतरेण दर्शयति॥ कथमित्यादिना॥ इतश्चाकाश
स्यास्ति भूयस्त्वमित्याह॥ किंचेति॥

तद्भूयस्त्वफलमाह॥ अत इति॥ कथमाकाशोपासकस्य प्रकाशव्याप्तलोकप्राप्तिरित्याशंक्याह॥ प्रकाशाकाशयोरिति॥ १२॥ नपुंसक-
लिंगे श्रुतं पुल्लिंगत्वेन कथं व्याख्यातमित्याशंक्य पुल्लिंगोपक्रममाश्रित्याह॥ लिंगव्यत्ययेनेति कथं पुनः स्मरणस्याकाशाद्भूयस्त्वमित्या-



मत आकाशमुपास्स्व फलं शृण्वाकाशवतो वै विस्तारयुक्तान्स विद्वान् लोकान्प्रकाशवतः प्रकाशाकाशयोर्नित्यसंबंधात्
काशवतश्च लोकानसंबाधान्संबाधनं संबाधः संबाधोऽन्योन्यपीडा तद्रहितानसंबाधानुरुगायवतो विस्तीर्णगतीन्विस्तीर्ण-
प्रकाशान् लोकानभिसिध्यति॥ यावदाकाशस्येत्याद्युक्तार्थं॥ १२॥ स्मरो वा आकाशाद्भूयः स्मरणं स्मरोऽन्तःकरणधर्मः स
आकाशाद्भूयानिति द्रष्टव्यं लिंगव्यत्ययेन स्मर्तुः स्मरणे हि सति आकाशादि सर्वमर्थवत् स्मरणवतो भोग्यत्वादसति तु स्मरणे स-

जायत आकाशमभिजायत आकाशमुपास्स्वेति स य आकाशं ब्रह्मेत्युपास्त आकाशवतो वै स लोकान्प्रकाश-
वतोऽसंबाधानुरुगायवतोऽभिसिध्यति यावदाकाशस्य गतं तत्रास्य यथाकामचारो भवति य आकाशं ब्रह्मेत्यु-
पास्तेऽस्ति भगव आकाशाद्भूय इत्याकाशाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति॥ १२॥ स्मरो वाव आकाशाद्भू-
यस्तस्माद्यद्यपि बहव आसीरन्न स्मरन्तो नैव ते कंचन शृणुयुर्न मन्वीरन्न विजानीरन्यदा वाव ते स्मरेयुरथ शृणुयु-
रथ मन्वीरन्नथ विजानीरन्स्मरेण वै पुत्रान्विजानाति स्मरेण पशून्स्मरमुपास्स्वेति स यः स्मरं ब्रह्मेत्युपास्ते यावत्स्म-

दसदेव सत्कार्याभावान्नापि सत्त्वं स्मृत्यभावे शक्यमाकाशादीनामवगंतुमित्यतः स्मरणस्याकाशाद्भूयस्त्वं दृश्यते हि
लोके स्मरणस्य भूयस्त्वं यस्मात्तस्माद्यद्यपि समुदिता बहव एकस्मिन्नासीरन्नुपविष्टाः ते तत्रासीना अन्योन्यभाषितमपि न

शंक्याह॥ स्मरणे हीति॥ अन्वयमुक्त्वा व्यतिरेकं दर्शयति॥ असतीति॥ आकाशादेः स्मरणाभावेऽपि सत्त्वमंगीकृत्य भोग्यत्वाभावादानर्थ-
क्यमुक्तं संप्रत्यस्मरणे सत्त्वमेव नास्तीत्याह॥ नापीति॥ स्मरणस्य भूयस्त्वमनुभवानुसारेण साधयति॥ दृश्यते हीति॥ हिशब्दार्थो यस्मादि-

स्मरणाभावे श्रवणाद्यभावव्यतिरेकमुक्त्वा तद्भावे तद्भावमन्वयमाह ॥ यदेति ॥ इतश्चास्ति स्मरणस्य भूयस्त्वमित्याह ॥ तथेति ॥ तद्भूयस्त्वे
स्मरंतश्चेत्स्युर्नैव ते कंचन शब्दं शृणुयुस्तथा न मन्वीरन्मंतव्यं चेत्स्मरेयुस्तदा मन्वीरन्स्मृत्यभावत्वान्न मन्वीरंस्तथा न विजा
नीरन् यदा वाव ते स्मरेयुर्मंतव्यं विज्ञातव्यं श्रोतव्यं चाथ शृणुयुरथ मन्वीरन्नथ विजानीरन् तथा स्मरेणैव मम पुत्रा एत इति पु
त्रान्विजानाति स्मरेण पशून्तो भूयस्त्वात्स्मरमुपास्स्वेत्युक्तार्थमन्यत् ॥ १३ ॥ आशा वाव स्मराद्भूयसी अप्राप्तवस्त्वाकांक्षा आ
शा तृष्णा काम इति यामाहुः पर्यायैः सा च स्मराद्भूयसी कथमाशया ह्यंतःकरणस्थया स्मरति स्मर्तव्यं आशा विषयरूपं स्मरन्न
तत्रास्य यथाकामचारो भवति यः स्मरं ब्रह्मेत्युपास्तेऽस्ति भगवः स्मराद्भूय इति स्मराद्वाव भूयोस्तीति तन्मे भ
गवान्ब्रवीत्विति ॥ १३ ॥ आशा वाव स्मराद्भूयस्याशेद्धो वै स्मरो मंत्रानधीते कर्माणि कुरुते पुत्रांश्च पशूंश्चेच्छ
त इमं च लोकममुं चेच्छत आशामुपास्स्वेति स य आशां ब्रह्मेत्युपास्त आशयास्य सर्वे कामाः समृध्यंत्यमोघा हास्या
शिषो भवंति यावदाशाया गतं तत्रास्य यथाकामचारो भवति य आशां ब्रह्मेत्युपास्तेऽस्ति भगव आशाया भूय इत्या
शाया वाव भूयोस्तीति तन्मे भगवान्ब्रवीत्विति ॥ १४ ॥ ॥ सोस्मरो भवति अत आशेद्धः आशयाभिवर्द्धितः स्मरभूतः स्मरन्नृगा
दीन्मंत्रानधीते धीत्य च तदर्थं ब्राह्मणेभ्यो विधींश्च श्रुत्वा कर्माणि कुरुते तत्फलाशयैव पुत्रांश्च पशूंश्च कर्मफलभूतानिच्छते भि
वांच्छत्याशयैव तत्साधनान्यनुतिष्ठति इमं च लोकमाशेद्ध एव स्मरन्लोकसंग्रहहेतुभिरिच्छत्यमुं च लोकमाशेद्धः स्मरंस्तत्सा
धनानुष्ठानेनेच्छते आशारशनावबद्धं स्मराकाशादिनामपर्यंतं जगच्चक्रीभूतं प्रतिप्राणि अत आशायाः स्मरादपि भूयस्त्वमि
त्यत आशामुपास्स्व यस्त्वाशां ब्रह्मेत्युपास्ते ॥ शृणु तस्य फलं आशया सदोपासितयास्योपासकस्य सर्वे कामाः समृध्यंति स
मृद्धिं गच्छंति ॥ अमोघा हास्याशिषः प्रार्थनाः सर्वा भवंति ॥ ॥ फलितमाह ॥ अत इति ॥ १४ ॥ आशाया भूयस्त्वमाकांक्षापूर्वकमुत्थापय

॥१४॥ प्राणस्य सर्वास्पदत्वेन भूयस्त्वं कथयति॥ नाम्नोपक्रममिति॥ प्रकृतश्रुतिवशान्नाम्नोपक्रमेयस्यजगतोस्ति तत्तथा पाठक्रममेवाश्रि
त्याशा अंतेयस्यास्ति तज्जगत्तथेति विग्रहः कार्यकारणत्वं काचित्कमुपादानोपादेयत्वं निमित्तनैमित्तकत्वमपि क्वाचित्कमेवोत्तरोत्तरभूयस्तया
पूर्वस्मात्पूर्वस्मान्नामादेरुत्तरोत्तरवागादिभूयस्त्वेनेति यावत्स्मृतिनिमित्तः सद्भावो यस्य तत्तथा आशारश्मैरशनापाशैः सर्वतो विपाशि
तमित्यत्र दृष्टांतमाह॥ बिसमिवेति॥ बिसशब्दो नालविषयः यथोक्तं जगद्यस्मिन्नर्पितं स एव भूयानिति संबंधः॥ सर्वस्य जगतस्तस्मि
न्नर्पितत्वमेव दृष्टांतद्वारा स्पष्टयति॥ येन चेति॥ सर्वतो व्यापिनेति तस्यैव स्फुटीकरणमंतर्बहिर्गतेनेति॥ प्राणस्याशायाः सकाशाद्भूयस्त्व

यत्त्वार्थितं सर्वं तदवश्यं भवतीत्यर्थः यावदाशायागतमित्यादि पूर्ववत्॥१४॥ नाम्नोपक्रममाशांतं कार्यकारणत्वेन निमित्तनैमि
त्तिकत्वेन चोत्तरोत्तरभूयस्तयावस्थितं स्मृतिनिमित्तसद्भावमाशारशनापाशैर्विपाशितं सर्वं सर्वतो बिसमिव तंतुभिर्यस्मिन्प्रा
णे समर्पितं येन च सर्वतो व्यापिनांतर्बहिर्गतेन सूत्रेण मणिगणा इव सूत्रेण ग्रथितं विधृतं च स एष प्राणो वै आशाया भूयान्कथम

प्राणो वा आशाया भूयान्यथा वा अरा नाभौ समर्पिता एवमस्मिन्प्राणे सर्वं समर्पितं॥ ॱ

स्य भूयस्त्वमित्याह दृष्टांतेन समर्थयंस्तद्भूयस्त्वं यथा वै लोके रथचक्रस्यारा रथ्य नाभौ समर्पिताः संप्रोताः संप्रवेशिता इ
त्येतदेवमस्मिँल्लिंगसंघातरूपे प्राणे प्रज्ञात्मनि दैहिके मुख्ये यस्मिन्पराद्देवता नामरूपव्याकरणायादर्शोदे प्रतिबिंबवज्जीवे
नात्मनानुप्रविष्टा यस्य महाराजस्येव सर्वाधिकारी प्ररस्य ॥ साकांक्षापूर्वकं समर्थयते॥ कथमित्यादिना॥ लिंगानां व्यष्टीनां संघा
तः समुदायस्तद्रूपे समष्ट्यात्मनीति यावत्॥ उपाधितद्वतोरैक्यमभिप्रेत्य विशिनष्टि॥ प्रज्ञात्मनीति॥ तस्यैवाध्यात्ममधिभूतमधिदैव
चावस्थानं सूचयति॥ दैहिक इति॥ प्राणांतरं व्यावर्त्तयति॥ मुख्य इति॥ यथोक्ते स्मिन्प्राणे सर्वं समर्पितमित्युत्तरत्र संबंधः॥ प्रज्ञात्मनीति प
रमात्मोपाधित्वं प्राणस्योक्तं तदुपपादयति॥ यस्मिन्निति॥ तस्मिन्सर्वं समर्पितमिति पूर्ववत्संबंधः॥ किमिति चक्षुरादिषु विद्यमानेषु मुख्य

प्राणस्येश्वरं प्रति सर्वाधिकारे श्रुत्यंतरं प्रमाणयति॥कस्मिन्निति॥ईश्वरं प्रति प्राणस्यैवोपाधित्वे हेत्वंतरमाह॥यस्येति॥अत्रापि पूर्ववद
न्वयः प्राणः छायावदीश्वरमनुगच्छतीत्यत्र श्रुत्यंतरं प्रमाणयति॥तस्येति॥भूतमात्राः शब्दादयः पृथिव्यादयश्च विषयाः प्रज्ञामात्रा
सु शब्दादिबुद्धिषु तज्जनकेंद्रियेषु चेत्यर्थः॥भवतु नाम प्राणेऽर्पितत्वं तथापि कथं प्राणस्य छायावदीश्वरं प्रत्यनुगतिस्तत्राह॥स एव
इति॥कौषीतकिनां श्रुतिरिति शेषः॥प्राणस्य यथोक्तविशेषणविशिष्टत्वमतः शब्दार्थः॥आरभ्यांतभागमनूद्यावशिष्टं मंत्रं व्याकरोति

कस्मिन्वहमुत्क्रांत उत्क्रांतो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति स प्राणमसृजतेति श्रुतेः॥यस्य च्छायेवानु
गत ईश्वरं तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः
स एष प्राण एव प्रज्ञात्मेति कौषीतकीयानामत एवमस्मिन्प्राणे सर्वं यथोक्तं समर्पितम्॥अतः स एष प्राणोऽपरतंत्रः प्राणेन

प्राणः प्राणेन याति प्राणः प्राणं ददाति प्राणाय ददाति प्राणो ह पिता प्राणो माता प्राणो भ्राता प्राणः स्वसा प्राण आ
चार्यः प्राणो ब्राह्मणः स यदि पितरं वा मातरं वा भ्रातरं वा स्वसारं वाचार्यं वा ब्राह्मणं वा किंचिद्भृशमिव प्रत्याह

स्वशक्त्यैव याति॥नान्यगतं गमनादिक्रिया स्वस्य सामर्थ्यमित्यर्थः सर्वं क्रियाकारकफलभेदजातं प्राण एव न प्राणाद्बहि
र्भूतमस्तीति प्रकरणार्थः॥प्राणः प्राणं ददातीति यद्दानेन त्वात्मभूतमेव यस्मै ददाति तदपि प्राणायैवातः पित्राद्याख्या अ-
पि प्राण एव॥कथं पित्रादिशब्दानां प्रसिद्धार्थोत्सर्गेण प्राणविषयत्वमित्युच्यते ५॥एवमिति॥प्राणः प्राणेन यातीत्यस्यार्थमाह॥अत
इति॥सर्वात्मत्वादिति यावत्प्राणः प्राणेन यातीत्यादेः प्राणो ह्येवैतानि सर्वाणि भवतीत्यतस्तात्पर्यं संक्षिप्य कथयति॥सर्वमिति॥दातुर्दे
यस्य संप्रदानस्य च प्राणाभिन्नत्वं प्रकटयति॥प्राण इति॥तदपीति दीयमानमुच्यते स्वस्य संप्रदानस्य च प्राणाभिन्नत्वात्प्राणायैवेत्युक्तं॥
प्राणस्य सर्वात्मत्वमतः शब्दार्थः प्रसिद्धिरनतिक्रमणीयेति शंकते॥कथमिति॥अन्वयव्यतिरेकाभ्यां पित्रादिशब्दानां प्राणविषयत्वात्तत्प्र

अन्वयव्यतिरेकावेव प्रश्नपूर्वकं प्रकटयति॥ कथमित्यादिना॥ पित्रादिषु प्राणे सति पित्रादिशब्दानां प्रयुज्यमानत्वमन्यथा चाप्रयुज्यमा-
नत्वं तदित्युच्यते॥ त्वंकारादियुक्तमित्यादिपदेन तिरस्कारप्रभेदो गृह्यते॥ पित्रादिष्वप्रियवादिनं प्रति विवेकिनां धिक्कारवचने हेतुमाह॥
पितृहेति॥ सति प्राणे पित्रादिषु पित्रादिशब्दानां प्रयुज्यमानत्वमित्यन्वयमुक्त्वा व्यतिरेकमाह॥ अथेति॥ समस्य पुंजीकृत्य व्यत्यस्याव-
यवान्विभज्येत्यर्थः॥ यद्यपीत्युपक्रमादेवमपीत्येतत्तथापीत्यस्मिन्नर्थे द्रष्टव्यं न देवातिरिक्तनरं कर्म विशिनष्टि॥ समासेति॥ अवयववि-

सति प्राणे पित्रादिषु पित्रादिशब्दप्रयोगात्तदुत्क्रान्तौ च प्रयोगाभावात्कथं तदित्याह॥ स यः कश्चित्पित्रादीनामन्यतमं यदि
भृशमिव तदननुरूपमिव किंचिद्वचनं त्वंकारादियुक्तं प्रत्याह॥ तदैनं पार्श्वस्था आहुर्विवेकिनो धिक्त्वास्तु धिगस्तु त्वामित्ये-
वं पितृहा वै त्वं पितुर्हन्तेत्यादि॥ अथैनानेवोत्क्रान्तप्राणांस्त्यक्तदेहान्यद्यपि शूलेन समासं समस्य व्यतिषंदहेत्व्यत्य-

धिक्त्वास्त्वित्येवैनमाहुः पितृहा वै त्वमसि मातृहा वै त्वमसि भ्रातृहा वै त्वमसि स्वसृहा वै त्वमस्याचार्यहा वै त्वम-
सि ब्राह्मणहा वै त्वमसीत्यथ यद्यप्येनानुत्क्रान्तप्राणाञ्छूलेन समासं व्यतिषंदहेत् नैवैनं ब्रूयुः पितृहासीति न मातृ-
((हासीति

स्य संदहेदेवमतिक्रूरमपि कर्म॥ समासव्यासादिप्रकारेण दहनलक्षणं तद्देहसंबद्धमेव कुर्वाणं नैवैनं ब्रूयुः पि-
नृहेत्यादि तस्मादन्वयव्यतिरेकाभ्यामवगम्यते एतत्पित्राद्याख्यः प्राण एवेति तस्मात्प्राणो ह्येवैतानि पित्रादीनि सर्वाणि भवति च
((लानि स्थिराणि च स वा एष

भजनमादिशब्दार्थः॥ तद्देहसंबद्धमित्यत्र तच्छब्दार्थः पित्रादिविषयः॥ यद्यप्युत्क्रान्तप्राणेष्वपि देहेषु
पित्रादिशब्दो दृष्टस्तथापि नासौ मुख्यस्तद्विषये क्रूरकर्मानुष्ठानेऽपि शिष्टगर्हादृष्टेरिति भावः॥ उक्तान्वयव्यतिरेकफलमुपसंहरति॥ त-
स्मादिति॥ प्राणस्यैव पित्रादिसंज्ञकत्वे किं स्यादित्याशंक्याह॥ तस्मात्प्राणो हीति॥ प्राणस्य भूयस्त्वमेवं व्युत्पाद्य तद्विज्ञानफलमाह॥ स
वा इति॥ प्राणविदतिवादी भवतीति संबंधः॥ कथं प्राणवित्त्वमित्यपेक्षायामाह॥ एवमिति॥ सर्वात्मत्वं यथोक्तप्रकारः फलतोऽनुभवः

प्राणविदेवं

स्वरूपत्वेन साक्षात्कारः॥

ननु दर्शनेनैव प्राणवित्त्वे साध्ये सति किमिति मननविज्ञाने पृथगुपन्यस्येते तत्राह ॥ मननविज्ञानाभ्यां हीति ॥ उक्तान्वयव्यतिरेकाभ्यो
पपत्तिसहकृताद्वा वाक्यात्प्राणविषयं ज्ञानं जायते तदत्र विज्ञाने विवक्ष्यते तत्फलं साक्षात्करणं दर्शनमिति भेदः ॥ मननविज्ञाने विना द
र्शनासंभवोऽतः शब्दार्थः ॥ एवं मननादिद्वारेणेति यावत् ॥ अतिवादित्वं स्तुत्या द्रढयति ॥ नामादीति ॥ नापह्नुवीतेत्युक्तं व्यक्तीकरोति ॥ क
स्मादिति ॥ यद्यस्मादयं विद्वानात्मत्वेन सर्वेश्वरः प्राणोऽस्मीत्युपगतवांस्तस्मादपह्नवहेत्वभावादात्मनोऽतिवादित्वं नापह्नुवीतेत्यर्थः ॥

यथोक्तप्रकारेण पश्यन् फलतोऽनुभवन्नेवं मन्वान उपपत्तिभिश्चिन्तयन्नेवं विजानन्नुपपत्तिभिः संयोज्यैवमेवेति निश्च
यं कुर्वन्नित्यर्थः मननविज्ञानाभ्यां हि संभूतः शास्त्रार्थो निश्चितो दृष्टो भवेदत एवं पश्यन्नतिवादी भवति ॥ नामाद्याशांतम
तीत्य वदनशीलो भवतीत्यर्थः ॥ तं चेद् ब्रूयुस्तं यदि एवमतिवादिनं सर्वे दा सर्वैः शब्दैर्नामाद्याशांतमतीत्य वर्तमानं प्राणमेव

न भ्रातृहासीति न स्वसृहासीति नाचार्यहासीति न ब्राह्मणहासीति प्राणो ह्येवैतानि सर्वाणि भवति स वा एष एवं
पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवति ॥ तं चेद् ब्रूयुरतिवाद्यसीत्यतिवाद्यस्मीति ब्रूयान्नापह्नुवीत ॥१५॥ एष
तु वा अतिवदति यः सत्येनातिवदति सोऽहं भगवः ॥ वदत्येवं पश्यंतमतिवदनशीलमतिवादिनं ब्रह्मादिस्तंबपर्यंतस्य हि

जगतः प्राण आत्माहमिति ब्रुवाणं यदि ब्रूयुरतिवाद्यसीति बाढमतिवाद्यस्मीति ब्रूयान्नापह्नुवीत कस्माद्ध्यसावपह्नुवीत य
त्प्राणं सर्वेश्वरमयमस्मीत्यात्मत्वेनोपगतः ॥१५॥ स एष नारदः सर्वातिशयं प्राणं स्वमात्मानं सर्वात्मानं श्रुत्वा नातः परम
स्तीत्युपरराम ॥ न पूर्ववत्किमस्ति भगवः प्राणाद्भूय इति पप्रच्छ यतस्तमेवं ॥१५॥ अत्र प्राणांतमुपदेशं श्रुत्वा नारदस्य तूष्णींभावे
किं कारणमित्याशंक्याह ॥ स एष इति ॥ कथं तस्योपरतिरवगतेत्याशंक्याह ॥ न पूर्ववदिति ॥ किमिति तर्हि प्राप्तायामुपेक्षायां स्वय
मेवाचार्योऽनुत्पादयतीत्याशंक्याह ॥ तमेवमिति ॥ एतस्माज्जायते प्राण इति श्रुत्यंतरात्प्राणस्य विकारत्वेनानृतत्वं वाचारंभणविकारो

छां·भा· तिनेनेति यावत्परितुष्टत्वे कथमकृतार्थत्वमित्याशंक्य मिथ्याज्ञानशालित्वादित्याह ॥ परमार्थेति ॥ न च तस्योपेक्षार्हत्वमित्याह ॥ योग्यमिति ॥ अ·७
९३ मिथ्याग्रहविशेषो नास्ति प्राणात्परमित्यभिमानः ॥ कथं तर्हि प्राणविदोऽतिवादित्वमुक्तं तत्राह ॥ नामादीति ॥ कस्तर्हि परमार्थतोऽतिवादीत्या
शंक्याह ॥ यस्त्विति ॥ सोऽतिवादीति यतः सनत्कुमारस्याभिप्रायोऽत एवाहेति योजना ॥ नारदस्य नाद्याप्यपि सत्यविज्ञानमुत्पन्नं कथं सत्येनातिव

विकारानृतब्रह्मज्ञानेन परितुष्टमकृतार्थं परमार्थसत्यातिवादिनमात्मानं मन्यमानं योग्यं शिष्यं मिथ्याग्रहविशेषाद्वि
प्रच्याव्य अन्वाह भगवान्सनत्कुमारः एष तु वा अतिवदति यमहं वक्ष्यामि न प्राणविदतिवादी परमार्थतः नामाद्यपेक्षं तु तस्याति
वादित्वं परं तु भूमाख्यं सर्वातिक्रान्तं तत्त्वं परमार्थसत्यं वेद सोऽतिवादीत्यत आह ॥ एष तु वा अतिवदति यः सत्येन परमार्थसत्य
विज्ञानवत्तयाऽतिवदति ॥ सोऽहं त्वां प्रपन्नो भगवन्सत्येनातिवदानि तथा मां विनियुनक्तु भगवान्यथाहं सत्येनातिवदानीत्यभि

सत्येनातिवदानीति सत्यं त्वेव विजिज्ञासितव्यमिति सत्यं भगवो विजिज्ञास इति ॥ १६ ॥ यदा वै विजानात्यथ सत्यं ((वदति

प्रायः ॥ यद्येवं सत्येनातिवदितुमिच्छसि सत्यमेव तु तावद्विजिज्ञासितव्यमित्युक्त आह नारदः ॥ तथास्तु तर्हि सत्यं
भगवो विजिज्ञासे विशेषेण ज्ञातुमिच्छेयं त्वत्तोऽहमिति ॥ १६ ॥ यदा वै सत्यं परमार्थतो विजानातीदं परमार्थतः सत्यमिति ततोऽनृतं
विकारजातं वाचारम्भणं हित्वा सर्वविकारावस्थं सदेवैकं सत्यमिति तदेवाथ वदति यद्वदति ॥ ननु विकारोऽपि सत्यमेव नामरूपे सत्यं
ताभ्यामयं प्राणश्छन्नः प्राणा वै सत्यं तेषामेष सत्यमिति श्रुत्यं

((दानीति पृच्छति तत्राह ॥ तथेति ॥ १६ ॥ यदा वै विजानातीत्यादिवाक्यं
व्याकुर्वन्नुत्तरमाह ॥ यदेति ॥ यदि विश्वं सद्रूपानुगताद्भिन्नमसदेव स्याद्यदि त्वभिन्नं सन्मात्रमेव परमार्थसत्यमासीदिति परमार्थतः सत्यपदे
व विजानातीत्यर्थः ॥ विज्ञानप्रकारमभिनयति ॥ इदमिति ॥ ततस्तदा विशिष्टं विकारजातं हित्वा सदेव सत्यमिति ज्ञात्वा यद्वदति तत्सदेव वद
तीति योजना सत्यविज्ञानस्य तद्वदनं प्रति हेतुत्वद्योतनार्थोऽथशब्दः श्रुतेरवष्टम्भेन भेदाभेदवादी शङ्कते ॥ नन्विति ॥ किं बृहदारण्यकश्रुत्या

विकारस्य सत्यत्वमुक्तमित्येतावन्मात्रमुच्यते किं वा प
((रमार्थसत्यत्वमिति विकल्प्याद्यमङ्गीकरोति ॥ ८५

॥सत्यमिति॥द्वितीयं दूषयति॥नत्विति॥भेदाभेदयोर्विरोधादेकोपाधावयोगाद्विकारस्य च रज्जुसर्पवन्मिथ्यात्वानुमानाद्दन्यैताबाध्यत्वाभिप्रा
येण सत्यत्वं श्रुत्यंतरे नैवोक्तमित्यर्थः॥तर्हि प्राणादिषु सत्यत्वमुक्तमित्याशंक्यांगीकारं स्फोरयति॥किंतर्हीति॥इन्द्रियजनितसद्बुद्धिविषय
त्वापेक्षभूतत्रयं सदित्युच्यते तद्विषयत्वापेक्षं भूतद्वयं त्यदिति व्यवह्रियते तथा च भूतपंचकं सच्च त्यच्चेति व्युत्पाद्य सत्यमिति यथोक्तं तथा त
द्बीजभूतयोर्नामरूपयोस्तदात्मकत्वाच्च प्राणानां सत्यत्वं व्यावहारिकमिष्टमित्यर्थः॥इतश्च प्राणादिषु मिथ्याभूतेष्वपि सत्यश्रुतिरविरुद्धे
त्याह॥तद्वारेणेति॥प्राणादीनां व्यावहारिकसत्यत्वानुवादद्वारेणाध्यारोपापवादन्यायेन परमार्थसत्यस्य ब्रह्मणोऽवगतिर्विवक्षितेति रूढत्वान्ने

तरां सत्यमुक्तं सत्यत्वं श्रुत्यंतरे विकारस्य न तु परमार्थापेक्षमुक्तं॥किंतर्हि इंद्रियविषयाविषयत्वापेक्षं सच्च त्यच्चेति सत्यमि
त्युक्तं तद्वारेण च परमार्थसत्यस्योपलब्धिर्विवक्षितेति प्राणा वै सत्यं तेषामेष सत्यमिति चोक्तमिहापि तदिष्टमेव दूहतुमाणवि
षयत्वात् परमार्थसत्यविज्ञानाभिमानादुत्थाप्य नारदं यत्तदेव सत्यं परमार्थतो भूमाख्यं तद्विज्ञापयिष्यामीत्येष विशेषतो

नाविजानन्सत्यं वदति विजानन्नेव सत्यं वदति विज्ञानं त्वेव विजिज्ञासितव्यमिति विज्ञानं भगवो

विवक्षितोऽर्थः॥नाविजानन्सत्यं वदति यस्तु विजानन्वदति सोऽग्न्यादिशब्देनाग्न्यादीन्परमार्थसद्रूपान्मन्यमानो वदति॥नतु ने
रूपत्रयव्यतिरेकेण परमार्थतः संति तथा तान्यपि

॥ष्वपि सत्यत्वश्रुतिरविरुद्धेत्यर्थः॥यथोक्तोऽर्थो विवक्षितो बृहदारण्यकश्रुताविति
वगमकमाह॥प्राणा वा इति॥ननु श्रुत्यंतरे विकारस्यापि व्यावहारिकं सत्यत्वमिष्टं प्रकृते तु न तदिष्यते भूम्न एव सत्यत्वांगीकारात्तथा च विरो
धतादवस्थ्यमत आह॥इहापीति॥यदि प्राणस्यापि व्यवहारतः सत्यत्वमुपगतं किं तर्हि सनत्कुमारस्य विवक्षितमित्याशंक्याह॥इह त्विति
यदा वै विजानात्यथ सत्यं वदतीति यदाख्यातं तदन्वयव्यतिरेकाभ्यां स्फुटयन्नादौ व्यतिरेकमाह॥नाविजानन्निति॥परमार्थसत्यमविजा
नन्नपि वदत्यग्न्यादीनीत्याशंक्याह॥यस्त्विति॥तर्हि कथं सदेव परमार्थसत्यमिति वदतोऽभीष्टसिद्धिरित्याशंक्याह॥नत्विति॥नान्ये वत

अतोस्य नास्ति सत्यवादित्वं किंत्वसत्यवादित्वमेवेत्युपसंहरति॥ इत्यत इति॥ व्यतिरेकं दर्शयित्वान्वयमन्वाचष्टे॥ विजानन्नेवेति॥ अस्तु तर्हि सत्यविज्ञानपूर्वकसतिवादित्वमित्याशंक्याह॥ नचेति॥ यद्येवं विजिज्ञासा द्वारा सत्यविज्ञानं ज्ञेयमित्येवमिष्टं चेदित्यर्थः॥ सत्यवदनं प्रति सत्यविज्ञानस्य यथा कारणत्वमुक्तं तथा पूर्वस्य पूर्वस्योत्तरोत्तरं कारणत्वेन द्रष्टव्यमित्यतिदिशति॥ एवमिति॥ १७॥ विज्ञानका

रूपाणि सद्रूपेस्या नैव संतीत्यतो नाविजानन्सत्यं वदति विजानन्नेव सत्यं वदति न च तत्सत्यविज्ञानमविजिज्ञासितमप्रार्थितं ज्ञायत इत्याह॥ विज्ञानं त्वेव विजिज्ञासितव्यमिति॥ यद्येवं विज्ञानं भगवो विजिज्ञास इति॥ एवं सत्यादीनां चोत्तरोत्तराणां कारोत्यंतानां पूर्वपूर्वहेतुत्वं व्याख्येयं॥ १७॥ यदा वै मनुत इति मतिर्मननं तर्को मन्तव्यविषय आदरः॥ १८॥ आस्तिक्यबुद्धिः श्र

विजिज्ञास इति॥ १७॥ यदा वै मनुतेऽथ विजानाति नामत्वा विजानाति मत्वैव विजानाति मतिस्त्वेव विजिज्ञासितव्येति मतिं भगवो विजिज्ञास इति॥ १८॥ यदा वै श्रद्दधात्यथ मनुते नाश्रद्दधन्मनुते श्रद्दधदेव मनुते श्रद्धा त्वेव विजिज्ञासितव्येति श्रद्धां भगवो विजिज्ञास इति॥ १९॥ यदा वै निस्तिष्ठत्यथ श्रद्दधाति नानिस्तिष्ठन्श्रद्दधाति निस्तिष्ठन्नेव श्रद्दधाति निष्ठा त्वेव विजिज्ञासितव्येति निष्ठां भगवो विजिज्ञास इति॥ २०॥ यदा वै करोत्यथ निस्तिष्ठति नाकृत्वा निस्तिष्ठति कृत्वैव निस्तिष्ठति कृतिस्त्वेव विजिज्ञासितव्येति कृतिं भगवो विजिज्ञास इति॥ २१॥

द्धा॥ १९॥ निष्ठा गुरुशुश्रूषादिस्तत्परत्वं ब्रह्मविज्ञानाय॥ २०॥ यदा वै करोतीति कृतिरिंद्रियसंयमः चित्तैकाग्रताकरणं च सत्यां हि तस्यां निष्ठादीनि यथोक्तानि भवंति विज्ञानावसानानि॥ २१॥ सापि कृतिर्यदा सुखं लभते ११ रणीभूतां मतिं व्याचष्टे॥ मतिरिति॥ १

१८॥ मननहेतुभूतां श्रद्धां व्याकरोति॥ आस्तिक्यबुद्धिरिति॥ १९॥ श्रद्धाहेतुं निष्ठां व्याचष्टे॥ निष्ठेति॥ २०॥ निष्ठानिदानं कृतिं विभजते॥ कृतिरिति॥ कथं पुनरेतेषामुत्तरमुत्तरं पूर्वस्य पूर्वस्य कारणीभवति तत्राह॥ सत्यां हीति॥ २१॥ कृतिस्तर्हि कुतो भवति तत्राह॥ सापीति॥ यदा सुखं लभे

ननुसुखलाभस्येन्द्रियमात्रव्यतिरेकेणाभावात्कथंसुखलाभाधीनाकृतिरित्याशङ्क्याह ॥ सुखमिति ॥ वक्ष्यमाणसुखस्यलब्धव्यत्वा
भिमानादेवयथोक्ताकृतिःसिध्यतीत्यर्थः ॥ सुखंलब्ध्वाकरोतीत्येतत्दृष्टान्तेनसाधयति ॥ यथेति ॥ दृष्टफलपुत्रपश्वादितज्जन्यसुखो
देशपूर्विकालोकेकृतिर्दृष्टातथात्मन्यपिसुखंलब्ध्वैवकरोति ॥ नतुविनातदुद्देशमित्यर्थः ॥ नन्विन्द्रियाणांमनसश्चसंयमपूर्वकंसुखं
भवतितथाचकथंतल्लब्ध्वाकरोतीत्युच्यतेतत्राह ॥ भविष्यदपीति ॥ उत्तरग्रन्थमाकाङ्क्षापूर्वकमुत्थापयति ॥ अथेत्यादिना ॥ २२ ॥ भूम्नो

सुखंनिरतिशयंवक्ष्यमाणंलब्धव्यंमयेतिमन्यतेतदाभवतीत्यर्थः ॥ यथादृष्टफलसुखाकृतिस्तथेहापि ॥ नासुखंल
ब्ध्वाकरोति ॥ भविष्यदपिफलंलब्ध्वेत्युच्यतेतदुद्दिश्यप्रवृत्त्युपपत्तेरथेदानींकृत्यादिपूर्वोत्तरेषुसत्सुसत्यंसुखमेव
प्रतिभास्यतीतिनतद्विज्ञानायपृथग्यत्नःकार्यइतिप्राप्तेततइदमुच्यतेसुखंत्वेवविजिज्ञासितव्यमित्यादिसुखंभगवो

यदावैसुखंलभतेऽथकरोतिनासुखंलब्ध्वाकरोतिसुखमेवलब्ध्वाकरोतिसुखंत्वेवविजिज्ञासितव्यमि
तिसुखंभगवोविजिज्ञासइति ॥ २२ ॥ योवैभूमातत्सुखंनाल्पेसुखमस्तिभूमैवसुखंभूमात्वेवविजिज्ञासित
व्यइतिभूमानंभगवोविजिज्ञासइति ॥ २३ ॥ विजिज्ञासइति ॥ २२ ॥ अभिमुखीभूतायाह ॥ योवैभूमामहन्निरतिश
यंवृद्धिपर्यायाःतत्सुखंततोऽर्वाक्सातिशयत्वादल्पमतस्तस्मिन्नल्पेसुखंनास्त्यल्पस्याधिकतृष्णाहेतुत्वात्तृष्णाचदुःखं
नहिदुःखबीजंसुखंदृष्टंज्वरादिलोकेतस्मादयुक्तंनाल्पेसुखमस्तीतिअतोभूमैवसुखंतृष्णादिदुःखबीजत्वासंभवाद्भूम्नः ॥
॥ २३ ॥ किंलक्षणोऽसौभूमेत्याह ॥ वोगपिवैषयिकंसुखमस्तीत्याशङ्क्याह ॥ ततोऽर्वागिति ॥ कथमल्पत्वेऽपिसुखत्वंनावाप्यतेतत्राह ॥
अल्पस्येति ॥ दुःखस्वरूपान्तःसामत्यल्पस्यसुखस्यहेतुत्वेऽपिकथंस्वयंसुखंनभवतीत्याशङ्क्याह ॥ नहीति ॥ अल्पस्यसुखस्यदुःखान्तर्भावेसि
द्धिफलितमाह ॥ अतइति ॥ २३ ॥ भूम्नःसविशेषत्वंनिर्विशेषत्वंवेतिप्रश्नपूर्वकंनिर्विशेषत्वंनिर्धारयति ॥ किमित्यादिना ॥ नान्यच्छृणोतीतिसभू

छां·भा·
१५

॥नामेति॥ अनुक्तानां स्पर्शादीनामुपलक्षणार्थत्वेनात्र द्वयोर्ग्रहणं स्पर्शनादिविषयस्यापि भूम्न्यभावादित्याह॥ अन्येषामिति॥ अत्रे तिलक्षणवाक्योक्तिस्तत्र हेतुमाह॥ प्रायश इति॥ यस्मिन्नधिकरणे तत्त्वविचारणायामन्योऽन्यन्न पश्यति न शृणोति न मनुते न विजानाति स भूमेति द्रष्टृदृश्यादिविकल्पनिषेधेनाध्यासाधिकरणत्वोपलक्षितस्य विकल्पाविषयत्वमेव भूमलक्षणमित्युपसंहरति॥ एवमिति॥ उक्तमेव लक्षणं स्फुटयितुं विमृशति॥ किमत्रेति॥ लोकप्रसिद्धदर्शनादिविषयत्वाभावमात्रं भूम्नि लक्षणं तन्निषेधेन स्व

यत्र यस्मिन्भूम्नि तत्त्वे नान्यद्द्रष्टव्यमन्येन करणेन द्रष्टान्यो विभक्तो दृश्यात्पश्यति तथा नान्यच्छृणोति। नामरूपयोरेवान्तर्भावाद्विषयभेदस्य तद्ग्राहकयोरेवेह दर्शनश्रवणयोर्ग्रहणमन्येषां चोपलक्षणार्थत्वेन मननं त्वत्रोक्तं द्रष्टव्यं नान्यन्मनुत इति प्रायशो मननपूर्वकत्वाद्विज्ञानस्य तथा नान्यद्विजानाति॥ एवंलक्षणो यः स भूमा। किमत्र प्रसिद्धान्यदर्शनाभावो भूम्न उच्यते

यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा॥

नान्यत्पश्यतीत्यादिना अथान्यं न पश्यत्यात्मानं पश्यतीत्येतत्। किं चातो यद्यन्यदर्शनाद्यभावमात्रमित्युच्यते तदा द्वैतसंव्यवहारविलक्षणो भूमेत्युक्तं भवति॥ अथान्यदर्शनविशेषप्रतिषेधेनात्मानं पश्यतीत्युच्यते तदैकस्मिन्नेव क्रियाकारकफलभेदोऽभ्युपगतो भवेद्यद्येवं को दोषः स्यान्नन्वयमेव दोषः संसारानिवृत्तिः क्रियाकारकफलभेदो हि संसार

ज्ञेयत्वं वेति विमर्शार्थः॥ कस्मिन्पक्षे को लाभः को वा दोष इति शिष्यः पृच्छति॥ किं चात इति॥ आद्यमनूद्य तत्र लाभं दर्शयति॥ यदीति॥ अन्यस्य प्रसिद्धस्य दर्शनादेर्विषयत्वं भूम्नि नास्तीत्येतावन्मात्रं तस्य लक्षणमित्युच्यते चेत्सर्वविकल्पातीतः प्रत्यगात्मा भूमेत्यसमन्यप्रसिद्धिरित्यर्थः॥ द्वितीयं पक्षमनूद्य तस्मिन्दोषं सूचयति॥ अथेत्यादिना॥ तमेव दोषं प्रश्नपूर्वकं स्फुटयति॥ यद्येवमित्यादिना॥ सति क्रियाकारकफलभेदे कथं संसारान्निवृत्तिस्तत्राह॥ क्रियेति॥ सति भेदे क्रियादिः संसारस्त्विति लोकदृष्टं तद्वैलक्षण्यादेक

अ·
७

राम
१५

॥आत्मैकत्वेइति॥ एकस्मिन्क्रियादिभेदस्यासंभवंदर्शयन्नुत्तरमाह॥ नात्मनइति॥ द्वितीयपक्षस्यदुष्टत्वेस्पष्टीकृतेप्रथमपक्षस्यापिसमानंदुष्टत्व
मितिशिष्यःशंकते॥ अन्येति॥ आद्यपक्षेपिनपश्यतीत्येतावतैवदर्शनाद्यभावलाभायत्रेत्यन्यदितिचविशेषणेव्यर्थेस्यातामित्यर्थः॥ व्यर्थमेवे
दृष्टांतवचनमित्याशंक्यशिष्यःस्वयमेवब्रूते॥ दृश्यतेहीति॥ लोकेहियत्रशून्येगृहेनान्यत्पश्यतितत्रैववदत्ययमितिप्रयोगोदृश्यतेनचतत्रस्यनैरर्थ
क्यमित्युक्तव्यवहारांगत्वात्तथाचतस्मिन्नर्थेतत्कंधनधान्याद्यदर्शनेपिस्तंभादीन्गृहंचनपश्यतीतिप्रयुक्तस्यनैरर्थक्यंगम्यतेकिंतुतत्रस्तंभादीनांत
स्यचदर्शनमिष्टंतथायत्रनान्यत्पश्यतीत्यत्रापिविशेषणवैयर्थ्यसमाधानंवक्तव्यमित्यर्थः॥ किंविशेषणार्थवत्त्वानुपपत्त्याभूम्न्यधिकरणाधि
कर्त्तव्यभावःस्वात्मदर्शनंचवाच्यमित्युच्यतेकिंवाश्रुतस्यगतिर्वक्तव्येतिपृच्छ्यतेतत्राद्यंदूषयति॥ नेत्यादिना॥ तथातत्त्वमसीतिवदित्यर्थः॥ निर्द्धा

रित्यात्मैकत्वएवक्रियाकारकफलभेदःसंसारविलक्षणइतिचेन्नात्मनोनिर्विशेषैकत्वाभ्युपगमेदर्शनादिक्रियाकारकफ
लभेदाभ्युपगमस्यशब्दमात्रत्वात्॥ अन्यदर्शनाद्यभावोक्तिपक्षेपियत्रेत्यन्यन्नपश्यतीतिचविशेषणेअनर्थकेस्यातामितिचे
न्नदृश्यतेहिलोकेयत्रशून्येगृहेन्यन्नपश्यतीत्युक्तेस्तंभादीनात्मानंचपश्यतीतिगम्यतेएवमिहापीतिचेन्नतत्त्वमसीत्येकत्वोपदे
शादधिकरणाधिकर्तव्यभेदानुपपत्तेस्तथासदेकमेवाद्वितीयंसत्यमितिषष्ठेनिर्द्धारितत्वाद्दृश्यैःनान्येनसंदृशेतिष्ठतिरूपमस्य
विज्ञातारमरेकेनविजानीयादित्यादिश्रुतिभ्यःस्वात्मनिदर्शनाद्यनुपपत्तेः॥ यत्रेतिविशेषणमनर्थकंप्राप्तमितिचेन्नाविद्याकृतभे
दापेक्षत्वाद्यथासत्येकत्वाद्वितीयत्वबुद्धिमक्षतामपेक्ष्यसदेकमेवाद्वितीयमितिसंख्यायनर्हत्वमप्युच्यते॥ एवंभूम्न्येकस्मिन्नेव
(यत्रेतिविशेष मविद्यावस्थाया

रितत्वादधिकरणाधिकर्त्तव्यभेदानुपपत्तिरितिशेषः॥ यत्त्वन्यन्नपश्यतीतिविशेषणादात्मनःस्वदर्शनंवाच्यमितितत्
त्राह॥ अदृश्यइति॥ द्वितीयमनूद्यगतिमाह॥ यत्रेत्यादिना॥ परिहारभागंदृष्टांतेनस्पष्टयति॥ यथेति॥ एकस्मिन्नेवभूम्नियत्रेतिविशेष
णमनर्हमपिप्रयुज्यतेप्रसिद्धानुवादेनाधिकरणादिविकल्पाविषयत्वलक्षणस्यभूम्नोलक्षणस्यविवक्षितत्वादित्याह॥ एवमिति॥ यदवि
द्यावस्थमन्यदर्शनादितदनुवादेननान्यत्पश्यतीतिविशेषणंचभूम्निनविरुध्यतेदर्शनाद्यविषयत्वलक्षणस्यभूम्नोलक्षणस्यविवक्षितत्वा

दित्याह॥ अविद्येति॥ लक्षणवाक्यार्थमुपसंहरति॥

पूर्वानुभूतोपिपूर्वेतरसंकल्पनिमित्तवृत्तिनिमित्तनैमित्तिकभावःसर्वस्यसंविद्विवर्तत्वेकथमुपपद्यतेतत्राह॥तस्मादिति॥यस्मात्ततः
सर्वस्येक्षणंपूर्वकल्पीयसदृशगोचरंपूर्वकल्पीयाअपिततःपूर्वेतरनिमित्ताद्वृत्तिसंविदेवेत्यस्याविद्याविवर्तनेनिरवयवस्यसन्मात्र
स्यस्वारस्येनेक्षणाद्यनुपपत्तेस्तस्मात्सर्वस्यसंविद्विवर्तत्वेपिनिमित्तनैमित्तिकभावोयमनिर्वाच्योनविरुध्यतइत्यर्थः॥असत्शब्दवाच्या
याःसंविदोनिर्वाच्यस्वरूपनकालेपिविषयावाह्यतयाभासंतेततःस्वकदाचिदपिसंविदतिरेकेणसत्वानंगीकारादाद्यंतासत्वलक्षणमनृत
त्वमापद्येततथाचव्यवहारभंगप्रसंगस्तत्राह॥यद्यपीति॥तथापिनानृतत्वमित्यध्याहारः॥अध्यस्तस्याधिष्ठानमेवस्वात्मानस्मिन्न
कदाचिदप्यत्यंतासत्वतादात्म्येनैवस्फुरणादतोनव्यवहारभंगप्रसंगइतिभावः॥कदाचिदपिनानृतत्वमितिवदतामतीतिकालात्कालांतरे

तस्मान्मानसानांबाह्यानांचविषयाणामितरेतरकार्यकारणत्वमिष्यतएवबीजांकुरवद्यद्यपिबाह्याएवमानसामानसा
एवचबाह्याःनानृतत्वंतेषांकदाचिदपिस्वात्मनिभवतिननुस्वप्नदृष्टाःप्रतिबुद्धस्यानृताभवंतिविषयाःसत्यमेवंजाग्रद्बो
धापेक्षंतुतदनृतत्वंनस्वतःतथास्वप्नबोधापेक्षंचजाग्रद्दृष्टविषयानृतत्वंनस्वतोविशेषाकारमात्रंतुसर्वेषांमिथ्याप्रत्यय
निमित्तमितिवाचारंभणंविकारोनामधेयमनृतंत्रीणिरूपाणीत्येवसत्यंनान्यथाकारविशेषतोनृतस्वतःसन्मात्ररूपतया
सत्यंप्राक्सदात्मबोधात्स्वविषयेपिसर्वंसत्यमेवस्वप्नदृष्टाइवेतिनकश्चिद्विरोधः ॥पिविषयाणांनासत्वमित्युक्तंतत्रानुभ

वविरोधंशंकते॥नन्विति॥स्वप्नदृष्टानांसमीहितमेवकालांतरेमिथ्यात्वमंगीकरोति॥सत्यमिति॥नहितेषामसत्वमेवस्वीकृतमित्या
शंक्याह॥जाग्रदिति॥तथापिजाग्रद्बोधेनाविषयीकरणादसत्वंस्वप्नदृष्टानामेष्टव्यमित्याशंक्याह॥तथेति॥यद्दिजाग्रद्बोधेनाविष
यीकरणमात्रेणासत्वंस्वप्नदृष्टानांपदार्थानामिष्टंतर्हिजाग्रद्विषयाणामपिस्वप्नबोधेनाविषयीकरणादसत्वप्रसंगस्तन्नकदाचि
दपिसंविदिविषयाणामत्यंतासत्वमित्यर्थः॥कथंतर्हितेषुवाचारंभणश्रुतिरित्याशंक्याह॥विशेषेति॥त्रयाणांरूपाणांसत्यत्वेवि
शेषाकारमात्रंमिथ्येत्युक्तमयुक्तंतेष्वपिविशेषाकारस्यसत्वादित्याशंक्याह॥तान्यपीति॥कथंतर्हितेषुसत्यपदमयुक्तमित्याशंक्या

तर्हि तत्सत्यमित्येतावत्प्रयोक्तव्यं किमिति त्रीण्यक्षराणीत्येवं सत्यमित्युक्तं तत्राह ॥ प्राणेति ॥ प्रकृतमुपसंहरति ॥ तस्मादिति ॥ प्रथमपक्षवत् द्वितीयपक्षे दोषाभावादिति यावत् ॥ यथैहिकविषयवद्ब्राह्मलौकिका अपि विषयाः विचार्यमाणाः सत्याः कस्तर्हि तत्र विशेषो येनैतत्परित्यागे न तत्कामिनां विद्याविधानं तत्राह ॥ ब्राह्मेति ॥ जन्यब्रह्मलोके विषयादौ विशेषः प्रकृतायाः फलश्रुतेरित्यध्याहारः ॥ ननु तेषामविद्यादशायां अर्थक्रियाकारित्वरूपसत्यत्वसंभवेऽपि कुतो विद्यावस्थायां सत्यत्वमित्याशंक्याह ॥ सत्यस्येति ॥ यथा रज्ज्वां कल्पितसर्पादेः रज्जुतत्त्वबोधेन तदात्म

तस्मान्मानसा एव ब्राह्मलौकिका अरण्यादयः संकल्पजाश्च पित्रादयः कामाः ॥ बाह्यविषयभोगवदशुद्धिरहितत्वाच्छुद्धसत्त्वसंकल्पजन्मान इति निरतिशयसुखाः सत्याश्चेश्वराणां भवंतीत्यर्थः ॥ सत्सत्यात्मप्रतिबोधेऽपि रज्ज्वामिव कल्पिताः सर्पादयः सदात्मस्वरूपतामेव प्रतिपद्यंत इति सदात्मना सत्या एव भवंति ॥ ५ ॥ यस्तु हृदयपुंडरीकगतं यथोक्तगुणविशिष्टं ब्रह्म ब्रह्मचर्या

अथ या एता हृदयस्य नाड्यस्ताः पिंगलस्याणिम्नस्तिष्ठंति शुक्लस्य नीलस्य पीतस्य लोहितस्येत्य ॥

दिसाधनसंपन्नस्त्यक्तबाह्यविषयानृततृष्णः सन्नुपास्ते तस्येयं मूर्धन्यया नाड्या गतिर्वक्तव्येति खंड आरभ्यते ॥ अथ या एता वक्ष्यमाणा हृदयस्य पुंडरीकाकारस्य ब्रह्मोपासनस्थानस्य संबंधिन्यो नाड्यो हृदयमांसपिंडात्सर्वतो विनिःसृता आदित्यमंडलादिव रश्मयः ताश्चैताः पिंगलस्य वर्णविशेषविशिष्टस्याणिम्नः सूक्ष्मरसस्य रसेन पूर्णास्तदाकारा एव तिष्ठंति वर्तन्त इ

तामेवापद्यंते विवेचनात् तथा सर्वेऽपि विषया विद्यावस्थायामन्वयव्यतिरेकाभावपरिहाण्या सन्मात्रत्वमेव प्राप्नुवंतीति तत्सत्यत्वमविरुद्धमित्यर्थः ॥ ५ ॥ सगुणविद्याफलस्वरूपमित्थमुपपाद्य तत्प्राप्तये गतिर्वक्तव्येति नाडीखंडमवतारयति ॥ यस्त्विति ॥ यथोक्तो गुणः सत्यकामत्वादिर्ब्रह्मचर्यादीत्यादिशब्दः शमदमादिसंग्रहार्थः ॥ तमेवादिशब्दार्थं स्पष्टयति त्यक्तेति ॥ अधिकारिणः सफलोपास्तिविध्यानंतर्यमथशब्दार्थः ॥ रसेनान्नस्येति शेषः ॥ तदाकारा इति ॥ तच्छब्दो रसविषयः ॥ शुक्लस्येत्यादि षष्ठी पूर्ववत् ॥ श्रुताविति शब्दोऽध्याहार्यो द्योतनार्थः ॥

नाभिनिर्वृत्ते

कथं पुनरन्नरसस्य पिंगलादिविचित्रो वर्णविशेषः सिध्यतीत्याशंक्याह ॥ सौरेणेति ॥ यत्पित्ताख्यं सौरं तेजस्तेन पाकोऽशितस्य च जायते तेनाल्पेन कफेन संपर्कात्तदेव पित्ताख्यं सौरं तेजो भवति पिंगलं तेन संपर्कादन्नरसस्य नाडीनां च जायते पैंगल्यमित्यर्थः ॥ तदेव पित्ताख्यं सौरं तेजो यथोक्तपाकाभिनिर्वृत्तेन प्रभूतेन वातेन संबंधात्तद्भूयस्त्वाद्भवति नीलं तेन च संपर्कादन्नरसस्य नाडीनां च जायते नैल्यमित्याह तदेवेति ॥ प्रकृतमेव पित्ताख्यं सौरं तेजो यथोक्तपाकवशादभिनिर्वृत्तकफस्य स्वसंबंधिनो भूयस्त्वाद्भवति शुक्लं तेन च संपर्कादन्नरसस्य नाडीनां च शौक्ल्यं भवतीत्याह ॥ तदेव चेति ॥ उक्तपाकाभिनिर्वृत्तेन कफेन तदभिनिर्वृत्तस्यैव वातस्य समतया तदेव तेजस्तत्संबंधे पीतं जायते तत्संबंधाच्चान्नरसस्य च नाडीनां च पीतत्वं भवतीत्याह ॥ कफेनेति ॥ यदा तु यथोक्तपाकाभिनिर्वृत्तं शोणितं बहुलं भवति तदा तस्य नाडीनां च लोहित्यं भवती

नीलस्य पीतस्य लोहितस्य च रसस्य पूर्णा इति सर्वत्राध्याहार्यं सौरेण तेजसा पित्ताख्येन पाकाभिनिर्वृत्तेन कफेनाल्पेन संपर्कात्पिंगलं भवति सौरं तेजः पित्ताख्यं ॥ तदेव च वातभूयस्त्वान्नीलं भवति ॥ तदेव च कफभूयस्त्वाच्छुक्लं ॥ कफेन समतायां पीतं

सौ वा आदित्यः पिंगल एष शुक्ल एष नील एष पीत एष लोहितस्तद्यथा महापथ आतत उभौ ग्रामौ गच्छतीमं चा

शोणितबाहुल्येन लोहितं ॥ वैद्यकाद्वा वर्णविशेषा अन्वेष्टव्याः कथं भवंतीति श्रुतिस्त्वाहादित्यसंबंधादेवतत्तेजसो नाडीष्वनुगतस्यैते वर्णविशेषा इति ॥ कथं ॥ असौ वा आदित्यः पिंगलो वर्णतः एष आदित्यः शुक्लोऽप्येष नीलः एष पीतः एष लोहित आदित्य एव ॥ तस्याध्यात्म

९ त्याह ॥ शोणितेति ॥ पक्षांतरमाह ॥ वैद्यकाद्वेति ॥ अन्वेषणप्रकारमाह ॥ कथमिति ॥ नाभेरूर्ध्वं हृदयादधस्तादामाशयमाचक्षते तन्न्तं तेजः सौरं पित्तमित्युच्यते ॥ तच्चान्नरसस्य धात्वन्तरस्य कारिवशाद्वर्णविशेषकारणमामाशयगतं पित्तं रंजकं रसरंजनादित्यादिवचनादित्यर्थः ॥ कथं तर्हि पिंगलस्येत्यादि श्रुतिरित्याशंक्याह ॥ श्रुतिस्त्विति ॥ उक्तमर्थमाकांक्षाद्वारा स्फोरयति ॥ कथमित्यादिना ॥ आदित्यस्य पैंगल्यादयो वर्णविशेषाः शास्त्रप्रामाण्यादेव मन्तव्याः ॥ आदित्यस्य तेजसो नाडीष्वनुगतस्य पैंगल्यादयो वर्ण

१०७

उभयत्रादित्यमंडले पुरुषे चेत्यर्थः॥ तत्र पूर्वोक्तमेव दृष्टांतमनुवदति॥ यथेति॥ उभौ ग्रामौ महापथो यथा गच्छति तथोभयत्रादित्यस्य र
श्मयः प्रविष्टा इत्यर्थः॥ तमेव प्रवेशं प्रश्नद्वारा प्रकटयति॥ कथमित्यादिना॥ कथं नाडीनां पिंगलादिवर्णत्वमित्याशंक्य सौरेण तेजसेत्यादि
नोक्तं स्मारयति॥ यथोक्तास्विति॥ अमुष्मिन्नादित्ये सृप्ता इति संबंधः॥ कथं स्त्रीलिंगेन निर्दिष्टानां रश्मीनां पुंल्लिंगेन निर्देशस्तत्राह॥ रश्मी
नामिति॥ नाडीस्वरूपमुक्त्वा विज्ञानात्मस्वापाधिकरणत्वेन तास्तोतुमादौ स्वापं प्रस्तौति॥ तत्तत्रेति॥ सप्तम्यर्थमेव स्फुटयन्नेवं सतीति॥ ना

नाडीभिः कथं संबंध इत्यत्र दृष्टांतमाह॥ तत्तत्र यथा लोके महान्विस्तीर्णः पंथा महापथ आततो व्याप्त उभौ ग्रामौ गच्छ
तीमं च संनिहितममुं च विप्रकृष्टं दूरस्थमेवं यथा दृष्टांतो महापथ उभौ ग्रामौ प्रविष्ट एवमेवैता आदित्यस्य रश्मय उभौ लो
कौ आदित्यमंडलमिमं च पुरुषं गच्छंत्युभयत्र प्रविष्टाः यथा महापथः॥ कथममुष्मादादित्यमंडलात्प्रतायंते संतता भवंति।

मुं चैवमेवैता आदित्यस्य रश्मय उभौ लोकौ गच्छंतीमं चामुं चामुष्मादादित्यात्प्रतायंते ता आसु नाडीषु सृप्ता आ
भ्यो नाडीभ्यः प्रतायंते तेऽमुष्मिन्नादित्ये सृप्तास्तद्यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानात्यासु तदा नाडीषु
सृप्तो भवति तं न कश्चन पाप्मा स्पृशति तेजसा हि तदा संपन्नो भवत्यथ यत्रैतदबलिमानं नीतो भवति तमभित आ

ता अध्यात्ममासु पिंगलादिवर्णासु यथोक्तासु नाडीषु सृप्ताः गताः प्रविष्टा इत्यर्थः॥ आभ्यो नाडीभ्यः प्रतायंते प्रवृत्ताः संतानभू
ताः सत्यः तेऽमुष्मिन्रश्मीनामुभयलिंगत्वात्ते इत्युच्यंते॥ तत्तत्रैवं सति यत्र यस्मिन्काले यं जीवः सुप्तो भवति स्वापस्य हि प्रका
रत्वाद्विशेषणं समस्त इत्युपसंहृतसर्वकरणवृत्तिरित्येतदतो बाह्यविषयसंपर्कजनितकालुष्याभावात्सम्यक्प्रसन्नो भवति॥

डीस्वरूपे पूर्वोक्तरीत्या निरूपिते सतीत्यर्थः॥ एतत्स्वपनमिति क्रियाविशेषणं॥ समस्तविशेषणस्यार्थवत्त्वमाह॥ स्वापस्येति॥ दर्शनवृत्तिव
द्दर्शनवृत्तिश्चेति द्विप्रकारत्वं स्वापस्येष्टं तत्र दर्शनवृत्तेः स्वापस्य व्यावृत्त्यर्थं समस्त इति विशेषणं॥ तस्य संपिंडितमर्थमाह॥ उपसंहृतेति॥ वि

उपसंहृतसर्वकरणत्वादिति यावत्॥ उक्तं विशेषणद्वयमुपजीव्यस्वप्नमित्यादि व्याचष्टे॥ अत एवेति॥ नाडीषु प्रविष्टो भवतीति यदुक्तं तद्युक्तं ए
षोन्तर्हृदय आकाश स्तस्मिंश्छेत इत्यंगीकारात् इत्याशंक्याह॥ नाडीभिरिति॥ नाडीष्विति श्रुतौ सप्तमी कथं नाडीभिरिति तृतीयया व्याख्यायते तत्राह न
हीति॥ सुषुप्त्यवस्थोच्यते तस्यामवस्थायां कर्माभावे कथं पुनरुत्थानमित्याशंक्याह॥ देहेति॥ सुखदुःखानुभवात्पाप्मसंस्पर्शोत्र विवक्षितो न तु क

अत एव स्वप्नविषयाकाराभासं मानसं स्वप्नप्रत्ययं न विजानाति नानुभवतीत्यर्थो यदैवं सुप्तो भवति आसु एतेन तेजः पूर्णः सुषुप्तो यथोक्ता
सु नाडीषु तदा सुप्तः प्रविष्टो नाडीभिर्द्वारभूताभिर्हृदयाकाशं गतो भवतीत्यर्थः॥ नह्यन्यत्र सत्संपत्तेः स्वप्नादर्शनमस्तीति सामर्थ्या
न्नाडीष्विति सप्तमी तृतीयया परिणम्यते तत्सता संपन्नं न कश्चन न कश्चिदपि धर्माधर्मरूपः पाप्मा स्पृशतीति स्वरूपावस्थितत्वात्तदात्म
नो देहेंद्रियविशिष्टं हि सुखदुःखकार्यप्रदानेन पाप्मा स्पृशतीति॥ न तु सत्संपन्नं स्वरूपावस्थं कश्चिदपि पाप्मा स्प्रष्टुमुत्सहते अवि

आहुर्जो नाति मां जानाति मामिति स यावदस्माच्छरीरादनुत्क्रान्तो भवति तावज्जानात्य थ यदैतदस्माच्छरीरादुत्क्रा

षयत्वात्॥ अन्यो ह्यन्यस्य विषयो भवति न त्वनन्यत्वं केन चित्कुतश्चिदपि सत्संपन्नस्य स्वरूपप्रच्यवनं त्वात्मनो जा《मत्यर्थे
यत्स्वप्नावस्थां प्रतिगमनं बाह्यविषयप्रतिबोधोऽविद्याकामकर्मबीजस्य ब्रह्मविद्याहुताशाऽदाह निमित्तमित्यवोचाम षष्ठ एव त
दिहापि प्रत्येतव्यं॥ यदैवं सुप्तः सौरेण तेजसा नाड्यन्तर्गतेन सर्वतः संपन्नो व्याप्तो भवति अतो विशेषेण चक्षुरादिनाडीद्वारैर्बाह्यविषय
《भोगायाप्रसृतानि करणानि
मोभावादित्यर्थः॥ अविषयत्वं साधयन्नन्यो हीति॥ सुषुप्ते स्वरूपावस्थस्य कथं प्रच्यवनमित्याशंक्याह॥ स्व
रूपेति॥ अविद्याकामकर्मणां बीजमनाद्यज्ञानं तस्य ब्रह्मविद्याख्येनाग्निना न स्वापे दाहस्तन्निमित्तं सुषुप्तस्य पुनः स्वरूपप्रच्यवनमिति संबंधस्त
देव व्याचष्टे॥ जाग्रदिति॥ कीदृक्प्रच्यवनमित्यपेक्षायामाह॥ बाह्येति॥ एतच्च सति संपद्य न विदुरित्यादावुदितमित्याह॥ इत्यवोचामेति॥ तेज
सा हीति॥ पाप्मास्पर्शो श्रौतो हेतुः तं हेतुं व्याचष्टे॥ यदेति॥ तदाप्तिकार्यमाह॥ तदिति॥ कार्यकारणसंस्पर्शाभावफलं दर्शयति॥ तस्मादिति॥ नाडी

॥तत्रेति॥ तस्यैवार्थमाहैवं सतीति॥ नाडिनामुक्तरीत्या प्राप्तत्वे सतीत्यर्थः॥ ताभिरूर्ध्वगमनप्रदर्शनारंभार्थोऽथशब्दः॥ रोगादीत्यादिपदमागंतुकसर्वनिमित्तसंग्रहार्थं॥ जरादीत्यादिपदं तु नैसर्गिकसर्वनिमित्तग्रहणार्थमिति भेदः॥ एतन्नयनमिति क्रियाविशेषणं॥ प्रारब्धकर्मावसानार्थोऽथशब्दः॥ एतदिति क्रियाविशेषणमेतदुत्क्रमणं यथा स्यात्तथेत्यर्थः॥ यथोक्ताभिर्नाडीषु प्रसृताभिरादित्यमंडलादागताभिरिति पाव-

करणानां निरोधात्स्वात्मन्येवावस्थितः स्वप्नं न किंचन जानातीति श्रुतं तत्रैवं सत्यथ यत्र यस्मिन्काले बलिमानमबलभावं देहस्य रोगादिनिमित्तं ---- जरादिनिमित्तं वा कृशीभावमेतन्नयनं नीतः प्रापितो देवदत्तो भवति मुमूर्षुर्यदा भवतीत्यर्थः तमभितः सर्वतो वेष्टयित्वा ---- आसीना ज्ञातय आहुर्जानासि मां तव पुत्रं जानासि मां पितरं वेत्यादि॥ स मुमूर्षुर्यावदस्माच्छरीरादनुत्क्रान्तो अनिर्गतो भवति तावत्पुत्रादीन्जानाति॥ अथ यत्र यदैतत्क्रियाविशेषणमित्यस्माच्छरीरादुत्क्रामति॥ अथ तदैतैरेव यथोक्ताभी रश्मिभिरूर्ध्व आक्रमते यथाकर्मजितं लोकमत्यविद्वान् इतरस्तु विद्वान्यथोक्तसाधनसंपन्नः स

तैरेव रश्मिभिरूर्ध्व आक्रमते स ॐमिति वा होद्वा मीयते स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छत्येतद्वै खलु लोकद्वारं विदुषां प्रपदनं निरोधोऽविदुषां तदेष श्लोकः॥ ५॥ ॐमित्योंकारेणात्मानं ध्यायन्यथापूर्वं वा ह एव ऊर्ध्वं वा विद्वांश्चेदितरस्तिर्यङ्वेत्यभिप्रायो मीयते प्रमीयते गच्छतीत्यर्थः॥ स विद्वानुत्क्रमिष्यन्यावत्क्षिप्येन्मनो यावता कालेन मनसः क्षेपः स्यात्ता-

त्॥ कर्मणार्जितं वशीकृतं स्वात्मसंबंधितामापादितं लोकमनतिक्रम्येत्यविद्वान्केवलकर्मवान्गच्छतीत्यर्थः॥ दहरविद्यावतो गतिं दर्शयति॥ इतरस्त्विति॥ यथोक्तसाधनं दहरविज्ञानं तेन संपन्नो विशिष्ट इत्यर्थः सध्यानाद्गच्छतीत्यतस्तत्र संबंधः॥ यथापूर्वं स्वस्थावस्थायामिव मरणावस्थायामपीत्यर्थः॥ वा हेति निपातद्वयस्यावधारणरूपमर्थं कथयत्येवेति॥ उच्छब्दार्थमाहोर्ध्वमिति॥ वाशब्देन द्योतितं विकल्पं दर्शयति॥ विद्वांश्चेदिति॥ यदि विद्वान्प्रमीयते तदोर्ध्वमेव गच्छति॥ तदाचष्टे॥ यावतेति॥ ९ ॥ ९ ॥

तस्यैतत्फलमिति संबंधः॥ कथं निर्गुणविद्यायाः सर्वलोककामावाप्तिः फलमित्याशंक्याह॥ सर्वात्मनेति॥ परिच्छेदभ्रमव्यावृत्त्या पूर्णस्वरूपेण
वस्थितिरित्यर्थः॥ प्रजापतिवाक्यात्प्रतीयमानविधिस्वरूपमाह॥ अन्वेष्टव्य इति॥ एवकारव्यावर्त्यं दर्शयति॥ नापूर्वविधिरिति॥ शब्दादेव वि
द्योदयेतदुत्पत्त्यर्थोऽपूर्वविधिरग्निहोत्रादिविधिवन्न संभवतीत्यर्थः॥ कथमिह नियमविधिरपि स्यादवघातविधिवदित्याशंक्याह॥ एवमि
ति॥ मिथ्याज्ञानसंस्कारप्राबल्यादनात्माभिनिवेशस्य पक्षे प्राप्तौ शास्त्राचार्याभ्यामात्मान्वेषणमेव कार्यमिति नियम इत्यर्थः॥ इतश्च नियम
विधिरेव नापूर्वविधिरित्याह॥ दृष्टार्थत्वादिति॥ अन्वेषणविजिज्ञासनाभ्यां ज्ञानसाधनमुक्तं तस्य च विद्याद्वाराऽविद्यानिवृत्तिर्दृष्टमेव फलमन्व

शास्त्राचार्योपदेशैर्ज्ञातव्यः॥ स विशेषेण ज्ञातुमेष्टव्यो विजिज्ञासितव्यः स्वसंवेद्यतामापादयितव्यः किं तस्यान्वेषणाद्विजि
ज्ञासनाच्च स्यादित्युच्यते॥ स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्यस्तमात्मानं यथोक्तेन प्रकारेण शास्त्राचार्योपदेशेनान्वि
ष्य विजानाति स्वसंवेद्यतामापादयति तस्यैतत्सर्वलोककामावाप्तिः सर्वात्मना फलं भवतीति ह किल प्रजापतिरुवाच अन्वेष्टव्यो

॥१॥ स सर्वाँश्च लोकानाप्नोति सर्वाँश्च कामान्यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाच॥

विजिज्ञासितव्य इति चैष नियमविधिरेव नापूर्वविधिरेवमन्वेष्टव्यो विजिज्ञासितव्य इत्यर्थः॥ दृष्टार्थत्वादन्वेषणवि
जिज्ञासनयोर्दृष्टार्थत्वं च दर्शयिष्यति नाहमत्र भोग्यं पश्यामीत्यनेनासकृत्पररूपेण च देहादिधर्मैरवगम्यमानस्यात्म
नः स्वरूपाधिगमे विपरीताधिगमनिवृत्तिर्दृष्टं फलमिति नियमार्थतैवास्य विधेर्युक्ता नत्वग्निहोत्रादीनामिवापूर्ववि

यव्यतिरेकाभ्यां तद्धेतुत्वावगमात्तथा च तत्र नापूर्वविधेरवकाशोऽस्तीत्यर्थः॥ तयोर्दृष्टफलत्वे वाक्यशेषमनुकूलयति॥ दृष्टार्थत्वं चेति॥
कथमसकृत्प्रयुक्तेन न पश्यामीति वर्तमानोपदेशेनान्वेषणादेर्दृष्टफलतेत्याशंक्य देहातिरिक्तात्मवादिना वाक्योत्थज्ञानादनुमाना
च्च मनुष्यत्वादिभ्रमनिवृत्तिप्रसिद्धेर्मैवमित्यभिप्रेत्याह॥ पररूपेणेति॥ अन्वेषणादेर्दृष्टफलत्वे फलितमाह॥ इति नियमार्थतेति॥ अपूर्वविधि

इदानीमाख्यायिकां व्याख्यातुमाख्यायिका गुरुविद्याग्रहणसंप्रदानविधिप्रदर्शनार्थेत्यादिनोक्तं स्मारयति॥ तद्धेति॥ अवतारिताख्यायिकाक्ष-

तद्बोधयद्व्याख्यायिकाप्रयोजनमुक्तं तद्ध किल प्रजापतेर्वचनमुभये देवासुरा देवाश्चासुराश्च देवासुरा अनुपरंपराग-
तं स्वकर्णगोचरापन्नमनुबुबुधिरे बुद्धवन्तः तेन तत्प्रजापतिवचो बुद्ध्वा किमकुर्वन्नित्युच्यते ते होचुरुक्तवन्तोऽन्योन्यं देवाः
स्वस्वपरिषद्यसुराश्च हन्त यद्यनुमतिर्भवतां प्रजापतिनोक्तमात्मानमन्विच्छामोऽन्वेषणं कुर्मो यमात्मानमन्विष्य सर्वांश्च
लोकानाप्नोति सर्वांश्च कामानित्युक्त्वा इन्द्रो ह एव राजेव स्वयं देवानामितरान्देवांश्च भोगपरिच्छदं च सर्वं स्थापयित्वा शरीरमा-

तद्धोभये देवासुरा अनुबुबुधिरे ते होचुर्हन्त तमात्मानमन्विच्छामो यमात्मानमन्विष्य सर्वांश्च लोकानाप्नो-
ति सर्वांश्च कामानितीन्द्रो हैव देवानामभिप्रवव्राज विरोचनोऽसुराणां तौ हासंविदानावेव समित्पाणी प्रजाप-
तिसकाशमाजग्मतुः॥ तौ ह द्वात्रिंशतं वर्षाणि ब्रह्मचर्यमूषतुस्तौ ह प्रजापतिरुवाच किमिच्छन्ताववास्तमि-
ति तौ होचतुर्य आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः सो-
न्वेष्टव्यः स विजिज्ञासितव्यः स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्यस्तमात्मानमनुविद्य विजानाती-
ति भगवतो वचो वेदयन्ते तमि-

त्रेणैव प्रजापतिं प्रत्यभिप्रवव्राज प्रगतवांस्तथा विरोचनोऽसुराणां विनयेन गुरवोऽभि-
गन्तव्या इत्येतद्दर्शयति त्रैलोक्यराज्याच्च गुरुतरा विद्येति॥ यतो देवासुरराजौ महार्हभोगार्हौ सन्तौ तौ तथा गुरुमभ्युपगतवन्-
तौ तौ ह किलासंविदानावेवान्योन्यं संविदमकुर्वाणौ विद्याफलं प्रत्यन्योन्यमीर्षां दर्शयन्तौ समित्पाणी समिद्भारहस्तौ प्रजा-
पतिसकाशमाजग्मतुरागतवन्तौ तौ ह गत्वा द्वात्रिंशतं वर्षाणि शुश्रूषापरौ भूत्वा ब्रह्मचर्यमूषतुरुषितवन्तौ अभिप्रायज्ञः

राणि व्याचष्टे तद्धेत्यादिना॥ किमितीन्द्रविरोचनौ विद्यार्थिनावपि परिकरं परित्यज्य शरीरमात्रेण प्रजापतिं प्रगतवन्तौ तत्राह॥ विनयेनेति॥ तयोरु-

मैत्रीं तमात्मानं ज्ञातुमिच्छंतावववास्वेति वक्तव्येऽप्यवास्तमिति प्रजापतिवचोनुकर्षणमात्रमिति द्रष्टव्यं॥ अथेंद्रविरोचनयोर्मिथो वैरिणोः कथमे
कत्रावस्थानं चिरमासीदित्याशंक्याह॥ यद्यपीति॥ देवासुरराजयोः स्वभावतो वैरिणोरपि विद्यार्थित्वेन चिरमेकत्र ब्रह्मचर्यवासेन सूचितमर्थं
दर्शयति॥ तेनेति॥ शुद्धकल्मषौ प्रक्षालितदोषाविति यावत्पुरुषो दृष्ट इति संबंधः अस्मदादिभिस्तत्र द्रष्टादर्शनास्तीत्याशंक्याह। निवृत्तेति॥

प्रजापतिरुवाच किमिच्छंतौ किंप्रयोजनमभिप्रेत्येच्छंतावववास्तमुषितवंतौ युवामितीत्युक्तौ तौ होचतुर्य आत्मेत्यादि भग
वतो वचो वेदयंते शिष्टा अतस्तमात्मानं ज्ञातुमिच्छंतावववास्तमिति॥ अवास्वेति॥ यद्यपि प्राक् प्रजापतेः समीपागमनादन्यो
न्यमीर्षायुक्तावभूतां तथापि विद्याप्राप्तिप्रयोजनगौरवात्यक्तरागद्वेषमोहेर्ष्यादिदोषावेव भूत्वोषतुर्ब्रह्मचर्यं प्रजापतौ तेनेदं
प्रख्यापितमात्मविद्यागौरवं तावेवं तपस्विनौ शुद्धाचकल्मषौ योग्यावुपलक्ष्य प्रजापतिरुवाचाह य एषोऽक्षिणि पुरुषो निवृत्त

तौ ह प्रजापतिरुवाच य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेत्यथ योऽयं भगवो
ऽप्सु परिख्यायते यश्चायमादर्शे कतम एष इत्यो॥ चक्षुर्भिर्मृदितकषायैर्दृश्यते योगिभिर्दृष्टैव आत्मापहतपाप्मा
दिगुणो यमवोचं पुराहं यद्विज्ञानात्सर्वलोककामावाप्तिरेतदमृतं भूमाख्यमत एवाभयमत एव ब्रह्म वृद्धतममित्य
थैतत्प्रजापतिनोक्तमक्षिणि पुरुषो दृश्यत इति वचः श्रुत्वा छायारूपं पुरुषं जगृहतुः गृहीत्वा च दृढीकरणाय प्रजा
पतिं पृष्टवंतौ॥ अथ योऽयं हे भगवोऽप्सु परिख्यायते परिसमंतात् ज्ञायते यश्चायमादर्शे आत्मनः प्रतिबिंबाकारः परि
ख्यायते खड्गादौ च कतम एष एषां भवद्भिरुक्तः किं वैक एव सर्वेष्विति॥ इंद्रियाणां विषयेभ्यो वैमुख्ये हेतुमाह॥ मृदितेति॥ यो
गिभिः समाधिनिष्ठैरंतर्दृष्टिभिरिति यावत्॥ य आत्मेत्यादिवाक्येनास्यैकवाक्यतां दर्शयति॥ एष इति॥ भूमविद्यया चास्यैकवाक्यत्वं सूच
यति॥ भूमाख्यमिति॥ इति शब्दो वाक्यसमाप्त्यर्थः॥ उक्तार्थं वाक्यं पातयति॥ अथ योऽयमिति॥ प्रश्नार्थोऽथशब्दः॥ इति शब्दः समाप्त्यर्थः॥

धर्मेवानात्मा युवाभ्यां पुनरन्यथा गृहीतमिति निपातेन सूचयन्नुक्तवान्प्रजापतिरित्याह ॥ एवमिति ॥ प्रजापतिश्चेदेवमुक्तवान्कथं तर्हि तयोर्वै
मुख्यं न निवृत्तमित्याशंक्याह ॥ एतदिति ॥ यथोक्तवचोरूपं वस्त्विति यावत् ॥ यत्प्रजापतिना मनसि निहितं तत्प्रकटीकर्तुं चोदयति नन्विति ॥ शिष्य
गतं विपरीतग्रहणमाचार्येणानुज्ञातमयुक्तमित्यंगीकृत्य प्रजापतेरभिप्रायमाह ॥ सत्यमेवमिति ॥ कथं तर्हि तयोर्विपरीतग्रहणमपनेतव्यमि
त्याशंक्याह ॥ गृह्णीतामिति ॥ तावद्विपरीतमिति शेषः ॥ चकारेण क्रियापदमनुकृष्यते यद्यदाचरति श्रेष्ठ इति न्यायेन सर्वेषां मृषावादित्वं

एवं पृष्टः प्रजापतिरुवाच एष उ एव यश्चक्षुषि दृष्टो मयोक्त इत्येतन्मनसि कृत्वैषु सर्वेषु भूतेषु परिख्यायत इति होवाच न नु क
थं युक्तं शिष्ययोर्विपरीतग्रहणमनुज्ञातुं प्रजापतेर्विगतदोषस्याचार्यस्य सतः सत्यमेवं नानुज्ञातं कथं आत्मन्यध्यारोपित
पांडित्यमहत्त्वबुद्धी इन्द्रविरोचनौ तथैव च प्रार्थितौ लोके तौ यदि प्रजापतिना मूढौ युवां विपरीतग्राहिणौ इत्युक्तौ स्यातां

एष उ एवेषु सर्वेषु भूतेषु परिख्यायत इति होवाच ॥ ७ ॥

ततस्तयोश्चित्तदुःखं स्यात्तज्जनिताच्च चिन्तावशादात्मनः प्रश्नश्रवणग्रहणावधारणं प्रत्युत्साहविघातः स्यादतो रक्षणी
यौ शिष्याविति मन्यते प्रजापतिः गृह्णीतां तावत्तदुदशरावदृष्टान्तेनापनेष्यामीति ॥ ननु नु युक्तमेष उ एवेति अनृतं वक्तुं न
चानृतं उक्तं कथमात्मनोऽक्षिपुरुषो मनसि सन्निहिततरः शिष्यगृहीतच्छायात्मनः सर्वेषां चाभ्यन्तरः सर्वान्तर इति श्रुतेः
तमेवावोचदेष उ एवेत्यतो नानृतमुक्तं प्रजापतिना तथा च तयोर्विपरीतग्रहणनिवृत्त्यर्थं स्यादाह ॥ ७ ॥

(१) स्यादिति शंकते ॥ नन्विति ॥ प्रा
जापत्यमभिप्रायमेव प्रकटयन्नतिप्रसंगं परिहर्तुं तदीयमनृतवादित्वं दूषयति ॥ नचेति ॥ तदेवाकांक्षापूर्वकं स्फुटयति ॥ कथमित्यादि
ना शिष्याभ्यां गृहीतो यो यमात्मा ततः सकाशादात्मना स्वेनैव प्रजापतिनोक्तो योऽक्ष्युपलक्षितो द्रष्टा स मनसि प्रजापतेः सन्निहिततरोऽतः स
एवं तेनोक्त इत्यर्थः इतश्च द्रष्टा प्रजापतेर्मनसि सन्निहिततर इत्याह ॥ सर्वेषां चेति ॥ प्रजापतेर्मनसि द्रष्टुः सन्निहितत्वेऽपि कथनस्य न मृषा
वादित्वमत आह ॥ तमेवेति ॥ इतश्च प्रजापतेर्न मृषावादित्वमित्याह ॥ तथा चेति ॥ ७ ॥

आदित्यप्राप्तौ किं स्यादित्यत आहातद्वति ॥ अविदुषामपि तर्हि प्राप्तानामादित्यं ततो निरुद्धानां पुनर्ब्रह्मलोकाप्राप्तिरित्याशंक्याह ॥ सौरेणेति ॥ वि
देहे निरुद्धानां मूर्द्धन्यया नाड्या नोत्क्रमणमविदुषामित्यत्र लिंगं दर्शयति ॥ विष्वङिति ॥ यथोक्तोर्थो नाडीविभागलक्षणः प्रधानत इति ॥ वि
शेषणतात्पर्यमाहानन्त्यादिति ॥ प्रकरणं नाडीविषयं दहरविद्याविषयं वा ॥ ६ ॥ दहरविद्यायामुपास्यस्तुत्यर्थमुत्क्रमणमनुवदति ॥ अथेति ॥ विवेका

गच्छति प्राप्नोति क्षिप्रं गच्छतीत्यर्थो न तु तावतैव कालेनेति विवक्षितं ॥ किमर्थमादित्यं गच्छतीत्युच्यते ॥ एतद्वै खलु प्रसिद्धं ब्रह्म
लोकस्य द्वारं य आदित्यस्तेन द्वारभूतेन ब्रह्मलोकं गच्छति विद्वान् ततो विदुषां प्रपदनं प्रपद्यते ब्रह्मलोकमनेन द्वारेणेति प्रपद
नं निरोधनं निरोधोस्मादादित्याद्विदुषां भवतीति निरोधः ॥ सौरेण तेजसा देह एव निरुद्धाः सन्तो मूर्द्धन्यया नाड्या नोत्क्रामन्त एवे
त्यर्थो विष्वङ्ङ्न्या इति श्लोकान्तरे तस्मिन्यथोक्तेर्थे एष श्लोको मंत्रो भवति ॥ शतं चैका चैकोत्तरशतं नाड्यो हृदयस्य मांसपिं

शतं चैका च हृदयस्य नाड्यस्तासां मूर्द्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङ्न्या उत्क्रमणे भ
वन्त्युत्क्रमणे भवन्ति ॥ ६ ॥ ((ड भूतस्य संबंधिन्यः प्रधानतो भवन्त्यानन्त्यात् देहनाडीनां ॥ तासामेका मूर्द्धानमभिनिःसृता
विनिर्गता ॥ तयोर्द्ध्वमायन् गच्छन्नमृतत्वममृतभावमेति ॥ विष्वङ्नानागतयस्तिर्यग्विसर्पिण्य ऊर्द्ध्वगाश्चान्या नाड्यो भवन्ति
॥ संसारगमनद्वारभूता न त्वमृतत्वाय ॥ किं तर्ह्युत्क्रमण एवोत्क्रान्त्यर्थमेव भवन्तीत्यर्थो द्विरभ्यासः प्रकरणसमाप्त्यर्थः ॥ ६ ॥
अथ य एष संप्रसादोस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाचैतदमृतमभ
यमेतद्ब्रह्मेत्युक्तं ॥ तत्र कोसौ संप्रसादः कथं वा तस्याधिगमः यथा ((नंतर्यमथशब्दार्थो व्याख्यातः ॥ शरीरात्समुत्थानं तस्मिन्नहंममाभि
मानत्यागः ॥ स्वरूपं विशिनष्टि एष इति ॥ उक्तिकर्तृत्वमाचार्यस्य दर्शितमेव प्राणो वा संप्रसादो विज्ञानात्मा वेति संशयात्पृच्छति ॥ तत्रेति ॥ यक्त
तं वाक्यं समन्वयार्थः तस्य च संप्रसादस्य परमात्मविषयं ज्ञानं केनोपायेन भवतीति प्रश्नान्तरमाह ॥ कथं वेति ॥ किं तस्य परमात्माधिगमेनेत्याशं

तस्याधिगमः कथमिति संबंधः॥अभिनिष्पद्यमानरूपस्यात्मा सविशेषो निर्विशेषो वेति प्रश्नांतरं करोति॥येनेति॥आत्मनो हि सविशेषानंदै
कत्वानार्थांतराणि रूपाणि दृश्यमानानि शरीरसंबंधप्रयुक्तानि॥तथा च ततः शरीरादुपाधेर्यदन्यत्तस्य स्वरूपं तत्कथं सर्वप्रमाणाप्रतिपन्न
मस्तीति प्रश्नांतरमाह॥संप्रसादस्य चेति॥एतेषां प्रश्नानामुत्तरत्वेनोत्तरग्रंथमवतारयति॥इत्युत्तरमिति॥प्रजापतेरिंद्रविरोचनयोश्च संवादरू
पाः त्वाख्यायिका दृश्यते सा किमर्थेत्याशंक्याह॥आख्यायिका त्विति॥शिष्यस्य विद्याया ग्रहणे गुरोस्तस्याः सम्यक्प्रदाने च यो विधिः प्रदातु

सोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते येन स्वरूपेणाभिनिष्पद्यते स किंलक्षण आत्मा सं
प्रसादस्य च देहसंबंधीनि रूपाणि न तानि यदन्यत्कथं स्वरूपमित्येतेऽर्था वक्तव्या इत्युत्तरो ग्रंथ आरभ्यते आख्यायिका तु विद्या
ग्रहणसंप्रदायविधिप्रदर्शनार्था विद्यास्तुत्यर्था च राजसेवितं पानीयमितिवत् य आत्मापहतपाप्मा विजरो विमृत्युर्विशोको

य आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः सोऽन्वेष्टव्यः स विजि॥ज्ञासितव्यः

विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः यस्योपासनायोपलब्ध्यर्थं हृदयपुंडरीकमभिहितं यस्मिन्का
माः समाहिताः सत्या अनृतापिधाना यदुपासनसहभावि ब्रह्मचर्यं साधनमुक्तं उपासनफलभूतकामप्राप्तये च मूर्धन्यया ना॥ड्या गतिरभिहि

त्वादिप्रकारस्तत्प्रदर्शनार्थेति यावत्॥यद्वा विद्यायाः ग्रहणं स्वीकरणं यत्र संप्रदाने तद्दानपात्रे शिष्ये दृश्यते तस्य वि
धिर्ब्रह्मचर्यादिस्तत्प्रदर्शनार्थेत्यर्थः॥आख्यायिकायास्तात्पर्यांतरमाह॥विद्येति॥प्रजापतिनामोक्ता देवैरसुरैश्च प्रार्थितामिंद्रविरोचना
भ्यां देवासुरपतिभ्यामायासेन महता प्रार्थितां देवराजेन च कथंचित्प्राप्तां तस्मान्महार्हेयं विद्येति तस्याः स्तुत्यर्थाख्यायिकेत्यर्थः॥महद्भिरु
पासितत्वस्य महार्हत्वे दृष्टांतमाह॥राजसेवितमिति॥यन्मायोपाधि सविशेषं चैतन्यं तदेव निरुपाधि निर्विशेषमिति सविशेषनिर्विशेष
योरभेदाभिप्रायेण प्रजापतिवाक्यं व्याकर्तुमादत्ते॥य आत्मेति॥तत्र सोऽन्वेष्टव्य इति वाक्ये सशब्दार्थमाह॥यस्येति॥उपासनमपि किमर्थं

आत्मानमुदशरावेऽवेक्ष्य तं तत्रात्मानं पश्यंतौ तावनंतरं यदात्मनो न विजानीथो युवां तन्मे प्रब्रूतमिति संबंधः ॥ प्रजापतिवचनमुपक्रमानुकू
लं न भवतीति शंकते ॥ नन्विति ॥ उपक्रममतिक्रम्य ब्रुवाणस्य प्रजापतेरभिप्रायमाह ॥ उच्यत इति ॥ तत्र प्रथमं निर्दिष्टं विरोचनाभ्यामावाभ्यामि
दमविदितमिति प्रजापतिं प्रत्यवचने कारणमाह ॥ नैवेति ॥ छायात्मनि छायायां तद्दृष्टौ शरीरे चेंद्रविरोचनयोर्यथाक्रममात्मधीरियं निश्चिता

उदशराव उदकपूर्णे शरावादावात्मानमवेक्ष्याथानंतरं यत्तत्रात्मानं पश्यंतौ न विजानीथस्तन्मे मम प्रब्रूतमाचक्षीयाथा
मित्युक्तौ तौ ह तथैवोदशरावेऽवेक्षांचक्राते ऽवेक्षणं चक्रतुः तथा कृतवंतौ ह प्रजापतिरुवाच किं पश्यथ इति ॥ ननु तन्मे प्रब्रूत
मित्युक्ताभ्यामुदशरावेऽवेक्षणं कृत्वा प्रजापतये न निवेदितमिदमावाभ्यां न विदितमित्यनिवेदिते चाज्ञाने हेतौ ह प्रजापतिरु

उदशराव आत्मानमवेक्ष्य यदात्मनो न विजानीथस्तन्मे प्रब्रूतमिति तौ होदशरावेऽवेक्षांचक्राते तौ ह प्रजापतिरु
वाच किं पश्यथ इति तौ होचतुः सर्वमेवेदमावां भगव आत्मानं पश्याव आलोमभ्य आनखेभ्यः प्रतिरूपमिति तौ ह
प्रजापतिरुवाच साध्वलंकृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षेथामिति ॥ १ ॥ वाच किं पश्यथ इति तत्र कोऽभिप्राय इ
ति उच्यते नैव तयोरिदमावयोरविदितमित्याशंका भूत् छायात्मन्यात्मप्रत्ययो निश्चित एवासीद्येन वक्ष्यति तौ ह शांतहृदयौ
प्रवव्रजतुरिति न ह्यनिश्चितेऽभिप्रेतार्थे प्रशांतहृदयत्वमुपपद्यते तेन नोचतुरिदमावाभ्यामविदितमिति विपरीतग्राहिणौ च
शिष्यावनुपेक्षणीयाविति स्वयमेव पप्रच्छ किं पश्यथ इति विपरीतनिश्चयापनयाय च वक्ष्यति साध्वलंकृतावित्येवमिति तौ हो

प्रवृत्तेत्यर्थः ॥ तयोस्तत्रात्मप्रत्ययस्य निश्चितत्वे गमकमाह ॥ येनेति ॥ प्रवव्रजनेऽपि शांतहृदययोस्तयोः सत्यप्रत्ययस्य कथं निश्चितत्वमित्याशं
कयाह ॥ नहीति ॥ तेन विपरीतग्राहित्वेनेति यावदुक्तमगृहीत्वा विपरीतं गृहीतवंतौ न हि प्रजापतिनोपेक्षणीयौ कुत इत्यादित्याशंक्य प्राजापत्यम
भिप्रायमाह ॥ विपरीतग्राहिणौ चेति ॥ कथमिदं प्रजापतेरभिमतमित्यपेक्षितमत आह ॥ विपरीतेति ॥ प्राजापत्ये प्रश्ने देवासुरराजयोर्विपरीतग्र

तदपनयप्रकारंसूचयति॥तौहपुनरिति॥छायायांतद्देहेतौचदेहेतयोरात्मनिश्चयोयस्तस्यनिरासायेतियावत्॥इहचेतिपर्यायोक्तिः॥नादि
देशानत्प्रयोजनाभावादित्यर्थः॥उक्तोदाहरणेन छायायांदेहेचविरोचनेन्द्रयोरात्मप्रत्ययोनापनीतोभवतीतिशंकते॥कथमिति॥छायायास्तत्का
रणस्याचागंतुकत्वादनात्मत्वमत्रविवक्षितमित्युत्तरमाह॥साध्वलंकारेति॥पूर्वमुदकादिसंबंधावस्थायामितियावत्॥व्यभिचारित्वाच्छायात

यथैवावांहेभगवोलोमनखादिमंतौस्वःएवमेवेदंलोमनखादिसहितमावयोःप्रतिरूपमुदशरावेपश्यावइतितौहपुनः
प्रजापतिरुवाचछायात्मनिश्चयापनयायसाध्वलंकृतौयथास्वगृहेसुवसनौमहार्हवस्त्रपरिधानौपरिष्कृतौछिन्नलो
मनखौचभूत्वोदशरावेपुनरीक्षेथामितीहवचनादिदेशयदज्ञातंतन्मेप्रब्रूतमिति॥कथंपुनरनेनसाध्वलंकारादि
कृत्वोदशरावावेक्षणेनतयोश्छायात्मग्रहोपनीतःस्यात्साध्वलंकारसुवसनादीनामागंतूनांछायाकरत्वमुदशरा

तौहसाध्वलंकृतौसुवसनौपरिष्कृतौभूत्वोदशरावेवेक्षांचक्रातेतौहप्रजापतिरुवाचकिंपश्यथइतितौहो
चतुर्यथैवेदमावांभगवःसाध्वलंकृतौसुवसनौपरिष्कृतौस्वएवमेवेमौभगवः॥२॥यथाशरीरसंबद्धानामेवंशरी
रस्यापिछायाकरत्वंपूर्ववद्भवेतिगम्यतेशरीरैकदेशानांचलोमनखादीनांनित्यत्वेनाभिप्रेतानामखंडितानांछाया
करत्वंपूर्वमासीत्॥छिन्नेषुचनैवलोमनखच्छायादृश्यतेलोमनखादिवच्छरीरस्याप्यागमापायित्वंप्रसिद्धमित्यु
दशरावादौदृश्यमानस्यतन्निमित्तस्यचदेहस्यानात्मत्वमुदशरावादौछायाकरत्वाद्देशसंबद्धालंकारादिवत्
नकेवलंएतेनयावत्किंचिदात्मीयत्वाभिमतं॥त्कारणयोरनात्मत्वमित्याह॥शरीरैकदेशानामिति॥उपपत्तिभ्यां॥
सिद्धमर्थंनिगमयति॥इत्युदशरावादाविति॥नकेवलंछायातत्कारणयोरेवानात्मत्वंकिंतूक्तन्यायेनाहंकारादीनांतद्धर्माणां
चात्मीयत्वंप्रत्युक्तमितिप्रसंगादतिदिशति॥नकेवलमिति॥आत्मत्वाभिमतमहंकारादीतिशेषः॥मोहादात्मीयत्वाभिमतमि

।एतेनेति सूचितमेव हेतुं दर्शयति ॥ कादाचित्कत्वादिति ॥ अनात्मेत्यनात्मत्वमनात्मीयत्वोपलक्षणार्थं ॥ तर्हि तयोर्यथोक्तरीत्या विपरीतग्रह
स्यापगतत्वात्किमुत्तरेण प्रजापतिवाक्येनेत्याशंक्याह ॥ एवमिति ॥ तथैवेत्यस्य व्याख्या ॥ पूर्ववदिति ॥ यथैवेदमिति   प्रतीकग्रहणं तद्व्याचष्टे
।यथेति ॥ आवां स्व इतीदमुदाहरणं यथेवेति संबंधः ॥ अक्षिवाक्यादुदशरावब्राक्यात्साध्वलंकारवाक्याच्च छायात्मदेहात्मनोरन्यतरस्यैवात्म

सुखदुःखरागद्वेषमोहादि कादाचित्कत्वान्नखलोमादिवदनात्मेति प्रत्येतव्यं एवमशेषमिथ्यादेहादेरनात्मत्वकथने
न मिथ्याग्रहापनयनिमित्ते साध्वलंकारादिदृष्टान्ते प्रजापतिनोक्तेऽप्युक्त्वा तथाकृतवतोरपि छायात्मविपरीतग्रहो नापज
गाम यस्मात्तस्मात्स्वदोषेणैव केनचित्प्रतिबद्धविवेकविज्ञानाविंद्रविरोचनावभूतामिति गम्यते ॥ तौ पूर्ववदेव दृढनिश्च
यौ पप्रच्छ किं पश्यथ इति तौ तथैव प्रतिपन्नौ यथैवेदमिति पूर्ववद्यथा साध्वलंकारादिविशिष्टावावां स्व एवमेवमौ छा

साध्वलंकृतौ सुवसनौ परिष्कृताविति एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति तौ ह शान्तहृदयौ प्रवव्रजतु

यात्मानाविति सुतरां विपरीतनिश्चयावेव बभूवतुः यस्मात्मनो लक्षणं य आत्मापहतपाप्मेत्युक्त्वा पुनस्तद्विशेषमन्विष्य
माणयोर्य एषोऽक्षिणि पुरुषो दृश्यत इति साक्षादात्मनि निर्दिष्टे तद्विपरीतग्रहापनेयायोदशरावे साध्वलंकारदृष्टान्तेऽप्य
भिहित आत्मस्वरूपबोधाद्विपरीतग्रहो नापगतो ऽतः स्वदोषेण केनचित्प्रतिबद्धविवेकविज्ञानसामर्थ्याविति मत्वा यथा
भिप्रेतमेवात्मानमेव आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति प्रजापतिः पूर्ववन्नतु तदभिप्रेतमात्मानं य आत्मेत्याद्यात्मलक्ष
णश्रवणेनाक्षिपुरुषश्रुत्या चोदशरावाद्युपपत्त्या संस्कृतौ तावन्मद्वचनं ((त्वमभ्यासादिति भ्रमातिशयः सुतरामित्युक्तः ॥ प्रजापतिवाक्य

मुत्थापयति ॥ यस्येत्यादिना ॥ वाक्यव्याख्यानमतिदिशति ॥ पूर्ववदिति ॥ एषशब्देन तयोरभिप्रेतमेवात्मानं छायात्मदेहात्मं च परामृश्य प्र
जापतिरनुमोदितवानित्याशंक्याह ॥ नत्विति ॥ तौ ह शान्तहृदयावित्यादिवाक्यस्य तात्पर्यमाह ॥ य आत्मेत्यादीति ॥ संस्कृतौ तावद्भवतामिति

शेषः संस्कृतयोरपि तयोरात्मविषये कथं विवेको भविष्यतीत्याशंक्याह ॥ मद्वचनमिति ॥

उपेक्षायां कारणं तस्माह ॥ पुनरिति ॥ किमिति शांतहृदयत्वं तुष्टहृदयत्वेन व्याख्यायते हृदयगतः शम एव किं न विवक्ष्यते तत्राह ॥ नत्विति
यदि प्रजापतिस्तावुपेक्षितवान्किमिति तर्हि तौ हान्वीक्ष्येत्यादिवाक्यमित्याशंक्याह ॥ एवं तयोरिति ॥ प्रजापतिरुवाचेति संबंधः ॥ तर्हि कि

सर्वं पुनः पुनः स्मरतोः प्रतिबंधक्षयाच्च स्वयमेवात्मविषये विवेको भविष्यतीति मन्वानः पुनर्ब्रह्मचर्यादेशे च तयोश्चि
त्तदुःखात्यंतिं परिजिहीर्षन्कृतार्थबुद्धितया गच्छतावप्युपेक्षितवान्प्रजापतिः तौ हेंद्रविरोचनौ शांतहृदयौ तुष्टहृदयौ कृता
र्थबुद्धी इत्यर्थः ॥ ननु शम एव शमश्चेत्तयोर्जातो विपरीतग्रहो विगतः भविष्यत्यवं च न तु गतवंतौ एवं तयोर्गतयोरिंद्रविरो
चनयो राज्ञो र्भोगासक्तयोर्यथोक्तविस्मरणं स्यादित्याशंक्य प्रत्यक्षवचनेन च चित्तदुःखं परिजिहीर्षुस्तौ दूरं गच्छतावन्वी
क्ष्य य आत्मापहतपाप्मेत्यादिवचनं वेदतद्य्यनयोः श्रवणगोचरत्वमेष्यतीति मन्वानो वाच प्रजापतिः अनुपलभ्य यथोक्त

तौ हान्वीक्ष्य प्रजापतिरुवाचानुपलभ्यात्मानमननुविद्य व्रजतो यतर एतदुपनिषदो भविष्यंति देवा वासुरा वा
ते पराभविष्यंतीति ॥ लक्षणमात्मानमननुविद्य स्वात्मप्रत्यक्षं चाकृत्वा विपरीतनिश्चयौ च भूत्वेंद्रविरोचनावेतौ प्रव्रज
तो गच्छेयातां ॥ अतो यतरे देवा वासुरा वा किं विशेषितेनैतदुपनिषद आभ्यां याग्गृहीतात्मविद्या से यमुपनिषद्येषां देवानाम
सुराणां वा ते एतदुपनिषद एवं विज्ञाना एतन्निश्चया भविष्यंतीत्यर्थः ते किं पराभविष्यंतीति श्रेयोमार्गात्पराभूता बहिर्भूता वि
नष्टा भविष्यंतीत्यर्थः ॥ स्वगृहं गच्छतोः सुरासुरराजयोरसुरराजः सह शांतहृदय एव सन्विरोचनोऽसुरान्जगाम गत्वा च तेभ्यो
ऽसुरेभ्यः शरीरात्मबुद्धिर्योपनिषत्तामेतामुपनिषदं प्रोवाचोक्तवान्देहमात्रमेवात्मा पित्रोक्त इति ॥ मिति तावाहूय नोक्तवानित्याशंक्याह
॥ प्रत्यक्षवचनेनेति ॥ कर्तृत्वेन संबंधार्थमुक्तमेव पुनरनुवदति ॥ प्रजापतिरिति ॥ किमसावूचिवानित्यपेक्षायामाह ॥ अनुपलभ्येति ॥
यथोक्तं प्रजापतिवाक्यं श्रुत्वापि गच्छतोरिंद्रविरोचनयोर्विरोचनगतमवांतरविशेषमाह ॥ स्वगृहमिति ॥ १ ॥ ६ ॥ १

पित्रातथोक्तत्वेपि किमस्माभिस्तत्रकर्त्तव्यमित्याशंक्याह॥तस्मादिति॥तथापूजनीयत्ववदिति यावत्तथेत्युक्तप्रकारो क्तिस्तथापि प्रार्थितं
सर्वलोककामावाप्तिरसिद्धेत्याशंक्याह॥इहलोकेति॥विरोचनसंप्रदायस्याविच्छिन्नत्वंदर्शयति॥तस्मादिति॥देहात्मवादस्यासुरत्वादिति

तस्माद्दात्मैवदेहः इहलोकेमहय्यः पूजनीयः तथापरिचर्यः परिचरणीयः तथात्मानमेवेहलोकेदेहंमहयन्परिचरंश्चोभौ
लोकाववाप्नोतीमंचामुंचेहलोकपरलोकयोरेवसर्वेलोकाः कामाश्चांतर्भवंतीतिराज्ञोभिप्रायः तस्मात्तत्संप्रदायोद्यापि
अनुवर्त्ततइतीहलोकेअददानंदानमकुर्वाणमविभागशीलमश्रद्दधानंसत्कार्येषुश्रद्धारहितंयथाशक्तिअयजमानमयज
नस्वभावमाहुरासुरः खल्वयंयतएवंस्वभावोवतेतिखिद्यमानाआहुः शिष्टाः असुराणांहियस्मादश्रद्दधानतालक्षणैषोपनि
षत्तयोपनिषदासंस्कृताः संतः प्रेतस्यशरीरंकुणपंभिक्षयागंधमाल्यान्नादिलक्षणयावसनेनवस्त्रादिनाच्छादनादिप्रकारे

सहशांतहृदयएवविरोचनोऽसुरान्जगामतेभ्योहैतामुपनिषदंप्रोवाचात्मैवेहमहय्यआत्मापरिचर्यआत्मान
मेवेहमहयन्नात्मानंपरिचरन्नुभौलोकाववाप्नोतीमंचामुंचेतितस्मादप्यद्येहाददानमश्रद्दधानमयजमानमाहु
रासुरोबतेत्यसुराणांह्येषोपनिषत्प्रेतस्यशरीरंभिक्षयावसनेनालंकारेणेतिसंस्कुर्वंत्येतेनह्यमुंलोकंजेष्यंतो

णालंकारादिकरणेनध्वजपताकादिकरणेनेत्येवंसंस्कुर्वंत्येतेनकुणपसंस्कारेणामुंप्रेत्यप्रतिपत्तव्यंलोकंजेष्यंतोमन्यंते॥८॥
अथहकिलेंद्रोऽप्राप्यैवदेवान्देव्याःकोयोदिसंपदायुक्तत्वाद्गुरोर्वचनंपुनःपुनःस्मरन्नेवगच्छन्ननद्दृश्यमाणंभयं छायात्मग्र

यावत्तत्संप्रदायस्तेषांविरोचनप्रभृतीनामसुराणांसंप्रदायोदेहात्मत्वोपदेशः॥किमित्यात्मत्वादिरहितमासुरमाहुरित्यपेक्षायामाह॥असुरा
णांहीति॥प्रकृतोपनिषत्कार्यंकथयति॥तयेति॥८॥एवंविरोचनगतंविशेषंदर्शयित्वादेवराजगामिनंविशेषमाह॥अथेत्यादिना॥द्वयोस्तु
ल्येपिप्राजापत्यवाक्यश्रवणेदेवराजस्यैवकथंपथितदनुसंधानंवृत्तमित्याशंक्याह॥दैव्येति॥स्मरणफलमाह॥स्मरन्नेवेति॥

प्रजापतिवचनं स्मरन्नपि कथमिंद्रस्य छायात्मग्रहणे दोषदर्शनमित्याशंक्याह॥ उदशराव इति॥ यद्दर्शो देहादेरनात्मत्वज्ञापनार्थ इति याव
त्काद्याचित्कत्वव्यभिचारित्वादिन्यायः तदेकदेशो व्यभिचारिणोऽनात्मत्वं॥ न्यायैकदेशदृष्टिफलमाचष्टे॥ येनेति॥ दोषदर्शनमेवाकांक्षाद्वार
स्फोरयति॥ कथमित्यादिना॥ उदाहृतं वाक्यं विवक्षितमर्थं कथयति॥ यथेति॥ परिष्कृतो भवतीत्येतद्व्याचष्टे॥ नखेति॥ एवमेव देहस्य न
खाद्यपगमे छायात्मनोऽपि तदपगमवदित्यर्थः॥ शरीरेऽस्मिन्नंधे सति छायात्माप्यंधो भवतीति संबंधः॥ किमिति देहसाध्ये छायात्मनस्त

उदशरावदृष्टांतेन प्रजापतिना यद्दर्शोन्याय उक्तस्तदेकदेशो मघवतः सत्यभाक्‌ दृष्टो येन छायात्मग्रहणे दोषं ददर्श कथं यथै
व खल्वयं अस्मिन्‌ शरीरे साध्वलंकृते छायात्मापि साध्वलंकृतो भवति सुवसने सुवसनः परिष्कृते परिष्कृतो यथा नखरोमा
दिदेहावयवापगमे छायात्मापि परिष्कृतो भवति नखरोमादिरहितो भवति॥ एवमेवायं छायात्माप्यस्मिन्‌ शरीरे नखलोमा

अथ हैंद्रोऽप्राप्यैव देवानेतद्भयं ददर्श यथैव खल्वयमस्मिंछरीरे साध्वलंकृते साध्वलंकृतो भवति सुवसने
सुवसनः परिष्कृते परिष्कृत एवमेवायमस्मिन्नंधेऽन्धो भवति स्रामे स्रामः परिवृक्णे परिवृक्णोऽस्यैव शरीरस्य ना
शमन्वेष नश्यति नाहमत्र भोग्यं पश्यामीति स समित्पाणिः पुनरेयाय तं ह प्रजापतिरुवाच मघवन्यच्छा
((तं ह द्वयः

दिभिर्देहावयवत्वसमानत्वात्‌ देहे चक्षुषोऽपगमे अंधो भवति स्रामे स्रामः स्रामः किलैकनेत्रः तस्यांधत्वेन गत
त्वाच्चक्षुर्नासिका वा यस्य स द्वाक्रवति स स्रामः परिवृक्णः छिन्नहस्तः उच्छिन्नपादो वा स्रामे परिवृक्णे वा देहे छायात्मापि तथा

दित्यमित्याशंक्याह॥ नखलोमादिभिरिति तैः सह चक्षुरादीनां तुल्यत्वाद्देहावयवत्वस्य देहेन खाद्यभावे छायायामपि तदभावाभ्युपगमा
द्देहे चक्षुराद्यभावे छायायां तदभावो युक्त इत्यर्थः॥ स्रामशब्दस्यापुनरुक्तमर्थं कथयति॥ स्रामः किलेति॥ पदार्थमुक्त्वा वाक्यार्थमाह॥ स्रामइ
ति॥ पारतंत्र्यादनात्मत्वं छायायाद्रशयित्वा तन्नैव हेत्वंतरमाह॥ नयेति॥ विनाशित्वादियुक्ति दर्शनफलमुपसंहरति॥ \ ॥ ९ ॥ \

अतइति॥दोषंदृष्ट्वायथोक्तरीत्या किं कृतवानित्यपेक्षायामाह॥इत्येवमिति॥सर्वज्ञोहिप्रजापतिरिंद्राभिप्रायंजानन्नेवकिमर्थंप्राकृतव
त्पृच्छतीत्याशंक्याह॥विजानन्नपीति॥आचार्यस्यज्ञानवतोपि शिष्यंप्रत्यभिप्रायविशेषणज्ञातुंप्रश्नोपपत्तौदृष्टांतमाह॥यद्वेत्येति॥तथा
चप्रजापतिप्रश्नानुरोधेनेतियावत इंद्रविषयःस्वशब्दःशिष्ययोःश्रवणसाम्येपिप्रतिपत्तिवैषम्यनिमित्तंपृच्छति॥नन्विति॥आचार्यमतोप

नाशमन्वेषनश्यति॥अतोनाहमत्रास्मिन् छायात्मदर्शनेदेहात्मदर्शनेवाभोग्यंफलंपश्यामीत्येवंदोषंदेह छायात्म
दर्शनेव्यवस्यसमित्पाणिर्ब्रह्मचर्यंवस्तुंपुनरेयायतंहप्रजापतिरुवाचमघवन्यच्छांतहृदयःप्राव्राजीःप्रगतवान
सिविरोचनेनसार्धंकिमिच्छन्पुनरागमइतिविजानन्नपिपुनःप्रपच्छइंद्राभिप्रायाभिव्यक्तये॥यद्वेत्यतेनमोपसीदे
तियद्वत्तथाचस्वाभिप्रायंप्रकटमकरोद्यथैवखल्वयमित्यादिवमेवेतिचान्वमोदतप्रजापतिः॥ननुतुल्येस्मिपुरुषश्रव

प्राव्राजीःसार्द्धंविरोचनेनकिमिच्छन्पुनरागमइतिसहोवाचयथैवखल्वयंभगवोस्मिञ्छरीरेसाध्वलंकृते
साध्वलंकृतोभवतिसुवसनेसुवसनःपरिष्कृतेपरिष्कृतएवमेवायमस्मिन्नन्धेन्धोभवतिस्रामेस्रामःपरिवृक्णे

णेदेहच्छायामिंद्रोगृहीतात्मेतिदेहमेवतुविरोचनस्तत्किंनिमित्तंतत्रमन्यतेयथेंद्रस्योदशरावादिप्रजापतिवचनंस्मरतो
देवानप्रासस्यैवाचार्योक्तबुद्ध्या छायात्मग्रहणंतत्रदोषदर्शनंचाभूत्ततथाविरोचनस्यदेहएवात्मदर्शनंनापितत्रदोषद

त्यासद्वारापरिहरति॥तत्रेति॥—— तत्रप्रतिपत्तिविशेषेदृष्टांतेननिमित्तविशेषंदर्शयति॥यथेतिआचार्योक्तबुध्यातात्पर्येणप्रजापति
ना छायात्मादावुक्तइतिनात्मेत्यर्थः॥विरोचनस्येंद्रवच्छायात्मग्रहणमाचार्येणोक्तबुद्ध्यानाभूदित्याह॥नतथेति॥कथंतर्हितस्यात्मदर्शन
मित्याशंक्याह॥देहएवेति॥आचार्येणात्मादेहएवोक्तइतिबुध्यातत्रैवविरोचनस्यात्मज्ञानमासीदित्यर्थः॥इंद्रस्यछायात्मग्रहणेदेवानप्राप
स्यैवमार्गमध्येदोषदर्शनवद्विरोचनस्यासुरानप्राप्तस्याऽध्वनिदेहात्मदर्शनेदोषदर्शनंचनप्रवृत्तमित्याह॥नापीतिदृष्टांतमुक्त्वादार्ष्टांतिक

विद्याग्रहणोपयिकस्य सामर्थ्यस्य प्रतिबंधभूतो यो रागादिदोषस्तदल्पत्वापेक्षमिंद्रस्य छायायामात्मग्रहणमित्युक्तं व्यक्तीकरोति॥इंद्र इ
ति॥यथोक्तदोषभूयस्त्वापेक्षं गृह्णतो विरोचनस्याभिप्रायं दर्शयन्नु दर्शयति॥यथेत्यादिना उक्तमर्थं बृहदारण्यकश्रुत्यवष्टंभेन स्पष्टयति॥द
त्तचित्तेति॥देवान्मनुष्यानसुरांश्च प्रजापतिना दकारोपदेशे साधारण्येन कृते तेषां तदीयश्रवणे तुल्येपि तदर्थविशेषावधारणं स्वचित्तगुण
दोषवशाद्बृहदारण्यके दर्शितं तथेहापीत्यर्थः॥तत्र वाक्यतुल्येपि श्रवणेऽर्थविशेषबुद्धिस्तत्राह॥दाम्यतेति॥ अदांता हि वयं स्वभा

विद्याग्रहणसामर्थ्यप्रतिबंधदोषाल्पत्वबहुत्वापेक्षमिंद्रविरोचनयोः छायात्मदेहयोर्ग्रहणं इंद्रोल्पदोषत्वाद्दुपन्नदू ति
श्रुत्यर्थमेव श्रद्दधानतया जग्राह इतरश्छायात्मनिमित्तं देहं हित्वा श्रुत्यर्थं लक्षणया जग्राह प्रजापतिनोक्तोयमिति दोषभूय
स्त्वात्॥यथा किल नीलानीलयोरादर्शे दृश्यमानयोर्वाससोर्यन्नीलं तन्ममाहमिति छायानिमित्तं वास एवोच्यते न छाया

परिगृह्णतोस्यैव शरीरस्य नाशमन्वेष नश्यतिनाहमत्र भोग्यं पश्यामीत्येवमेवैष मघवन्निति होवाचैतं त्वेव ते भू
योनुव्याख्यास्यामि वसापराणि द्वात्रिंशतं वर्षाणीति स हापराणि (( तद् इति विरोचनाभिप्रायः स्वचित्तगुणदो
षवशाद्बृहि शब्दार्थावधारणं तुल्ये श्रवणे दर्शितं दाम्यत दत्त दयध्वमिति दकारमात्रश्रवणात्तुल्येपि तरेनिमित्तान्यपि त
दनुगुणान्येव सहकारीणि भवंति प्रकृतो यो मघवोक्त आत्मा एवमेवैष मघवन्नस्य न तावत् (( वत्स्तेन दाम्यतेत्यस्मान्प्रति पितोक्तवानि

ति देवानां मतिराविरासीत्स्वभावतोत्तु आवयं तेन दानं दत्तेत्यस्मान्प्रत्युक्तवान्पितेति मनुष्याणां बुद्धिरासीत्॥क्रूरा हि वयं स्वभावतस्तेन दयध्व
मित्यस्मान्प्रति प्रजापतिरुक्तवानित्यसुराणां मतिः प्रतिपत्तिर्बभूव तदेवं दकारमात्रश्रवणादात्मचित्तानुरोधेन विचित्रा तेषां मनीषा प्रवृत्ता तथेंद्रविरोचन
योरपि भविष्यतीत्यर्थः॥अथेंद्रविरोचनयोर्युक्तिदर्शनाविशेषादर्थप्रतिपत्तेरप्यविशेषः स्यादिति चेन्नेत्याह॥निमित्तान्यपीति॥युक्तिदर्शनान्यपि स्व
चित्तदोषाल्पत्वबहुत्वापेक्षाण्यतस्तयोस्तदपेक्षं प्रतिपत्तिवैषम्यमविरुद्धमित्यर्थः॥इंद्राभिप्रायं बुध्वा प्रजापतिरनुमोदितवानित्युक्तं इदानीमनुमो

अनुव्याख्यास्यामीत्युक्तं श्रुत्वा श्रोतुकाममुपगतमिदं मत्वाह ॥ यस्मादिति ॥१॥ पूर्ववच्छायात्मदर्शनवदित्यर्थः ॥ अस्मिन्नप्यात्मनीति स्वप्न
दर्शीत्यर्थः ॥ छायात्मनः शरीरानुविधायित्ववन्न स्वप्नदृशस्तदनुविधायित्वं तस्माच्च कथं पूर्ववद्दोषदर्शनमित्याशङ्क्य परिहरति ॥ कथमित्या
दिना ॥ स्राम्येण चक्षुरादिगतानवरतसलिलगलनविषयत्वेनेति यावद्देहदोषेणात्मनो न दोषो भवतीति प्रागेवोक्तं तत्किमर्थमिह पुनरुच्य

गतं न छायात्मेत्युवाच प्रजापतिः यो मयोक्त आत्मा प्रकृत एतमेवात्मानं तु ते भूयः पूर्वं व्याख्यातमप्यनुव्याख्यामि यस्मात्त्वं
छायात्मदोषरहितानामवधारणविषयमात्ममपि नाग्रहीः ततः केनचिद्दोषेण प्रतिबद्धग्रहणसामर्थ्यस्त्वमतस्तत्क्षप
णाय वसापराणि द्वात्रिंशतं वर्षाणीत्युक्तो तथोषितवते क्षपितदोषाय तस्मै होवाच ॥१॥ य आत्मापहतपाप्मादिलक्षणो य
एषोऽक्षिणीत्यादिना व्याख्यात एष सः कोऽसौ यः स्वप्ने महीयमानः स्त्र्यादिभिः पूज्यमानश्चरत्यनेकविधान्स्वप्नभोगाननुभव

द्वात्रिंशतं वर्षाण्युवास तस्मै होवाच ॥१॥ य एष स्वप्ने महीयमानश्चरत्येष आत्मेति होवाचैतदमृतमभयमे
तद्ब्रह्मेति स ह शान्तहृदयः प्रवव्राज स हाप्राप्यैव देवानेतद्भयं ददर्श तद्यद्यपीदं शरीरमन्धं भवत्यनन्धः स भव

तीत्यर्थः ॥ एष आत्मेति होवाचेत्यादि समानं सहैवमुक्त इन्द्रः शान्तहृदयः प्रवव्राज स हाप्राप्यैव देवान्पूर्ववदस्मिन्नप्या
त्मनि भयं ददर्श ॥ कथं तदिदं शरीरं यद्यप्यन्धं भवति स्वप्नात्मा योऽनन्धः स भवति ॥ यदि स्राममिदं शरीरं अस्रामश्च स भव
ति नैवैष स्वप्नात्मास्य देहस्य दोषेण दुष्यति नाप्यस्य वधेन सहन्यते छायात्मवन्न चास्य स्राम्येण स्रामः स्वप्नात्मा भवति ॥
यदध्यायादावागममात्रेणोपन्यस्तं नास्य जरयैतज्जीर्यतीत्यादि तदिह न्यायेनोपपादयितुमुपन्यस्तं न तावदयं छायात्मव

न्नेत आह ॥ यदध्यायादाविति न्यायोऽन्वयव्यतिरेकाख्यः ॥ एवं देहाभिमाने हि सत्येन देहधर्मेण संयुज्यते स्वप्नद्रष्टा स्वप्ने त्वेतद्देहाभिमाना
भावान्नैतेन संयुज्यत इत्याह ॥ न हीहेति ॥ स्वप्नद्रष्टा चेद्देहदोषेण न युज्यते कथं तर्हि तस्मिन्दोषदर्शनमित्याशङ्क्याह ॥ घ्नन्ति त्वेवेति ॥२॥

किमित्येवकारोयथाश्रुतोनव्याख्यायतेतत्राह॥नन्विति॥इतिशब्दोद्रष्टव्यमित्यनेनसंबध्यते॥देहस्यवधेननायंहन्यतइति विशेषणात्स्व
तोवधःस्वप्नदृशोनियमतोविवक्षितःकस्मादेवशब्दोनयथाश्रुतएवेतिशंकते॥नास्येति॥किमयंप्रजापतिमासमनात्मवामन्यतेयद्यनात्म
बुध्यतेनतर्हितंप्रत्युपगतिरिंद्रस्यविद्याग्रहणार्थंसंभवतीतिमत्वाह॥नैवमिति॥विकल्पांतरमन्याह॥प्रजापतिमिति॥नस्वतोहननस्व
प्नदृशोविवक्षितमिंद्रस्येतिशेषः॥उक्तमेवस्फोरयति॥एतदिति॥दृष्टांतेनशंकते॥नन्विति॥दृष्टांतंविघटयति॥नैवमिति॥नहिघटनप्र

किंतुघ्नंतित्वेवेनंएवशब्दइवार्थेघ्नंतीवेनंकेचनेतिद्रष्टव्यंनतुघ्नन्त्येवेत्युत्तरेषुसर्वेष्विवशब्ददर्शनान्नास्यवधेनहन्यतइ
तिविशेषणात्घ्नंतित्वेवेतिचेन्नैवंप्रजापतिंप्रमाणीकुर्वतोनूनंवादित्वापादनानुपपत्तेरेतदमृतमित्येतत्प्रजापतिवचनंक
थंमृषाकुर्यादिंद्रस्तंप्रमाणीकुर्वन्॥ननु छायापुरुषेप्रजापतिनोक्तेस्वशरीरस्यनाशमन्वेषन्नश्यतीतिदोषमदर्शयत्तथेहापि

यदिस्वामप्रस्रामोनैवैषोस्यदोषेणदुष्यतिनवधेनास्यहन्यतेनास्यस्राम्येणस्रामोघ्नंतित्वेवैनं विच्छादयंती
वाप्रियवेत्तेवभवत्यपिरोदितीवनाहमत्रभोग्यंपश्यामीतिससमित्पाणिःपुनरेयायतंहप्रजापतिरुवाच

स्यान्नैवंकस्माद्यएषोक्षिणिपुरुषोदृश्यतइतिन छायात्माप्रजापतिनोक्तइतिमन्यतेमघवान्कथमपहतपाप्मादिलक्षणे
पुरुषेयदि छायात्माप्रजापतिनोक्तइतिमन्येतनदाकथंप्रजापतिंप्रमाणीकृत्यपुनःश्रवणायसमित्पाणिर्गच्छेज्जगामचतस्मा
न्न छायात्माप्रजापतिनोक्तइतिमन्यते॥तथाचव्याख्यातंद्रष्टाक्षिणिदृश्यतइतितथाविच्छादयंतीवविद्रावयंतीवतथाचपु

कारंप्रश्नपूर्वकंप्रकटयति॥कस्मादित्यादिना॥एतदेवाकांक्षापूर्वकंप्रपंचयति॥कथमित्यादिना॥अथेंद्रोदृश्यतइतिश्रुत्यर्थंगृहीत्वा छायात्म
नमेवगृहीतवानित्युक्तंकथमिदानीमन्यथोच्यतेतत्राह॥तथेति॥यथेदंवाक्यमक्षुपलक्षितद्रष्टृविषयंतथाप्रागेवव्याख्यातंननुस्वप्नद्रष्ट
रि छायात्मनीवस्पष्टाविनाशदर्शिरित्यर्थः॥यथावदुपगम्यस्वप्नद्रष्टारंघ्नंतीवतथ्येतियावदिवशब्दमाक्षिपति॥

नन्विति॥ वेत्तृत्वं विकारस्येदमृतत्वं न स्यान्मृदादिवद्विनाशित्वप्रसंगात्तस्मादिवशब्दो युक्त इत्युत्तरमाह॥ उच्यत इति॥ अहं वेद्मीति विक्रियाश्रयत्वप्रत्यक्षविरोधादिवशब्दो न युक्त इति शंकते॥ नन्विति॥ अध्यासादपि प्रत्यक्षोपपत्तेर्न विकारित्वं सिध्यतीति परिहरति॥ नेत्यादिना॥ नाहमित्यादिवाक्यमवतारयति॥ निष्ठुन्विति॥ नवेत्यप्रियवेत्तेव भवतीत्यर्थः॥ इष्टं सर्वलोककामावाप्तिलक्षणं विधेयं ब्रह्मभा

प्रियवेत्तेव भवति अपि च रोदितीव नन्वप्रियवेत्तेव कथं वेत्तेवेत्युच्यते न अमृताभयत्ववचनानुपपत्तेर्ध्यायतीव वेतीति च श्रुत्यन्तरात्॥ ननु प्रत्यक्षविरोध इति चेन्न शरीरात्मप्रत्यक्षवद्वेत्तृसंभवः तिष्ठतु तावदप्रियवेत्तेव न वेत्ति नाहमत्र भोग्यं पश्यामि स्वप्नात्मज्ञाने पीष्टं फलं नोपलभ इत्यभिप्राय एवमेवैष तवाभिप्रायेणेति वाक्यशेषः॥ आत्मनोऽमृताभयगुणत्वस्याभिप्रेतत्वात् द्विरुक्तमपि न्यायतो मया यथावन्नावधारयति तस्माद्रस्याद्यापि प्रतिबन्धकारणमस्तीति म

मघवन्यच्छान्तहृदयः प्राव्राजीः किमिच्छन्पुनरागम इति स होवाच तद्यद्यपीदं भगवः शरीरमन्धं भवत्यनन्धः स भवति यदि स्राममस्रामो नैवैषोऽस्य दोषेण दुष्यति न वधेनास्य हन्यते नास्य स्राम्येण स्रामो घ्नन्ति त्वेवैनं विच्छादयन्तीवाप्रियवेत्तेव भवत्यपि रोदितीव नाहमत्र भोग्यं पश्यामीत्येवमेवैष मघवन्निति होवाचैतं त्वेव ते भूयोऽनुव्याख्यास्यामि वसापराणि द्वात्रिंशतं वर्षाणीति स हापराणि द्वात्रिंशतं वर्षाण्युवास तस्मै होवाच॥

त्वान्तस्तत्क्षपणाय वसापराणि द्वात्रिंशतं वर्षाणि ब्रह्मचर्यमित्यादिदेश प्रजापतिः तथोषितवते क्षपितकल्मषायाह॥ १०॥
पूर्ववदेतं त्वेवेत्याद्युक्त्वा तद्यत्रैतत्सुप्त इत्यादि व्याख्यातं॥ वेनाध्यासिकमप्यप्रियवेत्तृत्वादिकमस्ति न तु न हि देशोऽप्यागतमत

स्त्वदभिप्रायेणाप्रियवेत्तेव स्वप्नद्रष्टा न तु मदभिप्रायेणेति विशिनष्टि तवेति॥ तत्र हेतुमाह॥ आत्मन इति॥ वसापराणीत्यादिवाक्यतात्पर्यमाह॥ द्विरुक्तमपीति॥ तथा प्रजापति वाक्यानुसारेणेति यावत्॥ १०॥ यथापूर्वमेतं त्वेवत इत्याद्युक्त्वा य एष स्वप्ने महीयमान इत्याद्युक्तं न

तद्यत्रैतदित्याद्युविशिष्टाधिकारिणे प्रजापतिर्विरोजनाम्नावस्थानस्यैव वाक्यस्यैवार्थं संक्षिप्याह ॥ अक्षिणीति ॥ तत्रापि सुषुप्तदर्शनेपीत्यर्थः ॥ त
देवदोषदर्शनं मघवद्द्वारा स्फोरयति ॥ कथमित्यादिना ॥ स्वात्मानं न जानातीत्युक्तमेवाकांक्षाद्वारेणाभिनयति ॥ कथमिति ॥ तत्रैव धर्म्यं दृष्टांतमा

वाक्यमक्षिणि योऽयं द्रष्टा स्वप्ने च महीयमानश्चरति स एष सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानाति एष आत्मेति होवाचैतदमृ
तमभयमेतद्ब्रह्मेति स्वाभिप्रेतमेव मघवांस्तत्रापि दोषं ददर्श ॥ कथं नाह नैव सुषुप्तस्थोऽप्यात्मा खल्वयं संप्रति सम्यगिदानीं चा
त्मानं जानाति नैव जानाति कथमयमहमस्मीति नो एवेमानि भूतानि चेति ॥ यथा जाग्रति स्वप्ने वा नो विनाशमेवेति नाशमिवेति
पूर्ववद्दृष्टं व्यपीतो गतो भवति विनष्ट इव भवतीत्यभिप्रायः ॥ ज्ञाने हि सति ज्ञातुः सद्भावो गम्यते नासति ज्ञाने न च सुषुप्तस्थस्य ज्ञा

तद्यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानात्येष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति स ह शांतहृदयः
प्रवव्राज स हाप्राप्यैव देवानेतद्भयं ददर्श नाह खल्वयमेवꣳ संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि
विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामीति ॥ स समित्पाणिः पुनरेयाय तꣳ ह प्रजापतिरुवाच मघवन्यच्छां
तहृदयः प्राव्राजीः किमिच्छन्पुनरागम इति स होवाच नाह खल्वयं भगव एवꣳ संप्रत्यात्मानं जानात्ययमहमस्मी

नं दृश्यतेऽतो विनष्ट इत्यभिप्रायः ॥ ननु विनाशमेवात्मनो मन्यतेऽमृताभयवचनस्य प्रामाण्यमिच्छन्पूर्ववद्देवमेवेत्युक्ता योम
योऽतस्त्रिभिः पर्यायैस्तमेवैतं ते नो एवान्यत्रैतस्मादात्मनोऽन्यं कं च न किं तर्हि एतमेव व्याख्यास्यामि स्वल्पस्तु दोषस्तत्त्वावशिष्टस्तस्मे

ह ॥ यथेति ॥ स्वपरविवेकाभावे दोषमाह ॥ अत इति ॥ भ्रांतिविवेकत्रीक्षे लक्षयति ॥ पूर्ववदिति ॥ कुतो ज्ञानाभावमात्रेण विनष्टत्वमित्याशंक्योक्तम
भिप्रायं स्पष्टयति ॥ ज्ञाने हीति ॥ एवकारो यथाश्रुत एव किं न स्यादित्याशंक्याह ॥ नत्विति ॥ पूर्ववद्ब्रह्मचर्यपरदेशाभावे हेतुमाह ॥ स्वल्पस्त्विति
॥ आख्यायिकातोऽपसृत्य श्रुतिरस्मभ्यं किमर्थं समुपदिशतीत्याशंक्याह ॥

॥एवं त्विति॥कार्यकारणपरिवेष्टितौ विश्वतैजसावुक्तौ कारणमात्रबद्धश्च प्राज्ञो व्याख्यातः संप्रत्यशरीरं तुरीयं उपदेष्टुं शरीरत्वं निंदति॥मघवन्निति
॥शरीरवत्त्वात्मनोऽपि विनाशित्वमवस्थाविशेषे दर्शितमित्याशंक्याह॥यन्ममन्यस इति॥सशरीरो विशेषविज्ञानवान्भवत्यशरीरस्तु विशेषविज्ञाना
भावाद्विनाशभ्रमो न पुनरसौ वस्तुतो विनश्यति स्वेन स्वरूपेणाभिनिष्पद्यत इति संप्रसादस्याविनाशित्ववचनादित्यभिप्रेत्य कारणमेव स्पष्टयन्नाह

पंच वर्षाणीत्युक्तः स तथा चकार तस्मै मृदितकषायादिदोषाय स्थानत्रयदोषसंबंधरहितमात्मनः स्वरूपमपहतपाप्मत्वादि
लक्षणं मघवन्निति तस्मै होवाच तान्येकशतं वर्षाणि संपेदुः संपन्नानि बभूवुः यदाहुर्लोके शिष्टा एकशतं ह वै वर्षाणि मघवान्प्रजाप
तौ ब्रह्मचर्यमुवासेति॥ तदेतत् द्वात्रिंशतमित्यादिना दर्शितमित्याख्यायिकातोऽपसृत्य श्रुत्योच्यते॥ एवं तु किलैतदिंद्रत्वादपि
गुरुतरमिंद्रेणापि महता यत्नेनैकोत्तरवर्षशतकृतायासेन प्राप्तमात्मज्ञानमतो नातः परं पुरुषार्थांतरमस्तीत्यात्मज्ञानं स्तौति १

एवमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामीत्येवमेवैष मघवन्निति होवाचैतं त्वेव ते भूयो
ऽनुव्याख्यास्यामि नो एवान्यत्रैतस्माद्वसापराणि पंच वर्षाणीति स हापराणि पंच वर्षाण्युवास तान्येकशतꣳ संपे
दुरेतत्तद्यदाहुरेकशतꣳ ह वै वर्षाणि मघवान्प्रजापतौ ब्रह्मचर्यमुवास तस्मै होवाच॥११॥ मघवन्मर्त्यं वा इदꣳ

मघवन्मर्त्यं वै मरणधर्मीदं शरीरं यन्मन्यसे स्याधारादिलक्षणः संप्रसादलक्षण आत्मा मयोक्तो विनाशमेवापीतो भवतीति
शृणु तत्र कारणं यदिदं शरीरं वै येन त्वं पश्यसि तदेतन्मर्त्यं विनाशि तच्चात्तं मृत्युना ग्रस्तं सततमेव कदाचिदेव म्रियत इति मर्त्यमि
त्युक्ते॥ न तथा संत्रासो भवति यथा ग्रस्तमेव सदा व्याप्तमेव मृत्युनेत्युक्ते इति वैराग्यार्थं विशेषद्वयमुच्यते आत्तं मृत्युनेति॥ कथं
((नामदेहाभिमानतो विरक्तः सन्निवर्तेत

राणि व्याचष्टे॥ यदिदमित्यादिना॥ ननु मर्त्यमित्येतावतैव मृत्युव्याप्तत्वे शरीरस्य सिद्धे किमित्या
त्तं मृत्युनेति पुनरुच्यते तत्राह॥ कदाचिदेवेति॥ वैराग्यार्थं विशेषवचनमित्युक्तं तदेव वैराग्यं किमर्थमित्याशंक्याह॥ कथमिति॥ निवर्तेत विशे

तदस्योत्पन्नत्वाद्वार्थमाह॥ शरीरमिति॥ अत्रेति॥ मघवन्नित्यादिवाक्यं समस्तस्यार्थः॥ त्रिस्थानतया जाग्रत्स्वप्नसुषुप्ताख्यस्थानत्रयसंबंधित्वे-
नेति यावत् अमृतत्वं षडूर्मिवर्जितत्वं अशरीरत्वं स्वाभाविकसावयवत्वादिराहित्यं॥ आत्मनो धिष्ठानमित्यत्र भोगइत्यपेक्षितपूरणं भोक्तृभोगायत-
नं शरीरमिति विशेषणार्थमुक्तानस्यैवार्थांतरमाह॥ आत्मनो वेति॥ अधिष्ठानं जनयितुस्तस्योपलब्धेरधिकरणमिति यावत्॥ अधिष्ठानशब्द-
स्यार्थांतरमाह जीवरूपेणेति॥ उत्तरवाक्यस्थं शरीरशब्दं व्याचष्टे॥ यस्येति॥ ईदृशं मर्त्यत्वादिविशेषणवदित्यर्थः॥ तद्यथोक्तं शरीरमधिष्ठितम

शरीरमप्यत्र सदेहेंद्रियमनोभिरुच्यते॥ तच्छरीरमस्य प्रसादस्य त्रिस्थानतयागम्यमानस्यामृतस्य मरणादिदेहेंद्रियमनो-
धर्मवर्जितस्येत्येतदमृतस्येत्यनेनैवाशरीरत्वे सिद्धे पुनरशरीरस्येति वचनं वाय्वादिवत्सावयवत्वमूर्तिमत्त्वमा भूतामित्येवमर्थम् आ-
त्मनो भोगाधिष्ठानमात्मनो वा सतो दृष्टुस्तेजोबन्नादिक्रमेणोत्पन्नमधिष्ठानं जीवरूपेण प्रविश्य सद्वाधितिष्ठत्यस्मिन्निति
वाधिष्ठानं॥ तस्येदमीदृशं नित्यमेव मृत्युग्रस्तं धर्माधर्मजनितत्वात्प्रियाप्रियवदधिष्ठानं तदधिष्ठितस्तद्वान् सशरीरो भवति।

शरीरमात्तं मृत्युना तदस्यामृतस्याशरीरस्यात्मनोऽधिष्ठान मात्तो वै सशरीरः प्रियाप्रियाभ्यां न वै सशरीरस्य सतः

अशरीरस्वभावस्यात्मनस्तदेवाहं शरीरं शरीरमेवाहमित्यविवेकात्मभावः सशरीरत्वं सशरीरः सन्नात्तो ग्रस्तः प्रियाप्रियाभ्यां प्र-
सिद्धमेतत्तस्य च न वै सशरीरस्य सतः प्रियाप्रिययोर्बाह्यविषयसंयोगवियोगयोर्निमित्तयोर्बाह्यविषयसंयोगवियोगो ममेति म

नेनेति व्युत्पत्त्या तदधिष्ठितः सतद्रूपः पुरुष इत्यर्थः तस्यैव संपिंडितमर्थमाह॥ तद्वानिति॥ उक्तेऽर्थे विशेषणं पातयति॥ सशरीर इति॥ अशरीर-
स्य कथं सशरीरत्वमित्याशंक्याह॥ अशरीरेति॥ अविवेकतः सशरीरो भवतीति पूर्वेण संबंधः यतः शरीरो तत एव प्रियाप्रियाभ्यामात्तो वै पुरुष इति
योजना वैशब्दार्थमाह॥ प्रसिद्धमिति॥ एतच्छब्दार्थमेवोत्तरवाक्यव्याख्यानेन स्फोरयति॥ सशरीरस्येति॥ तौ ममेति मन्यमानस्य सतः स्वस्वतयोः
संततिरूपयोरपहतिर्नास्तीति संबंधः॥ प्रियाप्रिययोः स्वारस्येन विनाशोऽस्ति क्षणिकत्वादित्याशंक्य संततिरूपयोरित्युक्तमिति शब्दो वाक्यस

अज्ञस्य देहसंबंधद्वारा संसारित्वमुक्त्वा ज्ञानस्यैव विद्यावतो देहनिवृत्तिद्वारेणामुक्तिं दर्शयति ॥ तं पुनरिति ॥ मुक्तेऽपि प्रियाप्रिययोर्मिलितयोरस्पर्शे
ऽप्येकैकस्य स्पर्शः स्यादित्याशंक्याह ॥ स्पृशिरिति ॥ प्रत्येकं संबंधमभिनयति ॥ प्रियमिति ॥ समस्ततया श्रुतस्यानेकस्य प्रत्येकं क्रियासंबंधे दृष्टांत
माह ॥ नेति ॥ प्रियाप्रिययोर्मुक्तात्मन्यसंस्पर्शं पातनिकापूर्वकं कैमुतिकन्यायेन दर्शयति ॥ धर्माधर्मेति ॥ तत्रेत्यशरीरतास्वरूपमुच्यते प्रिय
स्पर्शाभावं स्तुत्वा मोक्षस्यापुमर्थत्वं शंकते ॥ नन्विति ॥ इहापीति ॥ मुक्तौ गृह्यते स्वाभाविकप्रियाप्रियप्रतिषेधान्नापुमर्थत्वं मुक्तेरित्युत्तरमाह ॥ ने

उच्छेदः संततिरूपयोर्नास्तीति तं पुनर्देहाभिमानादशरीरस्वरूपविज्ञानेन निवर्तिताविवेकज्ञानमशरीरं सन्तं प्रियाप्रिये न स्पृशतः
स्पृशिः प्रत्येकं संबध्यते न हि प्रियं न स्पृशत्यप्रियं न स्पृशतीति वाक्यद्वयं भवति न म्लेच्छाश्च धार्मिकैः सह संभाषेते इति यद्वद्धर्मा
धर्मकार्ये हि ते अशरीरतायास्तु स्वरूपमिति न तत्र धर्माधर्मयोरसंभवात्तत्कार्याभावो दूरत एवेत्यतो न प्रियाप्रिये स्पृशतः ॥ ननु प
दिप्रियमप्यशरीरं न स्पृशतीति यन्मघवतोक्तं सुषुप्तस्येव विनाशमेवापीतो भवतीति तद्देवहाप्यापन्नेनैष दोषो धर्माधर्मका

प्रियाप्रिययोरपहतिरस्त्यशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः ॥

र्ययोः शरीरसंबंधिनोः प्रियाप्रिययोः प्रतिषेधस्य विवक्षितत्वादशरीरं न प्रियाप्रिये स्पृशत इत्यादिश्रुत्यागमापायिनोर्हि स्व
र्शशब्दो दृष्टो यथा शीतस्पर्श उष्णस्पर्श इति न त्वग्नेरुष्णप्रकाशयोः स्वभावभूतयोरग्निनाऽस्पर्श इति भवति ॥ तथाग्नेः सवितु
र्वोष्णप्रकाशवत्स्वरूपभूतस्यानंदस्य प्रियस्यापि नेह प्रतिषेधो विज्ञानमानंदमानंदो ब्रह्मेत्यादिश्रुतिभ्यः ॥ इहापि भूमैव सुख

षदोष इति ॥ प्रतिषेधमेवाभिनयति ॥ अशरीरमिति ॥ कादाचित्कयोरेव प्रियाप्रिययोरेष निषेध इत्यत्र नियममाह ॥ आगमापायिनोरिति
॥ कादाचित्के स्पर्शशब्दवत्स्वात्मन्येतच्छब्दोऽस्तीत्याह ॥ नत्विति ॥ आत्मनि न हि कादाचित्कमेव प्रियमिति तन्मात्रप्रतिषेधात्स्वस्यमपु
मर्थत्वमित्याशंक्याह ॥ सवितुरिति ॥ भूमविद्यालोचनायामपि सुखमात्रस्यात्मनि न प्रतिषेधोऽस्तीत्याह ॥ इहापीति ॥ ॥ १ ॥

तथापि विषयविषयिभावेन भेदाभावान्नैतस्य स्वपुरुषार्थत्वमिति शंकते। नन्विति। भेदो न पुमर्थत्वोपयोगी केवलव्यतिरेकाभावात् सुख साक्षात्कारस्तु पुरुषार्थः स चाभेदेऽपि विद्यत इत्याशंक्याह॥ स्वरूपेणेति॥ आत्मनि विशेषज्ञानराहित्यं दुःखमेवेदमित्यत्र हेतुमाह॥ नाहेति किं तर्हि दुःखस्य दृष्टमित्याशंक्याह॥ नष्टेति॥ येन ज्ञानेन प्राप्नोति तदिष्टमिन्द्रस्येति पूर्वेण संबंधः॥ किमिदं विशेषविज्ञानमिन्द्रस्येष्टमित्युच्यते किं वाहितमिति विवक्ष्यते तत्राद्यमंगीकरोति॥ सत्यमिति॥ द्वितीयं दूषयति॥ नन्विति॥ द्वितीयाद्वै भयं भवतीत्यादिश्रुतेरित्यर्थः॥ तथापीष्टमेवेन्द्राय प्रजापतिनोपदेष्टव्यमित्याशंक्याह॥ हितं चेति॥ किं तर्हि तस्य हितमिति चेत्तत्राह॥ व्योमवदिति॥ हितं वक्तव्यमिति संबंधः हितमेव न

ननु भूम्नः प्रियस्यैकत्वेऽसंवेद्यत्वात्स्वरूपेणैव वा नित्यसंवेद्यत्वान्निर्विशेषत्वे तिनेन्द्रस्य तदिष्टं नाह खल्वयं संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामीत्युक्तत्वात्कष्टं दुःखस्येष्टं भूतानि चात्मानं च जानाति न चाप्रियं किंचिदेति स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्येन ज्ञानेन सत्यमेतदिष्टमिन्द्रस्येमानि भूतानि मनोन्यानि लोकाः कामाश्च सर्वमत्तोऽन्येऽहमेषां स्वामीति न त्वेतदिन्द्रस्य हितं चेदिन्द्रस्य प्रजापतिना वक्तव्यं व्योमवदशरीरात्मनया सर्वभूतलोककामात्मत्वापगमेन माभिस्त्विदितमिन्द्राय वक्तव्यमिति प्रजापतिनाभिप्रेतं न तु राज्ञो माप्तराज्यामिवदन्यत्वेन तत्र वसति केन विजानीयादात्मैकत्वदुमानि भूतान्ययमहमस्मीति नन्वस्मिन्पक्षे स्त्रीभिर्वा यानैर्वा स यदि पितृलोककामः स एकधा भवतीत्यादिश्चैश्वर्यश्रुतयोऽनुपपन्नाः न सर्वात्मनः सर्वफलसंबंधोपपत्तेरविरोधान्मृदइव सर्वघटरुचककुम्भाद्याप्तिः॥ ननु सर्वात्मत्वे दुःखसंबंधोऽपि स्यादिति चेन्न दुःखस्या

त्विष्टमिति स्थिते फलितमाह॥ तत्रेति॥ सर्वेषां भूतानां लोकानां कामानां चात्मा सच्चिदानन्दमात्रं तद्रूपत्वं चेन्मुक्तस्येष्यते कथं तर्हि तस्यैश्वर्यश्रुतयो निर्वहन्तीति चोदयति॥ नन्विति॥ सगुणविद्यावतां यदैश्वर्यं तन्निर्गुणविद्यास्तुत्यर्थं संकीर्त्यते ब्रह्मीभूतस्य मुक्तस्य सगुणविद्याया अपि मन्यभूतत्वात्फलस्य तत्रोपचरितुं युक्तत्वादिति परिहरति॥ नित्यादिना॥ सर्वात्मत्वे निन्दापि माप्नोतीति शंकते॥ नन्विति॥ दुःखस्य दुःखत्वाभाववत्तस्यात्मा विद्वानपि न दुःखी भविष्यतीति समा

तर्हि दुःखिनामात्मा मुक्त इति दुःखी स्यात्तत्राह ॥ आत्मनीति ॥ नत्वा वद्यात्मनः स्वभावतो दुःखित्वं किं त्वविद्यकं सा च मुक्तस्य दग्धेति दग्धत्वा
द् प्रसक्तिरित्यर्थः ॥ तर्हि विद्यापादध्यायाम विद्यायां न दृष्टा रोपितमैश्वर्यमपीश्वरस्य सगुणविद्याफलभूतं दग्धमेवेति कथं तस्य त्वपर्यमिह तदु
पदेशसिद्धिरित्याशंक्याह ॥ शुद्धेति ॥ शुद्धसत्त्वं रजस्तमोभ्यामनभिभूतं तस्मान्मायैकदेशाज्जाताः संकल्पा निमित्तानि येषां कामानामैश्वर्यभेदा
नां तं तथोक्तास्तेषां सर्वेषु भूतेषु विषयेषु मनोमात्रेणेश्वराभिध्यानरूपेण सिद्धानामीश्वराख्येन स्वभावेनाभिसंबंधो मायावस्थायां सिध्यतीत्य
र्थः ॥ ननु जीवानामेवाविद्यातत्कार्यसंबंधो नेश्वरस्येति चेन्नेत्याह ॥ परएवेति ॥ चतुर्ष्वपि पर्यायेषु त्वमर्थानुवादेन तस्य तदर्थत्वं विधेयमिति
स्वाभिप्रायेण प्रजापतिवाक्यं व्याख्याय ॥ संप्रति स्वयूथ्यमतमुत्थापयति ॥ यएषइति ॥ प्रथमपर्यायस्य छायात्मवत् द्वितीयतृतीयपर्याययो

र्प्यात्मत्वोपगमाद् विरोधः आत्मन्यविद्याकल्पनानिमित्तानि दुःखानि स्वप्न इव सर्पादिकल्पना सा चाविद्या शरीरात्मैकत्व
स्वरूपदर्शनेन दुःखनिमित्ता छिन्नेति दुःखसंबंधाशंका न संभवति ॥ शुद्धसत्त्वसंकल्पनिमित्तानां तु कामानामीश्वरदेहसंबं
धः सर्वभूतेषु मानसानां पर एव सर्वसत्त्वोपाधिद्वारेण भोक्तेति सर्वाविद्याकृतसंव्यवहाराणां पर एवात्मास्पदेनान्योऽस्तीति वेदांत
सिद्धांतः ॥ यएषोऽक्षिणि पुरुषो दृश्यत इति छायापुरुषः प्रजापतिनोक्तः स्वप्नसुषुप्तयोश्चात्मा एव न परोऽपहतपाप्मत्वादिलक्षणः
विरोधादिति केचिन्मन्यंते ॥ छायाद्यात्मनां चोपदेशप्रयोजनमाचक्षते ॥ आदावेवोच्यमाने किल दुर्विज्ञेयत्वात्परस्यात्मनोऽत्यं
तबाह्यविषयासक्तचेतसोऽत्यंतसूक्ष्मवस्तुश्रवणेऽव्यामोहो माभूदिति ॥

रपिविज्ञानात्मविषयत्वमित्याह ॥ स्वप्नेति ॥ अन्य एव परस्मा
दुक्त इति संबंधः श्रुत्यर्थे पर्यायवत्पर्यायत्रयेऽपि परमात्मैव कस्मान्नोच्यते तत्राह ॥ न पर इति ॥ अपहतपाप्मत्वादेरवस्थावत्त्वस्य च मिथो विरोधे
हेत्वर्थः ॥ नन्वंतिमे पर्याये परस्योपदेशो युज्यते न तु ज्ञानस्य च मुक्तिफलत्वात् किमिति पूर्वेषु पर्यायेषु छायादयो निर्दिश्यंते तत्फलाभावादत
आह ॥ छायाद्यात्मनां चेति ॥ तत्र प्रथमं छायात्मोपदेशस्य प्रयोजनमाह ॥ आदावेवेति ॥ परस्यातिसूक्ष्मत्वेन दुर्विज्ञेयत्वात्तस्मिन्नेवादावुच्य
मानेसति तस्यापि सूक्ष्मस्य श्रवणेऽपि श्रोतुरनात्मनिष्ठस्य किल मोहः स्यात्स मा भूदिति प्राक् छायात्मोपदेशः कृत इति संबंधः ॥ स्वप्नसुषुप्तयोर्वि

यथेत्यादिना ॥ इतिशब्दस्तिङन्तसंबध्यते पर्यायांतरस्यतात्पर्यमाह ॥ चतुर्थे त्विति ॥ मरणधर्मकाद्देहात्समुत्थाय ज्योतिःस्वरूपमशरीरत्वं प्राप्तोऽप्यद्यापि चतुर्थे पर्याये कथ्यते तथापि कथमसौ परमात्मा स्यादित्याशंक्याह ॥ यस्मिन्निति ॥ स संप्रसादो यो विद्वान् स कर्तृत्वेन विवक्षितः ॥ किमिदं व्याख्यानं शब्दानुसारि किं वार्थानुसारीति विकल्प्याद्यमंगीकरोति ॥ सत्यमिति ॥ द्वितीयं दूषयति ॥ न त्विति ॥ असंभवमेवाकांक्षाद्वारा स्फुटयति ॥ कथमित्यादिना ॥ यथाद्ये पर्याये छायात्मोपदिश्येत तर्हींद्रविरोचनयोः सम्यग्दर्शित्वाद्विपरीतग्रहापोहार्थं प्रजापतेरायासो वृथा स्यात्तेन नेदं व्याख्यानमर्थानुसारीत्यर्थः ॥ इतश्च नाद्ये पर्याये छायात्मोपदेशोऽस्तीत्याह ॥ किंचेति ॥ प्रजापतिनोपदिष्टस्यापि छायात्मनो ग्रहणं नसृ

> यथा किल द्वितीयायां सूक्ष्मं चंद्रं दिदर्शयिषुर्वृक्षं चित्रमन्यसमारोहं दर्शयति पश्यामुमेष चंद्र इति ॥ ततोऽन्यं ततोऽप्यन्यं गिरिमूर्धानं च चंद्रसमीपस्थमेष चंद्र इति ॥ ततोऽसौ चंद्रं पश्यति एवमेतद्य एषोऽक्षिणीत्याद्युक्तं प्रजापतिना त्रिभिः पर्यायैर्न पर इति ॥ चतुर्थे तु पर्याये देहान्मर्त्यात्समुत्थाय अशरीरतामापन्नो ज्योतिःस्वरूपं यस्मिन्नुत्तमपुरुषे स्त्र्यादिभिर्जक्षत्क्रीडन्रममाणो भवति स उत्तमपुरुषः पर उक्त इति चाहुः ॥ सत्यं रमणीया तावदियं व्याख्या श्रोतुं न त्वर्थोऽस्य ग्रंथस्यैवं संभवति कथं अक्षिणि पुरुषो दृश्यत इत्युपन्यस्य शिष्याभ्यां छायात्मनि गृहीते तयोस्तद्विपरीतग्रहणं मत्वा तदपनयायोदशरावोपन्यासः किं पश्यथ इति च प्रश्नः साध्वलंकारोपदेशश्चानर्थकः स्याद्यदि छायात्मैव प्रजापतिनाक्षिणि दृश्यत इत्युपदिष्टः किंच यदि स्वयमुपदिष्ट इति ग्रहणस्यापनयकारणं न कथं स्यात्तत्तुल्यात्मग्रहणयोरपि तदपनयकारणं च स्वयं ब्रूयान्न चोक्तं तेन मन्यामहे नाक्षिणि छायात्मा प्रजापतिनोपदिष्टः किंचान्यदक्षिणि दृष्टा चेद्दृश्यत इत्युपदिष्टः स्यात्तत इदमुक्तमेतं त्वेवेतद्युक्त्वा स्वप्नेऽपि द्रष्टुरेवोपदेशः स्वप्ने न द्रष्टोपदिष्टः

ष्यतीत्याशंक्याहेत्वंतरं सूचयति ॥ यदीति ॥ तेन छायात्माग्रहेणापनयकारणवशेनेति यावत्तेन तत्प्रजापतिनेत्येकस्तच्छब्दो योज्यः इतश्च प्रथमे पर्याये द्रष्टुरेवोपदेशो न छायापुरुषस्येत्याह ॥ किंचान्यदिति ॥ एतच्छब्देन संनिहितावलंबिना छायात्मानमनुकृष्य स्वप्ने द्रष्टुरुपदेशः प्रजापतेर्मृषावादित्वं प्रसज्येत न तथा च प्रथमेऽपि पर्याये द्रष्टैवोपदिष्ट इत्यर्थः ॥ स्वप्नावस्थाविशिष्टस्य स्थानांतरे बाध्यत्वान्न तत्र द्रष्टुरुपदे

किंच प्रकाशकारणानामुपरमे यः प्रकाशः स नैसर्गिक इति न्यायेन प्रतीचः स्वयंज्योतिष्ट्वं बृहदारण्यके स्वप्नावस्थामाश्रित्योक्तं तत्त
श्चात्र द्रष्टुरुपदेशः सिध्यतीत्याह ॥ न चेति ॥ सूर्यादीनामुपरमे प्रकाशो दृश्यमानो नैसर्गिक इत्ययुक्तं स्वप्ने प्यंतःकरणस्य सत्त्वादित्याशं
क्याह ॥ यद्यपीति ॥ करणत्वाभावे हेतुं पृच्छति ॥ किं तर्हीति ॥ नीलपीतादिजाग्रद्वासनाभिर्विवर्तमाना साक्षिणी वेद्यतामापाद्यते तथा च
पटे चित्रवद्धि चित्रवासनामयचेतसः साक्षिगम्यत्वान्न स्वप्नोपलब्धौ करणं भवतीति तद्द्रष्टुः स्वयंज्योतिष्ट्वं न्यायसिद्धमविरुद्धमित्याह ॥ प
रेति ॥ प्रासंगिकं हित्वा द्रष्टैवोपदिष्टः स्वप्नावस्थायामित्यत्र हेत्वंतरमाह किंचेति ॥ तथा च जाग्रदवस्थायामिव स्वप्नेऽपि द्रष्टैवोपदिष्ट इति शेषः

रोदितीवाप्रियमेवेत्तेवेत्युपदेशान्न च द्रष्टुरन्यः कश्चित्त्वमेव महीयमानश्चरति ॥ अत्रायं पुरुषः स्वयंज्योतिरिति न्यायतः
श्रुत्यंतरे सिद्धत्वाद्यद्यपि स्वप्ने सधीर्भवति तथापि न धीः स्वप्नभोगोपलब्धिं प्रति करणत्वं भजते किं तर्हि पटचित्रवज्जा
ग्रद्वासनाश्रयाद्दृश्यैव धीर्भवतीति न द्रष्टुः स्वयंज्योतिष्ट्वबाधः स्यात्किंचान्यज्जाग्रत्स्वप्नयोर्भूतानि चात्मानं न च जानाती
मानि भूतान्ययमहमस्मीति प्राप्तौ सत्यां प्रतिषेधोऽयुक्तः स्यान्नाह खल्वयमित्यादि ॥ तथा चेतनस्यैवाविद्यानिमित्तयोः सश
रीरत्वे सति प्रियाप्रिययोरपहतिर्नास्तीत्युक्तान्तस्यैवाशरीरस्य सतो विद्यायां सत्यां सशरीरत्वप्राप्तयोः प्रतिषेधो युक्तोऽश
रीरं वाव संतं न प्रियाप्रिये स्पृशत इति एकश्चात्मा स्वप्नबुद्धांतयोर्महामत्स्यवदसंगः संचरतीति श्रुत्यंतरे सिद्धं यच्चोक्तं संप्रसा
दः शरीरात्समुत्थाय यस्मिन्स्त्र्यादिभिः रममाणो भवति सोऽन्यः ९९

इतश्च द्रष्टुरेवोपदेशः स्वप्नदशायामित्याह ॥ प्राप्ताविति ॥ न
केवलमुक्तसौषुप्तो निषेधो निषेध्यप्राप्तिसापेक्षत्वादवस्थाद्वये द्रष्टृरूपदेशमाकांक्षतीति किंतु तुरीयगतो निषेधो निषेध्यमाकांक्षन्नव
स्थाद्वये द्रष्टृरूपदेशमाकांक्षतीत्याह ॥ तथा चेतनस्येति ॥ निषेधस्य प्राप्तिसापेक्षत्वात्प्रकृतस्यैव द्रष्टुरविद्यानिदाने सशरीरत्वेऽत्र निमि
त्तयोः स्यान्न हृदयगतयोर्न प्रियाप्रिययोरपहतिरस्तीति न ह वै सशरीरस्येत्यादिनोक्तशरीरत्वप्राप्तयोः प्रियाप्रिययोस्तस्यैवावस्थानया
तीतस्य सत्यां विद्यायामशरीरमित्यादिना प्रतिषेधो युक्त इति योजना ॥ स्वप्ने द्रष्टृरुपदेशे हेत्वंतरमाह ॥ एकश्चेति ॥ चतुर्थपर्यायस्य सै

तदेवव्यतिरेकद्वारा स्फोरयति ॥ यदीति ॥ अधिकरणाधेयभावेन भेदः सत्योनास्तीत्यत्र हेत्वंतरमाह ॥ किंचान्यदिति ॥ जीवपरयोर्भेदेष
ष्टमपाठकविरोधवत्सप्तमप्रपाठकविरोधोपिस्यादित्याह ॥ तथेति ॥ बृहदारण्यकश्रुत्यालोचनायामपि जीवेश्वरभेदो न संभवतीत्याह
॥ नान्यदिति ॥ इतश्च जीवपरयोर्भेदो नास्तीत्याह ॥ सर्वेश्रुतिष्विति ॥ श्रौतमर्थमुपसंहरति ॥ तस्मादिति ॥ आत्मैकत्वे परस्यैव संसारित्वंस
र्वदेहेषु स्यादिति चेन्नेत्याह ॥ नचेति ॥ आरोपितसंसारित्वं वस्तुनो नात्मन्यस्तीत्येतद्दृष्टांतेन स्पष्टयति ॥ नहीति ॥ मिथ्याचतदज्ञानंचेति मि
थ्याज्ञानं तेनाध्यस्तानि अविद्यमानान्येव विद्यमानत्वप्रतीतिमापादितानीतियावत् नहवै सशरीरस्येत्यादिवदतावास्तवत्वं प्रियाप्रियसं

संप्रसादाद्धिकरणनिर्दिष्ट उत्तमः पुरुष इति तदप्यसत् चतुर्थे पर्यायेपि एतं त्वेव ते इति वचनाद्यदि ततोन्योभिप्रेतः स्यात्पू
र्वं वेदेतं त्वेव त इति न प्रब्रूयान्मृषा प्रजापतिः किंचान्यत्तेजोवन्नादीनां स्रष्टुः सतः स्वविकारदेहशुंगे प्रवेशं दर्शयित्वा प्रविष्टाय
पुनस्तत्त्वमसीत्युपदेशो मृषा प्रसज्येत तस्मिन्त्वस्म्यादिभीरंता भविष्यसीतियुक्त उपदेशो भविष्यद्यदि संप्रसादादन्यः उत्तमः
पुरुषो भवेत्तथा भूम्न्यहमेवेत्यादिश्चात्मैवेदं सर्वमिति नोपसमहरिष्यद्यदि भूमा जीवादन्योभविष्यन्नान्योतोस्ति द्रष्टेत्यादि
श्रुत्यंतराच्च सर्वश्रुतिषु च परस्मिन्नात्मशब्दप्रयोगो नाभविष्यत्प्रत्यगात्मा चेत्सर्वजंतूनां पर आत्मा न भवेत्तस्मादेक एवात्मा
प्रकरणी सिद्धो न चात्मनः संसारित्वं अविद्याध्यस्तत्वादात्मनि संसारस्य ॥ न हि रज्जुशुक्तिकागगनादिषु सर्परजतमलादी
नि मिथ्याज्ञानाध्यस्तानि तेषां भवंतीत्येतेन सशरीरस्य प्रियाप्रिययोरपहतिर्नास्तीति व्याख्यातं यच्च स्थितमप्रियवेत्तेवेति ना
प्रियवेत्तैवेति सिद्धमेवं च सति सर्वपर्यायेष्वेतदमृतमभयमेतद्ब्रह्मेति प्रजापतेर्वचनं यदि वा

१ बंधस्य विवक्षितमिति शंकामुत्तम्या
यातिदेशेन निरस्यति ॥ एतेनेति ॥ आत्मनि संसारस्य प्रसक्तिर्नैनेति यावत् ॥ यावदध्यासभावित्वं प्रियाप्रिययोरपहत्यभावेन वास्तवत्वं
शरीरसंबंधस्यैव प्रियाप्रियमूलस्य दुर्निरूपत्वादित्यर्थः ॥ स्वप्नद्रष्टा खल्वप्रियवेत्तेव भवतीति नत्वप्रियवेत्तैवेति यत्पूर्वत्र स्थितं तत्प्रसिद्धं ॥
लाभांतरमाह ॥ एवंचेति ॥ प्रजापतेर्वचनं सत्यं भवेदिति संबंधः अपौरुषेय्यां श्रुतौ कुतः प्रजापतेर्वचनं सावकाशमित्याशंक्याह ॥ यदि

सुखादयः साश्रयाः गुणत्वात् रूपादिवदित्यनुमानात्तदाश्रयः परिशेषादात्मा भविष्यतीति वैशेषिकादितर्कविरोधादसत्यं श्रुतेर्वचनमित्याशं
कयाह ॥ नचेति ॥ सुखादीनामुपाधिधर्मत्वेन सिद्धसाध्यत्वान्नास्ति श्रौतवच सो बाधकमित्यर्थः ॥ प्रत्यक्षविरुद्धमिति शंकते ॥ नन्विति ॥ तस्याभ
सत्वान्न बाधकत्वमिति परिहरति ॥ नेत्यादिना दृष्टांतोपि संप्रतिपन्नो न भवतीति शंकते ॥ सर्वमिति ॥ जरादेः सत्यवचनं त्वदीयमेव मृत्स्येवेत्यंगीक
रोति ॥ असत्येवेति ॥ अंगीकारे हेतुमाह ॥ दुरवगममिति ॥ अधिकारिणः प्रमितिजनको वेद इति न्यायात्तादृशानामनधिकारिणां दुर्ज्ञानमात्मतत्वं
अतोसत्येव जरादि सत्यवचनेन न तावत्तुक्षतिरित्यर्थः ॥ दुरवगमत्वे लिंगमाह ॥ येनेति ॥ अत्रेति आत्मतत्वोक्तिः ॥ तस्य दुर्ज्ञानत्वे लिंगांतरमाह ॥

प्रजापतिवच्च्यरूपायाः श्रुतेर्वचनं सत्यमेव भवेन्न च तत्कुतर्कबुध्या मृषा कर्त्तुं युक्तं ततो गुरुतरस्य प्रमाणांतरस्यानुपपत्तेर्नेच
प्रत्यक्षं दुःखाद्यप्रियवेत्तृत्वमव्यभिचार्येनुभूयत इति चेन्न जरादिना जीर्णोहं जातोहमायुष्मान् गौरः कृशोमृत इत्यादिप्रत्यक्षा
नुभववत्तदुपपत्तेः ॥ सर्वमप्येतदसत्यमिति चेदसत्यैवेनदेवं दुरवगमं येन देवराजोप्युदशरावादिदर्शितोविनाशयुक्तिरपि समो
हैवात्र विनाशमेवापीतो भवतीति ॥ तथा विरोचनो महाप्राज्ञः प्राजापत्योपि देहमात्रात्मदर्शनो बभूव तथेंद्रस्यात्मविनाशभय
सागर एव वैनाशिकाः न्यमज्जन् तथा सांख्याद्रष्टारं देहादिव्यतिरिक्तमवगम्यापि त्यक्तागमप्रमाणत्वान्मृत्युविषय एवान्यत्व
दर्शनेनस्युः तथान्ये काणादादिदर्शनाः कषायरक्तमिव क्षारादिभिर्वेस्त्रं नवभिरात्मगुणैर्युक्तमात्मद्रव्यं विशोधयितुं प्रवृत्ताः
तथान्ये कर्मिणो बाह्यविषयापहृतचेतसो वेदप्रमाणा अपि परमार्थसत्यमात्मैकत्वं विनाशमिवेद्रवन्मन्यमाना घटीयंत्रवदा
((रोहावरोहमकार

तथेति ॥ वैनाशिकभ्रांतिरप्यात्मनो दुर्ज्ञानत्वं गमयतीत्याह ॥ तथेति ॥ सांख्यभ्रांतिरपि दुर्ज्ञानत्वमात्मनो ज्ञापयतीत्या
हतथा सांख्या इति ॥ तार्किकभ्रांतिरपि तस्य दुर्ग्रहत्वे गमिकेत्याह ॥ तथान्य इति ॥ बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनानवात्मगु
णाः ॥ मीमांसकभ्रांतिः तस्य दुर्ग्रहत्वे गमिका इत्याह ॥ तथान्य इति ॥ यदा परीक्षकाणामपीदृशी भ्रांतिरात्मनो दुरवगमत्वं गमयति तदा विचारवि
धुराणां लौकिकानां भ्रांतिस्तत्र प्रमाणयितव्येत्याह ॥ किमन्येति ॥ अन्ये भ्रमंतीति किं वक्तव्यमिति संबंधः ॥ ९ ॥ ६ ॥ ९ ॥ ःः

यदि लौकिकानां परीक्षकाणां चेदमात्मतत्त्वं दुर्ज्ञानं प्रतिभाति तर्हि केषां तर्हीदं सुज्ञानमित्याशंक्याह ॥ तस्मादिति ॥ एषणास्विवात्मतत्त्वेपि
तेषामौदासीन्यं वारयति ॥ अनन्यशरणैरिति ॥ तेषां कुटीचरादिभावं व्यासेधति ॥ परमहंसेति ॥ कर्मनिष्ठानामाश्रमानतीत्यनैष्कर्म्यप्राधान्ये
न वर्तमानत्वं दर्शयति ॥ अत्याश्रमिभिरिति ॥ अनन्यशरणैरित्युक्तं व्यनक्ति ॥ वेदान्तेति ॥ पूज्यतमैरिति ॥ नित्यानुवादस्तेषामात्मवेदनोपा
यं प्राक्तनमुपदिशति ॥ प्राजापत्यं चेति ॥ स्यान्नत्रयं तुरीयं चेत्येतद्विषयं प्रकरणचतुष्टयं यथोक्ताधिकारिणामेवात्मवेदनमित्यत्र लिंगान्त

क्षुद्रजंतवो विवेकहीनाः स्वभावत एव बहिर्विषयापहृतचेतसः तस्मादिदं त्यक्तसर्वबाह्यैषणैरनन्यशरणैः परमहंसपरिव्राज
कैरत्याश्रमिभिः वेदान्तनित्यानुवादपरैरेव वेदनीयं पूज्यतमैः प्राजापत्यं चेमं संप्रदायमनुसरद्भिरुपनिबद्धं प्रकरणचतुष्टयेन
तथानुशासन्त्यद्यापि त एव नान्य इति तत्राशरीरस्य संप्रसादस्याविद्ययाशरीरेणाविशेषतां सशरीरतामेव संप्राप्तस्याशरीरात्मु

ऽशरीरो वायुरभ्रं विद्युत्स्तनयित्नुरशरीराण्येतानि तद्यथैतान्यमुष्मादाकाशात्समुत्थाय परं ज्योतिरुपसंपद्य
स्वेन रूपेणाभिनिष्पद्यन्ते ॥ समुत्थाय स्वेन रूपेण यथाभिनिष्पत्तिस्तथा वक्तव्येति दृष्टान्त उच्यतेऽशरीरो वायुः अविद्य
मानं शिरःपाण्यादिमच्छरीरमस्येत्यशरीरः किं चाभ्रं विद्युत्स्तनयित्नुरित्येतानि चाशरीराणि तत्रैवं सति वर्षादिप्रयोजनाव
साने यथाऽमुष्मादिति भूपिष्ठाश्रुतिर्द्युलोकसंबन्धिनमाकाशदेशं व्यपदिशति ॥ एतानि यथोक्तान्याकाशसमानरूपतामाप
न्नानि स्वेन वाय्वादिरूपेणागृह्यमाणान्याकाशस्वरूपतां गतानि यथा संप्रसादो ऽऽ रमाह ॥ तथेति ॥ अशरीरमित्यादिवाक्यव्याख्यानोपसं
हारार्थमिति पदं ॥ सशरीरस्य बन्धो मुक्तिरशरीरस्येति स्थिते किमर्थमशरीरो वायुरित्यादिवाक्यमित्याशंक्याह ॥ तत्रेत्यादिना ॥ कथं वायोरश
रीरत्वं तत्राह ॥ अविद्यमानमिति ॥ एवं सति वाय्वादीनामशरीरत्वे सतीति यावत् ॥ आकाशस्य सर्वत्रैकरूपत्वादमुष्मादिति कुतो व्यपदेशसि
द्धिरित्याशंक्याह ॥ अमुष्मादितीति ॥ यथोक्तान्यशरीराणि वाय्वादीनि तेषामाकाशत्वापत्तौ दृष्टान्तमाह ॥ यथेति ॥ ६ ॥ ७ ॥ ६

तथावाय्वादीनिस्वेनरूपेणागृह्यमाणत्वदशायामाकाशत्वंगतानीतिसंबंधस्तानिचवाय्वादीनितथाभूतान्याकाशात्मत्वंप्राप्तानीत्येनद्दर्षो
दिफलनिष्पत्त्यर्थंवाय्वादीनामाकाशदेशात्समुत्थानेऽक्तमाकांक्षाद्वारेणस्फुरयति॥कथमित्यादिनास्वेनस्वेनरूपेणाभिनिष्पद्यंतइतिसंबंधः॥
तत्रवायोरभ्रस्यविद्युतस्तनयित्नोश्चस्वेनरूपेणाभिनिष्पत्तिप्रकारंविवृणोति॥पुरोवातादीति॥स्तिमितभावंहित्वावायुरितिशेषः॥दृष्टांत
मनूद्यदार्ष्टांतिकमाह॥यथेति॥वाय्वादीनामित्यस्मात्पुरस्तात्तथेत्यध्याहर्तव्यंतत्रादिशब्देनाभ्रविद्युत्स्तनयित्नवोगृह्यंते॥आकाशादी

ऽविद्यावस्थायांशरीरात्मभावमेवापन्नः तानिचतथाभूतानिअमुष्मात्द्युलोकसंबंधिनआकाशदेशात्समुत्तिष्ठंतिवर्षा
दिप्रयोजनाभिनिर्वृत्तयेकथंशिशिरापायेसावित्रंपरंज्योतिःप्रकृष्टंग्रैष्मकंउपसंपद्यसावित्रमभितापंप्राप्येत्यर्थःआदित्या
भितापेनपृथग्भावमापादिताःसंतःस्वेनस्वेनरूपेणपुरोवातादिवायुरूपेणस्तिमितभावंहित्वाऽभ्रमपिभूमिपर्वतहस्त्यादि

एवमेवैषसंप्रसादोऽस्माच्छरीरात्समुत्थायपरंज्योतिरुप

रूपेणविद्युदपिस्वेनज्योतिर्लताचपलरूपेणस्तनयित्नुरपिस्वेनगर्जिताशनिरूपेणेत्येवंप्रागृतडागमेस्वेनस्वेनरूपेणा
भिनिष्पद्यंते॥यथायंदृष्टांतोवाय्वादीनामाकाशादिसाम्यगमनवदविद्यायांसंसारावस्थायांशरीरसाम्यमापन्नोहमनुष्यपु
त्रोजातोजीर्णोमरिष्यइतिएवंप्रकारंप्रजापतिनेवमघवान्प्रत्योक्तनक्रमेणनासित्वदेहेन्द्रियादिधर्मातत्त्वमसीतिप्रतिबो
धितःसन्सएषसंप्रसादोजीवोस्माच्छरीराद्दाकाशादिववाय्वादयःसमुत्थायदेहादिवैलक्षण्यमात्मनोरूपमवगम्यदेहात्म
भावानांहित्वेत्येवंस्वेनरूपेणसदात्मनैवाभिनिष्पद्यतइतिव्याख्यातं॥ त्यादिपदमआदिकारणसंग्रहार्थंशरीरसाम्यमेवविशि
नष्टयहमितिं॥प्रतिबोधनेदृष्टांतमाह॥प्रजापतिनेति॥यथोक्तेनक्रमेणपर्यायचतुष्टयापरिष्टप्रकारेणेतियावन्मघवाप्रतिबोधितइतिसं
बंधः दार्ष्टांतिकेप्रतिबोधनप्रकारंदर्शयति॥नासीति॥शरीराद्दिदुषःसमुत्थानेदृष्टांतमाह॥आकाशादिवेति॥समुत्थानंविभजते॥देहादीतिप्र

छां·भा·
२९

उत्तरवाक्यस्थंसशब्दंव्याचष्टे॥ संयेनेति॥ सउत्तमपुरुषइतिसंबंधः संप्रसादस्यस्वेनरूपेणाभिनिष्पत्तिंदृष्टांतेनस्पष्टयति॥ यामिन्यादिना
उक्तदृष्टांतानुसारेणाविद्यादशायांशरीरात्मत्वमापन्नोजीवोविद्ययाप्रकाशितब्रह्मस्वतत्त्वःस्वेनरूपेणाभिनिष्पन्नोभवतीतिदार्ष्टांतिकमाह॥
एवंचेति॥ पुरुषस्योत्तमविशेषणंपुरुषांतरव्यवच्छेदार्थमित्यभिप्रेत्यपुरुषभेदंदर्शयति॥ अक्षीति॥ इतिचत्वारःपुरुषाइतिशेषःतत्रपू
र्वेषांत्रयाणांव्यवच्छेद्यत्वंतुरीयस्यउत्तमपुरुषत्वमित्याह॥ एषामिति॥ यथोक्तोत्तमपुरुषेभगवत्संमतिंसंगिरते॥ क्वेति॥ द्वाविमौपुरु

पुरस्तात्सयेनस्वेनरूपेणसंप्रसादोऽभिनिष्पद्यते॥ प्राक्प्रतिबोधाद्यन्निमित्तात्सर्पोभवतियथारज्जुःपश्चाल्लब्धप्रकाशा
रज्ज्वात्मनास्वेनरूपेणाभिनिष्पद्यते अतएवंचसउत्तमपुरुषःउत्तमश्चासौपुरुषश्चेत्युत्तमपुरुषःसएवोत्तमपुरुषः अक्षि
स्वप्नपुरुषौव्यक्तौअव्यक्तश्चसुषुप्तःसमस्तःसंप्रसन्नःशरीरश्चस्वेनरूपेणान्येषामेवस्वेनरूपेणावस्थितिःक्षराक्षरौव्यक्त

संपद्यस्वेनरूपेणाभिनिष्पद्यतेसउत्तमपुरुषः॥ सतत्रपर्येतिजक्षत्क्रीडन्रममाणःस्त्रीभिर्वा

तान्यात्मतावपेक्ष्योत्तमपुरुषःकृतनिर्वचनोह्ययंगीतासुसस्संप्रसादःस्वेनरूपेणतत्रस्वात्मनिस्वच्छतयासर्वात्मभूतः
पर्येतिक्वचिदिंद्राद्यात्मनाजक्षद्भसन्भक्षयन्वाभक्ष्याणुच्चावचानीप्सितान्क्वचिन्मनोमात्रेणसंकल्पादेवसमुत्थितैर्ब्राह्मे
लौकिकैर्वाक्रीडन्स्त्र्यादिभीरममाणश्चमनसैवनोपजनंस्त्रीपुंसयोरन्योन्योपगमनजायतइत्युपजनमात्मभावेनवासामी
प्येनजायतइत्युपजनमिदंशरीरंतन्नस्मरंस्तन्नस्मरणोहि

((योलोकेक्षरश्चाक्षरएवच॥ क्षरःसर्वाणिभूतानिकूटस्थोऽक्षरउच्यते॥ उत्त
मःपुरुषस्त्वन्यःपरमात्मेत्युदाहृतः॥ योलोकत्रयमाविश्यबिभर्त्यव्ययईश्वरः यस्मात्क्षरमतीतोऽहमक्षरादपिचोत्तमः॥ अतोऽस्मिलोकेवे
देचप्रथितःपुरुषोत्तमइतिहिसभगवानूचिवान्॥ सतत्रेत्यादिव्याचष्टेसंप्रसादइति॥ क्वचिदिति॥ सूर्यलोकोक्तिः क्वचिन्मनोमात्रेत्यत्र
क्वचिदितिब्रह्मलोकोगृह्यतेनोपजनमितिप्रतीकंगृहीत्वाव्याकरोति स्त्रीपुंसयोरिति॥ तन्नस्मरन्पर्येतीतिसंबंधः॥ यथोक्तदेहस्मृतौकारण

अ·
८

राम
२९

विदुषो मुक्तस्यानुभूतदेहास्मरणे दूषणमाशंकते ॥ नन्विति ॥ असर्वज्ञत्वदोषं निराकरोति ॥ नैष दोष इति ॥ अनुभूतार्थस्मृतौ हि सर्वज्ञ इति
न च शरीराद्यनुभूतं तस्याविद्याकामकर्ममूलस्याज्ञानमात्रत्वात्तस्य च तत्कार्यस्य ज्ञानेनात्यन्तमावेण ध्वस्तत्वात्प्रागपि शरीरादेरनुभवविपरीत
वर्तित्वानुपपत्तेरित्यर्थः ॥ शरीरादिपूर्वं सम्यग्ज्ञानेनाविषयीकृतं सदज्ञानात्त्वनुभूतमेवेति विदुषामपि स्मर्तव्यमिति चेन्नेत्याह न हीति ॥ मुक्तेऽपि ह
वि शरीरादेर्योनसंबध्यंते चेत्कथं तर्हि तत्र कामाः संबध्येरन्नित्याशंक्याह ॥ येत्विति ॥ किमिति सर्वैरेतैः कामा अनुभूयेरन्नित्याशंक्याह ॥ अन

दुःखमेव स्याद्दुःखात्मकत्वात्तस्य नन्वनुभूतं चेन्न स्मरेदसर्वज्ञत्वं मुक्तस्य नैष दोषो येन मिथ्याज्ञानादिना जनितं तन्मिथ्या
ज्ञानादिविपर्ययाच्छिन्नमतस्तन्नानुभूतमेवेति न तदस्मरणे सर्वज्ञत्वहानिर्नह्युन्मत्तेन ग्रहगृहीतेन वा यदनुभूतं तदुन्मादाद्य
पगमेऽपि स्मर्तव्यं स्यात्तथेहापि संसारिभिरविद्यादोषवद्भिर्यदनुभूयते तन्नत्वात्मानमशरीरं न स्पृशतीति अविद्यानिमित्ताभा

नैर्वा ज्ञातिभिर्वा नोपजनꣳ स्मरन्निदꣳ शरीरꣳ ॥

वाद्ये तु छिन्नदोषैर्मृदितकषायैर्मानसाः सत्याः कामा अनृतापिधाना अनुभूयंते विद्याभिव्यंग्यत्वात्त एव मुक्तेन सर्वात्मभूते
न संबध्यंत इत्यात्मज्ञानं स्तुत्यर्थं निर्दिश्यन्ते ॥ अतः साध्वेतद्दिशि न श्चिय एतेन ब्रह्मलोक इति ॥ यत्र क्वचन भवतोऽपि ब्रह्मण्येव
हि ते लोके भवंतीति सर्वात्मत्वाद्ब्रह्मण उच्यते न तत्र कथमेकः सन्नान्यं पश्यति नान्यद्विजानातीति भूम्नः कामांश्च ब्राह्मलौकिका
न्पश्यन्रमत इति च विरुद्धं ॥ यथोक्तो ॥ नापिधाना इति ॥ इतश्च विदुषामेव तदभिव्यक्तिरित्याह ॥ विद्येति ॥ किमिति निर्गुणविद्याप्र
करणे विदुषि सत्यकामसंबंधवचनं तत्राह ॥ इत्यात्मज्ञानेति ॥ आत्मविद्यास्तुत्यर्थं विदुषामपि कामसंबंधवचनं मनसैतान्कामान्प
श्यन्नित्यत्र विशेषश्रवणमपि युक्तमित्याह ॥ अत इति ॥ इंद्रियादिभिर्भवतां कामानां कथं ब्रह्मलोकभागित्वमित्याशंक्याह ॥ यत्रेति ॥
मनसैतान्कामानित्यादिवाक्यं स्तुत्यर्थमपि प्रधानवाक्यविरुद्धत्वात्त्याज्यमिति शंकते ॥ नन्विति ॥ वाक्ययोर्मिथो विरोधे परिहारमाह ॥ यथेति ॥

यद्वैतन्न पश्यति पश्यन्वै तन्न पश्यति न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येदिति बृहदारण्यकश्रुतिमाश्रित्य विरोधं धुनीते॥ नैष दोष इति॥ अथ यथोक्तं वाक्यं सुषुप्तमधिकृत्य प्रवृत्तं कथं मुक्तविषयतयोदाहृतमत आह॥ यद्यपीति॥ सुप्तस्य मोक्षदृष्टांतत्वात्तत्रत्यस्य चशब्दोक्तिकेवलगमाद्युक्तं सुषुप्ते तत्संबंधो मुक्ते सिध्यतीत्यर्थः॥ किंच मुक्तमेवाधिकृत्य यत्र त्वस्य सर्वमात्मैवाभूदित्यादि तत्रैवोक्तमित्याह॥ केनेति॥ फलार्थवादस्याक्षिवाक्यस्य च मिथो विरोधं शंकते॥ अशरीरेति॥ दृश्यत इत्यस्य स्वपदस्य चाक्षुषदर्शने रूढत्वाददशरीरस्य तदयोग्यत्वादशरीरात्मोक्ति दृश्यत इति श्रुतिविरुद्धेत्यर्थः॥ आत्मत्वामृतत्वादिब्रह्मविषयानेकश्रुतिलिंगविरोधाद्दृश्य

यस्मिन्नेव क्षणे पश्यति तस्मिन्नेव क्षणे न पश्यति चेति। नैष दोषः श्रुत्यंतरे परिहृतत्वात् द्रष्टुर्दृष्टेर्विपरिलोपात्पश्यन्नेव भवति द्रष्टुरन्यत्वेन कामाभावान्न पश्यति चेति यद्यपि सुषुप्ते तदुक्तं मुक्तस्यापि सर्वैकत्वात्समानो द्वितीयाभावः केन कं पश्येदिति चोक्तमेव अशरीरस्वरूपोपहतपाप्मादिलक्षणः सन् कथमेष पुरुषोऽक्षिणि दृश्यत इत्युक्तः प्रजापतिना तत्र यथा

स यथा प्रयोग्य आचरणे युक्त एवमेवायमस्मिञ्छरीरे प्राणो युक्तः॥ ३ ॥

स चाक्षिणि साक्षाद्दृश्यत इति तदुक्तमभिनीदमारभ्यते तत्र को हेतुरक्षिणि दर्शने इत्यत्र दृष्टान्तः यथा प्रयोग्यः प्रयोग्यपरो वा स शब्दः प्रयुज्यत इति प्रयोग्योऽश्वो बलीवर्दो वा यथा लोके आचरत्यनेनेत्याचरणो रथोऽनो वा तस्मिन्नाचरणे युक्तस्तदाकर्षणायैवमस्मिञ्छरीरे रथस्थानीये प्राणः पंचवृत्ति

(( ननु त्वेकस्याः श्रुतेर्ज्ञानमात्रविषयविरोधोऽस्तीत्यभिप्रेत्यानंतरवाक्यमुत्थापयति॥ तत्रेति॥ चाक्षुषदर्शनाविषयत्वे सति चक्षुषो दर्शने को हेतुरित्यपेक्षायां लिंगहेतुकं तावद्दर्शनं संभवतीति मत्वा दृष्टान्तमाह श्रुतिः सदृष्टान्तो यथा भवति तथा व्याचष्टे इत्याह॥ तत्रेति॥ तमेव दृष्टान्तमनूद्य व्याचष्टे॥ यथेत्यादिना॥ अध्याहाररहितं प्रसिद्धमर्थं पक्षान्तरमाह॥ प्रयोग्येति॥ एवमित्यनेन द्वितीयो यथाशब्दः संबध्यते॥ शरीरस्य रथस्थानीयत्वं शरीरं रथमेव तु इति श्रुत्यन्तरान्मंतव्यं॥ तस्मिन्युक्तः सन्

बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥ इंद्रियाणि हयानाहुरिति श्रुत्यंतरमाश्रित्याह ॥ इंद्रियेति ॥ आत्मानं रथिनं विद्धीति श्रुतिविरुद्धं प्राणस्य र
थित्वमित्याशंक्य तस्योपाधियेस्तद्भेदांगीकारान्नैवमित्याह ॥ प्रज्ञात्मेति ॥ तस्याध्यात्मसंतानद्वयविशिष्टत्वेन स्फुरितं स्वरूपं दर्शयति ॥
विज्ञानेति ॥ ईश्वरस्य यथोक्तप्राणोपाधिद्वारा भोक्तृत्वादिसंसारित्वमित्यत्र श्रुत्यंतरं प्रमाणयति ॥ कस्मिन्निति ॥ प्रतिष्ठास्यामीति ॥ ईक्षित्वा स प्राण
मसृजतेत्यादिश्रुतिरिति शेषः तथा च यथा राज्ञा सर्वाधिकारी सेनाध्यक्षः संधिविग्रहादौ नियुज्यते न तथेश्वरेण सर्वचेष्टानराधिकृतस्स्वकीयदर्श
नादिव्यापारनिमित्तं नियुक्तो भवतीत्याह ॥ राज्ञेति ॥ प्राणस्स्वविलक्षणेन चेतनेन नियुज्यते प्रयोज्यत्वादश्वादिवदित्यनुमानाद्देहसंहतात्प्राण ॥

रिंद्रियमनोबुद्धिसंयुक्तः प्रज्ञात्मा विज्ञानक्रियाशक्तिद्वयसंमूर्छितात्मा युक्तः स्वकर्मफलोपभोगनिमित्तं नियुक्तः ॥ कस्मिन्न
हमुत्क्रांत उत्क्रांतो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति ईश्वरेण राज्ञा इव सर्वाधिकारी दर्शनश्रवणचेष्टाव्यापारेऽधिकृ

ऽथ यत्रैतदाकाशमनुविषण्णं चक्षुः स चाक्षुषः पुरुषो दर्शनाय चक्षुः

तः तस्यैव तु मात्रैकदेशः चक्षुरिंद्रियं रूपोपलब्धिद्वारभूतं ॥ अथ यत्र कृष्णतारोपलक्षितमाकाशं देहच्छिद्रमनुविषण्णमनुषक्त
मनुगतं तत्र स प्रकृतोऽशरीर आत्मा चाक्षुषश्चक्षुषि भवतीति चाक्षुषस्तस्य दर्शनाय रूपोपलब्धये चक्षुः करणं यस्य तेहहादिभिः

इति विक्रोसंहतश्चेतनः सिध्यतीति संप्रदायार्थः ॥ चक्षुरादिचेष्टा चेतननिमित्ता चेष्टात्वात् रथचेष्टावदित्यनुमानांतरं सूचयति ॥ तस्यैवेति ॥ प्रकृ
तप्राणविषयस्तत्र ब्रह्मः मात्रेत्येतस्य व्याख्यानमेकदेश इति ॥ प्राणसंवादे चक्षुरादीनां प्राणपारतंत्र्यप्रतीतेस्तदेकदेशत्वं तेषामिति द्रष्टव्यं
॥ शरीराद्व्यतिरिक्तमात्मानं संभाव्य तस्योपाधिकत्वं द्रष्टृत्वमाचष्टे ॥ अथेति ॥ अतिरिक्तात्मसंभावनानंतर्यमथशब्दार्थः ॥ यत्र तत्रेति ॥ स
प्तमीभ्यां संसारदेशोच्यते ॥ अनुगतं चक्षुरिति संबंधः दर्शनाय चक्षुरित्यस्यार्थं समर्थयते ॥ यस्येति ॥ यस्य परस्य द्रष्टुरर्थे करणं चक्षुरिति प
रश्चक्षुषा लिङ्गेन दृश्यत इति संबंधः परार्थे चक्षुषो हेतुमाह ॥ देहादिभिरिति ॥ यत्संहतं तत्स्वविलक्षणशेषदृष्टं यथा शयनासनादि तथा

संहतत्वाद्यस्य विलक्षणस्य शेषभूतं सोऽत्र दर्शनेन दृश्यते विमतं साश्रयं धर्मत्वाद्रूपादिवदित्यनुमानादित्यर्थः ॥ दृश्यत इत्यस्याविरु
द्धार्थत्वमुक्त्वाऽक्षिणीत्यस्य विवक्षितमर्थमाह ॥ अक्षिणीति ॥ यथाक्षिद्वारा रूपोपलब्धा परस्तथा तत्तदिंद्रियद्वारा तत्तद्विषयोपलब्धा
पर एवेति कृत्वा युक्तमिदमुपलक्षणमिति साधयति ॥ विषयेति ॥ सर्वेन्द्रियैरुपलब्धृत्वमविशिष्टं चेत्कथं तर्हि सर्वास्वपि श्रुतिषु चक्षु
ष्येवास्योपदिश्यते तत्राह स्फुटेति ॥ चक्षुषः स्फुटोपलब्धिहेतुत्वं श्रुतिसंवादयति ॥ अहमिति ॥ यत्रादर्शमिति चक्षुषः प्रत्ययस्तद्वत्तु स
त्यं स्फुटोपलंभादिति द्वयोर्विवदमानयोर्दृष्टमित्यर्थः ॥ य एषोऽक्षिणीत्यत्र सर्वेन्द्रियद्वारोपलब्धा विवक्षितस्तदुक्तं व्यक्तीकरोति ॥ अथापी

संहतत्वात्परस्य ह्यर्थे सोऽत्र चक्षुषि दर्शनेन लिंगेन दृश्यते परोऽशरीरोऽसंहतोऽक्षिणि दृश्यत इति प्रजापतिनोक्तः सर्वेन्द्रिय
द्वारोपलक्षणार्थं सर्वविषयोपलब्धा हि स एवेति स्फुटोपलब्धिहेतुत्वादक्षिणीति विशेषवचनं सर्वश्रुतिष्वहमदर्शमिति
तत्सत्यं भवतीति च श्रुतेः ॥ अथापि योऽस्मिन्देहे वेद कथमिदं सुगंधि दुर्गंधि वा जिघ्राणीत्यस्य गंधं विजानीयामिति स आ

रथ यो वेदेदं जिघ्राणीति स आत्मा गंधाय घ्राणमथ यो वेदेदमभिव्याहराणीति स आत्माभिव्याहाराय वागथ
((यो

त्मा तस्य गंधाय गंधविज्ञानाय घ्राणमथ यो वेदेदं वचनमभिव्याहराणीति वदिष्यामीति स आत्माभिव्याहरणक्रिया
सिद्धये करणं वागिंद्रियमथ यो वेदेदं शृण्वानीति स आत्मा श्रवणाय श्रोत्रमथ यो वेदेदं मन्वानीति मननव्यापारमिंद्रियासंप
((युक्तं केवलं मन्वानीति वेद स आ

ति ॥ चक्षुषि स्फुटोपलंभेऽपीति यावद्योऽस्मिन्देहे येन केनापीन्द्रियेण यं कंचिद्विषयं वेद स आत्मेति सं
बंधः ॥ उक्तमेवार्थमाकांक्षाद्वारा स्फोरयति ॥ कथमित्यादिना ॥ जिघ्राणीति यो वेदेत्युक्तमेव संक्षिपति ॥ अस्येति ॥ इंद्रियैर्घ्राणादिभिर
संपृक्तं तत्तद्द्वारेणानिष्पन्नमिति यावत् ॥ केवलमनोमात्रजनितमित्येतन्मन्वानीति संपादयानीत्यर्थः ॥ वेदेत्यत्र प्रत्ययार्थभूतं कर्तृत्वं सापेक्ष
त्वान्मिथ्या प्रकृत्यर्थरूपं तु संविन्मात्रमनपेक्षतया सत्यमात्मस्वरूपमित्याह ॥ यो वेदेति ॥ आत्मा संवेदनस्वभावश्चेत्तत्संसर्गादेव विषयसि

दर्शनादीति॥ अंतःकरणवृत्तिर्दर्शनादिक्रियासाक्षादात्मनःसंविदेकरसस्यासंगोदासीनेविषयसंसर्गभ्रमहेतुस्तन्निष्पत्त्यर्थानिचक्षुरा
दीनिसंभवंतिसार्थकानीत्यर्थः॥तेषामुक्तरीत्यासार्थकत्वेगमकमाह॥इदंचेति॥करणानामुक्तंसार्थकत्वमकृतस्यसंविन्मात्रस्यासंगत्वा
देवस्वतोविषयसंबंधानुपपत्त्यातत्संबंधभ्रांतिकारणांतःकरणवृत्तिविशेषापेक्षयानिर्धारितमित्यर्थः॥आत्मनःसंविन्मात्रस्वभावत्वेक

स आत्मेत्येवंसर्वत्रप्रयोगाद्देहनमस्यस्वरूपमित्यवगम्यते॥ यथायःपुरस्तात्प्रकाशयतिस आदित्योयोदक्षिणेनयःप
श्चादुत्तरतोयऊर्ध्वंप्रकाशयतिआदित्यइत्युक्तेप्रकाशस्वरूपःसइतिगम्यते॥दर्शनादिक्रियानिर्वृत्त्यर्थानितुचक्षुरादि
करणानिइदंचास्यात्मनःस्यात्सर्वोऽवगम्यते॥आत्मनःसत्तामात्रएवज्ञानकर्तृत्वंनतुव्यापृततयायथासवितुःसत्तामा
त्रएवप्रकाशनकर्तृत्वंनतुव्यापृततयेतितद्वन्मनोऽस्यात्मनोदैवमप्राकृतमितरैरिंद्रियैरसाधारणंचक्षुःचष्टेपश्यत्यनेनेतिव

वेदेदं॰शृण्वानीतिस आत्माश्रवणायश्रोत्रमथयोवेदेदंमन्वानीतिस आत्मा॥मनोऽस्यदैवंचक्षुःसवाएषएते
नदैवेनचक्षुषामनसैतान्कामान्पश्यन्रमतेयएतेब्रह्मलोकेतंवाएतंदेवाआत्मानमुपासतेतस्मात्तेषां॰सर्वेच
॰लोका आत्ताः

र्तमानकालविषयाणिचेंद्रियाण्यतोऽदैवानितानिमनस्तुत्रिकालविषयोपलब्धिकरणंमुदितदोषंच
सूक्ष्मव्यवहितादिसर्वोपलब्धिकारणंचेतिदैवंचक्षुरुच्यते॥सवैमुक्तस्वरूपापन्नोविद्याकृतदेहेन्द्रियमनोविमुक्तःसर्वात्मभा
वमापन्नःसन्नेषव्योमवद्विशुद्धःसर्वेश्वरोमनउपाधिःसन्एतेनैवेश्वरेणमनसैतान्कामान्सवितृप्रकाशवन्नित्यप्रतीतेनप

यंकर्तृत्वव्यपदेशादित्याशंक्याह॥आत्मनइति॥यएषोऽक्षिणीत्यादिवाक्यमपंचितंसंप्रतिसततेत्यादिफलवाक्यमपंचयितुमिंद्रियांतरेभ्यो
मनसोवैलक्षण्यंदर्शयति॥मनोस्येति॥तस्यचक्षुष्ट्वंप्रकृतोदैवत्वमित्याशंक्याह॥वर्तमानेति॥आगंतुकदोषराहित्यमुदितदोषत्वंसर्वेभ्यो
व्यज्यतेयस्मिन्विशुद्धेमनसितन्मनःसर्वेश्वरंतदुपाधिरस्येतितथोक्तःईश्वरेणतदभिव्यंजकेनेत्येतदविद्यादिप्रतिबंधकस्याभावान्मनसानि

दर्शनं नित्याभिव्यक्तस्वरूपं चैतन्यं तेन न पश्यन्तीति योजना तं वा एतमित्यादि व्याचष्टे ॥ यस्मादिति ॥ पदार्थमुक्त्वा वाक्यार्थमाह ॥ यदर्थं हीति
॥ स सर्वांश्चेत्यादिवाक्यमाशंकोत्तरत्वेनोत्थाप्य व्याचष्टे ॥ नन्वित्युक्तमित्यादिना यथोक्तफलं तत्त्वदर्शः ॥ प्रकरणं निर्विशेषब्रह्मात्मैकत्वज्ञान
विषयं दहरविद्याप्रकरणे उपास्यस्तुत्यर्थं प्रसंगादुक्तं तत्परिसमाप्त्यर्थं ॥ १२ ॥ प्रकृताया दहरविद्यायाः शेषभूतं जपविधानार्थमारभ्यते ॥ श्य

कान्कामानिति विशिनष्टि ॥ य एते ब्रह्मणि लोके ब्रह्मलोके हिरण्यनिधिवद्बाह्यविषयासंगानृतेनापिहिताः संकल्पमात्रल
भ्यास्तानित्यर्थो यस्मादेष इन्द्राय प्रजापतिनोक्त आत्मा तस्मात्ततः श्रुत्वा तमात्मानमद्यत्वेऽपि देवा उपासते तदुपासनाच्च तेषां स
र्वे च लोका आप्ताः प्राप्ताः सर्वे च कामाः यदर्थं हीन्द्र एकशतं वर्षाणि प्रजापतौ ब्रह्मचर्यमुवास तत्फलं प्राप्तं देवैरित्यभिप्रायः ॥ नन्वु
क्तं देवानां महाभाग्यत्वान्नत्विदानीं मनुष्याणामल्पजीवितत्वान्मंदतरप्रज्ञात्वाच्च संभवतीति प्राप्त इदमुच्यते स सर्वांश्च लोका

सर्वे च कामाः स सर्वा ँ श्च लोकानाप्नोति सर्वा ँ श्च कामान्यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवा
च ह प्रजापतिरुवाच ॥ १२ ॥ श्यामाच्छबलं प्रपद्ये शबलाच्छ्यामं प्रपद्येऽश्व इव रोमाणि विधूय पापं चन्द्र इव रा
‘‘होर्मुखात्प्रमुच्य [illegible]

नाप्नोति सर्वांश्च कामानिदानींतनोऽपि कोऽसौ विद्वान्यस्तमात्मानमनुविद्य विजानातीति ह सामान्येन
किल प्रजापतिरुवाच अतः सर्वेषामात्मज्ञानं तत्फलप्राप्तिश्च तुल्यैव भवतीत्यर्थः द्विर्वचनं प्रकरणसमाप्त्यर्थं ॥ १२ ॥ श्यामा
च्छबलं प्रपद्य इत्यादिमन्त्राम्नायः पावनो जपार्थश्च ध्यानार्थो वा श्यामो गंभीरो वर्णः श्याम इव श्यामो हार्दं ब्रह्म अत्यन्तदुरव
गाह्यत्वात्तद्धार्दं ब्रह्म ज्ञात्वा ध्यानेन तस्माच्छ्यामाच्छबलं शबल इव शबलोऽरण्याद्यनेककाममिश्रितत्वाद्ब्रह्मलोकस्य शात
ल्यं तं ब्रह्मलोकं शबलं प्रपद्ये मनसा शरीरपातादूर्ध्वं गच्छेयं यस्मादहं ‘‘मादिति ॥ अत्यन्तदुरवगाह्यत्वाज्ज्ञानहीनानामिति शेषः कथं
जीवतो ब्रह्मलोकप्राप्तिरित्याशंक्याह ॥ मनसेति नतर्हि मुख्या तत्प्राप्तिरिति आशंक्याह ॥ शरीरेति ॥ विपरीतपाठहेतुत्वेनमाचष्टे ॥ यस्मादिति ॥ दे‘‘

दृष्टांतमाकांक्षापूर्वकमवतार्य व्याचष्टे॥कथमित्यादिना शरीरस्य त्याज्यत्वे हेतुमाह॥सर्वानर्थेति॥इतिशब्दो ध्यातृध्यानसमाप्त्यर्थः॥१॥आदह
रोस्मिन्नंतराकाशइतिलक्षणनिर्देशस्य प्रकृतोपयोगं दर्शयति॥आध्यानायेति॥सर्वाणिहवाइमानिभूतान्याकाशादेवसमुत्पद्यंत आकाशं
प्रत्यस्तं यन्त्याकाशोह्येवेभ्योज्यायानित्यादिश्रुतयः॥आकाशशब्देनात्मनः श्रुतिषु प्रसिद्धत्वे हेतुमाह॥आकाशइवेति॥तेयदंतरेत्यत्र तेइति

शबलाद्ब्रह्मलोकान्नामरूपव्याकरणाय श्यामं प्रपद्ये हार्दभावं प्रपन्नोस्मीत्यभिप्रायः अतस्तमेव प्रकृतस्वरूपमात्मानं शब
लं प्रपद्यइत्यर्थः कथं शबलं ब्रह्मलोकं प्रपद्य इत्युच्यते॥अश्वइव स्वानि लोमानि विधूय कंपनेन श्रमं पांस्वादि च रोमतोऽपनीय
यथा निर्मलो भवति इत्येवमहं ब्रह्मज्ञानेन विधूय पापं धर्माधर्माख्यं चंद्रइव राहुग्रस्तस्तस्माद्राहोः प्रमुच्य भास्वरो भवति य
थैवं धूत्वा प्रहाय शरीरं सर्वानर्थाश्रयं इहैव ध्यानेन कृतात्मा कृतकृत्यः सन्नकृतं नित्यं ब्रह्मलोकमभिसंभवामीति द्विर्वचनं मंत्र

धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामीत्यभिसंभवामीति॥१॥आकाशोवैनाम नामरूपयोर्निर्व
हिता ते यदंतरा तद्ब्रह्म तदमृतं स आत्मा प्रजापतेः सभां वेश्म प्रपद्ये यशोहं भवामि ब्राह्मणानां यशो राज्ञां यशो वि
((शां

समाप्त्यर्थो॥१॥आकाशोवैइत्यादि ब्रह्मणो लक्षणनिर्देशार्थमाध्यानाय आकाशो वै नाम श्रुतिषु प्रसिद्ध आत्मा आकाश
इवाशरीरत्वात्सूक्ष्मत्वाच्च सचाकाशो नामरूपयोः स्वात्मस्थयोर्जगद्बीजयोः सलिलस्येव फेनस्थानीययोर्निर्वहिता निर्वो
ढा व्याकर्ता ते नामरूपे यदंतरा यस्य ब्रह्मणोंतरा मध्ये वर्तेते॥तयोर्वा नामरूपयोरंतरा मध्ये यन्नामरूपाभ्यामसंस्पृष्टं यदि
त्येतद्ब्रह्म नामरूपविलक्षणं च नामरूपाभ्यामस्पृष्टं तथापि तयोर्निर्वोढृ एवंलक्षणं ब्रह्मेत्यर्थः॥((पदं प्रथमा द्विवचनांतं गृ

हीत्वा व्याख्याय द्वितीया द्विवचनांतं षष्ठ्यर्थमादाय व्याचष्टे॥तयोर्वेति॥यदंतरेति समस्तं पदं पूर्वत्र व्याख्यातं अधुना तु व्यस्तं व्याकृतं॥तदेव व्या
करणं संक्षिपति॥नामरूपाभ्यामिति॥ताभ्यामस्पृष्टं चेत्कथं तन्निर्वाहकं इत्याशंक्याह॥नामरूपाभ्यामस्पृष्टमिति॥ ॥ ॥

न्यायावशारिति शेषः॥आत्मत्वेपिकथंकरतलामलकवद्ब्रह्मणो परोक्षत्वमत आह॥आत्माहीति॥तेन स्वसंवेद्यत्वेनेतियावत् कुतो दे
हद्वयोपहितस्यात्मनः स्वसंवेद्यत्वंतत्राह॥अशरीर इति परिच्छिन्नस्याऽशरीरत्वमयुक्तमित्याशंक्याह॥व्योमवदिति॥ब्रह्मैवमप्रत्यक्
भूतमितिकथमवगतमित्याशंक्याह॥आत्मेति॥अनात्मत्वेचेदब्रह्मत्वप्रसंगात्प्रत्यग्भूतंब्रह्मवक्तव्यमित्यर्थः उपास्यस्वरूपंदर्शयि

इदमेवमैत्रेयीब्राह्मणेनोक्तं चिन्मात्रानुगमात्सर्वत्र चित्स्वरूपतैवेतिगम्यते एकवाक्यतयाकथंतदवगम्यतइत्याह
सआत्माहिनामसर्वजंतूनांप्रत्यक्चेतनः स्वसंवेद्यः प्रसिद्धः तेनैवस्वरूपेणोऽशरीरोव्योमवत्सर्वगत आत्मा ब्रह्मे
त्यवगंतव्यंतच्चब्रह्मामृतममरणधर्मा तऊर्ध्वंमंत्रः प्रजापतिश्चतुर्मुखस्तस्यसभांवेश्मप्रभुविमितंवेश्मप्रपद्येगच्छे
यं किंचयशोऽहंयशोनामात्माहंभवामिब्राह्मणानांब्राह्मणाएवहिविशेषतस्तमुपासतेतस्तेषांयशोभवामितथारा

यशोऽहमनुप्रापत्सिसहाहंयशसांयशः श्येतमदत्कमदत्कं श्येतंलिंदुमाभिगांलिंदुमाभिगां॥१॥तद्धैतद्

ज्ञांविशांचतेप्यधिकृताएवेतितेषामप्यात्माभवामितद्यशोऽहमनुप्रापत्सिप्राप्नुयामिप्राप्तुमिच्छामि॥सहाहंयशसामा
त्मनांदेहेन्द्रियमनोबुद्धिलक्षणानामात्मा किमर्थमहमेवंप्रपद्ये इत्युच्यते॥श्येतंवर्णतः पक्ववदरसमंरोहितंचस्त्रीचिन्हं
योनिशब्दितंकिंलक्षणंतथाऽदन्तकंदन्तरहितमप्यदन्तकंभक्षयितृतेजोबलवीर्यविज्ञानधर्माणामपहन्तृ विनाशयितृत्येनत्त
न्मेविनास्त्रीव्यंजनंयदेवंलक्षणंश्येतंलिंदुपिच्छिलंतंमाभिगांमाभिगच्छेयं॥द्विर्वचनमत्यन्तानर्थहेतुत्वप्रदर्शनार्थं॥ १५ ॥

त्वात्तदुपासकस्यप्रार्थनामंत्रमुत्थाप्यव्याकरोति॥अतऊर्ध्वमिति॥प्रथमतोब्राह्मणग्रहणेहेतुमाह॥ब्राह्मणाएवेति॥विशेषंनिर्दिशति॥स्त्री
व्यंजनमिति॥योनिशब्दितंप्रजननेंद्रियमित्यर्थः॥कथंतद्भक्षयितृभवेत्तत्राह॥तन्मेविनामिति॥तदभिगमनंनामगर्भवासस्तस्यातिशयेना
नर्थहेतुत्वंज्ञापयितुंद्विर्वचनमित्यर्थः॥१५॥उक्तविज्ञानस्यापेक्षिकत्वशंकांनुदस्यन्ननादिपारंपर्यागतत्वंदर्शयति॥तद्धैतदिति॥सोपकरण

तद्द्वारेण हिरण्यगर्भद्वारेणेत्यर्थः॥ विद्याप्रकरणं परिसमाप्याविद्वदनुष्ठितस्य कर्मणः साफल्यमविद्वत्संतोषार्थं कथयति॥ तद्धेत्यादि

मो।मित्येतदक्षरमित्याद्यैः सहोपासनैस्तद्वाचकेन ग्रंथेनाष्टाध्यायलक्षणेन सह ब्रह्मा हिरण्यगर्भः परमेश्वरो वा तद्द्वारेण
प्रजापतये कश्यपायोवाचासावपि मनवे स्वपुत्राय मनुः प्रजाभ्य इत्येवं श्रुत्यर्थसंप्रदायपरंपरागतं उपनिषद्विज्ञानमद्या
पि विद्वत्स्ववगम्यते॥ यथेह षष्ठाद्यध्यायत्रये प्रकाशितात्मविद्या सफलावगम्यते तथा कर्मणां न कश्चनार्थ इति प्राप्ते तदा
नर्थक्यप्राप्तिं परिजिहीर्षयेदं कर्म विद्भिरनुष्ठीयमानस्य विशिष्टफलवत्त्वेनार्थवत्त्वमुच्यते॥ आचार्यकुलाद्वेदमधीत्य
सहार्थतोऽध्ययनं कृत्वा यथाविधानं यथास्मृत्युक्तैर्नियमैर्युक्तः सन्नित्यर्थः। सर्वस्यापि विधेः स्मृत्युक्तस्योपकुर्वाणकं
प्रतिकर्तव्यत्वे गुरुशुश्रूषायाः प्राधान्यप्रदर्शनार्थमाह गुरोः कर्म यत्कर्तव्यं तत्कृत्वा कर्मशून्यो योऽतिशिष्टः कालस्तेन का

ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनुः प्रजाभ्य आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणा
भिसमावृत्य कुटुंबे॥ शुचौ देशे स्वाध्यायमधीयानो ((

लेन वेदमधीत्येत्यर्थः॥ एवं हि नियमवताधीतो यो वेदः कर्मज्ञान
फलप्राप्तये भवति नान्यथेत्यभिप्रायो ऽभिसमावृत्य धर्मजिज्ञासां समापयित्वा गुरुकुलान्निवृत्य न्यायतो दारानाहृत्य कु
टुंबे स्थित्वा गार्हस्थ्ये विहितकर्मणि तिष्ठन्नित्यर्थः॥ तत्रापि गार्हस्थ्यविहितानां कर्मणां॥ स्वाध्यायस्य प्राधान्यप्रदर्शनार्थ
मुच्यते॥ शुचौ विविक्ते ऽमेध्यादिरहिते देशे यथावदासीनः स्वाध्यायमधीयानो नैत्यकमधिकं च यथाशक्तितः ऋगाद्यभ्यासं च
कुर्वन्धार्मिकान्पुत्रान्शिष्यांश्च धर्मयुक्तान्विदधद्धार्मिकत्वेन तान्नियमयन्नात्मनि स्वहृदये हार्दे ब्रह्मणि सर्वेंद्रिया
णि प्रतिष्ठाप्योपसंहृत्य सर्वेन्द्रियग्रहणात्कर्माणि च संन्यस्याहिंसन् हिंसां परपीडामकुर्वन् ((इहेति प्रकृतोपनिषद्वृत्तिः प्राङ्मु
खत्वपवित्रपाणित्वादयो नियमाः भिक्षाशनस्नानाचमनादिविधिः किमित्येष नियमोऽध्ययने कथ्यते तत्राह॥ एवं हीति॥ तत्रापीति सप्त

एतत्सर्वं स्वयं कुर्वन् ब्रह्मलोकमभिसंपद्यत इति संबंधः॥ एवं वर्त्तयन्नित्यस्य व्याख्यानं॥ एवं यथोक्तप्रकारेण कुर्वन्निति अप्राप्तप्रतिषेधा
शंकां वारयति॥ पुनरावर्त्तेरिति॥ चंद्रलोकादिवत् ब्रह्मलोकादपि प्राप्तापुनरावृत्तिस्तस्या न चेत्यादिना प्रतिषेधात् प्राप्तप्रतिषेधप्रसक्तिरित्यर्थः
॥ अपुनरावृत्तिवाक्यस्यान्यपराणि व्याकरोति॥ अर्चिरादिनेति॥ प्रागिति॥ महाप्रलयात्पूर्वकालोक्तिस्ततो ब्रह्मलोकादित्यर्थः॥ विपदादिज

सर्वभूतानि स्थावरजंगमानि भूतान्यपीडयन्नित्यर्थः भिक्षानिमित्तमटनादिनापरपीडास्यादित्यत आहान्यत्र तीर्थेभ्यस्तीर्थं ना
म शास्त्रानुज्ञाविषयस्ततोन्यत्रेत्यर्थः सर्वाश्रमिणां चैतत्समानं तीर्थेभ्योन्यत्राहिंसैवेत्यन्ये वर्णयंति॥ कुटुंब एवैतत्सर्वं कुर्वन् स ख
ल्वधिकृतो यावदायुषं यावज्जीवं एवं यथोक्तप्रकारेण वर्त्तयन् ब्रह्मलोकमभिसंपद्यते देहांते॥ न च पुनरावर्त्तते पुनरावृत्तेः प्रा
प्तायाः प्रतिषेधात्॥ अर्चिरादिना मार्गेण कार्यब्रह्मलोकमभिसंपद्य यावद्ब्रह्मलोकस्थितिस्तावत्तत्रैव तिष्ठति॥ प्राक्ततो नावर्त्तत

धार्मिकान्विदधदात्मनि सर्वेंद्रियाणि संप्रतिष्ठाप्याहिंसन्सर्वभूतान्यन्यत्र तीर्थेभ्यः स खल्वेवं वर्त्तयन्यावदा
युषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्त्तते न च पुनरावर्त्तते॥ १५॥ ॐ इति छांदोग्योपनिषद्ब्राह्मणेऽष्टमः प्रपाठकः समा
प्तः ८॥ शुभं

इत्यर्थः॥ हिरण्यायसउपनिषद्विद्यापरिसमाप्त्यर्थः॥ १५॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविंदभगवत्पादशि
ष्यशंकरानंदेन कृते छांदोग्योपनिषद्विवरणे अष्टमोध्यायः समाप्तः॥ ८॥ अस्याध्यायस्य सं· भाष्यं ७५० टी· ८५० एवं सर्वसंख्या मूलं ९५०
९ भाष्यं ५९५० टीका ५१०० एकत्र १०५०० सम्पूर्णं

गज्ज्ञानं ज्ञानमज्ञानतो यतः॥ तदस्मि नामरूपादिविरहिब्रह्म निर्भयं॥ नमस्त्रय्यंतसंदोहसरसीरुह
भानवे॥ गुरवे परपक्षौघध्वांतध्वंसपटीयसे॥ हरिः ॐ इति श्रीमच्छुद्धानंदपूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यस्य भगवदानंदगिरिकृतौ छांदो
ग्योपनिषद्भाष्यटीकायामष्टमोध्यायः समाप्तः ८॥ वाराणसीप्रसादस्य नियोगेन प्रयत्नतः काशीसंस्कृतमुद्रायामंकितोयं शिलाक्षरैः॥ १॥ श्रीका
शीजी में महल्ले होदकटोरा श्रीयुत बाबू वाराणसीप्रसादजी के मकान में काशीसंस्कृतमुद्रायंत्र में छपी जिनको लेना हो यह उनको उक्त स्थान में श्री बाबू वा

